॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् १० – प्रकृत्यधिकरणम् – भागः २

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – १०

प्रकृत्यधिकरणम् – भागः २

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – १०

प्रथमं मुद्रणम् - ई.सन् २००५

# Śrīman-Nyāyasudhā

Parimaḷādyupetā

**Volume - 10**

First Edition -2005 A.D.

पार्थिव संवत्सर, शके १९२७, ज्येष्ठ कृष्ण त्रयोदशी, सोमवासरः

श्री विजयीन्द्रतीर्थस्वामिनां आराधनामहोत्सवः

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**
**Śrīman Madvāchārya Mūla Mahāsamsthāna**
**Śrī Rāghavendra Swāmy Mutt**
Mantrālayam - 518 345
India.

✲ मुद्रकः ✲

**धनंजयाचार्य बाळाचार्य वरखेडकरः**

**सुधा मुद्रणम्**
शंकरपुरम्, बेंगळूर - ५६० ००४
दूरवाणी– २६६७६९४२, ५७६० २८३६

**SUDHA MUDRANA**
Shankarpuram, Bangalore - 560 004
Phone : 2667 6942, 5760 2836



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-
श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-

**श्रीमन्मध्वाचार्यसमलंकृतमूलमहासंस्थानाधिष्ठितानां**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

**समर्पितोऽयं ग्रन्थः ॥**

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-
श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-

**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**

वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-

**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**

**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसम्पादकेभ्यः वैकुण्ठवासिभ्यः साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः।*

मन्त्रालयक्षेत्रम्,
पार्थिव संवत्सर
ज्येष्ठ शुक्ल तृतीया



श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठाधीशानां
श्री श्री सुजयीन्द्रतीर्थश्रीपादानां वरकुमारकाणां
**श्री श्री सुशमीन्द्रतीर्थश्रीपादानां**
परमानुग्रहेण सम्पादितोऽयं ग्रन्थः ।

# सम्पादकविद्वन्मण्डली

**प्रधानसम्पादकाः**

**वैकुण्ठवासिनः श्री आचार्य साणूरु भीमभट्टाः**
आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**सम्पादकाः**

**विद्वान् श्री कु. सुशीलेन्द्राचार्याः**, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

**विद्वान् श्री एन्. वादिराजाचार्याः**

**विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः**

**विद्वान् आहिताग्नि श्री वरखेडकर भीमसेनाचार्याः**

**निर्वाहकाः**
**श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः**
श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः,
श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठः,
मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा सङ्क्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | सङ्क्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विट्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी | पांग्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# टिप्पणीविषये स्पष्टीकरणम्

श्रीमज्जयतीर्थविरचितं महामेरुतुल्यं श्रीमन्न्यायसुधाग्रन्थमनेके व्याचख्युः। साम्प्रतमस्माभिः, उपलब्धाः श्रीमन्न्यायसुधाव्याख्याः सङ्गृह्यैकत्र मुद्रापयितव्याः इत्येकमात्रोद्देशेन अनेकव्याख्यासहिततया श्रीमन्न्यायसुधाग्रन्थः मुद्रापितः।

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां श्रीमद्राघवेन्द्रतीर्थश्रीपादानां च सुधाव्याख्यानयोः इदानीं मुद्रापितायां यस्यां कस्याञ्चित् सुधाव्याख्यायां यस्मिन् कस्मिंश्चिद्विषये भिन्नाभिप्राये सति (विरुद्धाभिप्राये सति) सः तद्व्याख्यातॄणामभिप्राय एव। सः श्रीमद्विजयीन्द्रतीर्थश्रीपादानां वा परिमलकाराणां वा सम्पादकानां वा प्रकाशकानां वा सम्मत इति न मन्तव्यमिति एतन्मूलकतया स्पष्टीकुर्मः।

इत्थम्

**सम्पादकाः**



॥ श्रीमन्मूलरामो विजयते ॥

# प्रकाशकीयम्

द्वापरे श्रीगौतममहर्षिभिः शप्तेषु साधुजनेषु व्याकुलीभूतेषु श्रीब्रह्मरुद्रेन्द्रादिभिः प्रार्थितो भगवान्नारायणः श्रीवेदव्यासत्वेनावतीर्य राशीभूतान् वेदान् विभज्य, वेदार्थनिर्णायकानि (५६४) चतुःषष्ट्यधिकपञ्चशत-ब्रह्मसूत्राणि व्यरचयत्।

एषां ब्रह्मसूत्राणां श्रीवाय्ववतारिणः सर्वज्ञाः श्रीमदानन्दतीर्थभगवत्पादाः भाष्यं, श्रीमदनुव्याख्यानं, न्यायविवरणं, अणुभाष्यं चेति ग्रन्थचतुष्टयं विरचय्य महदुपाकुर्वन्।

श्रीमदाचार्याणां प्रियान्तेवासिनां श्रीत्रिविक्रमपण्डिताचार्याणां "व्यक्ततर्कततिं कुरु" इति प्रार्थनामनुरुध्य श्रीमदाचार्याः उपर्युक्तग्रन्थेष्वन्यतमं श्रीमदनुव्याख्यानग्रन्थं रचयामासुः।

अनुव्याख्यानस्यास्य इन्द्रांशसंभूताः श्रीमज्जयतीर्थश्रीमच्चरणाः श्रीमन्न्यायसुधानाम्नीं मेरुतुल्यामनुपमां टीकां व्यरचयन्।

ग्रन्थोऽयं चित्रपदपुञ्जमण्डितः, महागाम्भीर्यवान् महापण्डितवरेण्यानामपि महान्तं गर्वपर्वतं खण्डयितुं दक्षश्चकास्ति।

अस्यामोघस्य ग्रन्थस्य महत्त्वम् एतद्ग्रन्थस्य एतदीयानामनेकासां व्याख्यानां सङ्ख्यैव व्यञ्जयति।

| | **व्याख्यातारो महाभागाः** | **व्याख्यानस्य नाम** |
|---|---|---|
| १) | श्री श्रीपादराजतीर्थाः | वाग्वज्रम् |
| २) | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः |
| ३) | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका |
| ४) | श्री राघवेन्द्रतीर्थाः | परिमलः |
| ५) | श्री यदुपत्याचार्याः | टिप्पणी |
| ६) | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः |
| ७) | श्री गलगली नरसिंहाचार्याः | आनन्दः |
| ८) | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः |
| ९) | श्री श्रीनिधितीर्थाः | टिप्पणी |
| १०) | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका |



| | | |
|---|---|---|
| ११) | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला |
| १२) | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका |
| १३) | श्री कुण्डलगिरि आचार्याः | रसकूलङ्कषः |
| १४) | श्री सत्यव्रततीर्थाः | सुधाविवृतिः |
| १५) | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः |
| १६) | श्री विठ्ठलभट्टाः | टिप्पणी |
| १७) | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि |
| १८) | श्री विष्णुतीर्थाः | रसरञ्जनी |
| १९) | श्री अडवि कृष्णाचार्याः | लघुरसरञ्जनी |
| २०) | श्री मन्नारि कृष्णाचार्याः | चषकः |
| २१) | श्री एरी बाळाचार्याः | उपस्पर्शः |
| २२) | श्री काशी तिम्मणाचार्याः | काशी टिप्पणी |
| २३) | श्री गूढकर्तृकटिप्पणीकाराः | टिप्पणी |
| २४) | श्री प्रदीपकाराः | प्रदीपः |
| २५) | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी |
| २६) | श्री रोट्टि वेङ्कटभट्टाः | सुधाविवृतिः |
| २७) | श्री ताम्रपर्णी आचार्याः | टिप्पणी |
| २८) | श्री उमर्जी प्रह्लादकृष्णाचार्याः | उमर्जी |
| २९) | श्री व्यासतत्त्वज्ञतीर्थाः | कुलिशम् |
| ३०) | श्री महेश्वरसूरिः | टिप्पणी |
| ३१) | श्री पुट्ट तंबि आचार्याः | टिप्पणी |
| ३२) | श्री रत्नगर्भ ओडेयर् | टिप्पणी |
| ३३) | श्री अनन्तभट्टाः | टिप्पणी |
| ३४) | श्री सत्यनाथाचार्याः | टिप्पणी |
| ३५) | श्री जयवेङ्कटाचार्याः | टिप्पणी |
| ३६) | श्री गूढकर्तृकाचार्याः | सुधासारसङ्ग्रहः |
| ३७) | श्री गलगली गोविन्दाचार्याः | पञ्चरत्नस्तबकः |
| ३८) | श्री श्रीमुष्णाचार्याः | पञ्चाधिकरणी |
| ३९) | श्री लिङ्गेरि श्रीनिवासाचार्याः | सिद्धान्तप्रभा |
| ४०) | श्री पाण्डुरङ्गि केशवाचार्याः | सुधावाक्यार्थविनोदः |
| ४१) | श्री उडुपि राघवेन्द्रतीर्थाः (पुत्तिगे मठः) | टिप्पणी |



| | | |
|---|---|---|
| ४२) | श्री सत्यनाथाः | न्यायसुधापरशुः |
| ४३) | श्री सुमतीन्द्रतीर्थाः | भावरत्नकोशः |
| ४४) | श्री पाण्डुरङ्गि केशवाचार्याः | मञ्जरी |
| ४५) | श्री व्यासतत्त्वज्ञतीर्थाः | लघुरसरञ्जनी |
| ४६) | श्री व्यासतत्त्वज्ञतीर्थाः | गुरुरसरञ्जनी |
| ४७) | श्री भीमराव् कुलकर्णी कुम्बारगेरी | टिप्पणी |
| ४८) | श्री सत्यपराक्रमतीर्थाः | सुधाफक्किका |
| ४९) | श्री हुलिगि श्रीपत्याचार्याः | टिप्पणी |
| ५०) | श्री अहोबिलाचार्याः | टिप्पणी |
| ५१) | श्री सत्यप्रज्ञतीर्थाः | टिप्पणी |

एतादृशस्य अत्युत्तमग्रन्थस्य मुद्रणकार्यं श्रीमत्परमपूज्यानां प्रातःस्मरणीयानां श्रीमत्सुजयीन्द्रतीर्थ-श्रीमच्चरणानामादेशं सदिच्छां चानुरुध्य सम्प्रति श्रीराघवेन्द्रस्वामिमठीयपीठाधीश्वराः पूज्याः श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादाः कारयन्तीति अस्माकं परमं प्रमोदस्थानम् ।

अस्य ग्रन्थस्य संशोधनकार्ये अस्मद्विद्यापीठीयप्राच्यग्रन्थालयस्थाः अधोनिर्दिष्टाः टिप्पण्यः हस्तप्रति-कृतयोऽपि उपयोजिता इति निवेदयितुं नितान्तं तुष्यामः ।

संशोधनादिकार्येष्वनुकूलयितुं श्रीसुधाव्याख्यानं श्रीनिधितीर्थीयं तालपत्रस्थं अनुगृहीतवद्भ्यः परम-पूज्येभ्यः श्रीपुत्तिगेमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । एवमेव मुद्रणकार्येऽस्मिन् साक्षाद्वा परोक्षे वा सहकृतवद्भ्यः परमपूज्येभ्यः श्रीमठाधीश्वरेभ्यः सर्वेभ्यः सभक्तिप्रणामगणं कार्तज्ञ्यमाविष्कुर्मः । श्रीनिधितीर्थीयं व्याख्यानं तालपत्रस्थं तौलवलिपिगतं देवनागरिलिपिगतं कृतवतः विद्वान् श्री साणूरु भीमभट्टतनूजः श्री कृष्णमूर्ति महाशयान् सन्दर्भेऽस्मिन् सप्रश्रयं स्मरामः ।

ग्रन्थस्यास्य प्रधानसम्पादकेभ्यः विद्वद्भ्यः वैकुण्ठवासिभ्यः श्री आचार्य साणूरु भीमभट्टमहाशयेभ्यः तथा एतद्ग्रन्थसम्पादकेभ्यः विद्वद्भ्यः श्री कुरुडि सुशीलेन्द्राचार्येभ्यः, तथा विद्वद्भ्यः आहिताग्नि श्री वरखेडकर भीमसेनाचार्येभ्यः, एवं विठ्ठलभट्टीयां टिप्पणीं तथा एरी बाळाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री व्यासनकेरे प्रभञ्जनाचार्येभ्यः, तथा पांग्री श्रीनिवासाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री पांग्री लक्ष्मणाचार्येभ्यः, तथा वाक्यार्थरत्नमालां टिप्पणीं, सत्यनाथतीर्थीयां टिप्पणीं, हुग्गि टिप्पणीं च दत्वा उपकृतवद्भ्यः पंढरपुरीय पूर्णप्रज्ञमतोन्नाहिनीपाठशालाप्रांशुपालेभ्यः विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, तथा वाक्यार्थरत्नमाला-टिप्पण्याः प्रतिकृत्यन्तरं दत्तवद्भ्यः विद्वद्भ्यः श्री के. टि. पाण्डुरङ्गि महाशयेभ्यः एवमेव प्रदीपटिप्पणीं दत्तवद्भ्यः मद्रपुरसर्वकारीयग्रन्थालयव्यवस्थापकेभ्यः श्रीमद्भ्यः, श्रीमन्न्यायसुधाबिन्दुनाम्नीं टिप्पणीं दत्तवद्भ्यः श्रीमद्भ्यः केरलराज्यीय तिरुवाङ्कूरु ग्रन्थभाण्डारव्यवस्थापकेभ्यः, तथा रसरञ्जनी-लघुरसरञ्जनीद्वयं दत्तवद्भ्यः विद्वद्भ्यः श्री गंगूरु



हनुमेशाचार्येभ्यः, एवं ग्रन्थस्यास्य प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः विद्वद्भ्यः श्री कडपा राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, विद्वद्भ्यः श्री एन्. वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री पुरोहित नरसिंहाचार्येभ्यः, विद्वद्भ्यः श्री अग्निहोत्री वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, विद्वद्भ्यः श्री गणाचारी रङ्गनाथाचार्येभ्यः, विद्वद्भ्यः श्री उंदारु पांडुरंग श्रीनिवासमूर्ती आचार्येभ्यः, एवं विशेषतः अल्पीयस्येव काले महता परिश्रमेण सश्रद्धं ग्रन्थानां प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः तथा सर्वाङ्गसौन्दर्येण मुद्राप्य दत्तवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः विद्वद्भ्यः श्री वरखेडकर धनंजयाचार्येभ्यः, तथा ग्रन्थस्यास्य अध्ययनाध्यापनादिकर्तृभ्यः सर्वेभ्यः श्रीभगवान् सीताजानिः श्रीमूल-रघुपतिवेदव्यासः आयुरारोग्यैश्वर्यादीनि चानुगृह्य संरक्षत्विति अनन्यया भक्त्या सम्प्रार्थयामहे ।

अत्र मुद्रापितासु टिप्पणीषु काश्चन टिप्पण्यः प्राचीनहस्तप्रतिरूपेण शिथिलाः मध्ये मध्ये त्रुटिताः कदाचिदसमग्रा अपि तेनैव रूपेण पण्डितैः संशोध्य मुद्रापिताः । अत्र प्रकाशितभागे यदि कुत्रचित् स्खलितानि प्राज्ञैर्विद्वद्भिः विलोकितानि चेत् ते अस्मान्प्रति संसूचयेयुः । तेन वयं शुद्धिपत्रिकायां अग्रिमसम्पुटेषु वा तत्सर्वं समीकृत्य विदुषां पुरः उपस्थापयितुं शक्ष्यामः । येषां समीपे अस्माभिरमुद्रितटिप्पण्यः उपलभ्यन्ते ते कृपया तान् ग्रन्थान् अस्मभ्यं प्रेषयन्ति चेत् तत्सर्वमागामिसम्पुटेषु वयं सम्यक् संशोध्य मुद्रापयितुं महता सन्तोषेण स्वीकुर्मः ।

इत्थम् ।

भवदीयम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्,**

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

***



॥ श्रीमन्मूलरामो विजयते ॥

# प्रस्तावना

**यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम्।**
**न क्षमन्ते विमतयः तमुपासे श्रियःपतिम् ॥**

भूर्भुवस्वरादिचतुर्दशभुवनात्मकसंख्यातिगब्रह्माण्डकोटीः रोमकूपे सन्निवेश्य सकललोकजनन्या श्रिया सह सर्पतल्पे शयानेन भगवता सृष्टेषु भूलोकखण्डेष्वन्यतमेऽस्मिन् भरतखण्डे जनिमतामस्माकं महद्भागधेयमिदं यदत्र भगवान् तत्तद्युगेष्ववतीर्य बलकार्यं ज्ञानकार्यं च सम्पाद्य स्वभक्तानन्वग्रहीत् । तत्रापीदमतिशयितं वक्तव्येष्वाद्यं वचनं यदत्र तद्भक्ताग्रणीः पावनः पवमानः अनेकधाऽवतीर्य तत्रापि तृतीयेऽवतारे श्रीमध्वनाम्नाऽत्र प्रकटीभूय सज्जनानुददीधरत् । तदीयभक्तानुग्रहकार्येषु आचन्द्रार्कं दीप्यमानानि बहूनि कार्याणि यद्यपि वक्तव्यानि सन्ति तथाऽपि समस्तशास्त्रार्थसारभूतानां श्रीबादरायणसंज्ञकेन श्रीवेदव्यासमहर्षिणा निर्मितानां ब्रह्मसूत्राणां भाष्य-अणुभाष्य-अनुभाष्य-न्यायविवरण-ग्रन्थानां निर्माणमतितरां सर्वैरपि अध्यात्मविद्यारसिकैः विचारविमर्शकैः प्रशंसनीयं सर्वदा स्मरणीयं कार्यमिति निश्चप्रचं दृढतरं वयं वक्तुं शक्नुमः ।

तत्र च सूत्रसंबन्धिग्रन्थचतुष्टये ब्रह्मसूत्र-अनुव्याख्यान-ग्रन्थराजः नभसि नक्षत्रपुञ्जमध्ये चन्द्रमा इव चकास्ति । तस्यास्य ग्रन्थराजस्य इन्द्रावतारभूतैः प्रातःस्मरणीयैः परमपूज्यश्रीजयतीर्थमस्करिवरैः रचितम् अनुव्याख्यानव्याख्यानं न्यायसुधानामकं नैकाभिष्टिप्पणीभिः समलंकृतं श्रीराघवेन्द्रतीर्थगुरुवर्याणां प्रेरणया अनुग्रहेण च इदानीं सम्प्रकाश्य हरिगुरुभक्तानां करकमलयोः समर्पयितुं मोमुद्यते अस्माकं चेतः ।

उपनिषत्प्रस्थान-गीताप्रस्थान-सूत्रप्रस्थाननामकप्रस्थानत्रये सूत्रप्रस्थानमेव अन्तिमं निर्णायकं समस्तैः शिरसा धारणीयं च भवति । किं बहुना समस्तेषु वेदेषु समस्तेषु पुराणेष्वन्यत्राप्यभ्यर्हणीयवैदिकवाङ्मयेषु च उक्तानामर्थानां निर्णयाय सूत्राण्येव अस्माकमवलम्बभूतानि महार्णवे तरतामाधारभूतनौकास्थानीयानि । तेषां सूत्राणां व्याख्यानभूतानुव्याख्यानस्य व्याख्यानरूपा इयं सुधा देवलोकीयसुधातोऽप्यभ्यर्हिततमा जन्ममृत्यु-जरादिकं सर्वमपहृत्य स्वरूपानन्दाविर्भावरूपं मोक्षं दापयितुं समर्था । अस्य ग्रन्थस्य प्रशंसा कथं कार्या, कियती कार्या इत्यादिविषयाः आलोच्यमानाः अस्माकं जिह्वां पुरःसर्तुमेव न मुञ्चन्ति । यतो हि ग्रन्थकाराः श्रीमज्जयतीर्थश्रीमच्चरणाः पूर्वाश्रमे नाममात्रेण गृहस्थाश्रमप्रवेशं लब्ध्वा केनापि अनालोचनीयेन केवलं भगवता कॢप्तेन घटनाविशेषेण संसारमिमं तुच्छीकृत्य स्वीये तरुणे वयसि संन्यासाश्रमं प्रविश्य स्वगुरूणां विद्यारण्यारण्यच्छेदकानां श्रीमदक्षोभ्यतीर्थगुरुवर्याणां सविधे शुकवत् शिक्षिता भूत्वा स्वीयया अलौकिकप्रज्ञया आचार्याणां अनेकग्रन्थानां टीकाः विरचय्य प्रायः अन्ते इमां न्यायसुधां भक्तेभ्यः नाकीन्द्रः सुधां इव प्रादुः । अस्य ग्रन्थस्य माहात्म्यं शेषोऽपि वर्णयितुं नालम् । बाल्यादारभ्य यौवनपर्यन्तं प्रायः संस्कृतभाषायाः वेदादिशास्त्राणां च परिचयहीना अपि केवलं गुर्वनुग्रहेण शास्त्राण्यभ्यस्य अनन्तरं किञ्चित्समयपर्यन्तं सरस्वतीं संसेव्य तदनुग्रहेण घण्टां (लेखनीं) पूगं च लब्ध्वा



लेखनकार्यं प्रारभन्त जयतीर्थश्रीमच्चरणाः। तत्रापि गुहाया अन्तरुपविश्य पञ्चषशिष्यान् पाठयन्तः स्वयमेव वाणीकृपया लब्धया लेखन्या आचार्याणां ग्रन्थान् व्याख्यान्तः, अनन्तरं तदुपरि पूगेन सम्मार्जनमात्रेण तत्सर्वं त्रुटिलेशरहितं भगवत्कृपया आविर्भावयन्तः ते लोके टीकाचार्याः इत्येव निरुपपदगौरवनाम्ना प्रथिताः बभूवुः।

महानुभावाः जयतीर्थश्रीमच्चरणाः मठीयवैभवादीन् हित्वा शिष्यैः भिक्षया आनीतेन यावनालान्नेन (भक्करि) जीवनं निरवहन्।

महानुभावाः जयतीर्थश्रीमच्चरणाः गुरुभक्तिविषये अन्यादृशम् आदर्शम् अस्माकं पुरतः उपस्थापयामासुः। तद्यथा—

**न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम्।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम्॥**

अनेन श्लोकेन प्रदर्शितः विनयः अनन्यसाधारणः लोकातिशायी सहृदयान् जिज्ञासून् रोमाञ्चयति। एतदपेक्षया अधिकः गुरुप्रवणः गुरोः दासानुदासः लोके यत्र कुत्रापि नोपलभ्येत इत्येवं सर्वैः सर्वथा अनुभूयते एव।

अल्पीयसा अनेहसा स्वकीयप्रखरबुद्धिवैभवेन निर्मितस्य अस्य सुधाग्रन्थस्य वैशिष्ट्यं वर्णयितुं सहस्रवदनः शेषोऽपि नालम्, किमुत अल्पप्रज्ञाः तृणकल्पाः वयम्। एतदीयग्रन्थस्य माहात्म्यं संवर्णयन् कविरेकः एवमुद्गिरति स्म। यथा—

**आमूलाग्रनिबद्धतर्कजटिलं शब्दैकजीवातुकं**
**मीमांसानुनयं च शङ्करवचो हुङ्कारभङ्गप्रदम्।**
**शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्स्वप्रतन्त्रान्तराः**
**व्याख्यास्यन्ति पठन्ति वा कथमहो किं वा कलौ दुर्घटम्॥**

'अध्यात्मविद्या विद्यानाम्' इति श्रीकृष्णोक्त्यनुसारेण अद्वितीयाध्यात्मविद्याख्य-सूत्रव्याख्यानरूपा इयं न्यायसुधा नैकाभिष्टिप्पणीभिः सह संयोज्य, संशोध्य, संमुद्र्य अत्र प्रकाशं नीयते। महदिदं साहसकार्यं महापुरुषोत्तमस्य श्रीहरेः अविच्छिन्नभक्ताग्रेसर-श्रीमन्मुख्यप्राणावताराणां श्रीमदानन्दतीर्थभगवत्पादानां परमानुग्रहेणैव सम्पन्नः प्रह्लादावतारभूतानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानाम् आराधनसमये तत्करकमलाभ्यामेव श्रीमन्मूलरामचन्द्रदेवस्य पादकमलयोः तद्भक्तवृन्देन सप्रश्रयं सभक्ति समर्प्यतेतमाम्। श्रीकृष्णार्पणमस्तु॥

**आचार्याः साणूरु भीमभट्टाः**
प्रधानसम्पादकाः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## संपुटम् – १०

## प्रकृत्यधिकरणम् (१-४-६) —— भागः - २

### विषयानुक्रमणिका



| विषयः | परिच्छेदः | पुटसंख्या |
|---|---|---|
| ट) २) विश्वसत्यतायां प्रमाणम् | १३०-१८२ | ४५०१-४७०३ |
| त) आगमानुमानाभ्यां विश्वसत्यत्वसिद्धिः | १३० | ४५०१-४५०५ |
| थ) विश्वसत्यत्वे प्रत्यक्षप्रमाणम् | १३१-१८२ | ४५०५-४७०३ |
| १) गगनादिविश्वसत्यतायाः साक्षिप्रत्यक्षसाधितत्वम् | १३१-१८२ | ४५०५-४७०३ |
| प) आकाशादीनां क्षपणकवार्तिककारोक्तचाक्षुषत्वनिरसनम् | १३२ | ४५०९-४५१४ |
| फ) किरणावलीकारीयमतनिरासः | १३३-१८२ | ४५१५-४७०३ |
| १) आकाशस्यानुमानवेद्यत्वनिरासः | १३४-१४४ | ४५१८-४५६८ |
| य) अनुमानप्रयोगः | १३५ | ४५१८-४५२९ |
| र) तन्निरासः | | |
| (शब्दस्य पृथिव्यादिगुणत्वे बाधकानि) | १३६-१४२ | ४५२९-४५५९ |
| १) तदनुमाने शब्दरूपपक्षस्य द्विविधविकल्पानुपपत्तिः | १३७ | ४५३१-४५३९ |
| २) शब्दस्य वायुगुणत्वेऽनुपपत्तिः | १३८ | ४५३९-४५४७ |
| ३) शब्दस्य आत्मगुणत्वेऽनुपपत्तिः | १३९-१४१ | ४५४७-४५५७ |




| विषयः | परिच्छेदः | पुटसंख्या |
|---|---|---|
| श) आत्मान्तरग्राह्यत्वहेतोरर्थद्वय-स्याप्यनुपपत्तिः | १४०-१४१ | ४५४९-४५५७ |
| १) अनेकप्रतिपत्तृसाधारणत्वमिति प्रथमार्थानुपपत्तिः | १४० | ४५४९-४५५३ |
| २) ग्राहकस्थत्वेनाग्रहणमिति द्वितीयार्थानुपपत्तिः | १४१ | ४५५३-४५५७ |
| ४) शब्दस्य कालादिगुणत्वेऽनुपपत्तिः | १४२ | ४५५७-४५५९ |
| ल) शब्दस्य आकाशगुणत्वे साधकम् | १४३ | ४५५९-४५६० |
| व) परिशेषानुमानस्य निरासः | १४४ | ४५६०-४५६८ |
| २) भूताकाशस्यानुमानवेद्यत्वेऽङ्गीकृतेऽपि अव्याकृताकाशस्य साक्षिवेद्यत्वमेव | १४५ | ४५६८-४५७१ |
| ३) साक्षिसिद्धं न कदापि बाध्यते | १४६ | ४५७१-४५७४ |
| ४) साक्षिणस्त्रैकालिकाबाध्यार्थगोचरत्वम् | १४७-१८२ | ४५७४-४७०३ |
| य) कालसिद्धिः | १४८-१६६ | ४५७६-४६५१ |
| १) कालो हि साक्षिप्रत्यक्षः | १४९ | ४५७९-४६८१ |
| २) कालस्य नानुमानवेद्यत्वम् | १५०-१६६ | ४५८१-४६५१ |
| श) कालविषयाणां सर्वानुमानानां सामान्यतो निराकरणम् | १५०-१५१ | ४५८१-४५८६ |
| ष) कालविषयानुमानानां विशेषतो निराकरणम् | १५२-१६६ | ४५८६-४६५१ |
| १) उक्तार्थस्पष्टीकरणम् | १५३-१५६ | ४५८९-४६०१ |
| २) परभाष्यव्याख्यानामसाधारणदोषेण दूषणम् | १५७-१६३ | ४६०१-४६३६ |
| अ) वल्लभोदीरितकालसमर्थनरीतिदूषणम् | १५७-१६२ | ४६०१-४६३१ |
| १) तद्रीत्युद्भावनम् | १५७ | ४६०१-४६०६ |
| २) तद्दूषणम् | १५८-१६२ | ४६०७-४६३१ |
| आ) किरणावलीकारोदितकालसमर्थनरीतिदूषणम् | १६३ | ४६३१-४६३६ |
| ३) परभाष्यव्याख्यानां साधारदोषेण दूषणम् | १६४-१६६ | ४६३६-४६५१ |
| अ) लीलावत्युक्तप्रकारस्य दूषणम् | १६४ | ४६३६-४६३८ |




| विषयः | परिच्छेदः | पुटसंख्या |
|---|---|---|
| आ) नवीनोक्त(मानमनोहरोक्त)प्रकारस्य दूषणम् | १६५ | ४६३८-४६४२ |
| इ) अपरमतोक्तप्रकारस्य दूषणम् | १६६ | ४६४२-४६५१ |
| र) 'गगनादेः सकलप्रपञ्चस्य त्रैकालिकाबाध्यत्वं साक्षिसिद्धं' इत्यर्थस्य उपसंहारपूर्वकं विवरणम् | १६७-१८२ | ४६५१-४७०३ |
| छ) २) ठ) प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां आन्तरानुपपत्तिप्रदर्शनपूर्वकं अविरुद्धार्थकथनम् (असाधारणानुपपत्तिव्युत्पादनम्) | १८३-२०४ | ४७०३-४७८६ |
| १) 'प्रपञ्चो यदि विद्येत' इत्यादि वाक्यद्वयस्य व्याख्यानम् | १८३-१८८ | ४७०३-४७४३ |
| त) एतद्वाक्यद्वयस्य पराभिमतेऽर्थेऽनुपपत्तिः | १८३ | ४७०३-४७०८ |
| थ) उक्तार्थस्पष्टीकरणपूर्वकं एतद्वाक्यद्वयोक्तशब्दार्थकथनम् | १८४-१८७ | ४७०८-४७३५ |
| १) 'विद्येत' इत्यस्यार्थकथनम् | १८४ | ४७०८-४७१४ |
| २) 'प्रपञ्च'शब्दार्थविशेषकथनम् | १८५-१८६ | ४७१४-४७३४ |
| प) अर्थविशेषकथनम् | १८५ | ४७१४-४७२२ |
| फ) अर्थविशेषे कारणद्वयम् | १८६ | ४७२२-४७३४ |
| ३) 'अद्वैतं परमार्थतः' इत्येतद्व्याख्यानम् | १८७ | ४७३४-४७३५ |
| द) एतद्वाक्योक्तशब्दयोजना | १८८ | ४७३५-४७४३ |
| २) 'उत तमादेशमप्राक्षं' इति श्रुतिव्याख्यानम् | १८९-२०१ | ४७४३-४७७८ |
| त) स्वमतेन व्याख्यानम् | १८९-१९६ | ४७४३-४७७० |
| १) स्वमतव्याख्यानप्रारम्भस्थलान्वेषणार्थमादौ परिणामवादिनां विवर्तवादिनां च व्याख्यानम् | १८९ | ४७४३-४७५० |
| २) स्वमतेन व्याख्यानम् | १९०-१९६ | ४७५१-४७७० |
| ट) 'वाचारम्भण'शब्दार्थः | १९० | ४७५१-४७५५ |
| ठ) 'विकार'शब्दार्थः | १९१ | ४७५५-४७५६ |
| ड) वाचारम्भण-विकार-शब्दार्थयोर्योजना | १९२-१९३ | ४७५७-४७६४ |




| विषयः | परिच्छेदः | पुटसंख्या |
|---|---|---|
| ढ) 'सत्य'शब्दस्य 'नित्य'-अर्थत्वोपपादनम् | १९४-१९६ | ४७६४-४७७० |
| १) योगदर्शनम् | १९४ | ४७६४-४७६६ |
| २) रूढिदर्शनम् | १९५ | ४७६६-४७६८ |
| ३) उपपादनम् | १९६ | ४७६८-४७७० |
| थ) विवर्तवादिव्याख्याने दोषाणि | १९७-२०१ | ४७७०-४७७८ |
| १) वाचारम्भणशब्दस्य मिथ्यार्थकत्वेऽश्रुतकल्पनम् | १९७ | ४७७०-४७७३ |
| २) नामधेयपदव्याख्यानदूषणम् | १९८ | ४७७३-४७७४ |
| ३) वाचारम्भणशब्दस्य व्याख्यानान्तरे दूषणम् | १९९ | ४७७४ |
| ४) 'इति'शब्दस्य निरर्थकता | २००-२०१ | ४७७५-४७७८ |
| ३) 'यथा सोम्य' इत्यादिदृष्टान्तवाक्यानां व्याख्यानम् | २०२-२०४ | ४७७८-४७८६ |
| (४) आ) ४) ग) २) विवर्तमतनिराकरणोपसंहारः | २०५-२०६ | ४७८६-४७८८ |
| च) तस्य असङ्ख्यातदोषवत्त्वाद्धेयत्वम् | २०५ | ४७८६-४७८७ |
| छ) उक्तातिरिक्तदोषाणामनुक्तौ कारणम् | २०६ | ४७८७-४७८८ |
| (५) एतत्पादीयं परोक्तव्याख्यानात् स्वोक्तव्याख्यानस्य वैशिष्ट्यम् | २०७ | ४७८८-४७८९ |
| (६) एतदध्यायोक्तसमन्वयफलोपसंहारः | २०८ | ४७८९-४७९३ |
| (७) प्रथमाध्यायचरमचरणान्त्यमङ्गलाचरणम् | २०९ | ४७९४ |


* * *





**॥ अथ विश्वसत्यतायां प्रमाणम् ॥**
**॥ तत्रादौ आगमानुमानाभ्यां विश्वसत्यत्वसिद्धिः ॥**

१३० **सु०—** एवं विश्वस्य ब्रह्मविवर्तत्वं निराकृत्य तत्स(त्ता)त्यतायां प्रमाणमाह **विश्वमिति ।**

**अनु०—** 'विश्वं सत्यं' 'यच्चिकेत' 'प्र घा न्वस्य' 'यथार्थतः' ।
इत्यादिश्रुतयः सर्वा विश्वसत्यत्ववाचिकाः ॥

**यथार्थत** इत्यनेन 'कविर्मनीषी' इति श्रुतिमुपादत्ते । व्यावहारिकसत्यतापराः श्रुतय इति चेन्न, 'तत्सत्यमि'त्यस्या अपि तथात्वप्रसङ्गात् । श्रुत्यन्तरविरोधादिति चेदत्रापि 'असदेवेदमि'ति श्रुतिविरोधात् । अपुरुषार्थत्वान्न प्रपञ्चसत्यतायां तात्पर्यमिति चेन्न, सत्यजगन्निर्मातृत्वादिपारमेश्वरमाहात्म्यज्ञानस्यैव पुरुषार्थहेतु(प्रयोजन)त्वात् । निष्प्रपञ्चात्मज्ञानसाध्याद्वितीयतापत्तिरूपपुरुषार्थविरुद्धं प्रपञ्चसत्यत्वमिति चेत्, तर्हि ब्रह्मसत्यत्वमपि शून्यपरिभावनालभ्यशून्यतापत्तिलक्षणमोक्षविरुद्धमिति समानम् । तत् प्रमाणाननुगुणमिति चेत्, सममेतदपीति वक्ष्यामः ।

अनुमानमपि प्रपञ्चसत्यतायामर्थक्रियाकारित्वं द्रष्टव्यम्, प्रागुक्ततर्कोपपादनेनैव अस्य उपपादित्वादिति ।

**परि०—** 'विश्वं सत्यम्' इत्यादिना 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्' 'यच्चिकेत सत्यमित्तन्न मोघं वसुस्पार्हमुत जेतोत दाता', 'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचमि'ति श्रुतीनामुपादानस्य स्पष्टत्वात् । 'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः' इति श्रुतौ यथार्थत इति पदाभावेन तच्छ्रुत्युपादानस्यास्फुटत्वादाह **यथार्थत इत्यनेनेति** । एतासामर्थस्य तत्त्वोद्योतादौ स्पष्टमुक्तत्वात् सन्न्यायरत्नावल्यामर्थस्योक्तत्वाच्चार्थमनुक्त्वा तासाममुख्यसत्यतापरत्वेन वा सत्यत्वरूपे स्वार्थे तात्पर्याभावेन वा विश्वस्य परमार्थसत्त्वा(त्त्व)निर्णायकत्वमाशङ्क्य प्रतिबन्द्या निराह **व्यावहारिकेति** । 'इति चेन्ने'त्यनन्तरं कल्पकाभावादन्यथे'ति पदद्वयमव्याहार्यम् । कल्पकमाशङ्कते **श्रुत्यन्तरेति** । नेहनानेत्यादि श्रुत्यन्तरेत्यर्थः । **अत्रापीति** । ब्रह्मसत्यत्वेऽपीत्यर्थः । अपुरुषार्थत्वादित्यत्र नञोऽभावार्थत्वमुपेत्य





विश्वसत्यत्वज्ञानस्य पुमर्थहेतुत्वात् न एतासां श्रुतीनां तत्र तात्पर्यमुच्यते, अथ पुमर्थविरुद्धत्वात् । आद्ये आह **सत्येति** । अन्त्यमाशङ्कते **निष्प्रपञ्चेति** । **इति वक्ष्याम इति** । उपासनापादे विद्यैव तु निर्धारणादित्यधिकरणाद्यसूत्रव्यावर्त्यसाधनान्तरनिरासप्रस्तावे 'न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यते' इति निष्प्रपञ्चात्मैक्यज्ञानं मुक्तिसाधनमित्येतत् । तथा उत्क्रान्तिपादे 'निर्विशेषं स्वयंभातम्' इत्यादिना शून्यवाद्यभिमतमोक्षमुक्त्वा 'इत्येवं मायिनश्चाहुरि'त्यादिना अद्वितीयताऽऽपत्तिरूपमोक्ष इत्येतच्च प्रमाणाननुगुणमिति वक्ष्याम इत्यर्थः । **प्रागुक्ततर्केति** । 'व्यावहारिकता चास्य स्यादबाध्यत्व एव ही'त्युक्ततर्कस्य 'बाध्यं नार्थक्रियाकारी'त्यादिना 'तत्सदेवार्थकारकमि'त्यन्तेन यद्व्यास्त्यादिमत्त्वेनोपपादनं कृतं तेनैवास्यानुमानस्योपपादितत्वादित्यर्थः । सन्न्यायरत्नावल्यां तु व्यावहारिकतेत्यादिना युक्त्या, विश्वं सत्यमित्यादिना श्रुत्या, सत्यमित्यादिना प्रत्यक्षेण सत्यत्वोपपादनमित्युक्तम् ।

**यादु०**— अपुरुषार्थत्वादित्यस्य पुरुषार्थहेतुज्ञानविषयत्वाभावादित्यर्थो वा पुरुषार्थविरोधित्वादित्यर्थो वेति विकल्पं मनसि निधायाद्यं दूषयति **सत्यजगन्निर्मातृत्वादीति** । द्वितीयमाशङ्कते **निष्प्रपञ्चात्मेति** । **तत्प्रमाणाननुगुणमिति** । शून्यभावनया शून्यताऽऽपत्तिलक्षणो मोक्षो भवतीत्येतदप्रामाणिकं प्रमाणविरुद्धं चेत्यर्थः । **सममिति** । अद्वितीयब्रह्मभावनया अद्वितीयब्रह्मभावापत्तिरूपमोक्षो भवतीत्येतदपि न प्रामाणिकं प्रमाणविरुद्धं चेति तृतीये मोक्षसाधनपरीक्षायां वक्ष्याम इत्यर्थः । **प्रागुक्ततर्केति** । 'भ्रमत्वे त्वियमुक्तिश्च तदन्तःपतनान्न ही'ति प्रागुक्ततर्कस्य यदुपपादनम् 'व्यावहारिकता चास्य स्यादबाध्यत्व एव हि । बाध्यं नार्थक्रियाकारी'त्यादिरूपं, तेनैवेत्यर्थः ।

**वं०प०**— **श्रुतयः** प्रपञ्चसत्यताप्रतिपादिकाः । **इत्यस्याः** ब्रह्मसत्यताप्रतिपादिकाया इत्यर्थः । **तथात्वेति** । व्यावहारिकसत्यताप्रतिपादकत्वेत्यर्थः । श्रुतीनां व्यावहारिकसत्यत्वमङ्गीकार्यमित्यत्र हेतुमाशङ्कते **श्रुत्यन्तरेति** । जगतः पारमार्थिकसत्यत्वाङ्गीकारे 'नेह नाना' इत्यादिश्रुत्यन्तरविरोधापत्त्या 'विश्व सत्यम्' इत्याद्याः श्रुतयो व्यावहारिकसत्यतापरा इत्यर्थः । **अत्रापीति** । ब्रह्मणोऽपि पारमार्थिकसत्यत्वाङ्गीकारे 'असदेवेदमग्र आसीत्' इत्यादिश्रुतिविरोधसाम्येन तत्सत्यमित्यस्या अपि ब्रह्मणः पारमार्थिकसत्यतापरत्वं न स्यादित्यर्थः । असदेवेदमिति श्रुतिर्ब्रह्मणो नासत्त्वपरा । अन्यार्थत्वादिति चेत् सममन्यत्रापि । 'नेह नाना' इत्यादिश्रुतेरप्यन्यपरत्वेन विश्वमिथ्यात्वाप्रतिपादकत्वादिति । ननु विश्वं सत्यमित्यादिश्रुतिभिः न विश्वसत्यता सिद्ध्यति श्रुतीनां विश्वसत्यतायां तात्पर्याभावादित्याशङ्कते **अपुरुषार्थत्वादिति** । **अनुमानमिति** । जगत्सत्यमर्थक्रियाकारित्वादित्यनुमानमित्यर्थः । अत्र स्वाप्नार्थादौ व्यभिचार इत्यत आह **प्रागुक्तेति** । यदि जगद्व्यावहारिकं स्यात् तदाऽबाध्यमपि स्यादिति तर्कस्य स्वाप्नार्थानां सत्यतामङ्गीकृत्य व्यभिचारादिकं परिहृत्योपपादनेनेत्यर्थः । **अस्य** अनुमानस्य ।



**आनन्दः**— ननु विवर्तमतनिरासस्योपक्रमावसरे एव निराकर्तव्यः सत्यत्वे प्रमाणोपन्यासस्त्वसङ्गत इत्यत आह **एवमिति** । **श्रुत्यन्तरेति** । नेहनानेत्यादिश्रुत्यन्तरेत्यर्थः । ननु प्रपञ्चसत्यताज्ञानस्य पुरुषार्थासाधनत्वात् सत्यत्वेऽपि न श्रुतेस्तात्पर्यमित्याशङ्कते **अपुरुषार्थत्वादिति** । **एतदपीति** । निष्प्रपञ्चब्रह्मज्ञानसाध्याद्वितीयतापत्तिरूप पुरुषार्थ इत्येतदपीत्यर्थः ।

**शे०वा०**— ननु विवर्तमतनिराकरणावसरे स्वमतसाधकप्रमाणोपन्यासोऽसङ्गत इत्यतः पूर्वोत्तरग्रन्थयोरसङ्कीर्णतासिद्धयेऽर्थभेदं दर्शयति **एवमिति** । अत्र 'विश्वं सत्यमि'त्यस्य 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वामि'ति श्रुतिप्रतीकस्वरूपानुवादत्वेन, 'यच्चिकेते'त्यस्य 'यच्चिकेत' सत्यमित्तन्न मोघमि'ति श्रुतिप्रतीकस्वरूपानुवादत्वेन, 'प्रघान्वस्ये'त्यस्य 'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचमि'ति श्रुतिप्रतीकस्वरूपानुवादत्वेनार्थकथनरूपत्वाभावात् 'यथार्थत' इत्यर्थानुवादरूपोत्तरभाष्यखण्डसङ्ग्राह्यमेव दर्शयति **यथार्थत इत्यनेनेति** । **व्यावहारिकेति** । ततश्च नैतच्छ्रुत्यवष्टम्भेन पारमार्थिकत्वसिद्धिः । व्यावहारिकसत्यत्वसमर्थनं चानर्थकम् । मिथ्यात्ववादिना मयाऽपि तस्याङ्गीकृतत्वादिति भावः । व्यावहारिकशब्देनाबाध्योक्ताविष्टापत्तिर्बाध्योक्तावुदाहृतश्रुतीनां चिरकालानुवृत्तदृढभ्रान्तिहेतुत्वेन अत्यन्ताप्रामाण्यप्रसङ्गात् । न बाधाभावे तदङ्गीकर्तुं शक्यम् । अन्यथा तत्सत्यमित्यादिब्रह्मसत्यबोधकवाक्यानामपि व्यावहारिकपरत्वस्याप्रामाण्यस्य च प्रसत्त्या तत्त्वावेदकत्वसिद्धान्तभङ्गप्रसङ्गादित्याशयवानाह **न तत्सत्यमित्यस्या अपीति** । ननु नेह नानेत्यादिविश्वमिथ्यात्वबोधकवाक्यविरुद्धत्वात् विश्वसत्यत्वबोधकवाक्यानामप्रामाण्यमिष्टमेवेति कथं तदापादनम् । न चैवं तत्सत्यमित्यस्या अपि तत्प्रसङ्गः ।. भवेदेवं यदि श्रुतिद्वयस्य साम्यं स्यान्न चैतदस्ति । विश्वं सत्यमित्यादीनां श्रुतिबाधितत्वात् । तत्सत्यमित्यादेश्च तदबाधितत्वादविशेषासिद्धया प्रतिबन्द्यनुत्थानादित्याशयेन शङ्कते **श्रुत्यन्तरविरोधादिति चेदिति** । यद्यप्यत्र नेह नानेति श्रुतेः प्रामाण्यसंरक्षणाय त्वत्पक्षे लक्षणयाऽखण्डचिन्मात्रपरत्वेन न जगत्सत्यत्वविरोधित्वं जगत्सत्यत्वश्रुतिविरोधेन तन्मिथ्यात्वश्रुतेरेवाप्रामाण्यमित्यपि वक्तुं शक्यम् । तथाऽपि स्पष्टत्वाच्छिष्यैरेव तदूह्यतामिति भावेन तदनुद्भाव्य पूर्वपरिगृहीतप्रतिबन्दीसंरक्षणाय बाधाबाधकृतवैलक्षण्यमेव निराकरोति **अत्रापीति** । ननु अद्वैतश्रुतेः पुरुषार्थवत्त्वेनाद्वैते निर्णीततात्पर्यकत्वेन तात्पर्यग्राहकप्रमाणाभावेन अनिर्णीततात्पर्यकजगत्सत्यत्वश्रुत्यपेक्षया प्रबलत्वेन तद्बाधकत्वेऽपि असद्वेत्यादिब्रह्मासत्यत्वबोधकवाक्यस्य अपुरुषार्थत्वेनानिर्णीततात्पर्यकत्वात् तत्सत्यमित्यादेरेव च पुरुषार्थवत्त्वेन निर्णीततात्पर्यकत्वाद्विपरीतबलाबलप्राप्त्या ब्रह्मसत्यत्वबोधकवाक्येनैवासद्वेत्यादिवाक्यबाधो न तु असद्वेत्यादिवाक्येन तत्सत्यमित्यादेरिति न प्रतिबन्दीग्रहो युक्त इत्याशयवानाशङ्कते **अपुरुषार्थत्वादिति** । किमपुरुषार्थत्वादिति पुरुषार्थहेतुज्ञानविषयत्वाभावोऽभिप्रेतः किं वा पुरुषार्थविरोधित्वं वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **सत्येति** । ततश्च नोक्तरीत्या अद्वैतवाक्येन प्राबल्यसिद्धिरिति भावः । द्वितीयमाशङ्कते **निष्प्रपञ्चेति** । **समानमिति** । ततश्च असद्वेत्यादिवाक्यस्योक्तरीत्या प्राबल्यप्रसत्त्या तेन तत्सत्यमित्यादेर्बाधः स्यादिति प्रतिबन्दी सुस्थिरेति भावः । भवेदेवं ब्रह्मसत्त्ववचनस्य शून्यभावरूपमोक्षविरुद्धत्वेन तत्सत्यत्वे अतात्पर्यम् ।





यदि शून्यभावो मोक्ष इति सिद्धं स्यात् । न चैतदस्ति । **चतुर्थस्य द्वितीयो**क्तरीत्या अप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन च तस्यैवासिद्धेर्वक्ष्यमाणत्वादित्याशयवानाशङ्कते **तदिति** । तर्हि जगत्सत्यत्ववचनस्यापि नाद्वितीयतारूपमोक्षविरुद्धत्वेन जगत्सत्यत्वेऽतात्पर्यं कल्प्यम् । अद्वितीयतापत्तेरमोक्षत्वस्य चतुर्थस्य द्वितीये अप्रामाणिकत्वप्रमाणविरुद्धत्वाभ्यां वक्ष्यमाणत्वात् । तथा च **कथमुदाहृतवाक्यैर्विश्व**स्य न सत्यत्वसिद्धिरिति भावेनाह **सममिति** । 'प्रत्यक्षमुपपत्तिश्च बहवश्चागमाः' इत्यादिना तृतीयस्य चतुर्थे प्रत्यक्षागमयोरिवार्थक्रिया-कारित्वानुमानस्यापि विश्वसत्यत्वसाधकत्वेनैवोपन्यासादत्राप्यनुमानमभिप्रेतमेवेत्यभिप्रेत्याह **अनुमानमपीति** । ननु स्वाप्नकामिनीसम्भोगादावर्थक्रियाकारित्वस्य सत्त्वेन व्यभिचरितत्वात् **कथमनुमानस्य** सत्यत्वसाधकत्व-मित्यतो 'व्यावहारिकता चास्य स्यादबाध्यत्व एव ही'ति प्रागुपन्यस्ततर्कस्य, 'न च स्वप्नोऽपि नो मृषा' इत्यादिनोक्तव्यभिचारस्य परिहारेण तदुपपादनेनैवास्याप्युपपादितत्वान्न व्यभिचार इत्याह **प्रागुक्तेति** ।

**वा०र०**— अत्यन्ताप्रामाण्यप्रसङ्ग इति प्रथमान्तपाठः स्वरसः । किं वा पुरुषार्थविरोधित्वमित्यनन्तरं वाशब्दाधिक्यं लेखकप्रमादात् । **चतुर्थस्य द्वितीयेति** । तत्र सकलवाद्युक्तमोक्षस्वरूपस्य निराकरिष्यमाणत्वादिति भावः । द्वितीये उक्ता रीतिरेव प्रदर्शिता **अप्रामाणिकत्वेनेत्यादिना** । चतुर्थस्य द्वितीय इति बुद्ध्या विविच्य वक्ष्यमाणत्वादित्यत्र योज्यम् । यद्वा चतुर्थस्य द्वितीये इति सप्तम्यन्तं बुद्ध्या विविच्य अप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन चेत्युक्तरीत्येतिशब्दाध्याहारेण योज्यम् । उक्तरीत्येतिपदरहितपाठस्तु स्वरस एव । अत एवोत्तरवाक्ये द्वितीयेऽप्रामाणिकत्वेत्येवोक्तम् । प्रमाणविरुद्धत्वाभ्यामित्यतः परमसिद्धेरिति पूरणीयम् । अनुकृतिर्वा असिद्धपदयुक्तः पाठः स्वरस एव । पाठाभावेऽपि मोक्षत्वमप्रामाणिकत्वप्रमाणविरुद्धत्वाभ्यां वक्ष्यत इत्युक्त्या फलतोऽसिद्धिर्लब्धेति वा । अत्र च शिष्यशङ्कापक्षे अनुव्याख्यानकृता च वक्ष्यमाणत्वादिति योज्यम् । विरुद्ध-त्वेनेत्यनन्तरं द्वितीयनकारो लेखकागतः । **(अ)मोक्षत्वस्येति** । (अ)मोक्षत्वस्यापीत्यर्थः । अत्राप्यनुव्याख्यान-कृतेति योज्यम् । प्रतिवादिशङ्कात्वे तु मया वक्ष्यमाणत्वादिति पूर्वत्र योज्यम् । **अस्माभिरिति** । द्वितीय-वक्ष्यमाणत्वादित्यत्र योज्यम् । तेन साम्मुग्धेनोक्तिः । कथमिति शङ्कानिरासः । **अस्यापीति** । अनुमान-स्यापीत्यर्थः । **उपपादितत्वात्** । उपपादितप्रायत्वात् ।

**स०व्र०**— **श्रुत्यन्तरविरोधादिति** । 'नेह नानास्ति किञ्चन' इत्यादि श्रुत्यन्तरविरोधादित्यर्थः । अपुरुषार्थत्वादित्यस्य पुरुषार्थहेतुज्ञानविषयत्वाभावादित्यर्थो वा पुरुषार्थविरोधित्वादित्यर्थो वेति विकल्पं मनसि निधायाद्यं दूषयति **सत्यजगन्निर्मातृत्वादिति** । द्वितीयमाशङ्कते **निष्प्रपञ्चात्मज्ञानेति** । **तत्प्रमाणाननुगुण-मिति** । शून्यभावनया शून्यतापत्तिलक्षणो मोक्षो भवतीत्येतदप्रामाणिकं प्रमाणविरुद्धं चेत्यर्थः । **सममेत-दपीति** । अद्वितीयब्रह्मभावनया अद्वितीयब्रह्मभावापत्तिरूपमोक्षो भवतीत्येतदपि न प्रामाणिकं, प्रमाणविरुद्धं चेति तृतीयाध्याये उपासनापादे मोक्षसाधनपरीक्षायां वक्ष्याम इत्यर्थः ।





**विट्ठल०**— यच्चिकेतेत्यादि श्रुत्यर्थस्य सन्न्यायरत्नावलीनयचन्द्रिकयोः स्फुटत्वात् तत्त्वोद्योतटीकादौ स्वयमभिहितत्वाच्च । अथैनमाहुः **सत्यकर्मेति** । सत्यं ह्येवेदं विश्वमसृजतेत्यादिकम् आदिशब्दार्थ इति नयचन्द्रिकायां मूलगतादिपदार्थस्य स्फुटत्वाच्च । श्रुतिगतसत्यपदस्य अमुख्यसत्यपरत्वमाशङ्क्य निराह **व्यावहारिकेति** । **तत्सत्यमित्यस्यापीति** । तत्सत्यं स आत्मेति ब्रह्मणः सत्यताप्रतिपादकस्यापीत्यर्थः । **श्रुत्यन्तरेति** । नेहनानेति श्रुत्यन्तरेत्यर्थः । अपुरुषार्थत्वादित्यस्य पुरुषार्थहेतुज्ञानविषयत्वाभावादित्यर्थो वा पुरुषार्थविरोधित्वादित्यर्थो वेति विकल्पं मनसि निधायाद्यं दूषयति **सत्यजगन्निर्मातृत्वादीति** । द्वितीयमाशङ्कते **निष्प्रपञ्चात्मकज्ञानेति** । **तत्प्रमाणाननुगुणमिति** । शून्यभावनया शून्यतापत्तिलक्षणो मोक्षो भवतीत्येतदप्रामाणिकं प्रमाणविरुद्धं चेत्यर्थः । **सममेतदपीति** । अद्वितीयब्रह्मभावनया द्वितीयब्रह्मभावापत्तिरूपमोक्षो भवतीत्येतदपि अप्रामाणिकं प्रमाणविरुद्धं चेत्युपासनापादेन चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यत इति वक्ष्याम इत्यर्थः । **प्रागुक्ततर्केति** । व्यावहारिकता चास्येत्यत्र यदि प्रपञ्चोऽर्थक्रियाकारित्वलक्षणव्यावहारिकोऽङ्गीक्रियेत तर्ह्यबाध्योऽङ्गीकर्तव्यः प्रसज्येतेत्युक्ततर्कस्य सर्पभ्रमादावपि हीत्यादिनोपपादनेनैवेत्यर्थः ।

**चषकः**— 'अपुरुषार्थत्वात्' इत्यभिदधानेन पुरुषार्थसाधनज्ञानविषयत्वाभावोऽभिप्रेयते पुरुषार्थविरोधित्वं वेति वितर्कद्वयमभिसन्दधान आद्यं प्रत्यस्यति **सत्येति** । द्वितीयं प्रतिविधत्ते **निष्प्रपञ्चेति** । **तत्प्रमाणेति** । शून्यपरिभावनानिबन्धनतद्भावापत्तिलक्षणमोक्षस्वरूपं निष्प्रमाणं प्रमाणविरुद्धं चेत्यर्थः । **सममिति** । अद्वितीयब्रह्मभावनानियन्त्रिततद्भावापत्तिलक्षणं मोक्षस्वरूपमपि तादृशं तद्विरुद्धं चेति साधनलक्षणे मोक्षसाधनविचारावसरेऽभिधास्याम इत्यर्थः । **अनुमानमपीति** । तृतीयस्य तुरीये 'प्रत्यक्षमुपपत्तिश्चे'त्यादिना विश्वपारमार्थ्यसाधकार्थक्रियाकारित्वानुमानस्याप्युपन्यसिष्यमाणत्वादिति भावः ।

**॥ इति आगमानुमानाभ्यां विश्वसत्यत्वसिद्धिः ॥**

* * *

**॥ अथ 'प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां बाह्योपपत्तिविरोधस्य व्युत्पादने' विश्वसत्यत्वे प्रत्यक्षप्रमाणम् ॥**

**॥ तत्रादौ गगनादिविश्वसत्यतायाः साक्षिप्रत्यक्षसाधितत्वम् ॥**

१३१ **सु०**— एवमागमानुमानाभ्यां सिद्धे विश्वसत्यत्वे प्रत्यक्षमप्याह **सत्यत्वमिति** ।

## अनु०— सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् ।

**चशब्दः प्रमाणसमुच्चये । न केवलमान्तरस्य सुखादेः किन्तु बाह्यस्य गगनादेश्च इति वा । तत्रापि कालगगनदिगादयः साक्षात्साक्षिसिद्धसत्यत्वाः, स्तम्भकुम्भादयस्तु**





**वक्ष्यमाणेन प्रकारेणेति ज्ञापयितुं गगनादेः इत्युक्तम् । अन्यथा विश्वस्य प्रकृतत्वात् तदेवात्रानुवर्तिष्यते किमनेन । साक्षीत्येवोक्ते साक्षिणोऽप्रामाण्यात् प्रामाण्ये वा प्रमाणत्रित्वभङ्गात् न विश्वसत्यत्वं प्रमितमिति शङ्का स्यात्, तन्निवृत्त्यर्थं प्रत्यक्षेति उक्तम् । तथा च वक्ष्यते । प्रत्यक्षेत्येवोक्ते अतीन्द्रियार्थसत्यतायां न प्रमाणमुक्तं स्यात्, न च साक्षिणा विना बाह्यप्रत्यक्षमात्रेणैन्द्रियकाणामपि सत्यता सिद्ध्यति; इत्यतः साक्षीत्युक्तम् । उभयवादिसिद्धं प्रमाणमस्मत्पक्षेऽस्तीत्युक्तेनैव अस्यार्थस्य लब्धत्वात् साधितम् इत्याह । तथाऽपि तदुपपादनाय पुनरुपन्यासः ।**

**परि०**— किं चेति चार्थमभिप्रेत्याह **चशब्द इति** । यथाश्रुतान्वयमुपेत्याह **न केवलमिति** । 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत' इत्यादिना जिज्ञासानये । यत् आन्तरसुखादेः साक्षिणा सत्यत्वमुक्तं तेन साकं समुच्चय इति भावः । **तत्रापीति** । बाह्यवस्तुष्वपीत्यर्थः । आदिपदेन दिग्विशेषाः प्राच्यादयो ग्राह्याः । **वक्ष्यमाणेनेति** । 'एवमक्षजमानत्वसिद्धामि'त्यादिना अत्रैवोत्तरत्र अर्थसत्त्वघटितप्रत्यक्षादिप्रामाण्यव्यवस्थापनप्रकारेणेत्यर्थः । **प्रकृतत्वादिति** । विश्वसत्यत्ववाचिका इति पूर्वप्रकृतत्वाद्विभागपरिणामाभ्यां विश्वस्येत्यनुवर्तिष्यते । **किमनेनेति** । गगनादेरिति कथनेन किमित्यर्थः । तावता कथमुक्तशङ्कानिरास इत्यत आह **तथा च वक्ष्यत इति** । युक्तिपादे । 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतमि'त्यादौ न विलक्षणत्वनयानुव्याख्याने साक्षिणः प्रत्यक्षप्रमाणत्वं वक्ष्यत इत्यर्थः । साक्षीत्युक्तेः कृत्यमाह **प्रत्यक्षेत्येवोक्ते** इत्यादिना । गगनादेरित्यादिपदेनैन्द्रियकानैन्द्रियकरूपराशिद्वयस्य ग्रहणं कृत्वा प्रत्यक्षसाधितमित्युक्ते प्रसिद्धत्वेन बाह्यप्रत्यक्षस्यैव प्रत्यक्षपदेन ग्रहणापत्त्या गगनादिरूपाऽतीन्द्रियार्थसत्यत्वे प्रमाणं नोक्तं स्यादित्यर्थः । **नन्वेवं** साक्षिपदे दत्तेऽपि बाह्यप्रत्यक्षादिप्रमाणवेद्यार्थसत्यतायां प्रमाणं नोक्तं स्यादिति चेन्न । तत्प्रमाणप्रामाण्यव्यवस्थापनद्वारा तत्तत्प्रमाणवेद्यार्थसत्यत्वस्यापि साक्षिणैव व्यवस्थाप्यतया साक्षिप्रत्यक्षेत्युक्त्यैव ऐन्द्रियकानैन्द्रियकसर्वपदार्थसत्यत्वे प्रमाणमुक्तं भवत्येवेत्याशयेन साक्षिप्रत्यक्षेत्युक्तमिति भावेनाह **न च साक्षिणा विनेति** । ऐन्द्रियकाणामपीत्यपिपदस्य न केवलमानुमानिकादीनामित्यर्थः । 'साधकत्वं तु सत्यस्ये'त्यादि त्रिपाद्यास्तात्पर्यमनुवदति **उभयवादी**त्यादिना । **अस्यार्थस्य** सत्यत्वरूपार्थस्य । तर्हि पुनरत्र तदुपन्यासो व्यर्थ इत्यत आह **तथाऽपीति** ।





**यादु०**— दिगादय इत्यत्रादिपदेन प्रकृतिर्ग्राह्या । **वक्ष्यमाणेनेति** । 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् । किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः' इत्यत्र वक्ष्यमाणेन स्तम्भादिग्राहकप्रत्यक्षप्रामाण्यव्यवस्थापनद्वारेति प्रकारान्तरेणेत्यर्थः । **तथा च वक्ष्यत इति** । 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम्' इत्यत्र साक्षिणः प्रत्यक्षप्रमाणत्वं वक्ष्यत इत्यर्थः ।

**वं०प०**— अन्यथा उक्तरीत्या प्रकारान्तरज्ञापनाभिप्रायाभावे सर्वस्यापि विश्वस्यैकप्रकारेणैव साक्षिसिद्धत्वे इति यावत् । गगनादेरित्युक्तिर्व्यर्थैव । ननु तर्हि सत्यत्वं साक्षिप्रत्यक्षसाधितमित्युक्ते कस्येत्यपेक्षा स्यात् तदर्थं गगनादेरिति वाच्यमित्यत उक्तं **विश्वस्येति** । 'विश्वसत्यत्ववाचिकाः' इति पूर्वं विश्वस्य प्रकृतत्वात् तद्विश्वपदमेव बुद्ध्या विविक्तं सत् षष्ठ्यन्तमत्रानुवृत्तं भविष्यतीति किमनेन गगनादेरिति पदेनेत्यर्थः । तथा च गगनादेरिति पदोक्तिमहिम्ना न गगनघटादिरूपस्य विश्वस्यैकप्रकारेण साक्षिसिद्धत्वं किन्तु प्रकारान्तरेणेत्यर्थः सूचित इति ज्ञेयम् । नन्वतीन्द्रियपदार्थसत्यतायां प्रमाणं मास्तु । ऐन्द्रियकपदार्थानां तु सत्यता बाह्यप्रत्यक्षेण चक्षुरादिना सिद्धा भविष्यतीत्यत आह **न च साक्षिणेति** । **सिद्ध्यतीति** । ऐन्द्रियकघटादिसत्यताग्राहिप्रत्यक्षप्रामाण्यग्राहकतया साक्षिण एव वाच्यत्वादिति हृदयम् । ननु गगनादीनां सत्यतायाः साक्षिप्रत्यक्षसिद्धत्वं पूर्वं कुत्र साधितमित्यतः पूर्वमयमर्थो लब्धोऽस्तीत्याशयेन साधितमित्याहेत्याह **उभयेति** । तर्हि यथाकथञ्चित्पूर्वमस्यार्थस्योक्तत्वात् पुनः सत्यत्वमित्यादिना किमर्थमुपन्यस्यत इत्यत आह **तथाऽपीति** । यद्यपि प्राक् सिद्धं तथाऽपीत्यर्थः । यद्वा ननूभयवादिसिद्धत्वे न वक्तव्यमेतदित्यत आह **तथाऽपीति** । यद्यप्युभयवादिसिद्धं तथाऽपीत्यर्थः ।

**आनन्दः**— **एवमपीति** । ननु प्रत्यक्षस्य सर्वप्रमाणज्येष्ठत्वात्तदेवादावभिधातव्यम् । तत्परित्यज्यादावागमानुमानकथनमयुक्तमिति चेत् । मैवम् । तयोः सर्वार्थविषयत्वात् प्रत्यक्षस्य तदभावादादौ तयोः प्रदर्शनं पश्चात्प्रत्यक्षस्य । न च साक्षिरूपप्रत्यक्षस्यापि ज्ञातत्वाभ्यां सर्वविषय एवेति वाच्यम् । तथापि सर्वपदार्थानां साक्षात् साक्षिविषयत्वाभावात् । अनयोश्च तथात्वात् । यद्वा प्रत्यक्षनिरूपणस्य बहुत्वादादावनुमाननिरूपणस्य चाल्पत्वात् क्रमोल्लङ्घनमिति । ननु घटादेरित्यनुक्त्वा गगनादेरिति किमर्थमुक्तमित्यत्राह **तत्रापीति** । **अन्यथेति** । उक्तविशेषाभाव इत्यर्थः । ननु प्रत्यक्षेत्युक्त्या प्रमाणत्रित्वभङ्गशङ्कानिरासेऽपि साक्षिणः प्रामाण्याभावात् तेन जगत्सत्यत्वं प्रमितमिति न युज्यत इत्याशङ्काऽनुवर्तत एवेत्यत आह **अत्रेति** । अनुपदमेवेति भावः । नन्वत्रेतीन्द्रियसत्यतापि सबाह्यप्रत्यक्षेणैव सेत्स्यतीत्याशङ्क्याह **न चेति** । अपिशब्दस्तु ऐन्द्रियसत्यता बाह्यप्रत्यक्षमात्रेण न सिद्ध्यति अतीन्द्रियसत्यता न सिद्ध्यतीति किमु वक्तव्यमिति कैमुत्यसूचकः । एतच्चोपपादयिष्यते । ननु साधितमिति भूतप्रयोगोऽनुपपन्नः साधनाकरणादित्यत्राह **उभयेति** ।

**शे०वा०**— **एवमिति** । यद्यप्यत्र प्रत्यक्षस्य ज्येष्ठत्वात् प्रत्यक्षादिक्रमेण सत्यत्वसाधकप्रमाणोपन्यास एवोचितः, अत एव तृतीयस्य चतुर्थे 'प्रत्यक्षमुपपत्तिश्च बह्वश्चागमा यदा' इत्यादिना तथैव निर्देशः, तथाऽपि





प्रत्यक्षनिरूपणस्य बहुत्वादनुमानागमनिरूपणस्य चाल्पत्वात् सूचीकटाहन्यायेन श्रुत्यादिक्रमेण निर्देशः कृत इति ध्येयम् । **प्रमाणसमुच्चयेति** । अनेन गगनादेश्चेति चशब्दो भिन्नक्रम इत्युक्तं भवति । अत्र पक्षे भिन्नक्रमत्वमाश्रयणीयं भवतीत्यरुच्या पक्षान्तरमाह **न केवलमिति** । गगनकालदिगादय इत्यत्र दिक्शब्देन अव्याकृताकाशभागानां ग्रहणम् । आदिपदेनात्ममनआदीनां सुखादीनां च परिग्रहः । **वक्ष्यमाणेनेति** । 'अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम्' इत्यादिना वक्ष्यमाणेनेत्यर्थः । **प्रकारान्तरेणेति** । स्तम्भादि-ग्राहकप्रत्यक्षादिप्रामाण्यव्यवस्थापकत्वेनेत्यर्थः । **प्रकृतत्वादिति** । विश्वसत्यत्ववाचिका इत्यत्रेति शेषः । **साक्षिणोऽप्रामाण्यादिति** । अकरणत्वादफलत्वाच्च न तस्य प्रामाण्यमिति भावः । **प्रामाण्ये वेति** । सुखादि-विषयस्वरूपभूतचैतन्यस्य वा तदभिव्यक्तसुखादिज्ञानस्य वा साक्षित्वेन वक्ष्यमाणरीत्या करणत्वफलत्वयो-रुपपत्त्या प्रामाण्येऽपि वेत्यर्थः । **प्रमाणत्रित्वभङ्गादिति** । प्रत्यक्षादिष्वनन्तर्भावात् अतिरेके चापसिद्धान्तान्न तस्य प्रमाणान्तरतयोपन्यासो युक्त इति न विश्वसत्यत्वस्य प्रमितत्वसिद्धिरिति भावः । तेन प्रमाणत्रित्वभङ्गस्य साक्षाद्विश्वसत्यत्वस्याप्रमितत्वे हेतुत्वाभावादसङ्गतिरिति शङ्काऽनवकाश इति ध्येयम् । ननु कथं तस्य प्रत्यक्षेऽन्तर्भाव इत्यत आह **तथा चेति** । 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम्' इत्यादिनेति शेषः । **अतीन्द्रियार्थेति** । न च प्रत्यक्षेत्येवोक्तेऽपि साक्षिणोऽपि प्रत्यक्षत्वात् स एवातीन्द्रियार्थसत्यतायां प्रमाणं भविष्यतीति काऽनुपपत्तिरिति वाच्यम् । तस्य प्रत्यक्षतायां विवादेन प्रत्यक्षशब्देन तदप्राप्तेरित्याशयात् । माऽस्त्वतीन्द्रियार्थसत्यतायाः प्रत्यक्षेण सिद्धिः, ऐन्द्रियकार्थसत्यतायास्तु बाह्यप्रत्यक्षेण सिद्धिरविकलैव; इत्यतो गृहीतप्रमाणभावस्यैव बाह्यप्रत्यक्षस्य तत्सत्यत्वसाधकत्वात् वक्ष्यमाणरीत्या साक्षिणा विना प्रामाण्य-निश्चयानुपपत्त्या, साक्षिणा गृहीतप्रामाण्यस्यैव बाह्यप्रत्यक्षस्य स्वविषयसत्यत्वसाधकत्वेन केवलस्य तस्य तदसाधकत्वात् न बाह्यप्रत्यक्षेणैन्द्रियकार्थानामपि सत्त्वसिद्धिरित्याह **न च साक्षिणा विनेति** । ननु गगनादिसत्यत्वस्य साक्षिसिद्धताया इतःपूर्वमसाधितत्वात् कथं भाष्ये साधितमिति साधितत्वोक्तिरित्यतः 'साधकत्वं तु सत्यस्य साक्षिणो ह्यावयोः' इत्युक्त्यैव गगनादिसत्यत्वस्य साक्षिसिद्धत्वस्यार्थतो लब्धत्वात् तदभिप्रायकत्वाच्च साधितत्वोक्तेर्नानुपपत्तिरित्याह **उभयेति** । तर्हि लब्धत्वादस्यार्थस्य पुनरभिधानमनर्थकमित्यत आह **तथाऽपीति** । लब्धत्वेऽपीत्यर्थः ।

**वा०र०— तथैवोपन्यासः** श्रुत्यादिक्रमेणोपन्यासः कृत इति पाठः । तथैव प्रकृतत्वात् निर्देश-पदयुक्तपाठेऽप्ययमेवार्थः । **भिन्नक्रम इति** । बुद्ध्या विविक्तसाक्षिप्रत्यक्षपदेन सम्बन्धे साक्षिप्रत्यक्षेण च साधितमिति योज्यमिति भावः । स्वमतानुसारेण दिक्पदार्थकथनम् **अव्याकृतेति** । अदोषप्रतीतस्येत्यस्य न विद्यते दोषः कारणं यस्येत्यादिना ज्ञानकारणोभयपरतया योजनान्तरं साक्षिणा मतं सिद्धम् । प्रामाण्य-ग्रहणादिनेति शेष इत्यादि मूलोक्तव्याख्यानं मनसि निधायाह **प्रामाण्येति** । **तदेवेति** मूलम् । बुद्ध्या विवेकेन विश्वस्येत्येवमित्यर्थः । ............ अनुसारेणाह **अकरणत्वादफलत्वाच्चेति** । ......... आह **सुखादीति** । **वक्ष्यमाणरीत्येति** । निर्दोषत्वातिनियमात्तद्बलिष्ठतमं मतं इत्यादिना विलक्षणत्वाधिकरणीयानुभाष्यव्याख्यावसरे





सुखादिविषयं स्वरूपेन्द्रियं साक्षीत्यादिनेति शेषः । **अतीन्द्रियार्थेतीति** । तदर्थस्य बाह्यप्रत्यक्षागोचरत्वादिति भावः । प्रत्यक्षेणेत्यत्र बाह्येति योज्यम् । उत्तरवाक्याद्यनुसारात् **अविकलैवेति** । तस्योक्तप्रत्यक्षगोचरत्वादिति भावः । **न च साक्षिणेति** मूले न चेत्यस्य नापीत्यर्थः । **सत्यत्वस्य साक्षी**त्यत्र व्यधिकरणे षष्ठ्यौ ।

**स०व्र०— वक्ष्यमाणेन प्रकारान्तरेणेति** । 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् । किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः' इत्यत्र वक्ष्यमाणेन स्तम्भादिग्राहकप्रत्यक्षादिप्रामाण्यव्यवस्थापनद्वारेति प्रकारान्तरेणेत्यर्थः । **तथा च वक्ष्यत इति** । द्वितीयाध्याये 'न विलक्षणा'धिकरणे 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतमि'त्यत्र साक्षिणः प्रत्यक्षत्वं वक्ष्यत इत्यर्थः ।

**विठ्ठल०— दिगादय इति** । दिग्विशेषाः ग्राह्याः । अन्यथा गगनशब्देन पौनरुक्त्यम् । अत्रादिपदेन परमाण्वविभक्तावयवकालधर्मादयो ग्राह्याः । **वक्ष्यमाणेनेति** । 'एवमक्षजमानेन सिद्धां विश्वस्य सत्यतामित्यादौ वक्ष्यमाणेन स्तम्भादिग्राहकप्रत्यक्षादिप्रामाण्यव्यवस्थापनद्वारेति प्रकारान्तरेणेत्यर्थः । **अन्यथेति** । एवं ज्ञापनस्य मूलकारानभिप्रेतत्वे विश्वसत्यत्ववाचका इत्यत्र प्रकृतत्वाद्बुद्ध्या विभागे विश्वस्येत्यनुवर्तिष्येते । अतो गगनादेरित्यनेन किमित्यर्थः । कथमनेन शङ्कापरिहार इत्यत आह **तथा च वक्ष्यत इति** । 'प्राकृतं शुद्धं चैतन्यमक्षं तु द्विविधं मतमि'त्यत्र साक्षिणः प्रत्यक्षत्वं नविलक्षणत्वाधिकरणे वक्ष्यत इत्यर्थः । साक्षीत्युक्तेः कृत्यमाह **प्रत्यक्षेत्येवेति** । न केवलमतीन्द्रियार्थसत्यतासिद्ध्यर्थं साक्षीति वक्तव्यम्, अपि तु इन्द्रियाणामप्यर्थानां प्रामाण्यग्रहणादिद्वारानुग्राहकसाक्षिणमन्तरेण बाह्यप्रत्यक्षमात्रेण सत्यता सिद्ध्यति । तस्य वर्तमानमात्रग्राहित्वात् प्रामाण्यानिश्चयात् अतोऽपि साक्षिप्रत्यक्षेति वक्तव्यमित्याह **न चेति** । ननु साधितमित्यनुपपन्नं पूर्वं गगनादिसत्यत्वस्य साधितत्वादित्यतः साधकत्वं तु सत्यस्येति श्लोके उभयवादिसिद्धं प्रमाणमस्मन्मतेऽस्तीति कथनेनैव विश्वसत्यत्वरूपार्थस्यापि लब्धत्वेन साधितप्रायत्वात् साधितमित्युक्तिरुपपन्नेत्याह **उभयवादीति** । अत एव तत्र तथा च वक्ष्यत इत्युक्तम् । तर्हि तेनैवास्यार्थस्य लब्धत्वे पुनरत्र तदुपन्यासः कुत इत्यत आह **तथापीति** ।

**चषकः— वक्ष्यमाणेन** । 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् । किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः' इत्यत्राभिधास्यमानेन । **प्रकारान्तरेण** । स्तम्भादिग्राहकप्रत्यक्षादिप्रामाण्यव्यवस्थापकत्वेनेत्यर्थः । **तथा च वक्ष्यत इति** । 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतमि'त्यत्र साक्षिणः प्रत्यक्षप्रमाणत्वमभिधास्यत इत्यर्थः ।

**॥ तत्राप्यादौ आकाशादीनां क्षपणकवार्तिककारोक्तचाक्षुषत्वनिरसनम् ॥**

**१३२ सु०— केचिदिह विहङ्गमः पततीति चक्षुर्व्यापारानन्तरं प्रतिभासनादाकाशादेः-(दीनां) चाक्षुषतामास्थिषत । तदनुपपन्नम्, रूपरहितद्रव्यत्वेन चाक्षुषतासामग्रीवैकल्यात्,**





**अन्यथाऽऽत्मपवनयोरपि तत्प्रसङ्गात् । कथं तर्ह्येष प्रतिभास इति चेत् । साक्षिसिद्धाकाशादिसम्बन्धितयेति ब्रूमः । दृष्टो हि प्रमाणान्तरोपनीतेनापि सुरभिचन्दनमित्यादिविशिष्टप्रत्ययः, परेषां च इह भूतले घटाभाव इति ।**

**परि०**— साक्षीत्युक्तेर्मतान्तरनिरासोऽपि फलमिति भावेनाह **केचिदिति** । इहेत्युपलक्षणम् । इदानीमित्यपि ग्राह्यम् । आकाशादेरित्यस्याकाशकालयोरित्यर्थः । आस्थिषतेति लुङात्मनेपदबहुवचनम् । अङ्गीकृतवन्त इत्यर्थः । **चाक्षुषतासामग्रीति** । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वरूपसामग्रीत्यर्थः । कथं ज्ञानान्तरसिद्धत्वेऽपि चाक्षुषज्ञाने भानमित्यत आह **दृष्टो हीति** । सौर(भे)भ्येणेति योज्यम् । कस्मिंश्चिच्चन्दनखण्डे घ्राणेन सौर(भे)भ्येऽवगते सति तत्र वा तत्सजातीये अन्यत्र वा चक्षुषा सुरभिश्चन्दनखण्डोऽयमिति ज्ञानोदयस्यानुभवादित्यर्थः । **परेषां चेति** । अनुपलब्धिरूपषष्ठप्रमाणवेद्योऽभाव इति मते अभावस्याचाक्षुषत्वेऽपि इह भूतले घटाभाव इति विशिष्टचाक्षुषप्रत्ययो दृष्ट इत्यर्थः ।

**गु०दी०**— मानान्तरेणोपनीतमानमनङ्गीकुर्वतामप्युत्तरमाह **परेषां चेह भूतल** इति । तत्र हि प्रतियोगिनो घटस्याधिकरणस्य भूतलस्य च पराभ्युपगताभावाख्यप्रमाणातिरिक्तप्रमाणेनैवोपनयस्य परेणैव वक्तव्यत्वादित्यर्थः ।

**यादु०**— **आकाशादेरिति** । अत्रादिपदेन कालो गृह्यते । इदानीं पततीत्यपि प्रतीतेरिति द्रष्टव्यम् । **परेषां चेहेति** । घटाभावज्ञानमनुपलब्धिगम्यमित्यङ्गीकुर्वतां भाट्टानां मते चक्षुरादिप्रमाणान्तरोपनीतभूतलविशिष्टघटाभावप्रत्ययोऽप्युपलब्ध इत्यर्थः । स्वमते तु घटाभावस्यापि प्रत्यक्षत्वेन न विलक्षणप्रमाणोपनीतत्वं भूतलस्येति द्रष्टव्यम् ।

**वं०प०**— आकाशो न चाक्षुषः रूपरहितद्रव्यत्वात् आत्मपवनवत् इत्यनुमानविरोधात् इह प्रत्ययविषयत्वेन न आकाशस्य चाक्षुषत्वं मन्तव्यमित्याह **रूपेति** । **सामग्रीति** । तदेव हि द्रव्यं चाक्षुषं यन्महत्त्वे सत्युद्भूतरूपवदिति भावः । **अन्यथेति** । रूपरहितद्रव्यत्वेऽप्यस्त्वाकाशस्य चाक्षुषत्वमित्यनुमानेऽप्रयोजकतायामित्यर्थः । **तत्** चाक्षुषत्वम् । नन्वाकाशस्याप्रत्यक्षत्वे कथं तर्हि इह पक्षीति इहप्रत्ययविषयाकाशसम्बन्धित्वेन पक्षिप्रतिभास इत्याशङ्कते **कथमिति** । रूपरहितत्वेनास्माभिः प्रत्यक्षत्वमात्रं न निषिद्ध्यते किं नाम इहेतिप्रत्ययविषयत्वेन प्रसक्तं चाक्षुषत्वमेवेत्याह **साक्षीति** । तथा च साक्ष्युपनीतमेवाकाशमिहेति चाक्षुषप्रत्यये भासत इत्यर्थः । ननु कथं साक्षिरूपप्रमाणान्तरोपनीताकाशेन विशेषणेन विशिष्ट इहेति चाक्षुषः प्रत्यय इत्यतो यथा घ्राणोपनीतं सौरभ्यं चक्षुषा गृहीते चन्दनखण्डे सुरभि चन्दनमिति चक्षुषा भासते । यथा वा भाट्टानां





मतेऽनुपलब्धिरूपषष्ठप्रमाणोपनीतो घटाभावः भूतले घटाभाव इति चाक्षुषप्रत्ययेऽवभासते । एवं प्रकृतेऽपीत्याह **दृष्टो हीत्यादिना** । उपनीतेनापि विशेषणेन विशिष्टेति सम्बन्धः ।

**आनन्दः**— अथेदानीं साक्षिणः प्रामाण्यं निरूपयितुं उत्तरग्रन्थसन्दर्भः । तत्रेन्द्रियं षडिन्द्रियातिरिक्तवृत्ति न वा । आत्मस्वरूपेन्द्रियत्वं न वेति विप्रतिपत्तौ सत्यामिन्द्रियत्वे प्रमाणमुच्यते । आत्मस्वरूपमिन्द्रियं भवितुमर्हति आकाशादिप्रत्यक्षप्रमितिकरणत्वात् । **सामान्येन चक्षुरादिवदिति** । यद्वाकाशादिप्रतीतिः सकरणिकाक्रियात्वाच्छिदिक्रियावदिति । यद्वाकाशादिकं प्रमाणगम्यं प्रमेयत्वादित्यनुमानाभ्यां सामान्यतः आकाशादिप्रमितिकरणसिद्धौ तत्कारणं प्रत्यक्षं वा स्यादनुमानं वा स्यादागमो वा स्यादिति प्रसक्तप्रतिषेधे कृते यत्करणं सेत्स्यति तत्साक्षिरूपमेवेत्याशयेन प्रसक्तप्रतिषेधं तावत्कर्तुमुपक्रमते **केचिदिति** । एवं चाकाशप्रतीतिश्चक्षुःप्रकरणिका चक्षुर्व्यापारानन्तरमेव जायमानत्वाद्रूपादिप्रतीतिवदित्यनुमानमुक्तम् । आकाशप्रतीतिः न चक्षुःकरणिकारूपरहितद्रव्यविषयत्वात् पवनादिवदिति सत्प्रतिपक्षताग्रस्तमेतदनुमानमित्याशयेन परिहरति **रूपरहितेति** । **अन्यथेति** । रूपरहितः द्रव्यत्वेऽपि चाक्षुषताङ्गीकार इत्यर्थः । **साक्षीति** । साक्ष्युपनीताकाशसम्बन्धित्वेनेयं चाक्षुषप्रतीतिरिति भावः । ननु सर्वथा चक्षुरयोग्यस्याकाशस्योपनीतत्वेऽपि कथं चाक्षुषज्ञाने भानं क्वाप्यदृष्टचरत्वादित्यत आह **दृष्टो हीति** । **परेषां चेति** । प्राभाकराणां हि अनुपलब्धाभावज्ञानमेव भवतीति मतम् । तत्र यथानुपलब्धयोग्यस्य भूतलस्य अनुपलब्धे ज्ञानेऽवभासस्तथेत्यर्थः ।

**शे०वा०**— मूले गगनादेः साक्षिसिद्धत्वोक्त्या तदितरप्रमाणाविषयत्वं सूचितम्, तत्समर्थनार्थमुत्तरो ग्रन्थः ।

तत्र क्षपणकवार्तिककारीयतच्चाक्षुषत्वपक्षं तावदुत्थापयति **केचिदिति** । आकाशादेरित्यादिपदेन कालपरिग्रहः । 'इह विहङ्गमः पततीति प्रतिभासनात्' इत्युपलक्षणम् 'इदानीं विहङ्गमः पततीति भासनात्' इत्यपि द्रष्टव्यम् । इह पक्षीति इहप्रत्ययश्चाक्षुषः अनन्यथासिद्धचक्षुरन्वयव्यतिरेकानुविधायित्वात् इति 'इह'-प्रत्ययस्य चाक्षुषत्वसिद्धौ तद्विषयतयाऽऽकाशस्य चाक्षुषत्वसिद्धिरिति भावः । आकाशो न चाक्षुषो रूपादिरहितद्रव्यत्वादात्मवदिति प्रतिपक्षग्रस्तमनुमानमिति दूषयति **तदिति** । **रूपेति** । रूपादौ व्यभिचारनिरासाय द्रव्यत्वग्रहणम् । घटादौ व्यभिचारवारणाय रूपरहितेत्युक्तम् । न च नीलं नभ इति प्रतीतेराकाशोऽपि रूपवानेवेति रूपरहितेति विशेषणमसिद्धमिति वाच्यम् । स्पर्शरहितत्वेन तदनुमानादिति भावः । विपक्षे बाधकमाह **अन्यथेति** । रूपरहितद्रव्यस्यापि चाक्षुषत्व इत्यर्थः । नन्वाकाशस्यातीन्द्रियतायाम् 'इह पक्षी' इत्याकाशाश्रयतया चाक्षुषप्रत्ययानुपपत्तेराकाशं चाक्षुषमेवास्थेयमित्याशङ्कते **कथमिति** । न रूपरहितद्रव्यत्वेनाकाशस्य प्रत्यक्षत्वमात्रं निराक्रियते किन्तु प्रसक्तं चाक्षुषत्वमेव । तथा च साक्षिप्रत्यक्षत्वादाकाशस्योपपद्यत एव तदाश्रयतया इह पक्षीति चाक्षुषः प्रतिभास इति परिहरति **साक्षीति** । ननु पक्ष्याकाशयोर्विलक्षणप्रमाणोपनीतयोः कथमिह पक्षीति विशिष्टप्रत्यय इत्यतोऽन्यत्र दृष्टत्वादित्याह **दृष्टो हीति** । स्वमते घटाभावस्यापि





भूतलवत् प्रत्यक्षत्वेन विलक्षणप्रमाणोपनीतभूतलाधेयभावेन घटाभावप्रतिभासाभावेऽपि अनुपलब्धिकरणकोऽभावप्रत्यय इति वदतां परेषां मते चक्षुषोपनीतस्य भूतलस्येह घटाभाव इति केवलानुपलब्धिकरणकोऽभावप्रत्यये विषयत्वदर्शनेन तत्र विलक्षणप्रमाणोपनीताश्रयाधेयभावदर्शनाद्विलक्षणप्रमाणोपनीताकाशाधारत्वेन युक्तोऽयमपि 'इह विहङ्गमः पतति' इति प्रतिभास इति भावः ।

**वा०र०— साक्षिसिद्धत्वोक्त्येति** । गगनादिसत्त्वस्य साक्षिसिद्धत्वोक्तौ गगनादेरपि तत्सिद्धत्वलाभ इत्याशयेनैवमुक्तमिति ज्ञेयम् । अप्रत्यक्षेऽपि ह्याकाशे बलात्स्थलमलिनताद्यध्यस्यन्तीति शाङ्करभाष्यव्याख्यानावसरे विवरणकृता क्षपणकवार्तिककारास्तु चाक्षुषमाकाशमिच्छन्तीत्युक्त्वा तथा सति स्पर्शवत्वमपि स्यादित्यादि प्रतिपादितं चक्षुरन्वयव्यतिरेकाभ्यां तस्य चाक्षुषत्वमित्यर्थ इत्यादि तत्त्वदीपनग्रन्थे उपपादितं च मनसि निधायाह **तत्र क्षपणकवार्तिककारीयेत्यादिना** । क्षपणकवार्तिककारीयेत्युपलक्षणं भट्टीयेत्यपि ग्राह्यम् । अत एव विवरणोपन्यासे क्षपणकैः भट्टैश्च आकाशस्य चाक्षुषत्वमिष्यत इति चेदित्युक्तम् । एवमनुपलब्धिकरणकोऽभाव इति पदान्तरेषामित्युत्तरत्रापि परेषामित्यस्य क्षपणकवार्तिककाराणामित्यर्थवद्भट्टानामित्यप्यर्थो ज्ञेयः । आकाशादिरित्यादिपदेन कालपरिग्रहे तु प्रत्यक्षतायामिह विहङ्गम इति प्रत्ययस्य साधकत्वायोगात् कालप्रत्यक्षतासाधकप्रत्ययान्तरोपलक्षणमाह **इहेत्युपलक्षणमिति** । चाक्षुषमाकाशं लोके प्रसिद्धमिति चेदित्येतद्गङ्गापुरीतात्पर्यं वर्णयता षट्सहस्रीकृतचक्षुर्व्यापारानन्तरं नभो नीलमित्यनुभवात् तस्य नानुमेयत्वमित्युक्ततया तदनुसारिमूले चक्षुर्व्यापारानन्तरमित्यस्योक्तावपि चक्षुरन्वयव्यतिरेकिप्रत्ययविषयत्वपर्यवसानस्याभिप्रेतत्वम् । अत एवोत्तरत्र षट्साहस्र्यां नयनव्यापारानन्तरमिह पक्षीति प्रत्ययात् तद्विषयतया चाक्षुषत्वानुभवादित्युक्तमित्याशयेन चक्षुरित्यादिनोक्तमनुमानं वदन् पर्यवसानलब्धमर्थं च दर्शयति **इह पक्षीतीति** । **रूपादिरहितेति** । यद्यप्यरूपतया चक्षुषस्तत्राप्रवृत्तेरिति किरणावलीव्याख्यानावसरे वर्धमानकृता अरूपद्रव्यतयेत्यर्थः । अन्यथा रूपादौ व्यभिचार इत्युक्त्वा आकाशं न चाक्षुषं अरूपिद्रव्यत्वादात्मवदिति प्रयोगो दर्शितः तथापि महत्त्वसमानाधिकरणोद्भूतरूपस्पर्शवत्वं द्रव्यचाक्षुषत्वे प्रयोजकमिति पक्षे रूपस्येव स्पर्शस्यापि प्रयोजकत्वाशयेन मूले रूपपदोपलक्षणामभिप्रेत्य रूपादीत्यादिपदेन स्पर्शसङ्ग्रहणं कृतम् । अत एव वैशेषिकाधिकरणे रूपस्पर्शयोरुभयोः प्रयोजकत्ववचनं परानुवादेन । यद्वा यद्यप्यत्र रूपरहितेति मूलानुसारेण रूपमात्रग्रहणं कार्यं तथापि रूपराहित्ये विवादे स्पर्शराहित्यं वक्तव्यमेवेत्याशयेन मूलाभिप्रेतं स्पर्शराहित्यमपि हेतौ प्रवेशितम् । अत एवोत्तरत्र रूपराहित्यस्पर्शराहित्ययोर्हेतुहेतुमद्भावं वक्ष्यतीति योजना । रूपरहितेति पाठस्तु स्वरस एव । न चासिद्धो हेतोर्नीलमाकाशमिति प्रतीतेरिति वाच्यमिति वर्धमानानुसारेणाशङ्कते **न च नीलं नभ इति** । **स्पर्शरहितत्वेनेति** । यद्यपि मेरोरिन्द्रनीलप्रभाणां नैल्यस्य भानात् अन्यथा सन्निहिताकाशेऽपि तदापत्तेरिति वर्धमानकृतोक्तं तथापि विशेष्ययोग्यतामादायेन्द्रियप्रवृत्त्या अयोग्ये आकाशे चक्षुषा आरोपायोगेन मनसा तदारोपे च सन्निहिताकाशेऽपि तदारोपप्रसङ्गेनेन्द्रनीलसन्निहिताकाशे अनुभूयमानारोपोऽयमिति वा आलोक एवाकाशनीलयोरभेद आरोप्यत इति वा कल्पनीयं भवति । न च तद्युक्तम् । तथाहि न तावदनुभूयमानारोपः सम्भवति ।





इन्द्रनीलसान्निध्यस्य दूरस्थलेऽभावात् । न च मेरुगतेन्द्रनीलांशूनामन्यत्र सत्त्वान्न दोष इति वाच्यम् । नीलांशूनामन्यत्र व्याप्तौ प्रमाणाभावात् । मेरोर्विचित्रानेकरत्नतया नियमेन नीलप्रभाया एवानुभवे नियामकाभावाच्च । रात्रावपि तदनुभवापाताच्च । नियमेन दूरस्थत्वमपेक्ष्य जायमानज्ञानस्य स्मर्यमाणारोपताया एव न्याय्यत्वाच्च । किञ्च प्रत्यक्षविषयविशेष्ये स्फटिकेऽनुभूयमानविशेष्यभूतजपाकुसुमगतलोहित्यस्यानुभूयमानस्यारोपदर्शनेन प्रत्यक्षाविषयविशेष्यभूताकाशे अनुभूयमानविशेष्येऽनुभूयमानस्यापि नैल्यस्य चक्षुषारोपायोगः तस्मात्परोक्तभ्रमाङ्गीकारो न युक्तः ।

यच्चोक्तं नैल्यस्य वास्तवत्वे सन्निधानेऽपि तत्प्रत्ययापत्तेः आलोकेन तदभिभवे च दूरेऽपि तदापत्तेरिति । तदप्यसत् । पृथिवीसन्निधानस्येवाभिभावकत्वाङ्गीकारात् । दूरे च तदभावात् । अत एवाकाशनीलयोरालोकेऽभेदारोप इत्यपास्तम् । आकाशस्य प्रत्यक्षत्वाभावे तदारोपायोगात् तस्माद्वर्धमानोक्तमयुक्तम् । एवमप्रत्यक्षे आकाशे चाक्षुषभ्रमायोगे प्राप्ते तद्भयान्नीरूपमेवाकाशं चाक्षुषप्रत्यक्षविषय इत्यङ्गीकृत्य तत्र रूपारोपो अनुभवबलादिति नृसिंहाश्रमोक्तमपि परास्तम् । अप्रत्यक्षेऽप्याकाश इति तद्भाष्यविरोधात् अनुभवबलाच्चाक्षुषत्ववद्भूसन्निधानादिना समीपे नैल्याभिभवमङ्गीकृत्य दूरे तद्धीः प्रमैवेत्यपि कुतो नाश्रीयते । अनुभवसाम्यात् । यच्चोक्तं तेन श्रुत्यादिबलान्नीरूपमेवानुभवबलाच्चाक्षुषमिति । तदप्यसत् । आकाशो नीलिमोदेतीति श्रुत्या आकाशनीलतायाः सिद्धत्वेन चाक्षुषत्ववद्रूपस्याप्यङ्गीकर्तुमुचितत्वात् । किञ्च अन्धस्य नीलं नभ इति प्रत्ययादर्शनाच्चाक्षुषत्वमेवास्यारोपस्येति मत्वा हि त्वया आकाशस्य चाक्षुषप्रत्यक्षत्वमाश्रितम् । तथात्वे चान्धस्याकाशज्ञानानुपपत्तिरेव । तथान्धकारे चक्षुषा आकाशज्ञानमनन्धस्यापि न स्यात् । ततो हस्तप्रसारणाद्ययोगः । तस्मान्नीलं नभ इति प्रतीतेः परोक्तरीत्या आरोपत्वाश्रयणेन निरासानुपपत्तेः स्पर्शरहितत्वेन रूपाभावानुमानस्य श्रुत्यादिसहकारिणः रूपग्राहिप्रत्यक्षज्ञानबाधकत्वोपपत्तेरारोपस्य च साक्षिविषयाकाशेऽपि सम्भवेन तदनुपपत्तेरभावान्न चाक्षुषतापक्षो युक्त इत्याद्यपरितोषात् तत्परित्यज्य तथा सति रूपस्पर्शवत् प्रसङ्गादिति विवरणोपन्यासे स्पर्शपदसूचितास्पर्शरहितत्वे न तदनुमानादिति भाव इति षट्सहस्रीकृता चोक्तयुक्तिरेवाभिहितेत्याभाति । अत्र प्रकरणे 'भूतमप्यसितं दिव्यदृष्टिगोचरमेव तदि'ति वियदधिकरणीयानुव्याख्यानसम्बन्धिमूलोक्तप्रमेयानुगुणता योज्या ।

नन्वाकाशानीन्द्रियतायामित्यादिवर्धमानानुसारेण कथं तर्हीति वाक्यमवतारयति **नन्वाकाशस्येति** । इत्यादि धीरित्येव वर्धमानोक्तावपि तत्राधिकरणत्वेनाकाशस्यैव भानादिति वर्धमानेन्दुकृदुक्तरीत्या आकाशाश्रयतयेति प्रत्ययानुपपत्तिस्पष्टीकरणायोक्तमिति ज्ञेयम् । न चोपनीताकाशगोचरं तादृशप्रत्यक्षमक्षतमेवेति वाच्यम् । प्रत्यक्षज्ञानविषयस्यैवेदंशब्दाभिलाप्यतयोपनीते इहेति प्रत्ययाप्रवृत्तेरिति भावः । **तथा च साक्षीति** । उपनीताकाशगोचरस्तदाश्रयतया इह पक्षीति चाक्षुषप्रत्यय उपनीतत्वेऽपि इदंशब्दाभिलाप्यत्वस्य अस्मिन्समय इत्यादावप्रत्यक्षज्ञानविषयेऽपि दृष्टत्वात् प्रकृतेऽपि इहेतीदंशब्दाभिलाप्यत्वप्रयोजकप्रत्यक्षज्ञानविषयत्वस्य सद्भावाच्च उपनायकस्य प्रत्यक्षत्वादिति भावः । **विलक्षणेति** । घटाभावग्राहकप्रमाणविलक्षणत्वादिति भावः ।





**स०व्र०**— नन्विह पक्षीति इहप्रत्ययः चाक्षुषः अनन्यथासिद्धतदन्वयव्यतिरेकानुविधायित्वात् पक्षिप्रत्ययवदिति, इह प्रत्ययविषयस्याकाशस्य चाक्षुषप्रत्यक्षसिद्धत्वात् न केवलं साक्षिसिद्धतेति शङ्कते **केचिदिति** । **आकाशादेरिति** । अत्रादिपदेन कालो गृह्यते । इदानीं पततीत्यपि प्रतीतेरिति द्रष्टव्यम् । आकाशो न चाक्षुषः रूपरहितद्रव्यत्वादात्मवदिति दूषयति **तदिति** । न चासिद्धो हेतुः नीलमाकाशमितिप्रतीतेरिति वाच्यम् । इन्द्रनीले नैल्याभावात् । अन्यथा सन्निहित-आकाशेऽपि तज्ज्ञानापत्तिः । आलोकेन तदभिभवे दूरेऽपि तदापत्तेरिति वदन्ति । वस्तुतस्तु तत्त्वनिर्णयटीकाया प्रकारान्तरेण नैल्यप्रतीतिरुपपादिता । विपक्षे बाधकमाह **अन्यथेति** । न च आकाशस्यातीन्द्रियत्वेऽप्रत्यक्षत्वे तदाधारत्वेन कथं पक्षिप्रतिभास इति शङ्कते **कथमिति** । न रूपरहितत्वेनाकाशस्य प्रत्यक्षत्वमात्रं निषिद्ध्यते किं तु प्रसक्तं चाक्षुषत्वमेवेत्युत्तरमाह **साक्षीति** । ननु पक्ष्याकाशयोर्विलक्षणप्रमाणोपनीतयोः कथं विशिष्टतया प्रत्यय इत्यत आह **दृष्टो हीति** । अत्रैव दृष्टान्तान्तरमाह **परेषां चेति** । प्राभाकरमते अनुपलब्धिजन्याभावज्ञाने चक्षुरादिभानान्तरोपनीतस्य भूतलस्य भानदर्शनादिति भावः । स्वमते योग्यप्रतियोगिकाभावस्यापि प्रत्यक्षत्वेन न विलक्षणप्रमाणोपनीतत्वं भूतलघटाभावयोरिति द्रष्टव्यम् ।

**विठ्ठल०**— साक्षीत्युक्तेर्मतान्तरनिरासोऽपि फलमिति भावेनाह **केचिदिति** । इहेत्युपलक्षणम् । इदानीमित्यपि द्रष्टव्यम् । **आकाशादेरित्या**दिपदेन कालग्रहणम् । **आस्थिषतेति** अङ्गीकृतवन्त इत्यर्थः । नन्वाकाशादेः साक्षिभास्यत्वे कथं चाक्षुषज्ञाने भानमित्यत आह **दृष्टो हीति** । **प्रमाणान्तरोपनीतेनेति** । घ्राणप्रत्यक्षेणोपनीतेन सौरभ्येणेत्यर्थः । विशिष्टप्रत्ययश्चाक्षुष इति योज्यम् । **परेषामिति** । अभावोऽनुपलब्धिगम्य इति वदतां भाट्टानां मते इह भूतले घटाभाव इति विशिष्टप्रत्ययः उपनीतत्वेन भवतीत्यङ्गीकृतत्वात् व्यवहारे भट्टनयानुसारिणां मायिनामपि प्रमाणान्तरोपनीतेन भूतलेन भूतले घटाभाव इति विशिष्टप्रत्ययो दृष्ट इति भावः । एतदुक्तं वरदराजेन 'अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथे'ति । अस्मिन्मते तु प्रत्यक्षयोग्यप्रतियोगिकाभावस्यापि प्रत्यक्षत्वेन नोपनीतमानत्वमिति ध्येयम् ।

**चषकः**— **आकाशादेरिति** । आदिपदं कालपरिग्राहकं इदानीं पत्री पततीत्यपि प्रतीतेः । **आस्थिषत** प्रत्यज्ञासिषुः । आङः स्थः प्रतिज्ञान इति स्मृतेः । **प्रमाणान्तरोपनीतेनेति** । घ्राणजादिप्रत्यक्षरूपोपनायकज्ञानविषयीकृतसौरभादिनेत्यर्थः । **परेषां चेहेति** । अभावस्यानुपलब्धिकरणकप्रतीत्यन्तरविषयतामुपगच्छतां भट्टानां मते भूतलादिचाक्षुषरूपोपनायकज्ञानविषयीकृतभूतप्रतियोगिस्मृत्यादिरूपतादृशज्ञानविषयीभूतघटादिविशेषिताभावप्रत्ययोऽनुपलब्धिकरणक इत्यर्थः । 'उपनीतं विशेषणतयैव भासते मानसे त्वनियम' इति नियमेनोपनीतयोरुक्तधर्मिप्रतियोगिनोराधेयत्वानुयोगित्वप्रत्यासत्तिभ्यामभावांशे विशेषणतया भानमिति ध्येयम् । सिद्धान्ते घटाद्यभावस्य प्रत्यक्षत्वोपगमेन सन्निकृष्टभूतलांशस्य नोपनीतत्वमित्यवसेयम् ।

**॥ इति आकाशादीनां क्षपणकवार्तिककारोक्तचाक्षुषत्वनिरसनम् ॥**





**॥ अथ 'गगनादिविश्वसत्यतायाः साक्षिप्रत्यक्षसाधितत्वे' किरणावलीकारीयमतनिरासः ॥**

१३३ **सु०— अपर आह, आलोकमण्डलमाश्रित्यायं प्रत्यय इति । तदसत् । इहालोक इत्यपि प्रत्ययदर्शनात् । सोऽपि तदवयवानाश्रित्येति चेन्न, लौकिकानामवयवाश्रयतया अवयविबुद्धेरभावात् । न हि ते हस्तादिषु शरीरमिति व्यवहरन्ति, किन्तु तदात्मकतयैव । किञ्चैवमपि 'नेहालोक' इति 'इहालोकत्र्यणुकमि'ति च प्रत्ययो दुःसंपादः । प्रमाणान्तरोपनीतावयवमाश्रित्येति चेत्, एवं तर्हि तथाभूतमाकाशादिकमेवाश्रित्य 'इह पक्षी' इत्यादिप्रत्ययः कुतो न समर्थनीयः, तथा च लौकिकानुभवोऽप्यनुसृतः स्यात् ।**

**परि०— अयमिति** । इह विहङ्गमः पततीति प्रत्यय इत्यर्थः । तार्किकाणां तथा प्रतीत्यभिमानसत्त्वादाह **लौकिकानामिति** । **त इति** । लौकिका इत्यर्थः । **नेहेति** । इहेत्युक्ताधिकरणस्य आलोकावयवत्वे तदाश्रितस्य तत्र निषेधप्रत्ययायोगादिति भावः । **इहालोकत्र्यणुकमितीति** । त्र्यणुकावयवानां द्व्यणुकत्वेनातीन्द्रियतया इहेति प्रत्ययायोगादिति भावः । द्वितीयप्रत्ययोपपत्तिं शङ्कते **प्रमाणान्तरेति** । यद्वा अन्धकारावृतदेशे न इहालोक इति प्रत्यये इहेति आलोकपरमाणव एवाधिकरणतया निर्दिश्यन्त इति भावेन नेहालोक इति प्रत्ययो दुःसम्पाद इत्युक्तम् । एवं च प्रत्ययद्वयेऽप्युपपत्तिं शङ्कते प्रमाणान्तरेतीत्यवतरणीयम् ।

**यादु०—** इहालोकत्र्यणुकमिति प्रत्ययः अनुमानोपनीतद्व्यणुकरूपतदवयवमाश्रित्य सुसम्पाद इत्याशङ्कते **प्रमाणान्तरेति** । **इह पक्षीत्यादिप्रत्यय इति** । अत्रादिपदेनेहालोकत्र्यणुकमित्यादिप्रत्ययसङ्ग्रहः । **तथा चेति** । अन्यथा लौकिकानामवयवाश्रयतया अवयविबुद्धेरभावादित्युक्तदोषप्रसङ्ग इति भावः ।

**वं०प०—** अस्त्विहप्रत्ययस्य चाक्षुषत्वम् । स च न साक्ष्युपनीतविषयकः । किन्तु प्रत्यक्षसिद्धालोकमण्डलविषय एवेति कश्चित्समाधत्ते **अपर इति** । अयमिह विहङ्गम् इति प्रत्ययः । **इहेति** । तथा च नालोकस्येहप्रत्ययविषयत्वं सम्भवति । आलोके आलोक इति प्रात्याऽत्माश्रयापत्तेरिति भावः । **सोऽपि** इहालोक इति प्रत्ययोऽपि । **ते** लौकिकाः । **हस्तादिषु** आश्रितं शरीरमिति शेषः । **किन्त्विति** । हस्ताद्यवयवं दृष्ट्वा इदमेव शरीरमिति इह हस्ताद्यात्मकतयैव व्यवहरन्तीत्यर्थः । एवमपि इहालोक इति प्रत्ययस्य अस्त्वालोकावयवविषयकत्वमित्यर्थः । नेहालोक इत्यत्रेहप्रत्ययविषयत्वं तदवयवस्य न सम्भवति । आलोकाभावावयवाभावादित्यर्थः । यद्वा इहालोकावयवे आलोको नास्तीति वक्तुं शक्यते अवयवे ध्वंसप्रागभावयोः सम्भवात् तथाऽपि नेहालोक इत्यत्रात्यन्ताभावस्यैव प्रतीयमानत्वात् तदधिकरणत्वमवयवस्य न युक्तमित्यर्थः ।





तथेहालोकत्र्यणुकमिति प्रत्ययोऽपि दुःसम्पादः । तत्रापि तदवयवस्य आलोकद्व्यणुकस्यातीन्द्रियत्वेन इहेति चाक्षुषप्रत्ययेऽनवभासादित्यर्थः । इहालोकत्र्यणुकमिति प्रत्ययः सुसम्पाद इत्याशङ्कते **प्रमाणान्तरेति** । त्र्यणुकं स्वापेक्षया स्वल्पपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वात् घटादिवदित्यनुमानप्रमाणान्तरापनीतं द्व्यणुकरूपावयवमित्यर्थः । यथाकथञ्चिदुपनीतभानस्यावश्यकतया त्वयाऽप्यङ्गीकारादिहालोकत्र्यणुकमित्यत्रेव इह विहङ्गमः पततीत्यत्रापि साक्षिरूपप्रमाणान्तरोपनीताकाशविषयकत्वमेवास्त्वित्याह **एवं तर्हीति** । **तथाभूतं** प्रमाणान्तरोपनीतम् । **तथा चेति** । आकाशस्येहप्रत्ययविषयत्वे सतीत्यर्थः । **लौकिकेति** । यथा तव इहालोक इत्यादेरवयवविषयत्वकल्पने लोकानुभवविरोधः तथाऽत्र नेत्यर्थः । तथा हि । लौकिका आकाशे पक्षी पततीति वक्तव्ये आकाशमिहेति निर्दिश्य तत्र पक्षी पततीति भवद्भिर्द्रष्टव्यमिति लौकिकानुभव इत्यर्थः ।

**आनन्दः— अपर आहेति** । तथा चास्याः प्रतीतेः सिद्धे आकाशविषयत्वे चाक्षुषत्वादिविचारावसरस्तदेव तु न युज्यते आलोकमण्डलमादायान्यथासिद्धत्वादिति भावः । **इहालोक इतीति** । तथा च तत्रेहेत्यनेनाकाशमण्डलं न गृहीतुमलं आत्माश्रयादिति भावः । अस्तु वा इहालोक इत्यत्रेहप्रत्यय आलोकविषयः । तथापि नेहालोक इति तु कथं आलोकप्रतीतौ तन्निषेधानुपपत्तिरप्रतीताविह प्रत्ययानुपपत्तेः । तथा इह त्रसरेणुरिति न सम्भवति तदवयवानां द्व्यणुकानामप्रत्ययत्वादित्याह **किञ्चैवमपीति** । तथा चोभयत्रापि इहेत्यनेनालोकद्व्यणुकं ग्राह्यम् । तच्चायोग्यत्वान्न चाक्षुषज्ञानेव भासत इति प्रत्ययोऽयं दुःसम्पाद इति भावः । **तथाभूतमिति** । साक्षिरूपप्रमाणान्तरोपनीतमित्यर्थः ।

**शे०वा०—** एवं स्वमतेन 'इह विहङ्गमः पतति' इति प्रतिभासं समर्थ्य किरणावलीकारीयं तत्समर्थनप्रकारं दूषयितुमनुवदति **अपर आहेति** । अस्त्विहप्रत्ययस्य स्वोक्तरीत्या चाक्षुषत्वम् । न चैतावता आकाशस्य चाक्षुषत्वं सिद्ध्यति । किन्त्वाकाशस्य तद्विषयतायां सत्यामेव । न चासावस्ति । आलोकमण्डलस्यैवेहप्रत्ययविषयत्वेनाभ्युपगमात् । तस्य च चाक्षुषताया इष्टत्वादिति भावः । **इहलोक इत्यपीति** । इहालोक इति प्रतीतौ नेहप्रत्ययस्यालोकविषयत्वं सम्भवति । तथा सति स्वात्मनि स्ववृत्तिप्रसक्तेरिति भावः । लोकव्यवहारविरोधेन दूषयति **नेति** । अवयवाश्रितत्वपक्षे दोषान्तरमाह **किञ्चेति** । **एवमपीति** । आलोकावयवस्य इहप्रत्ययावलम्बनत्व इत्यर्थः । **नेहेति** । आलोकावयवस्येहप्रत्ययालम्बनत्वे नेहालोक इति प्रत्ययो न स्यात् । आलोकावयवेष्वालोकावयविनोऽभावायोगादिति भावः । **इहालोकत्र्यणुकमिति** । अवयवस्येहप्रत्ययालम्बनत्वे इहालोक इत्यादीनाम् इहालोकचतुरणुकमित्यन्तानां प्रत्ययानां तत्तदवयवपरम्परायाश्चाक्षुषत्वेन चाक्षुषेहप्रत्ययालम्बनत्वेन निर्वहेऽपीहालोकत्र्यणुकमिति न प्रत्ययः सम्भवति । तदवयवानां द्व्यणुकानामचाक्षुषत्वेन चाक्षुषेहप्रत्ययालम्बनत्वानुपपत्त्या तदाश्रयतयेहालोकत्र्यणुकमिति प्रत्ययस्योपपादयितुमशक्यत्वादित्यर्थः । ननु न 'इहालोकत्र्यणुकमिति प्रत्ययानुपपत्तिः । त्र्यणुकावयवानां द्व्यणुकानामप्रत्यक्षत्वेऽप्यनुमानसिद्धतया अनुमानोपनीतद्व्यणुकाश्रयतया आलोकत्र्यणुकावभासोपपत्तिरिति शङ्कते **प्रमाणान्तरेति** । हन्तैवं





लाघवादावश्यकत्वाच्च प्रमाणान्तरोपनीताकाशाश्रयतयैव 'इह पक्षी' इत्यादिप्रत्ययस्य समर्थनसम्भवात् आलोकमण्डलविषयत्वकल्पनमनर्थकमित्याह **एवं तर्हीति**। द्वितीयेनादिपदेन इहालोको नेहालोक इहालोकत्र्यणुकमिति प्रतीतीनां सङ्ग्रहः। प्रमाणान्तरसिद्धाकाशाश्रयतयैव इह पक्षीत्यादिप्रत्ययः समर्थनीयो न तु प्रमाणान्तरोपनीतालोकावयवाश्रयतया इत्यत्र नियामकान्तरमप्याह **तथा चेति**। प्रमाणान्तरोपनीतद्व्यणुकाश्रयतयेहालोकत्र्यणुकमिति प्रत्ययसमर्थने विलक्षणप्रमाणोपनीताश्रयाश्रयित्वेन प्रत्ययकल्पनमेको दोषः। लौकिकानामवयवाश्रयतया अवयविबुद्धेरभावादित्युक्तोऽपरो दोष इति दोषद्वयम्। मानान्तरसिद्धाकाशाश्रयतया इह पक्षीत्यादिप्रत्ययनिर्वाहपक्षे तु न तदिति स एव पक्ष आश्रणीय इति भावः।

**वा०र०—** **किरणावलीकारीयमिति**। तेनाप्युक्तरीत्याकाशचाक्षुषतापक्षं निराकृत्य कथं तर्हीह पक्षी नेह पक्षीति प्रत्यय इति चेत् इतीहप्रत्ययस्य कथन्तामाशङ्क्य लोकमण्डलमाश्रित्येति ब्रूमः इति तत्समर्थनकरणादिति भावः। **उक्तरीत्येति**। अनन्यथासिद्धचक्षुरन्वयव्यतिरेकानुविधायित्वानुमानेनेत्यर्थः। **चाक्षुषत्वं** चक्षुःप्रमाणजन्यत्वमित्यर्थः। **एतावतेति**। इह प्रत्ययस्य चक्षुःप्रमाणजन्यत्वमात्रेणेत्यर्थः। **चाक्षुषत्वं सिद्ध्यतीति**। चक्षुर्जन्यज्ञानविषयत्वमित्यर्थः। **आलोकावयवस्येति**। एतच्चैवमित्यंशस्य व्याख्यानं अपिशब्दस्य अधिकस्य प्रतीकान्तर्भावस्येवंतर्हीत्युत्तरवाक्यप्रतीकग्रहणत्वभ्रान्तिनिवृत्त्यर्थमिति न दोष इति ज्ञेयम्। **न तस्य साक्षीति**। प्रमाणान्तरागम्य एवार्थे साक्षिणः प्रमाणादिति भावः।

**स०व्र०—** अस्त्विहप्रत्ययस्य चाक्षुषत्वं सत्त्वालोकविषय इति कस्यचित्समाधिमनुवदति **अपर आहेति**। किमिहालोक इतीहप्रत्यय आलोकविषयस्तदवयवविषयो वेति विकल्प्याद्यमनुवदति **तदिति**। स्वात्मनि क्रियाविरोधादिति भावः। द्वितीयं शङ्कते **सोऽपीति**। लोकव्यवहारविरोधेनैतद्दूषयति **नेति**। अस्तु वा इहलोक इत्यत्रेह प्रत्यय आलोकविषयः नेहालोक इति तु कथम्, आलोकप्रतीतौ तन्निषेधानुपपत्तेः, अप्रतीताविहप्रत्ययानुपपत्तेः। तथा इह आलोकत्रसरेणुरिति न सम्भवति। तदवयवानां द्व्यणुकानां अप्रत्यक्षत्वादित्याह **किञ्चेति**। अवयवस्याप्रत्यक्षत्वेऽपि प्रमाणान्तरसिद्धतयेह प्रत्ययत्वमिति शङ्कते **प्रमाणेति**। तत एव प्रमाणान्तरसिद्धाकाशविषयत्वसम्भवात् किमालोकादेर्विषयत्वकल्पनयेत्याह **एवमिति**। विनिगमकमाह **तथा चेति**।

**विट्ठल०—** तथा प्रतीतिरस्तीति तार्किकाणामभिमानस्य सत्त्वात् **लौकिकानामित्युक्तम्**। **तदात्मकतयेति**। हस्ताद्यात्मकतयेत्यर्थः। **दुस्संपाद इति**। आलोकतदभावयोर्विरुद्धत्वात् त्र्यणुकावयवद्व्यणुकस्याप्यतीन्द्रियत्वाच्चेति भावः। ननु नेहालोक इति प्रतीतिरनुमानोपनीतालोकपरमाणुनाश्रित्येति आलोकत्र्यणुकप्रतीतिरप्येवमनुमानोपनीतद्व्यणुकानाश्रित्येति ब्रूमः। अतो नोक्तदोष इत्याशङ्क्य परिहरति **प्रमाणान्तरेति**।





**चषकः**— अत्रार्थे किरणावलीकृन्मतं दुदूषयिषुरनुवदति **आलोकेति** । **सोऽपि** । आलोकोऽपि । **ते** लौकिकाः । **दुःसम्पाद इति** । ईषद्दुस्सुष्विति कर्मसाधनखलन्तोऽयम् । अवयवेषु अवयव्यभावराहित्येनाद्यो (ऽघटः) दुर्घटः । द्व्यणुकस्यातीन्द्रियतया द्वितीयश्च सम्पादयितुमशक्य इत्यर्थः ।

**॥ तत्रादौ आकाशस्यानुमानवेद्यत्वनिरासः ॥**

**१३४ सु०— तथाऽप्यनुमानवेद्यमाकाशमस्त्विति चेन्न, लिङ्गाभावात् ।**

**वं०प०**— अस्त्विह पक्षीत्यत्र प्रमाणान्तरोपनीताकाशस्येहप्रत्ययविषयत्वम् । तथाऽपि तदुपनायकं प्रमाणं न भवदुक्तरीत्या साक्षिरूपम् । किं त्वनुमानमेव भविष्यतीत्याशयेन शङ्कते **तथाऽपीति** । **अस्त्विति** । ततश्चानुमानोपनीतमेवाकाशम् इहप्रत्यये भासत इत्यर्थः । **लिङ्गेति** । आकाशानुमापकलिङ्गेत्यर्थः ।

**आनन्दः**— न तथापि आकाशादिसिद्ध्यन्यथानुपपत्त्या साक्षिसिद्धिः । तस्याः चाक्षुषत्वेऽप्यनुमानेन सिद्धिसम्भवादित्याशङ्कते **तथापीति** ।

**शे०वा०**— **तथापीति** । रूपरहितद्रव्यत्वेन गगनादेरचाक्षुषतया चक्षुषा तत्सिद्ध्यसम्भवेऽपीत्यर्थः । तथा च न तस्य साक्षिसिद्धत्वमिति भावः । लिङ्गाभावेनानुमानानुपपत्तेः साक्षिसिद्धत्वमेव तस्येत्याशयेनाह **नेति** ।

**स०व्र०**— साक्षिसिद्धाकाशविषयत्वं तथापि न लभ्यत इति शङ्कते **तथाऽपीति** । अनुमानासम्भवात् साक्षिविषयत्वमेव सिद्ध्यतीत्याह **नेति** ।

**॥ तत्राप्यादौ अनुमानप्रयोगः ॥**

**१३५ सु०— अथ मतम् । 'शब्दस्तावत्प्रत्यक्षसिद्धः । स च गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वाद् रूपवत् इति गुणत्वात् द्रव्याश्रितस्तद्वदेव' इति सामान्यतो द्रव्यसिद्धेः (द्रव्यसिद्धौ) (द्रव्ये सिद्धे) । ''शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वात्, सुखादिवत् । स्पर्शव-(द्विशेष)(गुण)त्वे तदनुपलम्भप्रसङ्गः । शब्दो हि श्रोत्रेण प्राप्तो वा गृह्यतेऽप्राप्तो वा । अप्राप्तग्रहणेऽतिप्रसङ्गः । प्राप्तिस्तु शब्दश्रवसोः न सम्भवति । सा हि न तावच्छ्रोत्रस्य गमनेन सम्भवति, तस्यामूर्तस्य गत्यभा(तेरसम्भ)वात् । नापि शब्दस्यागमनेन । स हि न तावच्छङ्खादिकमाश्रयं परित्यज्यागन्तुमलम्, गुणत्वात् । नापि शङ्खाद्यागमनेन श्रोत्र-**





**(स्य)प्रत्यासत्तिः, तदनुपलम्भात् । न च शब्दान्तरोत्पादपरम्परया, गुणस्य स्वाश्रये स्वाश्रयाश्रिते वा गुणेऽसमवायिकारणत्वात् । न च शङ्खश्रवसोर्मध्ये शङ्खो वा तदारब्धद्रव्यं वाऽस्ति । तस्माच्छङ्खादिनिमित्तान्यपहायाश्रयान्तरे वर्तमानो वीचीतरङ्गन्यायेन कर्णशष्कुली(ग)मन्तमाकाशदेशमापन्न उपलभ्यते नान्यथेति स्थितम् । नाप्यात्मगुणः, बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायात् अहङ्कारेण विभक्तस्य ग्रहणाद्रूपादिवत् । न दिक्कालमनसां (गुणः), प्रत्यक्षत्वाद्विशेषगुणत्वाच्च" इति प्रसक्तप्रतिषेधे परिशेषादेभ्योऽतिरिक्तं द्रव्यं सिद्ध्यति । तदाकाशमिति ।**

**तदयं प्रमाणार्थः । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः, तद्वृत्तौ बाधकोपपन्नत्वे सति गुणत्वाद्रूपवदिति ।**

**परि०—** सामान्यपरिशेषरूपानुमानाभ्यां गगनादिसिद्धिनिरासोऽपि साक्षिप्रत्यक्षपदप्रयोगफलमिति भावेन तन्मतमाशङ्कते **अथ मतमित्यादिना** । आश्रयासिद्धिशङ्कानिरासायाह **शब्दस्तावत्प्रत्यक्षसिद्ध इति** । गुण इति साध्यनिर्देशः । हेतौ (तोर्ग्रा)ग्राह्यत्वमात्रस्य गगनादौ व्यभिचारादिन्द्रियेति विशेषणम् । घटादावव्यभिचाराय **एकेन्द्रियेति** । जीवात्मन्यव्यभिचाराय **बाह्येति** । योगिबाह्येन्द्रियग्राह्यात्माकाशादावव्यभिचाराय **अस्मदादीति** । शब्दत्वादावव्यभिचाराय **सत्यन्तम्** । अयं च प्रयोगो वक्ष्यमाणगुणत्वहेतोरसिद्धिनिरासाय । परोक्तप्रतिज्ञादिक्रमनियमभञ्जनाय हेतुपूर्वकं गगनसाधकसामान्यानुमानप्रयोगमाह **गुणत्वाद्द्रव्याश्रित इति** । शब्द इति धर्मिवाचिपदमनुवर्त्यम् । सामान्यतो द्रव्ये सिद्ध इत्यस्य परिशेषादित्यादिना वक्ष्यमाणेनान्वयः । गगनरूपविशेषद्रव्यसिद्ध्यै परिशेषं वक्तुं प्रसक्तं निराह **शब्द इत्यादिना** । स्पर्शवतः पृथिव्यादिचतुष्टयस्य गुणो नेत्यर्थः । कर्मजसंयोगादौ हेतोरव्यभिचाराय साध्ये विशेषपदम् । कारणगुणपूर्वकत्वं नाम स्वसमवायिकारणमात्रसमवेतगुणासमवायिकारणकत्वम् । यथा घटगतरूपस्य स्वाश्रयसमवायिकारणमृत्पिण्डगतरूपासमवायिकारणकत्वम् । तदभावः, अकारणगुणपूर्वकत्वम् । तस्मादिति हेत्वंशस्यार्थः । शब्दश्चोक्तरूपकारणगुणपूर्वको नेति नासिद्धिः । परमाणुरूपादावव्यभिचाराय प्रत्यक्षत्वे सतीति विशेषणम् । तन्तुरूपजन्ये पटरूपेऽ(घटगतपूर्वरूपादाव)व्यभिचाराय विशेष्यम् । **अयावद्द्रव्यभावित्वादिति** । अत्रापि प्रत्यक्षत्वे सतीत्यनुवर्तनीयम् । तेन पाकजे पार्थिवपरमाणुरूपादौ व्यभिचारः । हेतोरप्रयोजकत्वनिरासाय विपक्षे बाधकतर्कमाह **स्पर्शवद्गुणत्व**





इत्यादिना । **तदिति** । शब्दानुपलम्भप्रसङ्ग इत्यर्थः । तत्कथमित्यतो व्यनक्ति **शब्दो हि** इत्यादिना **द्रव्यं वाऽस्ति** इत्यन्तेन । **गुणस्य स्वाश्रय इति** । स्वाश्रये वर्तमानं गुणं प्रति वा स्वाश्रयाश्रिते विद्यमानं गुणं प्रति गुणस्यासमवायिकारणत्वादित्यर्थः । आद्यं यथा । आत्मगतमनःसंयोगस्य आत्मगतज्ञानादिगुणासमवायिकारणत्वम् । द्वितीयं तु तन्तुरूपस्य पटगतरूपं प्रत्यसमवायिकारणत्वम् । न चैवं स्पर्शवद्गुणत्वे सम्भवतीति भावः । कथं तर्हि तदुपलम्भ इत्यत आह **तस्मादिति** । **वीचीतरङ्गेति** । सूक्ष्मस्थूलत्वाभ्यां वीचीतरङ्गयोर्भेदः । यथा तटाकादिमध्ये पाषाणादिप्रक्षेपे सति वलयाकारेण दशदिक्सम्बद्धा काचिद्वीची जायते । तदनन्तरं तथैव कश्चित्तरङ्गः पुनर्वीची पुनस्तरङ्ग इत्येवं तीरपर्यन्तं वीचीतरङ्गपरम्परया तीरप्राप्तिः । तथा शङ्खादिशब्दस्यापि परम्परया कर्णशष्कुलीयुक्तदेशप्राप्तिरित्यर्थः । **नाप्यात्मगुण इति** । शङ्खशब्दं कुर्वन्य आत्मा तद्गुण इत्यर्थः । शब्द इति वर्तते । **अहङ्कारेण विविक्तस्येति** । अहं सुखीत्यादिवत् अहमर्थसंसृष्टत्वभावेन अहमर्थाऽसंसृष्टस्येत्यर्थः । **न दिक्कालमनसामिति** । गुणः शब्द इत्यनुकर्षः । **प्रसक्तेति** । आश्रयत्वेन प्रसक्तपृथिव्याद्यष्टद्रव्याणामाश्रयत्वप्रतिषेध इत्यर्थः । रूपवदितीतिशब्दस्य अथ मतमिति पूर्वेणान्वयः ।

**गु०दी०— प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्** इत्यत्र प्रत्यक्षत्वादित्येवोक्ते रूपादिषु व्यभिचारः । अतोऽकारणगुणपूर्वकत्वादित्युक्तम् । तेषां कारणगुणपूर्वकत्वात् । तावत्येवोक्ते परमाणुरूपादौ व्यभिचारः । अतः प्रत्यक्षत्वे सतीत्युक्तम् । अत्रेदं चिन्त्यम्, एवमपि ज्याकर्षनिमित्ते शरवेगे व्यभिचारतादवस्थ्यादिति ज्ञेयम् । **स्वाश्रये स्वाश्रयाश्रिते वा गुण** इत्यत्र स्वाश्रये आत्मनि ज्ञानं प्रति मनस्संयोगस्य स्वाश्रयाश्रिते तन्तुरूपस्य पटरूपाख्यगुणं प्रत्यसमवायिकारणत्वादित्यर्थः ।

**यादु०— सामान्यवत्त्वे सतीति** । अत्र रूपत्वादिसामान्ये योगिबाह्येन्द्रियग्राह्ये वाय्वादावात्मनि घटादौ च व्यभिचारवारणाय क्रमेण विशेषणानि । सामान्यतो द्रव्ये सिद्धे इत्यस्य परिशेषादेभ्योऽतिरिक्तं द्रव्यं सिद्ध्यतीति वक्ष्यमाणेनान्वयः । **शब्दो न स्पर्शवद्विशेषगुण इति** । अत्र हेत्वोः कर्मजे स्थाणुश्येनसंयोगादौ व्यभिचारवारणाय साध्ये विशेषपदम् । प्रतिनियतेन्द्रियग्राह्यत्वेन च शब्दस्य विशेषगुणत्वसिद्धिरूह्या । परमाणुरूपादौ व्यभिचारवारणाय **प्रत्यक्षेति** । तन्तुरूपादिजन्ये पटरूपादौ व्यभिचारवारणाय **कारगुणपूर्वकेति** । एतन्मते पिठरपाकानभ्युपगमान्न पाकजे घटरूपादौ व्यभिचारः । द्वितीयहेतावपि प्रत्यक्षत्वे सतीत्यनुषञ्जनीयम् । अन्यथा पार्थिवपरमाणुरूपादौ व्यभिचारप्रसङ्गादिति द्रष्टव्यम् । अनयोरनुकूलतर्कमाह **स्पर्शवद्गुणत्व इत्यादिना** । अनेन शब्दो यदि स्पर्शवच्छङ्खादिविशेषगुणः स्यात्, तर्हि तदसम्बद्धेन्द्रियग्राह्यो न स्यात् तद्रूपादिवदिति तर्क उक्तो भवति । शिष्टमेतदुपपादकमिति मन्तव्यम् । **गुणस्य स्वाश्रय इति** । कर्मणः स्वाश्रय





एवासमवायिकारणत्वेन द्वैविध्याभावाद्गुणस्येत्युक्तम् । तेजःसंयोगादेः स्वाश्रये तन्तुरूपादेः स्वाश्रयाश्रित इति विवेकः । आकाशगुणत्वे तु नैतत्तर्कपराहतिरित्याह **तस्माच्छङ्खादिति** । **आश्रयान्तर इति** । आकाश इत्यर्थः । **वीचीतरङ्गन्यायेनेति** । यथा वीची प्रथमोत्पन्ना वीच्यन्तरमारभते । तच्च तरङ्गान्तरम् । तथा आद्यः शब्दोऽपि सर्वतो दिक्षु सजातीयं शब्दान्तरम् । तदपि शब्दान्तरमित्यर्थः । कदम्बगोलकन्यायेनानेकशब्दारम्भस्तु न युक्तः । भिन्नदिगवस्थितयोः य एव शब्दः त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञाविरोधात् । तस्यास्तज्जातीयविषयकत्वकल्पनस्य भ्रमत्वकल्पनस्य वा बाधकाभावेनासम्भवात् । **बाह्येन्द्रियेति** । मनसोऽन्यदिन्द्रियं बाह्यम् । तत्प्रत्यक्षत्वात् गन्धवदित्यन्वयी । बाह्येन्द्रियत्वं तु श्रोत्रस्य प्रतिनियतविषयत्वाच्चक्षुर्वत् । आत्मगुणानां बाह्येन्द्रियेण ग्रहीतुमशक्यत्वात् । अन्यथा बुद्ध्यादीनां तथात्वप्रसङ्ग इति किरणावल्युक्तमुपपादनमत्र द्रष्टव्यम् । हेत्वन्तरमाह **आत्मान्तरेति** । ये ह्यात्मगुणाः सुखादयो न ते आत्मान्तरेण गृह्यन्ते । शब्दश्चानेकैरात्मभिर्गृह्यते अतो नात्मगुण इत्यर्थः । अथवा यत्रस्थः शब्दः ततोऽन्य आत्मा आत्मान्तरं तत्प्रत्यक्षत्वादित्यर्थः । वीणाद्याश्रयतया हि शब्दः प्रतीयते । तत्सन्तानन्यायेन श्रोत्रस्थो वा न स्वात्मनिष्ठतया । तस्मादन्यश्चास्य ग्राहक आत्मा । तथा च यद्ययं शब्द आत्मगुणः स्यात् तर्ह्यात्माविषयकप्रत्यक्षविषयो न स्यात् । तादृशश्चायम् । तस्मान्न गन्धादिवदात्मगुण इति भावः । एतदेव कुत इति चेत्तत्राह **आत्मन्यसमवायादिति** । ग्राहकासमवायादित्यर्थः । इदमप्यसिद्धमित्यत आह **अहङ्कारेणेति** । **विभक्तस्य** व्यधिकरणस्य । वीणा वाद्यते वेणुः पूर्यते, न त्वहं वाद्येऽहं पूर्ये वेति कस्यचित्प्रत्ययः । अहङ्कारेण व्यधिकरणतया प्रतीयमानस्याप्यात्मसमवाये गन्धादीनामपि तथात्वप्रसङ्ग इति भावः ।

**वं०प०**— लिङ्गाभावोऽसिद्धः यावता शब्द एव आकाशानुमापकं लिङ्गमित्यभिप्रेत्य शङ्कते **अथ मतमित्यादिना** । **सामान्यवत्त्वे सतीत्यादि** । इन्द्रियग्राह्यत्वादित्युक्ते पटादौ व्यभिचारोऽत **एकेति** । तथापीन्द्रियरूपमनसैव ग्राह्ये आत्मनि; तदर्थं **बाह्येति** । तथाऽपि **योगिबाह्येन्द्रियग्राह्ये** वाय्वादौ । अत **अस्मदादीति** । तथाऽपि सामान्ये अतः **सामान्यवत्त्वे सतीत्युक्तम्** । एकपदत्यागे समग्रहेतोरपि घटादौ व्यभिचारः स्यादतः सर्वं विशेषणं सार्थकम् । अकारणगुणपूर्वकत्वादित्यत्र कारणशब्देन स्वस्य यत्समवायिकारणं तत्समवायिकारणं गृह्यते । यथा पटरूपं कारणगुणपूर्वकं तद्वच्छब्दः स्वसमवायिकारणसमवायिकारणगुणपूर्वको न भवति समवायिकारणीभूताकाशसमवायिकारणाभावादिति पक्षे हेतूपपादनं द्रष्टव्यम् । एवमुत्तरत्रापि कारणशब्दव्याख्यानं द्रष्टव्यम् । **तद्वदेव** रूपवदेव । अप्रयोजकतां परिहरति **स्पर्शवद्गुणत्वे इति** । **तदिति** । शब्देत्यर्थः । उपपादयति **शब्दो हीति** । **श्रवः** श्रोत्रम् । **सा हि** प्राप्तिरित्यर्थः । **तस्येति** । श्रोत्रस्याकाशात्मकत्वेनामूर्तत्वाद्गतिरयुक्तेत्यर्थः । **स हीति** । स्पर्शवच्छङ्खादावुत्पन्नः शब्द इत्यर्थः । **गुणत्वादिति** । गुणस्याश्रयपरित्यागेन गमनानुपलब्धेरिति भावः । **तदिति** । शङ्खागमनेत्यर्थः । **गुणस्येत्यादि** । स्वाश्रय इत्यत्र स्वस्य आश्रय एवाश्रयो यस्यासौ स्वाश्रय इति बहुव्रीहिस्तदाश्रितेत्यर्थः । पाकरूपतेजःसंयोगस्य स्वाश्रये परमाणौ विद्यमाने रूपादिगुणेऽसमवायिकारणत्वं दृष्टम् । तथा तन्तुरूपादेर्गुणस्य





स्वाश्रयभूततन्त्वाश्रिते पटे जायमानरूपादिगुणेऽसमवायिकारणत्वं दृष्टम् । न चैवं शब्दे सम्भवति । तथा हि । असमवायिकारणीभूतः शब्दः किं शब्दान्तररूपं गुणम्; स्वाश्रयभूतः शङ्ख एव मध्येऽपि तिष्ठति; तत्र जनयति, उत स्वाश्रयभूतशङ्खाश्रिते तदारब्धे कस्मिंश्चिद्द्रव्ये वेति विकल्पं हृदि निधायाद्यं निराकरोति **न चेति** । द्वितीयं पराचष्टे **तदारब्धमिति** । शङ्खादिनिमित्तानि निमित्तकारणीभूतशङ्खादीनीत्यर्थः । अनेन शङ्खो निमित्तकारणमेव, न समवायिकारणमिति ध्वनितम् । **आश्रयान्तरे** स्वसमवायिकारणभूते आकाशे । तथा च नास्माकं शङ्ख-गुणकत्वपक्षोक्तदोषः । शङ्खावच्छिन्नाकाशे उत्पन्नः शब्दः स्वाश्रये आकाश एव शब्दान्तररूपं गुणं जनयतीत्यङ्गीकारादिति । **शष्कुलीगतं** शष्कुलीयुक्तम् । कर्णशष्कुल्यवच्छिन्नमित्यर्थः । **बाह्यपदं** सुखादौ व्यभिचार-वारणाय ।

**आनन्दः**— शब्दपक्षकेऽनुमाने पक्षसिद्धिं परिहर्तुमाह **शब्दस्तावदिति** । **प्रत्यक्षत्वे सतीति** । सत्यन्तं पार्थिवपरमाणुरूपे व्यभिचारवारणाय । अप्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वेऽपि उक्तसाध्यं मास्त्व-प्रयोजको हेतुरित्यत आह **स्पर्शवदिति** । न च साध्ये विशेषपदं व्यर्थमिति वाच्यम् । द्वितीयहेतौ संयोगे व्यभिचारवारकत्वात् । साध्येऽपि तादृशसार्थक्यस्य कथयिष्यमाणत्वात् । अनुपलम्भप्रसङ्गमुपपादयति **शब्दो हीति** । **प्राप्तिस्त्विति** । सन्निकृष्ट इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । **तदनुपलम्भादिति** । शब्दात्मना अनुपलम्भादित्यर्थः । ननु तेन तेन शब्दान्तरोत्पादपरम्परया भविष्यति शब्दस्य श्रोत्रदेशागमनमित्यत आह **न चेति** । **स्वाश्रय इति** । अत्र स्वाश्रयः आश्रयो यस्येति मध्यमपदलोपी बहुव्रीहिः । तादृशपटादिः तस्य तन्तुसंयोगाश्रयतन्त्वाश्रयत्वात् । **स्वाश्रयाश्रित इति** । स्वाश्रय आश्रयोऽस्य स स्वाश्रयः तमाश्रित इति विग्रहः । तादृशश्च पटरूपादिरित्यर्थः । हेत्वन्तरमाह **आत्मान्तरेति** । अनेकप्रतिपत्तृसाधारणत्वादित्येकं व्याख्यानम् । यद्वा यत्रस्थः शब्दः गतान्य आत्मा आत्मान्तरं तत्प्रत्यक्षत्वादित्यर्थः । वीणादिनिष्ठतया शब्दः श्रूयते तत्सन्तानन्यायेन तस्मादन्यश्चास्य ग्राहकः ये त्वात्मगुणाः गृह्यन्ते ते ग्राहकस्था एव गृह्यन्ते सुखादयः गृह्यमाणस्तु शब्दो न ग्राहकस्थ इति तत्कुत इत्यत उक्तं **आत्मनीति** । ग्राहके समवायादित्यर्थः । इदमप्यसिद्धमित्यत उक्तम् **अहङ्कारेणेति** । अहंत्वव्यधिकरणस्य ग्रहणादित्यर्थः । अत एव वीणावाद्य इति प्रयोगः । **तद्वृत्ताविति** । अष्टद्रव्यवृत्तावित्यर्थः ।

**श्रीनिधि०— गुणस्य स्वाश्रय इति** । एकत्वस्य स्वाश्रये गतद्वित्वासमवायिकारणत्वात् । **स्वाश्र-याश्रिते** स्वाश्रये आश्रिते वा गुण इत्यर्थः ।

**शे०वा०**— शब्दस्यैवाकाशानुमापकस्य भावान्न लिङ्गाभाव इति शङ्कते **अथेति** । **शब्दस्ताव-दिति** । तथा च न शब्दपक्षकानुमानेऽसिद्धिरिति भावः । करिष्यमाणसामान्यसिद्धावाश्रयासिद्धिं परिहृत्य तत्र हेत्वसिद्धिं परिहरति **स चेति** । **सामान्यवत्त्वे सतीति** । इन्द्रियग्राह्यत्वादित्युक्ते घटादौ व्यभिचारस्तदर्थ-मेकेति । तथाऽप्यात्मनि गतं तदर्थं बाह्येति । तथाऽपि यौगिकप्रत्यक्षे वाय्वादौ व्यभिचारस्तदर्थमस्मदादीति ।





तथाऽपि रूपत्वादौ व्यभिचारस्तदर्थं सामान्यवत्त्वे सतीत्युक्तम् । न च सामान्यवत्त्वे सतीति हेतुविशेषणासिद्धिः । कार्यत्वे सति प्रतिनियतेन्द्रियग्राह्यत्वेनैव तत्सिद्धेरिति भावः । अस्त्वेवं गुणत्वं ततः किमित्यत आह **गुणत्वादिति** । **तद्वदेवेति** । रूपवदेवेत्यर्थः । नन्वेवं शब्दाश्रयद्रव्यमात्रसिद्धावपि नाकाशसिद्धिरित्याशङ्क्य परिशेषादाकाशसिद्धिरिति वक्तुं प्रसक्तप्रतिषेधं तावत्करोति **इतीति** । 'सामान्यतो द्रव्यसिद्धौ' इत्यस्य 'परिशेषात् एभ्योऽतिरिक्तं द्रव्यं सिद्ध्यती'ति वक्ष्यमाणेनान्वयः ।

**न स्पर्शवद्विशेषगुण इति** । कर्मजन्यस्य स्थाणुश्येनसंयोगस्य प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वायावद्द्रव्यभावित्वयोः सत्त्वेऽपि स्पर्शवद्गुणत्वेन तत्र व्यभिचारपरिहाराय साध्ये विशेषपदमिति द्रष्टव्यम् । शब्दस्य विशेषगुणत्वसिद्धिस्तु शब्दो विशेषगुणोऽस्पर्शवत्त्वे सति बाह्यैकेन्द्रियग्राह्यसामान्यवत्त्वात् रूपवदित्यनुमानाद्रष्टव्या । बहिरिन्द्रियेणैकेन चक्षुर्मात्रेण गृह्यमाणप्रभात्वसामान्यवत्याः प्रभाया द्रव्यतया गुणत्वाभावात् तत्र व्यभिचारवारणायास्पर्शवत्त्वोपादानम् । प्रभाकुम्भसंयोगस्य गुणत्वेनास्पर्शवत्त्वेऽप्यनेकसाधारणतया विशेषगुणत्वाभावात् तत्र व्यभिचारवारणाय द्वितीयं विशेषणम् । तस्य च दर्शनस्पर्शनगम्यसंयोगत्वसामान्यवत्त्वान्न बाह्यैकेन्द्रियग्राह्यसामान्यवत्त्वमिति न व्यभिचारः । आत्मनि व्यभिचारं वारयितुं बाह्यपदम् । **प्रत्यक्षत्वे सतीति** । स्पर्शवतां शङ्खादीनां यानि समवायिकारणानि तेषां ये गुणाः तदनपेक्षत्वादित्यर्थः । अत्र परमाणुगुणैर्व्यभिचारनिरासार्थं प्रत्यक्षत्वे सतीत्युक्तम् । तन्तुरूपादिजन्यपटरूपादौ व्यभिचारवारणायोक्तमकारणगुणपूर्वकत्वादिति । पिठरपाकानभ्युपगमान्न पाकजगुणैर्व्यभिचार इति ध्येयम् । **अयावदिति** । सत्स्वेव शङ्खादिषु निवृत्तेरित्यर्थः । शङ्खादिसमानकालीनध्वंसप्रतियोगित्वादिति यावत् । न चेदमसिद्धम् । यावच्छङ्खमनुपलम्भादेव तत्सिद्धेरिति भावः । अत्रापि प्रत्यक्षत्वे सतीति विशेषणीयम् । अन्यथा पार्थिवपरमाणुरूपादिभिर्व्यभिचारप्रसक्तेरिति बोध्यम् । प्रत्यक्षत्वमात्रं घटरूपादिष्वप्यस्तीति तद्व्यावृत्तये विशेष्यभागः । उक्तयोर्हेत्वोरप्रयोजकत्वमित्यतो यदि शब्दः स्पर्शवच्छङ्खविशेषगुणः स्यात् तर्हि तदसम्बद्धेन्द्रियग्राह्यो न स्यात् रूपादिवदिति विपक्षे बाधकतर्कसद्भावान्नाप्रयोजकतेति भावेन तर्कमुपपादयति **स्पर्शवदिति** । **अतिप्रसङ्ग इति** । सर्वेषां सर्वत्र सर्वशब्दोपलम्भः स्यादित्यतिप्रसङ्ग इत्यर्थः । **अमूर्तस्येति** । अमूर्ताकाशात्मकत्वाच्छ्रोत्रस्यामूर्तत्वमिति स्वमतावष्टम्भेनोक्तमिति ध्येयम् । **गुणत्वादिति** । अन्यथाऽयुतसिद्धत्वभङ्गप्रसङ्गादिति भावः । **गुणस्य स्वाश्रय इत्यादि** । स्वाश्रये गुणे स्वाश्रयाश्रिते गुणे वा गुणस्यासमवायिकारणत्वादिति सम्बन्धः । अत्र स्वशब्दो गुणपरः । आद्ये स्वाश्रय आश्रयो यस्येति स्वाश्रयस्तस्मिन्निति द्वितीये स्वाश्रय आश्रयो यस्येति स्वाश्रयस्तमाश्रितः स्वाश्रयाश्रितस्तस्मिन्निति च विग्रहः । तेन स्वाश्रये गुणे इति स्वाश्रयाश्रिते गुणे इति सामानाधिकरण्यनिर्वाह इति द्रष्टव्यम् । तेजःसंयोगादेः स्वाश्रये गुणे तन्तुरूपादेश्च स्वाश्रयाश्रिते गुणेऽसमवायिकारणत्वमिति विवेको बोध्यः । यद्वा स्वाश्रये यो गुणः स्वाश्रयाश्रिते यो गुणः तत्रेति वैयधिकरण्येनैवान्वयान्न किञ्चिदेतत् । यदि हि शङ्खश्रवसोर्मध्ये शङ्खः स्यात् तदा घटाद्याश्रिततेजःसंयोगेन स्वाश्रये घटे पाकजादेरिव शङ्खाश्रितेन शब्देन स्वाश्रये शब्दान्तरोत्पत्त्या श्रोत्रे प्रत्यासत्तिः स्यात् । यदि वा

शङ्खारब्धं द्रव्यान्तरं भवेत् तदा तन्तुरूपेण स्वाश्रयाश्रिते पटे रूपस्येव शङ्खाश्रितेन शब्देन स्वाश्रयारब्धे मध्यवर्तिनि द्रव्ये शब्दान्तरोत्पत्त्या श्रोत्रे प्रत्यासत्तिः स्यात् । न चैतदस्ति । शङ्खश्रवसोर्मध्ये शङ्खतदारब्धद्रव्ययोरनुभवबाधितत्वेन कल्पयितुमशक्यत्वादित्याशयः । तर्ह्याकाशगुणत्वमपि न स्यात् । उक्ततर्कपराहतेस्तत्रापि वक्तुं शक्यत्वादित्यत आकाशगुणत्वे तदप्रवृत्तिं दर्शयति **तस्मादिति** । **आश्रयान्तर इति** । तदेवाकाशमिति भावः । **वीचीतरङ्गन्यायेनेति** । यथा वीची प्रथमोत्पन्ना वीच्यन्तरमारभते तच्च तरङ्गान्तरं तथा शब्दोऽप्याद्यः सर्वतो दिक्षु सजातीयं शब्दान्तरं तदपि शब्दान्तरमारभत इति वीचीतरङ्ग-न्यायेनेत्यर्थः । यदि च कदम्बमुकुलकन्यायेनानेकं शब्दमारभते तदा भिन्नदिगवस्थितयोः य एव शब्दः त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञानानुपपत्तिः । न च त एवेमे शालय इत्यादिवत् तज्जातीयविषयकत्वादिकं कल्पनीयम् । बाधकाभावेन तदनवकाशादिति भावः ।

**नापीति** । शब्द इति वर्तते । **बाह्येन्द्रियेति** । मनसोऽन्यदिन्द्रियं बाह्येन्द्रियं तत्प्रत्यक्षत्वादित्यर्थः । श्रोत्रं बाह्येन्द्रियं प्रतिनियतविषयत्वाच्चक्षुर्वत् । अनात्मगुणत्वे सति महद्द्रव्यवृत्तित्वमुद्भूतत्वं च बाह्येन्द्रियग्राह्यत्वे गुणानां योग्यता । सा चात्मगुणत्वे दुर्लभा स्यात् । अन्यथा बुद्ध्यादीनामपि बाह्येन्द्रियाग्राह्यत्वप्रसक्तेरिति भावः । हेत्वन्तरमाह **आत्मान्तरेति** । अनेकप्रतिपत्तृसाधारणत्वादित्यर्थः । ये ह्यात्मगुणाः सुखादयो न ते आत्मान्तरेण गृह्यन्ते । शब्दश्चानेकैरात्मभिर्गृह्यतेऽतो नात्मगुण इत्यर्थः । यद्वा यत्रस्थः शब्दः ततोऽन्य आत्मान्तरं तत्प्रत्यक्षत्वादित्यर्थः । वीणाद्याश्रयतया हि शब्दः प्रतीयते । तत्सन्तानन्यायेन श्रोत्रस्थो वा तस्मादन्यश्चास्य ग्राहक आत्मा । ये त्वात्मगुणा गृह्यन्ते ते ग्राहकस्था एव गृह्यन्ते सुखादयः । गृह्यमाणस्तु शब्दो न ग्राहकस्थ इति । ततश्च यद्ययं शब्द आत्मगुणः स्यात् तर्ह्यात्माविषयकप्रत्यक्षविषयो न स्यात् तादृशश्चायं तस्मान्न गन्धादिवदात्मगुण इत्युक्तं भवति । एतदेव कुत इत्यत आह **आत्मनीति** । ग्राहकेऽसमवायादित्यर्थः । इदमप्यसिद्धमित्यत आह **अहङ्कारेणेति** । अहङ्कारेण विभक्तस्य व्यधिकरणस्य ग्रहणात् । वीणा वाद्यते वेणुः पूर्यते, न त्वहं वाद्ये पूर्ये वेति कस्यचित्प्रत्ययः । यद्यहंप्रत्ययो यत्र तत्रैव विषये शब्दः स्यात् तर्हि ग्राहके मनसाऽध्यवसीयमाने तद्गततया शब्दोऽपि सुखादिवन्मनसाऽध्यवसीयेत । गुणस्य मानसप्रत्यक्षत्वे, उद्भूतत्वे सति ग्राहकवर्तित्वस्य योग्यतारूपत्वात् । न चैवम् । तस्माद्यत्राहंप्रत्ययस्ततो-ऽन्यत्रात्मनि शब्दो वाच्यः । तथा चानात्मवर्तिनोऽपि शब्दस्यात्मवृत्तित्वव्याघातः । अहङ्कारेण व्यधिकरणतया प्रतीयमानस्याप्यात्मसमवाये गन्धादीनामपि तथात्वप्रसङ्ग इति भावः ।

**नेति** । शब्दो गुण इत्यनुवर्तते । यत्तु किरणावलीकृता विशेषगुण इति शेष इत्युक्तम् । तदसत् । दिक्कालमनोविशेषगुणत्वस्याप्रसिद्धतया प्रतियोग्यप्रसिद्ध्या दिक्कालमनोविशेषगुणत्वाभावस्य साधयितुमशक्य-त्वात् । न च विशेषगुण इति पक्षविशेषणं कृत्वा दिक्कालमनोगुणत्वाभावस्य साध्यत्वान्न प्रतियोग्यप्रसिद्धि-रिति वाच्यम् । तथाऽपि वैयर्थ्यानिस्तारादनुषङ्ग इत्येव वक्तव्यतया शेषपदस्यास्वारस्याच्च । अत एव





न दिक्कालमनोगुण इत्येव लीलावत्यामुक्तमिति द्रष्टव्यम् । **प्रत्यक्षत्वादिति** । रूपादिवदित्यनुवर्तते । ननु यदि नाम शब्दः पृथिव्यादीनामष्टानां **गुणो** न भवति चेन्मा भूत् । आकाशं त्वतिरिक्तमस्तीत्यत्र किं प्रमाणमित्यत आह इति **प्रसक्तेति** । उक्तमर्थं **प्रमाणमारोहयति** **तदयमिति** ।

**वा०र०— असिद्धिरितीति** । आश्रयासिद्धिरित्यर्थः । **सामान्यसिद्धाविति** । शब्दो द्रव्याश्रितः गुणत्वादिति सामान्यसिद्धावित्यर्थः । **एकेतीति** । एकेत्यस्य एकमात्रेत्यर्थपरत्वात् द्वीन्द्रियग्राह्यघटादौ एकेन्द्रियग्राह्यत्वस्यापि सत्त्वेऽपि **एकमात्रेन्द्रियग्राह्यत्वाभावान्न** व्यभिचार इत्याशयः । **योगिप्रत्यक्ष इति** । योगिबाह्येकेन्द्रियग्राह्येत्यर्थः । **अस्मदादीतीति** । न च सामान्यप्रत्यासत्तिपुरस्कारेण अस्मदादिबाह्येकेन्द्रिय-ग्राह्यत्वस्य वाय्वादावपि **सत्त्वात् व्यभिचारतादवस्थ्यमिति** वाच्यम् । लौकिकप्रत्यासत्तिपुरस्कारेणेत्यर्थकत्वा-दस्मदादीत्यस्य तेनैव **तद्वारणसम्भवात्** । न च तथापि प्रभादौ लौकिकप्रत्यासत्तिपुरस्कारेण बाह्येकेन्द्रियग्राह्ये व्यभिचार इति वाच्यम् । **एकेन्द्रियग्राह्यपदेन** एकमात्रेन्द्रियग्राह्यजातिमत्वस्य विवक्षयैव प्रभादौ व्यभिचार-वारणसम्भवात् । अत एव **यद्घटादिकं** एकमात्रेन्द्रियगृहीतं तत्रापि न व्यभिचार इति हृदयम् । सामान्यवत्वं च नासिद्धम् । कार्यत्वे सति **प्रतिनियतेन्द्रियग्राह्यत्वेन** तत्सिद्धेः इति **वर्धमानं** मनसि निधाय हेतुविशेषणा-सिद्धमाशङ्क्य निराकरोति **न चेति** । **कार्यत्वे सतीति** । एतच्च रूपत्वादौ व्यभिचारवारणाय ध्वंसव्यावृत्त्यर्थं विशेष्यमिति ज्ञेयम् । अत्र **प्रशस्तपाद**भाष्यतत्किरणावलीवर्धमानरुचिदत्तन्यायकुसुमाञ्जलिआत्मतत्त्वविवेक-प्रत्यधिकरणीयपरभाष्यवाचस्पत्यादिरामानुजभाष्यप्रथमाधिकरणीयविवरणतट्टीकालीलावतीतद्वर्धमानतर्कचन्द्रिका-षट्सहस्रादिकं संशोध्यैतत्प्रकरणं व्याख्येयमस्ति । **कर्मजन्यस्येति** । गुणपूर्वकत्वाभावोपपादनमेतत् । संयोगस्येत्यनेनैव विशेषपद**व्यावृत्तिः** सूचिता । कृत्यान्याह **बहिरित्यादिना** । **न स्पर्शवदिति** मूलम् । स्पर्शवतां शङ्खादीनां **विशेषगुणो** न भवतीति साध्यार्थः । यदि शब्दः स्पर्शवच्छङ्खादीति वक्ष्यमाणटीकायां सूचनात् । अकारणेत्यत्रत्य**कारणपद**सम्बन्धाप्रतीतेर्व्याचष्टे **स्पर्शवतामिति** । तेजस्संयोगेन परमाण्वन्त-नाशानन्तरं पीलुपदोक्तपर**माणुष्वेव पाकेन** रूपाद्यन्तरोत्पत्तौ पुनर्द्व्यणुकादिक्रमेणावयव्युत्पत्तिरिति पक्षे घटादि-रूपादेः कारणगुणपूर्वकत्वान्न **व्यभिचार** इत्याह **पिठरेति** । पिठरोऽवयव्येव पच्यत इति मतानभ्युपगमा-दित्यर्थः । पाकजेत्यनेनैव **कारणगुणजन्यत्वाभावः** सूचितः । पिठरेत्येतदुत्तरत्र टीकायां व्याख्यास्यते । **अन्यथा पार्थिवेति** । उपलक्षणं चैतत् । **अत्र मते** पिठरपाकानभ्युपगमान्नोत्तरोत्पन्नरूपादिनाश्यपूर्वरूपादौ व्यभिचारः । अन्यथा पूर्वरूपादौ प्रत्यक्ष**त्वे सत्ययावद्द्रव्य**भावित्वसत्त्वेऽपि स्पर्श**वद्विशेष**गुणत्वस्यैव सत्त्वेन व्यभिचार-प्रसङ्गात् । तदनभ्युपगमे तु **पीलुपाकस्यैवा**श्रयणात् द्रव्यस्यापि नाशेन सत्यपि द्रव्ये नष्टत्वरूपायावद्द्रव्य-भावित्वस्य पूर्वरूपादावभावान्न **व्यभिचार** इत्यपि बोध्यम् ।

आकाशसिद्धेः **प्रागमूर्ताकाशात्म**कत्वमसिद्धमित्यत उक्तं **स्वमतावष्टम्भेनेति** । वक्ष्यति च मूलकारः आकाशसिद्ध्युत्तरकालीनैवेतीति **ज्ञेयम्** । आश्रयपदावृत्तिमभिप्रेत्याह **आद्ये स्वाश्रय इति** । स्वस्याश्रय इत्यर्थः । **न किञ्चिदिति** । आश्रयपदावर्तनाश्रयणं नेत्यर्थः । मनो बाह्यं करोतीत्यादौ भगवद्भिन्नरूपं





यद्बहिःपदार्थभूतं तद्विषयके बाह्यपदप्रयोगात् मनसापि चक्षुरादिद्वारा बहिर्विषयकत्वाच्च चक्षुरादिबहिरिन्द्रियाणामेव बाह्यपदेन प्राप्त्ययोगात् किरणावल्यनुसारेणाह **मनसोऽन्यदिति** । अनेनान्तरिन्द्रियापेक्षया बाह्यभिन्नमित्यर्थः सूचितः । न बाह्यप्रत्यक्षानुमानमिति कालो हीत्युत्तरभाष्यमूलव्याख्यावसरे बाह्यत्वमत्र मनःसाधारणं प्रकृतत्वमित्याद्युक्तेः तादृशमिन्द्रियं चक्षुरादिपञ्चकमपीति न श्रोत्रमात्रलाभ इत्यतोऽत्र पक्षधर्मताग्रहकाले श्रोत्रमेव विवक्षितमिति दर्शयन् तस्य बाह्येन्द्रियत्वमेव कुत इत्यतः तत्र प्रमाणं च दर्शयति **श्रोत्रं बाह्येन्द्रियमिति** । तथा चैवं योजना । मनसोऽन्यदिन्द्रियं बाह्येन्द्रियम् । तच्चात्र श्रोत्रम् । न च श्रोत्रस्य बहिरिन्द्रियत्वे विवदितव्यम् । चक्षुर्वत्प्रतिनियतविषयत्वेन तस्य सिद्धत्वात् तत्प्रति विषयत्वादित्यर्थ इति । एतेन चक्षुर्वदित्यस्यानन्वय इति शङ्कानवकाशः । अप्रयोजकत्वं परिहरति **अनात्मगुणत्वे सतीति** । सत्यं तद्विवक्षायां नियामकमाह **अन्यथेति** । अन्य आत्मा आत्मान्तरं तद्ग्राह्यत्वादित्यनेन स्वातिरिक्तात्मवेद्यसुखादिवदन्येनैव वेद्यत्वमित्यर्थप्रतीतिनिरासाय अन्ये त्वित्यादि किरणावल्युक्तव्याख्यानमाह **अनेकेति** । अनेनात्मान्तरेणापीत्यर्थः सूचितः । **आत्मान्तरेणेति** प्रकृतात्मातिरिक्तात्मभिरपीत्यर्थः । अथात्मभिन्नेनैव वेद्यत्वमित्यर्थमङ्गीकृत्यापि आत्मशब्दविवक्षितमर्थान्तरं किरणावलीकारीयमाह **यद्वेति** । यत्रस्थः शब्दः ततोऽन्य आत्मेति । अनेन शब्दाश्रयस्यात्मशब्देनाभिधानं शब्दानाश्रयं तु आत्मान्तरशब्देनेत्युक्तं भवति । आत्मशब्दोऽयं स्वशब्द-पर्यायत्वात् समभिव्याहृतिपरः ग्राहक आत्मेत्यादौ ग्राहकशब्दः कर्तृव्युत्पन्नः । गृह्यन्त इत्यादावपि कर्तृत्वं विवक्षितमिति बोध्यम् ।

**अन्यत्रात्मनीति** । स्वशब्दवदात्मशब्दोऽयं ग्राहकातिरिक्ते स्वस्मिन्नित्यर्थः । **न भवति चेदिति** । चेदित्यव्ययं तर्हीत्यर्थे । अथवा यदि चेदिति समुदायो यद्यर्थे तर्हीति शेषः । **तदयमितीति** । समस्तमेकं पदम् । सोऽयमित्यर्थः । तत्त्वोद्योतादौ टीकाकृतैवंजातीयके तथैव व्याख्यानात् ।

**स०व्र०**— आकाशानुमापकस्य भावान्न लिङ्गाभाव इति चोदयति **अथेति** । ननु शब्दस्य गुणत्वाभावात् तस्य कथमाकाशव्यवस्थापकत्वम् अन्यथा घटादेरपि तत्स्यादित्यत आह **स चेति** । इन्द्रिय-ग्राह्यत्वादित्युक्ते घटादिषु व्यभिचारः । **तदर्थमेकेति** । तथाप्यात्मनि व्यभिचारः । **तदर्थं बाह्येति** । तथापि योगिप्रत्यक्षे वायौ व्यभिचारः तदर्थम् **अस्मदादीति** । तथापि गन्धत्वादौ व्यभिचारः तदर्थं **सामान्यवत्त्वे सतीति** । किमतो यद्येवमित्यत आह **गुणत्वादिति** । ननु शब्दाश्रयद्रव्यमात्रसिद्धावपि नाकाशसिद्धिरित्याशङ्क्य परिशेषादाकाशसिद्धिं वक्तुं प्रतिषेधं तावत्करोति **इतीति** । सामान्यतो द्रव्ये सिद्धे इत्यस्य परिशेषादेभ्योऽतिरिक्तं द्रव्यं सिद्ध्यतीति वक्ष्यमाणेनान्वयः ।

**शब्दो न स्पर्शवद्विशेषगुण इति** । अत्र हेत्वोः कर्मजे स्थाणुश्येनसंयोगादौ व्यभिचारवारणाय साध्ये विशेषेत्युक्तम् । तथापि पटगतरूपादौ व्यभिचारः । अतोऽकारणगुणपूर्वकेत्युक्तम् । स्पर्शवतां शङ्खादीनां यानि समवायिकारणानि तेषां ये गुणाः तदनपेक्षत्वादित्यर्थः । एतन्मते न पिठरपाकप्रक्रियाऽभिमता । अतो न पाकजे





घटरूपादौ व्यभिचारः । द्वितीयहेतौ, सत्स्वेव शङ्खादिषु निवृत्तत्वान्न तद्विशेषगुणत्वं रूपादीनां तथात्वादर्शनात् । न चेदमसिद्धं यावच्छङ्खमुपलम्भापत्तेः । न च व्यञ्जकाभावादग्रहः । दण्डादिसंयोगाभावेऽपि घटनाशस्योपलम्भात् । अन्यस्य व्यञ्जकस्यानिर्वचनात् । निर्वचनेऽप्यन्यूनातिरिक्तदेशस्य समानेन्द्रियग्राह्यस्य प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभावात् सर्वोपलब्धिप्रत्ययादिति समाधानं विधेयम् । अत्रापि पूर्ववत् 'प्रत्यक्षत्वे सति' इत्यनुषञ्जनीयम् । अन्यथा परमाणुगुणैरेव विरोधः स्यात् । अत्रानुकूलतर्कमाह **स्पर्शवद्गुणत्व इत्यादिना** । अनेन यदि शब्दः स्पर्शवच्छङ्खादिगुणः स्यात् तर्हि शब्दान्तरोत्पादकपरम्परया श्रोत्रदेशसमासन्नो नोपलभ्येत शङ्खगतरूपादिवत् । उपलभ्यते च तथा । तस्मान्न स्पर्शवच्छङ्खादिगुण इति तर्क उक्तो भवति । शिष्टमेतदुपपादकमवगन्तव्यम् । **अतिप्रसङ्ग इति** । अप्राप्तस्य ग्रहणे सर्वदैव सर्वत्र सर्वेषां सर्वशब्दोपलम्भप्रसङ्गादित्यर्थः । **स्वाश्रय इति** । तेजस्संयोगस्य स्वाश्रये, तन्तुरूपादेः स्वाश्रयाश्रितगुणेऽसमवायिकारणत्वादित्यर्थः । आकाशगुणत्वे तु नैतत्तर्कपराहतिरित्याह **तस्माच्छङ्खादीति** । **आश्रयान्तर इति** । आकाश इत्यर्थः । **वीचीतरङ्गन्यायेनेति** । यथा वीचिः प्रथमोत्पन्ना वीच्यन्तरमारभते तच्च तरङ्गान्तरं तथा शब्दोऽप्याद्यः सर्वतो दिक्षु सजातीयशब्दान्तरं तदपि शब्दान्तरमित्यर्थः । यदि च कदम्बमुकुलन्यायेन अनेकशब्दमारभते तदाभिन्नदिगवस्थितयोः य एव शब्दस्त्वया श्रुतः स एव मयापीति प्रत्यभिज्ञानं नोपपद्यते । तज्जातीयविषयत्वकल्पनस्य भ्रमत्वकल्पनस्य वा बाधकाभावेनापास्तत्वादित्यर्थः । **बाह्येति** । मनसोऽन्यदिन्द्रियं बाह्येन्द्रियं तत्प्रत्यक्षत्वादित्यर्थः । श्रोत्रं बाह्येन्द्रियं प्रतिनियतविषयत्वात् चक्षुर्वत् । अनात्मगुणत्वे सति महद्द्रव्यवृत्तित्वं उद्भूतत्वं च बाह्येन्द्रियग्राह्यत्वे गुणानां योग्यता । सा चात्मगुणत्वे दुर्लभा स्यात् । अन्यथा बुद्ध्यादीनामपि बाह्येन्द्रियग्राह्यत्वं स्यात् । हेत्वन्तरमाह **आत्मान्तरेति** । अनेकप्रतिपत्तृसाधारणत्वादित्येकं व्याख्यानम् । अन्यत्तु यत्रस्थः शब्दः ततोऽन्य आत्मा आत्मान्तरं प्रत्यक्षत्वादिति । वीणाद्याश्रयतया हि शब्दः प्रतीयते, तत्सन्तानन्यायेन श्रोत्रस्थो वा न स्वात्मनिष्ठतया, तस्मादन्यश्चास्य ग्राहक आत्मा इति । ये त्वात्मगुणा गृह्यन्ते ते ग्राहकस्था एव गृह्यन्ते । सुखादयो यथा । गृह्यमाणस्तु शब्दो न ग्राहकस्थ इति । तदेव कुत इत्यत उक्तम् **आत्मनीति** । ग्राहकेऽसमवायादित्यर्थः । इदमप्यसिद्धमित्यत उक्तम् **अहङ्कारेणेति** । अहङ्कारेण विभक्तस्य व्यधिकरणस्य ग्रहणात् । वीणा वाद्यते वेणुः पूर्यते न त्वहं वाद्ये अहं पूर्ये चेति कस्यचित्प्रत्ययः । यदि अहंप्रत्ययो यत्र तत्रैव विषये शब्दः स्यात् तर्हि ग्राहके मनसाऽध्यवसीयमाने तद्गततया शब्दोऽपि सुखादिवत् मनसाऽध्यवसीयेत । गुणस्य मानसप्रत्यक्षत्वे उद्भूतत्वे सति ग्राहकवर्तित्वस्य योग्यतारूपत्वात् । न चैवम् । तस्माद्यत्राहंप्रत्ययः ततोऽन्यत्र शब्दो वाच्यः । तथा च आत्मवर्तिनोऽपि शब्दस्य आत्मवर्तित्वे व्याघातः । एवमप्यात्मवृत्तित्वं शङ्क्येत चेत् गन्धादेरप्यात्मवृत्तित्वं प्रसज्येतेति । **न दिक्कालमनसामिति** । विशेषगुण इति शेषः । उपपादितमर्थं प्रमाणमारोहयति **तदयमिति** ।

**विट्ठल०**— साक्षाल्लिङ्गाभावेऽपि सामान्यसिद्धिपरिशेषाभ्यामाकाशसिद्धिर्भविष्यतीत्याशङ्कते **अथ मतमित्यादिना** । आश्रयासिद्धिपरिहाराय शब्दस्तावत्प्रत्यक्ष इत्युक्तं **सामान्यवत्त्वे सतीति** । सामान्ये





योगिबाह्येन्द्रियग्राह्ये परमाण्वादौ आत्मनि घटादावनुमेये च **परमाण्वादौ च** व्यभिचारवारणाय क्रमेण विशेषणानीति ज्ञेयम् । **तद्वदेवेति** । रूपवदेवेत्यर्थः । सामान्यतो द्रव्ये **सिद्ध इत्यस्य** परिशेषादेभ्योऽतिरिक्तं द्रव्यं सिद्ध्यतीति वक्ष्यमाणेनान्वयः । **नस्पर्शवद्विशेषगुण** इत्यत्र कर्मजसंयोगे व्यभिचारवारणाय विशेषपदम् । **अकारणगुणपूर्वकत्वादिति** । स्वाश्रयसमवायिकारणनिष्ठगुणाजन्यत्वादित्यर्थः । प्रकृते शब्दाश्रयस्याकाशस्य नित्यत्वादिति भावः । परमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेत्युक्तम् । घटरूपादौ व्यभिचारवारणाय अकारणगुणपूर्वकिति द्वितीयहेतावपि प्रत्यक्षत्वे सतीत्यनुवर्तते । अन्यथा पार्थिवपरमाणुरूपादौ व्यभिचारात् विपक्षे बाधकमाह **स्पर्शवद्गुणत्व इति** । तदेवोपपादयति **शब्दो हीति** । इदमुक्तं भवति । यदि शब्दः स्पर्शवद्विशेषगुणः स्यात्, तर्हि शब्दान्तरोत्पादपरम्परया श्रोत्रदेशमासन्नो **नोपलभ्येत** रूपादिवत्, उपलभ्यते च तथा, तस्मान्न स्पर्शवद्विशेषगुण इति । **तस्यामूर्तस्येति** । श्रोत्रस्याकाशात्मकत्वेनामूर्ततया गत्यभावादिति भावः । **गुणस्य स्वाश्रयेति** । एकत्वादेः स्वाश्रये वर्तमानद्वित्वादिकं प्रति तन्तुरूपादेः स्वाश्रयाश्रिते पटे विद्यमानरूपादिगुणं प्रत्यसमवायिकारणत्वदर्शनादिति भावः । ननु प्रकृतेऽपि तथैव शब्दान्तरासमवायि-कारणत्वमाद्यादिशब्दस्य भवत्वित्यतः शङ्खश्रवसोर्मध्ये स्वाश्रयस्य वा स्वाश्रयाश्रितस्य वा द्रव्यस्याभावादित्यत आह **न चेति** । आकाशगुणत्वे तु ........पगमेन प्राणगन्धसन्निकर्षः सयुक्तसमवायरूपोऽभ्युपगम्यते तद्वदत्रा-प्यतीन्द्रियशङ्खावयवापगमेन श्रोत्रसन्निकर्षोऽङ्गीक्रियते । शङ्खावयवागमनं अनुपलम्भबाधितमिति चेन्न । पुष्पावयवेष्वपि साम्यात् शङ्खावयवापगमे शङ्खह्रासः स्यादिति चेत् । तुल्यमितरत्रापि अवयवान्तरप्रवेशेन पूर्वसाम्यस्यात्रापि तुल्यत्वादिति भावः ।

**चषकः**— घटादावनैकान्त्यव्युदसनायैकपदोपादानम् । **न च एवमपि** घटादिग्राहके चक्षुरादावेकत्व-सङ्ख्याऽनपायेन तादृशसङ्ख्याविशेषितेन्द्रियग्राह्यत्वमक्षुण्णमेवेत्युक्तक्षतितादवस्थ्यमिति वाच्यम् । स्वावच्छिन्न-प्रतियोगिताकभेदसमानाधिकरणतानिरूपकग्रहविषयत्वे सति **स्वावच्छिन्न**करणतानिरूपकग्रहविषयत्वस्यैव विवक्षिततया स्वपदेनेन्द्रियविभाजकधर्मोपादानेन सामञ्जस्यात् । **ग्रहाविषयत्वं** तन्निरूपितलौकिकविषयता-राहित्यरूपम् । तेन शब्दसमानकालीनरूपमिति चाक्षुषोपनीतभानादौ **सर्वं प्रमेयमिति** शाब्दबोधे च तस्य विषयत्वेऽपि न क्षतिः । आत्मनि तदपहस्तयितुं **बाह्येति** । योगिबाह्येन्द्रियग्राह्ये वाय्वादौ तद्विधूननाय **अस्मदादीति** । रूपत्वादिसामान्ये तदपाकर्तुं **सत्यन्तमुपात्तम्** । कार्यत्वे सति नियतेन्द्रियग्राह्यत्वेन हेतुना सामान्यवत्त्वस्य सुसाधतया न विशेषणासिद्धिरिति मन्तव्यम् । **सामान्यतो द्रव्ये सिद्धे** इत्येतत् **परिशेषा-देभ्योऽतिरिक्तद्रव्यं सिद्ध्यती**त्यागामिना अन्वेति । शब्दइत्यादिप्रकृतहेतुद्वयविशेषिते श्येनकर्मजनित-स्थाणुश्येनसंयोगे अनैकान्त्यवारणाय प्रतिज्ञाघटकतया विशेषपदोपादानम् । रूपादिवत्प्रतिनियतेन्द्रियग्राह्यत्वेन हेतुना शब्दे विशेषगुणवत्त्वं सुसाधमित्यवसेयम् । परमाणुरूपादावनैकान्त्यवारणाय हेतुशरीरे सप्तम्यन्त-मुपात्तम् । अवयवगुणपूर्वकावयविरूपादौ तद्व्युदासाय **पञ्चम्यन्तम्** । पीलुपाकवादिनां पन्थानमनुरुन्ध्येदम् । तेन पाकजावयविरूपादिषूक्तक्षत्यनवकाशः । **अयावदिति** । पूर्वहेतुवाक्यघटकसप्तम्यन्तं तद्दोषापनोदाय अत्र





अनुषञ्जनीयम् । प्रकृतानुमानद्वयेऽप्रयोजकत्वशङ्कानिरसनाय अनुकूलतर्कमभिधत्ते **स्पर्शवद्गुणत्व इत्यादि** । शब्दधर्मिकस्पर्शवद्गुणत्वापादककतदसन्निकृष्टेन्द्रियग्राह्यत्वाभावापाद्यकरूपादिनिदर्शनकापत्तिः तच्छङ्कानिरसनौपयिक्यवसेया । स्थितमित्यन्तस्तदुपपादकः । गुणस्य संयोगादेः स्वाश्रये, तन्तुरूपादेः स्वाश्रयाश्रय' इत्यर्थोऽवसेयः । कर्मणः स्वाश्रय एव तथात्वेन द्वैविध्यविरहाद्गुणपदोपादानम् । हेतुचतुष्टयेनात्मगुणत्वाभावमनुमिमीते **नाप्यात्मेति** । 'सम्भेदे नान्यतरवैयर्थ्यम्' इति न्यायादिति भावः ।

**॥ इति अनुमानप्रयोगः ॥**

* * *

**॥ अथ तदनुमाननिरासः**
**(शब्दस्य पृथिव्यादिगुणत्वे बाधकानि) ॥**

१३६ **सु०— तदिदमयुक्तं जातिबधिराणामाकाश(ादि)प्रतिभासानुपपत्तिप्रसङ्गात् । ततश्च इहालोको नास्तीति प्रतीतिः न स्यात् । मूर्तावकाशेन तेषामाकाशानुमानमिति चेन्न, मूर्तान्तराभावेन अन्यथासिद्धत्वात् । मूर्ताभावस्याधिकरणेन भाव्यमिति चेत्, सत्यम्, तथाऽपि तस्याप्रतीतावाश्रयासिद्धेः, प्रतीतौ च साधिकरणस्यैव प्रतीतत्वादनुमानानवकाशः ।**

परि०— **तदिदमिति** । उक्तदिशा शब्दलिङ्गकत्वमित्यर्थः । **जातिबधिराणामिति** । न च तेषामपि जन्मान्तरीयव्याप्त्यनुसन्धानादाकाशप्रतिभास इति वाच्यम् । अन्यथोपपत्तौ तत्कल्पकाभावात् । अन्यथाऽतिप्रसङ्गादिति भावः । **मूर्तावकाशेनेति** । कुम्भकुसूलादिमूर्तपदार्थानामवस्थानप्रतिहत्यभावेनेत्यर्थः । आकाशसिद्धिं शङ्कते **मूर्ताभावस्याप्यधिकरणेति** । स्तम्भकुम्भादिमूर्ताभावः साधिकरणो मूर्ताभावत्वात् घटाद्यधिकरणपटाद्यभाववत् इत्यनेन जातिबधिराणामाकाशप्रतिभास इति भावः । **तस्येति** । पक्षतयोपात्तमूर्ताभावस्येत्यर्थः । **साधिकरणस्यैवेति** । अधिकरणप्रतियोगिघटितत्वेनैव अभावप्रतीतिनियमात् सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इत्यङ्गीकारादिति भावः ।

गु०दी०— उक्तविधया शब्दश्रवणमूलकाकाशप्रतिभासस्यासम्भवादिति भावेनोक्तं **जातिबधिराणाम्** इति । **मूर्तावकाशेन तेषामाकाशानुमानम्** इत्यत्र मूर्तस्य हस्तादेरवकाशः प्रसारणं प्रत्यप्रतिरोध इत्यर्थः । अन्यथाऽऽत्माश्रयप्रसङ्गात् ।





**यादु०— जातिबधिराणामिति** । तेषां शब्दस्तावत्प्रत्यक्षसिद्धः, स च गुण इत्याद्युक्तरीत्या अनुमानसम्भवादिति भावः । तेषामपि प्राग्भावीयसंस्कारेणाकाशभानकल्पनं तु अप्रामाणिकमिति ध्येयम् । **मूर्ताभावस्यापीति** । तथा च मूर्ताभावः साधिकरणः अभावत्वात् सम्प्रतिपन्नाभाववदित्यनुमानादाकाशसिद्धिरिति भावः ।

**वं०प०— बधिराणामिति** । तेषामाकाशानुमापकशब्दरूपलिङ्गज्ञानाभावादिति भावः । इष्टापत्तिं परिहरति **ततश्चेति** । उक्तरीत्या इहप्रत्ययविषयस्यान्यस्याभावेनाकाशस्यैव तद्विषयत्वादिति भावः । तर्हि बधिराणामाकाशानुमापकं लिङ्गं शब्दातिरिक्तमन्यदेव भविष्यतीत्याशङ्कते **मूर्तेति** । आकाशाभावे मूर्तानामवस्थानं न स्यात् । तस्मान्मूर्तावकाशान्यथाऽनुपपत्त्या आकाशसिद्धिरिति भावः । **अन्यथासिद्धत्वादिति** । मूर्तावकाशरूपहेतोराकाशं विना मूर्तान्तराभावेनैवान्यथासिद्धत्वान्नाकाशानुमापकत्वमित्यर्थः । ननु यदि मूर्तान्तराभावेनान्यथासिद्धिः शङ्क्यते तर्हि मूर्ताभावाधिकरणत्वेनैवाकाशसिद्धिः स्यात् । मूर्ताभावः साधिकरणोऽभावत्वाद्घटाभाववत् इत्यनुमानसम्भवादित्याशयेन शङ्कते **मूर्ताभावस्यापीति** । **तस्येति** । पक्षीभूतस्य मूर्ताभावस्येत्यर्थः । **अनवकाशः** तथा च अधिकरणतया आकाशस्य प्रतीतत्वेन सिद्धसाधनतापत्तेरिति भावः ।

**आनन्दः— जातिबधिराणामिति** । अत्र पूर्वमबधिरस्य पश्चात्कारणवशाद् बाधिर्ये प्राप्ते पूर्वानुभूतशब्दस्मरणमादाय तत्पक्षकानुमानं सम्भवत्येवेत्यतस्तदर्थं जातिबधिराणामित्युक्तं **मूर्तावकाशेनेति** । तथा चायं प्रदेशो आकाशवान् मूर्तो अवकाशवत्त्वादित्यनुमानेनेत्यर्थः । अप्रयोजकतया दूषयति **नेति** । **मूर्ताभावस्येति** । तथा च मूर्ताभावः साधिकरणमूर्तो भावत्वात्प्रागभाववदित्यर्थः ।

**शे०वा०— जातिबधिराणामिति** । तेषां शब्दज्ञानाभावादिति भावः । पूर्वमबधिरस्य पश्चात्कारणविशेषाद्बधिरस्य पूर्वानुभूतशब्दस्मरणमुपादाय तत्पक्षकानुमानं स्यादेवेत्याशङ्कापरिहाराय जातीत्युक्तम् । तेषामपि प्राग्भवीयसंस्कारेणाकाशस्मरणकल्पनं तु प्रमाणाभावनिरस्तमिति ध्येयम् । ननु जातिबधिराणां शब्दाश्रवणाच्छब्दस्य व्यवस्थापकत्वाभावेऽप्यन्यदेवाकाशस्य व्यवस्थापकं स्यादिति शङ्कते **मूर्तेति** । तथा चायं प्रदेश आकाशवान् मूर्तावकाशवत्वात् इत्यनुमानमनेनोक्तं भवति । मूर्तावकाशस्य मूर्तान्तराभावेनान्यथासिद्धस्य व्याप्तिविधुरत्वेन नाकाशानुमापकत्वमित्याह **नेति** । मूर्ताभावः साधिकरणोऽभावत्वात् । योऽभावः स साधिकरणो यथा घटाभावो भूतलाधिकरण इत्यभावाधिकरणतया आकाशसिद्धिरिति शङ्कते **मूर्तेति** । किमत्राभावोऽप्रतीत एव अधिकरणमनुमापयति किंवा प्रतीत इति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथाऽपीति** । द्वितीयं दूषयति **प्रतीतौ चेति** । **अनवकाश इति** । सिद्धसाधनत्वप्रसक्तेरिति भावः ।

**वा०र०— शब्दज्ञानाभावादितीति** । तथा च पक्षाज्ञानादनुमानानुदय इति भावः । **व्यवस्थापकत्वेति** । अनुमापकत्वेत्यर्थः । मूर्तावकाशवत्वादिति हेतुपाठः **मूर्तान्तराभावेनेति च** ।





**स०व्र०**— एतच्चोद्यं परिहरति **तदिति** । **जातिबधिराणामिति** । न च जन्मान्तरानुभवजन्यसंस्कारसहकृतमनसैव तद्बोधो जन्मान्तरानुभूतेष्टसाधनताज्ञानवत् कल्प्यत इति वाच्यम् । प्रत्यग्रोत्पन्नस्य शिशोः जीवनानुपपत्त्या तत्कल्पनेऽपि प्रकृते तत्कल्पकाभावादिति भावः । ननु जातिबधिराणां शब्दाश्रवणात् शब्दस्य व्यवस्थापकत्वाभावेऽप्यन्यदेवाकाशस्य व्यवस्थापकं स्यादिति शङ्कते **मूर्तेति** । **मूर्तानां** पटादीनां, **अवकाशेन** अवस्थानेनेत्यर्थः । मूर्तावकाशः अन्यथासिद्धत्वेन व्याप्तिविधुरो नाकाशमनुमापयितुं शक्नोतीत्याह **नेति** । मूर्ताभावः साधिकरणः अभावत्वात्, योऽभावः स साधिकरणः यथा घटाभावः भूतलाधिकरण(क) इत्यभावाधिकरणतया आकाशसिद्धिरिति शङ्कते **मूर्तेति** । किमत्राभावः प्रमितोऽधिकरणमनुमापयति अप्रमितो वा नोभयथापीत्याह **तथापीति** ।

**चषकः**— **जातिबधिरेति** । शब्दसाक्षात्कारविधुराणां दर्शितभङ्ग्याऽनुमानासम्भवादिति भावः । जन्मान्तरीणसंस्कारनिबन्धनस्मृत्युपनीततया आकाशस्य भानमिति तु लौकिकीं मर्यादामतिशेते **मूर्ताभावस्येति** । घटाद्यभावं निदर्शनीकृत्य अभावत्वेन हेतुना मूर्ताभावे साधिकरणत्वस्य सुसाधतया आकाशं सेधिष्यतीति भावः ।

**॥ तत्र तदनुमाने शब्दरूपपक्षस्य द्विविधविकल्पानुपपत्तिः ॥**

१३७ **सु०**— किञ्च शब्दो वर्णात्मा वा पक्षो ध्वनिरूपो वा ?

नाद्यः । तस्य गुणत्वासिद्धेः । न चोक्तानुमानात्तत्सिद्धिः, घटादीनामेकेन्द्रियग्राह्यत्वाभावेऽपि आत्मनस्तथात्ववद् द्रव्यस्यैव सतो बाह्यैकेन्द्रियग्राह्यत्वेऽपि विरोधाभावात् । यदि (शब्दो) द्रव्यं स्यात् बाह्येन्द्रियग्राह्यो न स्यात्, निरवयवद्रव्यस्य बाह्येन्द्रियाग्राह्यत्वेन प्रतिबन्धादिति चेत् (न); निरवयवस्यापीन्द्रियग्राह्यत्ववद्बाह्येन्द्रियग्राह्यत्वे(ऽपि) बाधकाभावेन प्रतिबन्धानिश्चयात् ।

द्वितीये त्वाश्रयद्रव्यसिद्धावपि नाकाशसिद्धिः, पृथिव्यादिगुणत्वोपपत्तेः । प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वायावद्द्रव्यभावित्वयोः पिठरपाकपक्षे तद्गतरूपादिना व्यभिचारात् । प्रत्यक्षत्वे सतीति च किमर्थं वक्तव्यम् । पार्थिवपरमाणुरूपादि(व्यावृत्त्य)परिहारार्थमिति चेत्, कुतस्तत्परिहरणीयम् । प्रमितत्वादिति चेत्, तर्हि शब्दस्यापि शङ्खाद्याश्रयतया प्रमितत्वाद्व्याप्तिग्रहणसमये तद्व्यवच्छेदार्थं (अपि) विशेषणमुपादेयमेव । न च स्पर्शवद्विशेषगुणत्वे बाधकं पश्यामः । अनुपलब्धिस्तु न प्रसज्यते, चक्षुष इव श्रोत्रस्य गत्या





**सन्निकर्षोपपत्तेः । अमूर्तस्य तदनुपपत्तिस्तु आकाशसिद्ध्युत्तरकालीनैव । श्रोत्रस्य चक्षुष इव गत्वाग्राहित्वे शब्दे दिक्संशयो न स्यादिति चेत्, अगत्वाग्राहित्वे दिङ्निश्चयोऽपि न स्यात् । संशयादपि निश्चयो महीयान् (गरीयान्) । शङ्खाद्यवयवागमनेन वा सन्निकर्षोपपत्तिः । न चोक्तदोषः, घ्राणगन्धसन्निकर्षतुल्ययोगक्षेमत्वात् ।**

**परि०**— एवमाकाशस्य शब्दलिङ्गकविश्वजनीनाकाशप्रतिभासायोगमुक्त्वा इदानीं सामान्यतः आकाशद्रव्यसाधकानुमानं निरसितुमाह **किञ्चेति** । शब्दः क्वचिदाश्रितो गुणत्वादिति प्रयोगे शब्दपदार्थं पृच्छति **शब्द इति** । **न चोक्तेति** । शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वादित्युक्तेत्यर्थः । **विरोधाभावादिति** । तथा च अप्रयोजकोऽयं हेतुरिति भावः । ननु विपक्षे हेतूच्छित्तिरूपो विरोधोऽस्त्यतो नाप्रयोजकत्वमिति भावेन शङ्कते **यदीति** । **प्रतिबन्धादिति** । व्याप्तत्वादित्यर्थः । **निरवयवस्यापीति** । आत्मरूपद्रव्यस्येति योज्यम् । ध्वनिरूपो वेति पक्षे सामान्यद्रव्यसिद्धावपि न परिशेषसिद्धिरिति दोषमाह **द्वितीये त्विति** । **पिठरपाकेति** । तार्किकमते ह्येकत्र घटादीन्मेलयित्वा कुलालेन तृणादिना तेषां पाके समारब्धे तेजोभिघातादिना घटावयवेषु क्रियोत्पत्तौ अवयवसंयोगनाशेनावयविनाश इत्येवं क्रमेण परमाणुपर्यन्तनाशे सति पुनर्भोजकादृष्टवशेन परमाणुक्रियोत्पत्तौ तत्संयोगे द्व्यणुकादिक्रमेण घटादिरूपान्त्यावयविन उत्पत्तिरिति पीलुपाकप्रक्रिया । परमाणुपर्यन्तमवयविनो नाशं विनैव तथैव घटादीनां पाकः पिठरपाकप्रक्रिया । इति प्रक्रियाद्वयमङ्गीकृतम् । तत्र पीलुपाकप्रक्रियायां कारणगुणपूर्वकत्वादिसत्त्वेन हेत्वभावेऽपि पिठरपाकक्रियायां घटादौ तेजस्संयोगेनैव रूपान्तरादेर्जाततत्वेन तत्रोक्तहेतुद्वयसत्त्वात् साध्याभावाच्च व्यभिचार इत्यर्थः । **प्रमितत्वादिति चेदिति** । स्पर्शवद्गुणत्वस्य प्रमितत्वादित्यर्थः । **विशेषणमिति** । यः प्रत्यक्षत्वे सत्यश्रावणत्वे सत्यकारणगुणपूर्वक इति वा श्रवणेतरप्रत्यक्षत्वे सत्यकारणगुणपूर्वकः स स्पर्शवद्गुणो नेति वा विशेषणमुपादेयमित्यर्थः । तथा च शब्दस्यापि व्यावर्तिततया स्पर्शवद्गुणत्वेऽपि नानुमानविरोध इति भावः । यद्यपि सिद्धान्ते ध्वनिराकाशगुण एव । यदाहुर्भगवत्पादाः 'आकाशगुणे शब्दे व्यज्यमाना वर्णा' इत्यादि तत्त्वनिर्णये । तथापि कस्यचिन्मतरीत्या परस्येत्थमापादनमात्रमिति ध्येयम् । यद्वा सर्वस्यापि पञ्चीकरणप्रक्रियायामाकाशाद्यनुस्यूतत्वात् एवं स्पर्शवद्गुणत्वप्रतिपादनमिति ज्ञेयम् । ननु तत्र तदनुपलम्भप्रसङ्गो बाधक इति तत्राह **अनुपलब्धिस्त्विति** । **चक्षुष इव श्रोत्रस्यापीति** । तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्' इत्यादिस्मृत्या सर्वेषामपीन्द्रियाणां चक्षुष इव तैजसत्वादिति भावः । नन्वेवं सन्देह एव भवेत् न तु





श्रोत्रस्य गतिनिश्चय इत्यत आह **संशयादपीति** । **महीयानिति** । बहुल इत्यर्थः । एतद्दिग्भवोऽयं शब्द इति निश्चय एव बहुलः, संशयस्तु क्वाचित्कः प्रतिहत्यादिदोषनिमित्तकः । एवं च बहुतर-दिङ्निश्चयबलाद्गत्वाग्रहणमेव निश्चीयत इति भावः । यद्वा संशयानुगुण्यापेक्षया निश्चयानुगुण्येन श्रोत्रस्य गतिरेव कल्प्या निश्चयस्य संशयादपि श्रेष्ठत्वादित्यर्थः । **न चोक्तदोष इति** । 'नापि शङ्खाद्यागमनेन श्रोत्रप्रत्यासत्तिः तदनुपलम्भादि'त्युक्तदोषो नास्ति । यथा कस्तूरिकाद्यवयवानामेव घ्राणदेशपर्यन्तमागमने कस्तूरिकागन्धस्य घ्राणेन सह संयुक्तसमवायसम्बन्धमुपेत्य ग्रहणमुपेयते तद्वदत्राप्युपपत्तेः । सूक्ष्मतया अवयवागमनानुपलम्भस्योभयत्र साम्यात् । न चैवं शङ्खावयवापगमे शङ्खस्य ह्रासः स्यादिति शङ्क्यम् । कस्तूर्यादावपि साम्यात् । अवयवान्तरप्रवेशेन पूर्वसाम्यस्यात्रापि तुल्यत्वादिति भावः ।

**गु०दी०— अगत्वाग्राहित्वे दिङ्निश्चयोऽपि न स्यात्** इत्यत्र श्रोत्रस्य कर्णशष्कुल्यन्तरुत्पन्न-शब्दमात्रग्राहित्वेन मूलीभूतदिग्विशेषस्थशब्दनिर्णये सामर्थ्याभावादित्यर्थः ।

**यादु०— विरोधाभावादिति** । तथा च अप्रयोजकतेति भावः । विपक्षे बाधकं शङ्कते **यदीति** । यदि निरवयवद्रव्यं स्यादित्यर्थः । **प्रतिबन्धेति** । तर्केऽप्यप्रयोजकतेति भावः । **पिठरपाकेति** । पीलुपाकपक्षस्य निर्बाधप्रत्यभिज्ञाविरोधादिना अयुक्तत्वेन पिठरपाकानभ्युपगमस्यानुचितत्वादिति भावः । **तर्हि शब्दस्यापीति** । तथाऽपि शब्दातिरिक्तस्थल एवोक्तनियमः । शब्दे तु हेत्वोरप्रयोजकतैवेति भावः । बाधितविषयत्वेऽस्य तात्पर्य-मित्यप्याहुः । उक्तमनुकूलतर्कं विघटयितुमाह **न चेति** । ननु श्रोत्रस्याकाशात्मकत्वात् तस्य चामूर्तत्वात् कथं गतिरित्यत आह **अमूर्तस्येति** । तथा चान्योन्याश्रय इति भावः । श्रोत्रस्य गत्वाग्राहित्वे इतो वा शब्दः श्रूयते ततो वेति दिक्संशयो न स्यात् । न हि चक्षुर्ग्राह्ये रूपे कदाऽपि दिक्संशय इत्याशङ्कते **श्रोत्रस्येति** । **अगत्वेति** । दिक्सम्बन्धाभावादिति भावः । न चैवं साम्यं मन्तव्यमित्याह **संशयादपीति** । गरीयान् व्यव-हारेष्वत्यन्तमुपयुक्तः । तथा च संशयाभावादपि निश्चयाभावोऽतिशयेनानिष्ट इति भावः । **न चोक्तदोष इति** । शङ्खागमनपक्षे यो दोषोऽभिहितः तदनुपलम्भादिति स तदवयवागमनपक्षेऽपि समान इति नेत्यर्थः । **घ्राणगन्धेति** । यथाऽतीन्द्रियपुष्पाद्यवयवागमनेन गन्धस्य घ्राणसन्निकर्षोऽभ्युपगम्यते तथाऽतीन्द्रियशङ्खावयवा-गमनेन शब्दस्य श्रोत्रसन्निकर्षोऽभ्युपगम्यताम् । अतो नानुपलम्भबाधः । अन्यथा तत्राप्यनुपलम्भबाधप्रसङ्ग इति भावः ।

**वं०प०— घटादीनामिति** । तथा च घटादिद्रव्याणामेकेन्द्रियग्राह्यत्वाभावेऽप्यात्मनस्तत्स्वीकृत्य यथा द्रव्य एव द्वैविध्यं कल्पितमेवमेव घटादिद्रव्याणां द्वीन्द्रियग्राह्यत्वेऽपि वर्णात्मकशब्दरूपद्रव्यस्य बाह्यैकेन्द्रिय-ग्राह्यत्वमेवास्तु । अन्यथा वयमपि ब्रूमो यद्द्रव्यं तद्बाह्यैकेन्द्रियग्राह्यम् । यथा शब्दः । आत्मादेश्च तदभावाद्द्रव्यत्वं





न स्यादिति । तदनेनानुमानेऽप्रयोजकतेत्युक्तं भवति । द्रव्यं स्यादित्यत्र शब्द इति वर्तते । तदेति शेषः । **प्रतिबन्धो** व्याप्तिः । **निरवयवस्यापीति** । यथा निरवयवद्रव्यस्यापि गगनादेरिन्द्रियाग्राह्यत्वेऽपि तथाभूतस्यात्मन इन्द्रियग्राह्यत्वमिति द्वैविध्यं स्वीकृतम्, एवं निरवयवद्रव्यस्यापि शब्दरूपस्य बाह्येन्द्रियग्राह्यत्वेऽपि बाधकाभावात् । अन्यथेत्थमपि ब्रूमो यन्निरवयवद्रव्यं तद्बाह्येन्द्रियग्राह्यम् । यथा शब्दः । आत्मादेश्च तदभावाद्द्रव्यत्वं न स्यादिति । तथा च तर्केऽप्यप्रयोजकतेति भावः । **प्रमितत्वादिति** । स्पर्शवद्विशेषगुणत्वस्येति शेषः । शङ्खाद्याश्रयतयेति बहुव्रीहिः । **तदनुपपत्तिरिति** । गत्यनुपपत्तिरित्यर्थः । **उत्तरकालीनैवेति** । अधुना आकाशस्यैवासिद्धेरित्यर्थः ।

**आनन्दः— घटादीनामिति** । तथा चास्तु बाह्येकेन्द्रियग्राह्यत्वं मास्तु गुणत्वम् । न च तर्हि द्रव्यत्वे घटादिवद्वीन्द्रियग्राह्यत्वापत्तिरिति वाच्यम् । द्रव्यत्वाविशेषेऽपि घटादीनामेकेन्द्रियग्राह्यत्वाभावः । आत्मनस्तु एकेन्द्रियग्राह्यत्वं तथा द्रव्यत्वाविशेषेऽपि शब्दस्य बाह्येकेन्द्रियग्राह्यत्वोपपत्तेरित्यर्थः । प्रतिबन्धात् । व्याप्तेरित्यर्थः । अन्यथात्मा गुणः सामान्यवत्त्वे सत्यस्मदादि बाह्येकेन्द्रियग्राह्यत्वाद्रूपवदित्यतिप्रसङ्गादित्यर्थः । असिद्धेयं व्याप्तिरित्याह **नेति** । यद्यात्मा द्रव्यं स्यात् इन्द्रियग्राह्यो न स्यात् । निरवयवद्रव्यस्येन्द्रियग्राह्यत्वेन व्याप्तेरित्यतिप्रसङ्गलक्षणप्रतिकूलपराहतिर्द्रष्टव्या । **पिठरपाकपक्ष इति** । आमपाकदशायां न घटादिनाशः किं तु रूपादिनाशे रूपान्तरोत्पत्तिरित्यस्मिन्पक्ष इत्यर्थः । **प्रमितत्वादिति** । पार्थिवपरमाणुरूपं स्पर्शवद्विशेषगुण इत्यस्यार्थस्येति शेषः । **विशेषणमिति** । श्रोत्रातिरिक्तदोष इति । शङ्खावयवागमनानुपलम्भो दोषो नेत्यर्थः । **घ्राणेति** । यथा तत्तदवयवागमनेन गन्धाद्युपलम्भस्तथा प्रकृतेऽपीत्यर्थः ।

**श्रीनिधि०— घ्राणगन्धसन्निकर्षतुल्ययोगक्षेमत्वादिति** । तत्र पुरुषावयवस्य घ्राणादेशगते शङ्खावयवेऽपि तथैवेति भावः ।

**शे०वा०—** नन्वेवं जातिबधिराणामुक्तरीत्या आकाशावभासानुपपत्तावपि तदन्येषामुक्तरीत्या अनुमानेनैवाकाशावभासोपपत्तेः किं साक्षिणेत्यतः शब्दो द्रव्याश्रितो गुणत्वादिति सामान्यसिद्धिं विकल्प्य दूषयति **किञ्चेति** । यद्यपि जातिबधिराणामनुमानेनाकाशसिद्ध्यसम्भवव्युत्पादनेनाकाशग्राहकतया साक्षी सिद्ध एव । तथाऽपि स्वाभिमतस्य, आकाशादेः साक्षिमात्रसिद्धत्वस्य असिद्धेः तत्सिद्ध्यर्थमनुमानस्य आभासत्ववर्णनमित्यवधेयम् ।

स्वरूपासिद्ध्या आद्यं दूषयति **नाद्य इति** । शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात् रूपवदित्यनुमानाद्वर्णात्मनोऽपि शब्दस्य गुणत्वसिद्धेरुपपादितत्वान्नासिद्धिरित्याशङ्क्य निराकरोति **न चोक्तेति** । **घटादीनामिति** । सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वेऽपि द्रव्यत्वाङ्गीकारे बाधकाभावादप्रयोजको हेतुः । न च द्रव्यत्वे घटादिवद् द्वीन्द्रियग्राह्यत्वापत्तिरिति वाच्यम् । द्रव्यत्वाविशेषेऽपि





घटादीनां द्वीन्द्रियग्राह्यत्वेऽप्यात्मन एकेन्द्रियग्राह्यत्ववद्द्रव्यत्वाविशेषेऽपि घटादीनां द्वीन्द्रियग्राह्यत्वेऽपि शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वोपपत्तेः । अन्यथा घटादेर्द्रव्यस्य द्वीन्द्रियग्राह्यताया दृष्टत्वादात्मनोऽपि द्रव्यत्वे तत्प्रसङ्गेन सामान्यवत्त्वे सत्यस्मदाद्येकेन्द्रियग्राह्यत्वादात्मनोऽपि गुणत्वसिद्धिप्रसक्तेरिति भावः । विपक्षे बाधकसद्भावान्नाप्रयोजकत्वमित्याशयेन लीलावतीकारोक्तं विपक्षे बाधकमाशङ्कते **यदीति** । अत्र द्रव्यशब्दो निरवयवद्रव्यपरः । अतो न पटादौ व्यभिचारः । अत एव निरवयवद्रव्यस्येत्येवोत्तरत्रापादकप्रदर्शनमित्यवधेयम् । कुत एतदित्याह **निरिति** । **प्रतिबन्धात्** व्याप्तेरित्यर्थः । विपक्षे बाधकाभावेनाप्रयोजकत्वशङ्काकलङ्कितत्वेन तर्कमूलभूतव्याप्त्यसिद्धेस्तर्काभासोऽयमित्याशयेनाह **निरवयवस्यापीति** । अन्यथा यद्यात्मा द्रव्यं स्यादिन्द्रियग्राह्यो न स्यान्निरवयवद्रव्यस्येन्द्रियाग्राह्यत्वेन व्याप्तेरित्यस्यापि तर्कस्य साधकत्वापत्त्या आत्मनोऽपि द्रव्यत्वं न स्यादिति बाधकं सूचयितुं निरवयवस्यापीन्द्रियग्राह्यत्ववदिति दृष्टान्तीकरणम् । **निरवयवस्यापि** निरवयवद्रव्यस्यापि ।

अस्तु तर्हि ध्वनिरूपः शब्दः पक्ष इति द्वितीयः निरवद्यत्वादित्यत आह **द्वितीये त्विति** । **पृथिव्यादीति** । स्पर्शवद्द्रव्येत्यर्थः । **पिठरेति** । आमपाकदशायां घटादिनाशाभावेऽपि पूर्वरूपनाशेन रूपान्तरोत्पत्तिरित्यस्मिन्पक्ष इत्यर्थः । नन्ववयवविभागसंयोगप्रक्रमेण पीलुपाक एवाभ्युपगम्यते न पिठरपाकः । तदुक्तं किरणावलीकारेण । पिठरपाकानभ्युपगमान्न तद्विशेषगुणैर्व्यभिचार इतीति । तत्कथं पिठरपाकाश्रयणेन व्यभिचारचोदनमित्यतो निर्बाधप्रत्यभिज्ञाविरोधादिना पीलुपाकपक्षस्य दुष्टत्वेन पिठरपाकपक्षानभ्युपगमस्यैवानुचितत्वेनोक्तदोषापरिहारादिति सत्येव समाधाने पक्षद्वयसाधारणं दोषमाह **प्रत्यक्षत्वे सतीति चेति** । तथा च मा भूद्व्यभिचारो व्यर्थविशेषणत्वं तु पक्षद्वयेऽप्यविशिष्टमित्यर्थः । **प्रमितत्वादिति** । पार्थिवपरमाणुरूपस्य स्पर्शवद्विशेषगुणतायाः प्रमितत्वादित्यर्थः । **प्रमितत्वादिति** । स्पर्शवच्छङ्खादिद्रव्यविशेषगुणतायाः प्रमितत्वादित्यर्थः । **तद्व्यवच्छेदार्थं** शब्दव्यवच्छेदार्थम् । **विशेषणम्** अशब्दत्वे सतीत्यादिरूपम् । ततश्च पक्षेऽशब्दत्वघटितहेत्वसिद्धिरिति भावः । यस्त्वनयोर्हेत्वोः अनुकूलस्तर्कोऽभिहितः तं विघटयितुं हेतुद्वयमप्रयोजकत्वेनापि दूषयति **न चेति** । स्पर्शवद्गुणत्वे उक्तरीत्या तदनुपलम्भप्रसङ्ग एव बाधक इति कथं तदभाव इत्यत आह **अनुपलब्धिस्त्विति** । ननु चक्षुषो मूर्तस्य गत्या विषयसन्निकर्षो युक्तः । श्रोत्रस्याकाशात्मकतया अमूर्तस्य कथं गत्या विषयसन्निकर्ष इत्याशङ्क्याह **अमूर्तस्येति** । आकाशस्यैवासिद्धेः श्रोत्रस्य तदात्मकत्वस्य सुतरामसिद्धेस्तदमूर्तत्वं कपोणिगुडायितम् । अन्यथाऽन्योन्याश्रयप्रसक्तेरिति भावः । यदि गत्वाग्राहित्वं श्रवसस्तर्हीतो वा शब्दः श्रूयते ततो वेति दिक्संशयो न स्यात् । अन्यथा चक्षुर्ग्राह्ये रूपेऽपि तथाविधसंशयः स्यादविशेषादिति शङ्कते **श्रोत्रस्येति** । प्रतिबन्द्या परिहरति **अगत्वेति** । दिक्सम्बन्धाभावादिति भावः । नन्वेवं साम्यमेवेति कथं भवतोऽपि निश्चय इत्यत्राह **संशयादपीति** । श्रोत्रस्य गत्वाग्राहित्वेन निश्चयसामग्र्यां सत्यामपि दोषवशात् संशयजनकत्वं गत्वाग्राहिणश्चक्षुष इव व्युत्पादयितुं शक्यते । अगत्वाग्राहित्वे तु निश्चयसामग्र्या एवाभावात् सर्वथा निश्चयो न स्यादेवेति संशयाभावादपि निश्चयाभाव एवानिष्ट इति भावः । एवं श्रोत्रस्या-





मूर्तत्वासिद्धेस्तस्य विषयदेशगत्युपपत्तेर्नानुपलब्धिप्रसङ्ग इत्युक्तम् । इदानीमङ्गीकृत्य तस्यामूर्तत्वेन गत्यभावं शब्दश्रवसोः प्राप्तिमाह **शङ्खेति** । ननु शङ्खावयवानामागमनेन न शब्दश्रवसोः प्राप्तिर्युक्ता शङ्खागमनपक्षे उद्भावितस्य तदनुपलम्भस्य तदवयवागमनपक्षेऽपि समानत्वेनावयवागमनस्य कल्पयितुमशक्यत्वादित्याशङ्क्य निषेधति **न चेति** । **घ्राणगन्धेति** । घ्राणस्य विषयदेशगत्यभावेऽपि कुसुमादेरनागमनेऽप्यतीन्द्रियकुसुमावयवागमनं प्रकल्प्य घ्राणस्य गन्धसन्निकर्षोऽभ्युपगम्यते । तथा श्रोत्रस्य गत्यभावेऽपि शङ्खादेरनागमनेऽपि अतीन्द्रियतदवयवानामागमनेन शब्दश्रवसोरपि युज्यते सन्निकर्ष इति नानुपलम्भबाधः । अन्यथा तत्राप्यनुपलम्भबाधप्रसङ्ग इति भावः ।

**वा०र०— तत्प्रसङ्गेनेति** । द्वीन्द्रियग्राह्यत्वप्रसङ्गेनेत्यर्थः । प्रसङ्गेनेत्यनन्तरं तस्य च भावेनेति पूरणीयम् । **व्याप्तेरित्यर्थ इति** । यद्यन्निरवयवं द्रव्यं तत्र बाह्येन्द्रियाग्राह्यत्वमिति व्याप्तेरित्यर्थः । **कफोणीति** । 'स्यात्कफोणिस्तु कूर्पर' इत्यभिधानात् कूर्परसंलग्नगुडस्य स्वजिह्वया लेहनायोगेन तस्यासाध्यत्ववदिदमप्यशक्यप्राप्तिमदित्यर्थः । अत्र चाभिधाने कपोणिरित्यपि पठन्ति । परन्तु मूले कोशे फकारस्यैव पाठाच्छब्दभेदः । प्रकाशाख्यग्रन्थे 'जनित्री जनयित्री च कफोणिः कफणिस्तथे'त्युक्तेश्चायमेव पाठ आदृतः इति बोध्यम् । **यदि गत्वाग्राहित्वमिति** । ननु श्रोत्रस्य शब्दमात्रविषयत्वेन द्रव्याविषयकत्वाद्गमनागमनयोरविशेषेण गत्वाग्राहित्वे दिक्संशयो न स्यादित्यापादनायोग इति चेन्न । अस्तित्वाद्देहान्तःस्थितस्यापि पुंसो बहिःशब्दे भेरीशब्दः प्राच्यां श्रूयते । शङ्खशब्दश्च प्रतीच्यामित्यादिः प्रत्ययः । तत्रेन्द्रियान्तरव्यापाराभावेन श्रोत्रेणैव तथा प्रत्ययो भवतीत्येष्टव्यम् । न च श्रोत्रस्य शब्दमात्रविषयकत्वे तथा प्रत्ययः तेन भवितुमर्हति । अधिकरणज्ञानाभावे तन्निष्ठत्वेन तज्ज्ञानासम्भवात् । ततोऽवश्यं श्रोत्रस्योपनीतदेशभानमङ्गीकृत्य शब्दाश्रयविषयकत्वमप्यङ्गीकार्यम् । यथा अन्धादीनां गन्धादिज्ञानकाले स्वाश्रयविशेषज्ञानाभावे सुरभिपुष्पमित्यादि प्रत्ययायोगेन कथञ्चिज्ज्ञानमङ्गीक्रियते । तथा च प्रागेव तत्तद्दिग्विशेषावगतौ सत्यां शब्दे च तत्र गृह्यमाणे श्रोत्रं दिग्विशेषनिवृत्तयैव तं गृह्णातीत्यङ्गीकार्यत्वात् सुरभिचन्दनमित्यादिवत् द्रव्यविषयकत्वप्राप्तेरस्ति गमनागमनयोर्विशेषः । गमने हि श्रोत्रं यद्देशे उत्पन्नः शब्दस्तत्र गत्वा शब्दं गृह्णीयात् । ततश्चेतरस्ततो वेत्यादि संशयायोगः । यदि चागमनं तर्हि दिग्विशेषाग्रहणेन संशयोपपत्तिः । सति चैवमापादनस्य युक्तत्वमेव । न च तस्यापि चक्षुषो भूतलादिप्रदेशग्राहित्वेन विशेषादविशेषो सिद्ध इति वाच्यम् । प्रत्यक्षानुमानयोर्व्याप्तिज्ञाननिरपेक्षत्वात् । सापेक्षत्वरूपवैषम्येऽपि प्रामाण्यात् प्रयोजकार्थनिश्चायकत्वसाम्येन प्रामाण्यसाम्यवत् पाकसापेक्षस्यापि पृथिवीशुक्लरूपस्य तन्निरपेक्षजलादिशुक्लस्येव शुक्लतावच्चोपनीतानुपनीतसाधारण्येनाश्रयविषयकत्वस्योभयत्र तुल्यतयोक्तवैषम्यकल्पनायाः कल्पनामात्रत्वात् । अन्यथा सुरभिचन्दनमित्यादिप्रत्ययस्य चाक्षुषचन्दनमात्रप्रत्ययाद्वैलक्षण्येन प्रामाण्याद्यभावापत्तिरिति द्रष्टव्यम् । **दिक्सम्बन्धाभावादिति भाव इति** । न च दिशः श्रोत्राग्राह्यत्वेन तदनिश्चये तत्सम्बन्धाभावस्याप्रयोजकत्वमिति वाच्यम् । उक्तरीत्या दिशः श्रोत्रग्राह्यत्वेन तदनिश्चये तत्सम्बन्धाभावस्य प्रयोजकत्वोपपत्तेः । एते दिश उपनीतभानमङ्गीकृत्य तन्निष्ठतया श्रोत्रेण





स्वसमीप एव शब्दो गृह्यत इत्यङ्गीकारे बाधकाभावेन गत्वाग्रहणमङ्गीकृत्योपनीतभानाङ्गीकारो निष्फल इति निरस्तम् । श्रोत्रेण स्वसमीपे शब्दग्रहणदशायां प्राच्यादिस्थनद्यादिस्थलविशेष उपनीतो भासत इत्येतस्य किञ्चिन्मात्रानुभवसिद्धत्वे उक्ताङ्गीकारोपपत्तावपि तथाऽनुभवाभावेन प्रत्युत दूरे तत्र शब्दं शृणोमीत्येव चानुभवेन तदङ्गीकारस्याप्रामाणिकत्वात् । अन्यथा देशान्तरे अवगतचन्दनस्य देशान्तरे चन्दनान्तरनिष्ठसुरभित्वज्ञानानन्तरं पूर्वावगतचन्दनस्योपनीतभानमङ्गीकृत्य तन्निष्ठत्वेन तत्सुरभित्वज्ञानमित्यङ्गीकार्यं स्यात् । तस्मात् उपनीत-शब्दभानमङ्गीकृत्य दिग्विशेषज्ञानं प्रत्यक्षेण भवतीत्यादिकमुपनीयम् । तच्चालौकिकम् । न हि श्रोत्रेण शब्दज्ञानानन्तरं पश्चाद्दिग्विशेषनिष्ठतया शब्दश्चक्षुषा गृह्यत इत्यानुभाविकमित्यलम् । **निश्चयसामग्र्यां सत्यामपीति** । न च श्रोत्रस्य गत्वाग्राहित्वेऽपि द्रव्यग्राहकत्वाभावेन निश्चयसामग्रीसद्भावो नेति वाच्यम् । उक्तोत्तरत्वात् । एतेनैव निश्चयसामग्र्यभावेनैव संशयोपपत्तौ शेषकल्पनावैयर्थ्यमिति परास्तम् । उक्तरीत्या द्रव्यग्राहकत्वोपपत्त्या निश्चयसामग्र्याः सत्त्वेन दोषकल्पनायाः सार्थकत्वात् इति द्रष्टव्यम् ।

**निश्चयसामग्र्या एवाभावादिति** । न चोपनयनाङ्गीकारेण दिङ्निश्चयसामग्री तिष्ठत्येवेति वाच्यम् । उक्तरीत्या स्थलान्तरे शब्दज्ञानावसरे प्राच्यादिस्थनद्यादिस्थलविशेषस्योपनीतस्य भासमानतायाः अनानु-भाविकत्वेन तदङ्गीकारायोगात् । **संशयाभावादपीति** । न चाभावान्तर्भावेन वाक्यार्थकथने अपदार्थत्वं वा अवयवार्थत्वं वा प्रसज्यत इति वाच्यम् । अत्र हि पूर्वपक्षिणा संशयाभावे आपादिते तं प्रति निश्चयाभाव आपादितः । तत्र च दोषयोः साम्यशङ्कायां प्रतियोगिमहत्त्वेन तदभावानिष्टत्वे तारतम्यं वक्तुं प्रतियोगि-तारतम्यमात्रं मूले उच्यते । न चैतावता अवाक्यार्थत्वादिप्रसङ्गोऽस्ति । अभावमहत्त्वस्यापि तात्पर्यार्थत्वेन वाक्यार्थत्वोपपत्तेरित्याशयादिति ज्ञेयम् । पूर्वोत्तरग्रन्थयोरभिप्रायकथनेन विरोधं परिहरन् उत्तरवाक्यमवतारयति **एवं श्रोत्रस्येति** । **पक्षे उद्भावितस्येत्यादि** । अनेन शङ्खावयवागमनपक्षे प्राक्तदनुपलम्भदोषस्यावयव-पुरस्कारेणाभिधानेऽपि शङ्खागमनपक्षे तदभिधानात् समानन्यायतया च तदवयवागमनपक्षेऽपि तद्दोष-स्योक्तप्रायत्वात् तदभिप्रायेणेयं मूले दोषस्योक्तत्वोक्तिरिति न दोष इति सूचितमिति ज्ञेयम् । **अतीन्द्रिय-कुसुमावयवागमनमित्यादि** । अत्र व्यतिरेको गन्धवत् तथेति सूत्रीयविचारो अत आकाशगुणे शब्दे इति तत्त्वनिर्णयटीकास्थविचारो द्वितीयस्य चतुर्थतत्त्वप्रकाशिकास्थविचारः । वायुर्गन्धानिवाशयादिति पञ्चदशा-ध्यायगीताभाष्यटीकाव्याख्यानस्थलीयविचारश्चानुगुणश्चेत् यथाश्रुतैवेतन्मूलटीकाप्रवृत्तिः स्वमतपरमतसम्मता । अनानुगुण्ये तु परमतानुसारेणैवेयमिति लेख्यमस्ति ।

**स०व्र०**— शब्दो द्रव्याश्रितः गुणत्वात् इत्येतद्विकल्प्य दूषयति **किञ्चेति** । शब्दो गुणः सामान्यवत्त्वे सति अस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात् इत्यत्र शब्दस्य तादृशबाह्यैकेन्द्रियग्राह्यत्वेऽपि द्रव्यत्वे बाधकाभावा-दप्रयोजको हेतुः । अन्यथा आत्मा गुणः सामान्यवत्त्वे सति अस्मदाद्येकेन्द्रियग्राह्यत्वात् रूपवत् इत्यतिप्रसङ्ग इति भावः । विपक्षे बाधकं शङ्कते **यदीति** । कुत एतदित्यत आह **निरिति** । असिद्धेयं व्याप्तिरित्याह **नेति** । यद्यात्मा द्रव्यं तर्हि इन्द्रियग्राह्यो न स्यात् निरवयवद्रव्यस्येन्द्रियाग्राह्यत्वेन व्याप्ते इत्यतिप्रसङ्ग-





लक्षणप्रतिकूलतर्कपराहतिर्द्रष्टव्या । ध्वनिरूपः शब्दः पक्ष इत्यत्रानिष्टमाह **द्वितीये त्विति** । ननु स्पर्शवद्गुणत्वाभावे शब्दस्यानुमानमुक्तमित्यत आह **प्रत्यक्षत्वे सतीति** । ननु पीलुपाकप्रक्रियापक्षे नोक्तदोष इत्यत आह **प्रत्यक्षत्वे सतीति च किमर्थमिति** । तर्हि मा भूद्व्यभिचारः व्यर्थविशेषणं तु स्यादित्यर्थः । व्यभिचारनिवारकत्वेन विशेषणस्यार्थवत्त्वेऽपि बाधितविषयत्वं स्यादित्याशयेनाह **तर्हीति** । यस्त्वनयोर्हेत्वोरनुकूलस्तर्कोऽभिमतः तं विघटयति **न चेति** । यदुक्तं स्पर्शवद्गुणत्वे तदनुपलम्भप्रसङ्ग इति तद्विघटयति **अनुपलब्धिस्त्विति** । ननु कथममूर्तस्य श्रोत्रस्य गतिरित्यत आह **अमूर्तस्येति** । आकाशासिद्धौ श्रोत्रस्याकाशत्वासिद्धेश्चक्षुरादिवत् मूर्तत्वमेव सिद्धमित्याशयः । यदि गत्वाग्राहित्वं श्रवसः तर्हि इतो वा शब्दः श्रूयते ततो वेति दिक्संशयो न स्यात् । अन्यथा रूपेऽपि तत्संशयः स्यात् अविशेषादिति शङ्कते **श्रोत्रस्येति** । प्रतिबन्द्या परिहरति **अगत्वेति** । दिक्सम्बन्धाभावादिति भावः । न चैवं साम्यं मन्तव्यमित्याह **संशयादपि निश्चय इति** । गरीयान् व्यवहारेष्वत्यन्तमुपयुक्तः । तथा च संशयाभावादपि निश्चयाभावोऽतिशयेनानिष्ट इति भावः । प्रकारान्तरेण शब्दश्रवसोः प्राप्तिमाह **शङ्खेति** । ननूक्तं शङ्खागमनं न दृश्यत इति तत्राह **न चेति** । **घ्राणगन्धसन्निकर्षेति** । यथाऽतीन्द्रियपुष्पाद्यवयवागमनेन घ्राणगन्धसन्निकर्षोऽभ्युपगम्यते तथाऽतीन्द्रियशङ्खावयवागमनेन श्रोत्रसन्निकर्षोऽङ्गीक्रियते । अतो नानुपलम्भबाध इत्यर्थः ।

**स०ना०— सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितमिति** मूलसुधायां **श्रोत्रस्य चक्षुष इवेति** । अत्र दिक्शब्देन मूर्तं दिगुपाधिर्गृह्यते । ततश्च श्रोत्रस्य रश्मिद्वारा गत्या ग्राहित्वे तेजसत्वापत्त्या चक्षुष इव दिगुपाधिग्राहकत्वस्यावर्जनीयतया किं देवदत्तस्य शब्दः श्रूयते उत यज्ञदत्तस्येति दिगुपाधिप्रयुक्तः संशयो न स्यादिति योजना ॥ एतेन दिशः श्रोत्रायोग्यत्वेन गमनागमनयोरविशेषेण गत्वाग्राहित्वे दिक् संशयो न स्यादित्यापादनमयुक्तमिति परास्तम् । एवं तर्हि दूषणभीरुणा अगत्वाग्राहित्वमपि त्याज्यं स्यादित्याह **अगत्वाग्राहित्व इति** । गत्वाग्राहित्वे हि संशयानुपपत्तिर्दोषः अगत्वाग्राहित्वे तु संशयनिश्चयानुपपत्ती दोषौ । एकस्मात् दोषात् बिभ्यतः कथं दोषद्वयान्न भीतिरिति भावः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु चक्षुषोऽगत्वाग्राहित्वेऽपि दोषवशात् स्थाणुर्वा पुरुषो वेति संशयवत् अत्रापि गत्वाग्राहित्वेऽपि दोषवशात् संशयोपपत्तेः न तदनुपपत्तिरिति बोध्यम् । इममेवाभिप्रायं मनसि निधायाह **संशयादपीति** । संशयनिश्चययोः परिहार्यापरिहार्यानुपपत्तिकत्वेन एव अणीयत्वमहीयत्वे इति बोध्यम् ।

**चषकः— विरोधाभावादिति** । साध्यमन्तरेणापि हेतुसद्भावोपपत्त्या अप्रयोजकतेत्याशयः । तन्निरसनौपयिकं निरवयवद्रव्यत्वापादककबाह्येन्द्रियग्राह्यत्वाभावापाद्यकलीलावत्यभिहिततर्कमाशङ्कते **यदीति** । **प्रतिबन्धादिति** । प्रकृतापाद्यापादकयोर्व्याप्तिरित्यर्थः । **प्रतिबन्धानिश्चयादिति** । अप्रयोजकतया मूलशैथिल्येनापाद्यापादकयोर्व्याप्त्यनिश्चयादित्यर्थः । **पिठरपाकेति** । सोऽयं घट इत्यादिनिर्बाधप्रत्यभिज्ञाविरोधेन पीलुपदवाच्यपरमाणुषु पाकाभ्युपगमकल्पस्य प्रत्याख्याततया अवयविपदाभिधेयपिठरेष्वेव तदभ्युपगमकल्पस्यैव





समर्थिततया तदनुपगतेरनौचित्या तद्गतरूपादावनैकान्त्यं दुर्वारमित्याशयः । **तर्हि शब्दस्यापीति** । तथा च शब्दान्यत्वस्य तद्व्यवच्छेदकविशेषणस्योपादेयतया तद्घटितहेतोरसिद्धिः तदघटितहेतोरप्रयोजकता बाधो वेत्याशयः । **पश्याम इति** । तथा च मूलशैथिल्यान्नोक्ततर्कोदय इति भावः । **गरीयान्** । अतीव व्यवहारौपयिकः । **न चोक्तदोष इति** । श्रोत्रोपकण्ठं शङ्खागमनकल्पे यो दोषोऽभिहितः अनुपलम्भबाधाख्यः स तदवयवागमनकल्पेऽपि समान इति नेत्यर्थः । **घ्राणगन्धेति** । यथा सूक्ष्माः कुसुमावयवाः घ्राणसदेशमायास्यन्तीति गन्धघ्राणयोः सन्निकर्षः तथा तादृशशङ्खावयवाः श्रोत्रसमीपमायास्यन्तीति शब्दश्रोत्रयोः सन्निकर्षः सूपपाद इति तत्रैवात्रापि नानुपलम्भबाध इति भावः ।

**॥ इति तदनुमाने शब्दरूपपक्षस्य द्विविधविकल्पानुपपत्तिः ॥**

* * *

**॥ तत्र शब्दस्य वायुगुणत्वेऽनुपपत्तिः ॥**

**१३८ सु०— किञ्च वायुगुणत्वे हेतुद्वयमसिद्धम्, तर्कश्चानुपपन्नः । नैवं युक्तम्, श्रोत्रस्य प्रतिनियतार्थग्राहकत्वेन बहिरिन्द्रियत्वात् । बहिरिन्द्रियस्य ग्राह्यसजातीयविशेषगुणवत्त्वनियमात् । शब्दस्य वायवीयत्वे श्रोत्रस्यापि तथात्वप्रसङ्गादिति चेन्न, 'प्रतिनियतार्थग्राहक'-शब्दस्येन्द्रियान्तराग्राह्यग्राहकार्थत्वे मनसि व्यभिचारात् । इन्द्रियान्तराग्राह्यस्यैव ग्राहकमित्यभिप्राये सत्तादिग्राहकत्वेनासिद्धिः । बहिरिन्द्रियत्वेऽपि न ग्राह्यसजातीयविशेषगुणवत्त्वनियमः, स्नेहग्राहके चक्षुषि व्यभिचारात् । श्रोत्रस्य वायवीयत्वेऽपि न बाधकं पश्यामः, सामग्रीभेदेन प्रतिनियतार्थत्वोपपत्तेः ।**

**घ्राणादीनामप्येवमेकप्रकृतित्वं स्यादिति चेत्, अस्तु, बाध(क)सद्भावे तु तत एवान्या गतिर्भविष्यति । शब्दो न वायवीयः विशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वाद्गन्धवदिति चेन्न, विपक्षे बाधकाभावात् । अन्यथा पाकजरूपादयोऽपि न पार्थिवाः, घ्राणावेद्यत्वात् शब्दवदि(ति)त्यपि स्यात् ।**

**परि०— हेतुद्वयमसिद्धमिति** । शब्दो न स्पर्शवद्विशेषगुण इत्यत्र यद्धेतुद्वयमुक्तं तेन पृथिव्यादिगुणत्वाभावसिद्धावपि न वायुगुणत्वाभावसिद्धिः । शब्दस्य वायुगुणत्वेन वायुगतस्पर्शस्येव प्रत्यक्षत्वे सति कारणगुणपूर्वकत्वस्य, यावद्द्रव्यभावित्वस्य च सम्भवेन हेत्वोः स्वरूपासिद्धत्वेन





वायुगुणत्वाभावासाधकत्वात् । वायुगुणत्वपक्षे प्रागुक्तस्तदनुपलम्भप्रसङ्गरूपस्तर्कश्चायुक्तः । तत्पक्षे वायुना सह श्रोत्रदेशप्राप्तिसम्भवेनोपलम्भोपपत्तेरिति भावः । शङ्कते **न चैवं युक्तमिति** । कुत इत्यतः श्रोत्रस्यापि वायवीयत्वप्रसङ्गरूपबाधकसद्भावादित्याह **श्रोत्रस्येति** । **प्रतिनियतेति** । अस्यार्थोऽग्रे व्यक्तः । **वायवीयत्वे श्रोत्रस्यापि तथात्वप्रसङ्गादिति** । न चेष्टापत्तिः । तथात्वे त्वगिन्द्रियवत् स्पर्शस्यापि ग्रहणप्रसङ्गात् । त्वचोऽपि शब्दग्राहकत्वप्रसङ्गादिति भावः । **स्नेहेति** । जलगुणचिक्कणताग्राहक इत्यर्थः । ननु रूपादिषु पञ्चसु मध्य इति विशेषणान्न दोष इत्याशयादाह **श्रोत्रस्येति** । ननु श्रोत्रस्पर्शनयोर्द्वयोरपि वायवीयत्वे शब्दमात्रग्राहकत्वं स्पर्शमात्रग्राहकत्वमिति नियमभङ्ग एव बाधक इत्यत आह **सामग्रीभेदेनेति** । वायुविकारत्वस्योभयत्र साम्येऽपि श्रोत्रादिजनकेतरकारणकलापवैचित्र्येण श्रोत्रत्वचोर्वैचित्र्यात् प्रतिनियतार्थग्राहकत्वोपपत्तेरित्यर्थः । यद्वा ग्रहणे सहकारिसम्पत्तिरूपसामग्रीभेदेनेत्यर्थः । बाधकान्तरमाशङ्कते **घ्राणादीनामिति** । **एकप्रकृतित्वं** एकभूतोपादानकत्वमित्यर्थः । अस्त्वित्यङ्गीकारः । ननु बाधके सति कथमित्यत आह **बाधकसद्भाव इति । तत एव** बाधकादेवेत्यर्थः । वायवीयत्वेऽनुमानविरोधं बाधकमाशङ्कते **शब्द इति** । वायुगतसङ्ख्यापरिमाणादावव्यभिचाराय हेतौ सत्यन्तम् । स्पर्शे व्यभिचारवारणाय विशेष्यम् ।

**यादु०— हेतुद्वयमसिद्धमिति** । शब्देऽपि वायुगुणत्वे कारणगुणपूर्वकत्वस्य यावद्द्रव्यभावित्वस्य च वक्तुं शक्यत्वादिति भावः । **तर्कश्चेति** । अतीन्द्रियवायोरागमनेन वा वीचीतरङ्गन्यायेन वायवीयशब्द-सन्तानोत्पत्त्या वा श्रोत्रसन्निकृष्टस्य शब्दस्योपलब्धिसम्भवादिति भावः । **तथात्वप्रसङ्गादिति** । वायवीयत्व-प्रसङ्गादित्यर्थः । बहिरिन्द्रियस्य ग्राह्यसजातीयविशेषगुणवत्त्वनियमात् श्रोत्रस्यापि शब्दवत्त्वे प्राप्ते शब्दस्य च वायुगुणत्वस्वीकारात् तद्वतः श्रोत्रस्य वायवीयत्वप्रसङ्ग इति भावः । ननु श्रोत्रस्य वायवीयत्वे त्वगिन्द्रियवत् स्पर्शग्राहकत्वमपि स्यात् । ततश्च प्रतिनियतार्थत्वानुपपत्तिरित्यत आह **सामग्रीभेदेनेति** । त्वक्श्रोत्रयो-र्वायवीयत्वाविशेषेऽपि व्यक्तिविशेषभेदेन वाऽदृष्टविशेषभेदेन वा प्रतिनियतार्थतोपपत्तेरिति भावः । **घ्राणा-दीनामपीति** । यथा त्वक्श्रोत्रयोर्वायवीयत्वं स्वीकृत्य सामग्रीभेदेन प्रतिनियतार्थत्वमुक्तं तथा घ्राणादीनामपि वायवीयत्वमेवाङ्गीकृत्य प्रतिनियतार्थत्वं सामग्रीभेदेनैवेत्यस्तु । ततश्च घ्राणादीनां पार्थिवत्वादिस्वीकारो भज्यतेति भावः । **एकप्रकृतित्वं** एकभूतकार्यत्वम् । ननु कथं घ्राणादीनामेकप्रकृतिकत्वम् । घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुंकुमगन्धाभिव्यञ्जकघृतवत् । रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वात् लालावत् । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् प्रदीपवत् । स्पर्शनं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् व्यजनवातवत् । इति बाधकानां सत्त्वादित्यत आह **बाधकसद्भाव इति** । **अन्या**





**गतिः** तत्तद्भूतप्रकृतिकत्वम् । श्रोत्रस्य वायवीयत्वे च न किञ्चिद्बाधकमस्तीति भावः । **विशेषगुणत्वे सतीति** । अत्र असिद्धिवारणाय **त्वगिति** । त्वगिन्द्रिये व्यभिचारवारणाय सत्यन्तम् । वायुगुणे सङ्ख्या-परिमाणादौ व्यभिचारवारणाय विशेषपदमिति मन्तव्यम् । न चैवमपि त्वगिन्द्रियस्पर्शे वायुपरमाण्वादिस्पर्शे च व्यभिचारः । विशेषपदस्य प्रत्यक्षपरत्वात् । **घ्राणावेद्यत्वादिति** । न च घ्राणे घटादौ च व्यभिचारः । विशेषगुणत्वे सतीत्यस्यात्रापि विवक्षितत्वात् । अत्र घ्राणगतसङ्ख्यादौ व्यभिचारवारणाय विशेषणपदमिति ध्येयम् ।

**वं०प०**— **हेतुद्वयमिति** । स्पर्शवद्वायुगुणत्वाङ्गीकारपक्षे स्पर्शवद्वायुगुणत्वाभावसाधकं हेतुद्वय-मसिद्धमित्यर्थः । तथा हि । वायुगुणत्वेऽपि वायुकारणनिष्ठशब्दरूपगुणेन वायावपि शब्दोत्पत्तिसम्भवादकारण-गुणपूर्वकत्वं, वायूनां तत्तत्कालभिन्नानामेवोत्पद्यमानत्वात् तत्तद्गुणानामपि शब्दानां यावद्द्रव्यभावित्वमेवेति द्वितीयहेतुश्चासिद्ध इत्युक्तं भवति । **प्रतिनियतेति** । रूपादिपञ्चकमध्य इत्यर्थः । **मनसीति** । सुखादिग्राहकत्वेन हेतुसद्भावादन्तरिन्द्रियत्वेन साध्याभावादिति भावः । **इन्द्रियान्तरेति** । मनसस्तु सर्वोपलब्धिसाधनत्वेन चक्षु-रादीन्द्रियग्राह्यरूपादिग्राहकत्वान्न व्यभिचार इति भावः । **सत्तादीति** । सत्ताया एकत्वेनेन्द्रियान्तरग्राह्य-शब्दनिष्ठसत्ताजातिग्राहकत्वेन स्वरूपासिद्धिप्रसङ्गः । आदिपदेन गुणत्वग्रहणम् । **सामग्रीति** । कर्णशष्कुल्यव-च्छिन्नत्वग्भागस्यैव शब्दग्राहकत्वं, तदितरत्वग्भागस्यैव स्पर्शग्राहकत्वमित्यर्थः ।

**आनन्दः**— प्रत्यक्षत्वे सतीत्युक्तहेतुद्वयमसिद्धं शब्दस्य वायुगुणत्वेन कारणगुणपूर्वकत्वयावद्द्रव्यभावि-त्वयोरङ्गीकारात् । अनुपलब्धिस्तु व्यञ्जकाभावकृतेत्याह **किञ्चेति** । ननु स्पर्शवद्गुणत्वेऽनुपलम्भः स्यादित्युक्तमत आह **तर्कश्चेति** । वायोरेव श्रोत्रदेशगमनेन तदुपपत्तेः मध्ये तदनुपलब्धिस्त्वतीन्द्रियत्वादुपपन्नेति भावः । ननु शब्दस्य वायवीयत्वे श्रोत्रस्यापि वायवीयत्वं स्यात् । न चैतत्सङ्गतमिति वाच्यम् । यद्बहिरिन्द्रियं तत्स्वग्राह्यसजातीयविशेषगुणवदिति नियमेन शब्दग्राहकत्वेन श्रोत्रस्य तद्वत्वनियमाद्वायवीयत्वापादनं युक्तमेव । न च बहिरिन्द्रियत्वमस्यासिद्धमिति वाच्यम् । श्रोत्रं बहिरिन्द्रियं प्रतिनियतार्थत्वात् चक्षुर्वदित्यनेन बहि-रिन्द्रियत्वस्य सिद्धेः तस्मादनुपपन्नमेतदित्याशङ्कते **नैवं युक्तमिति** । तत्रादौ बहिरिन्द्रियत्वसाधकं हेतुं विकल्प्य दूषयति **प्रतिनियतार्थेति** । **इन्द्रियान्तरेति** । मनसस्तु इन्द्रियान्तरग्राह्यग्राहकत्वस्यापि सत्त्वम् । न तत्र व्यभिचार इति भावः । न चात्रेन्द्रियान्तराग्राह्यस्यैव गुणस्य ग्राहकमिति विवक्षितमिति न सत्तादिकमादाय अतिप्रसङ्ग इति वाच्यम् । शब्दस्य गुणत्वासिद्धेः । मनोरूपेन्द्रियान्तरग्राह्यस्यैव शब्दरूपगुणस्य ग्राहकत्वा-दसिद्धिता वस्तुत्वाच्चाक्षुषज्ञानं इव उपनीतशब्दस्यापि बाह्येन्द्रियग्राहकत्वेन पुनरप्यसिद्धेः । न च बाह्येन्द्रिय-जन्यलौकिकप्रत्यक्षाविषयत्वं विवक्षितमिति वाच्यम् । लौकिकत्वस्यैव निर्वक्तुमशक्यत्वात् । न च षोढा प्रत्यासत्यन्यतमप्रत्यासत्यजन्यत्वं तदिति वाच्यम् । समवायस्याग्रे निराकरिष्यमाणत्वेन तद्घस्य तस्यासिद्धिः स्यात् । संयोगेन तु ग्राहकत्वस्य परं प्रत्यसिद्धत्वात् इति । अस्तु वा बहिरिन्द्रियत्वं तथापि न तद्गुणत्वं





श्रोत्रस्यापद्यते उक्तनियमस्य व्यभिचारग्रस्तत्वादित्याह **बहिरिति** । ननु श्रोत्रस्य वायवीयत्वे त्वक्श्रोत्रयोर्विशेषाभावात् त्वचा शब्दस्य श्रोत्रेण स्पर्शस्यापि ग्रहणं स्यात्तथा च प्रतिनियतार्थग्राहकत्वाभावेन बधिराभावप्रसङ्ग इत्यत आह **सामग्रीभेदेनेति** । **घ्राणादीनामिति** । तत्रापि सामग्रीभेदेन प्रतिनियतार्थग्राहकत्वोपपत्तौ एकभूतोपादानत्वमेव तेषामापद्यतेति भावः । **विपक्ष इति** । तथा चाप्रयोजकमेतदिति भावः । **अन्यथेति** । विपक्षे बाधकाभावेऽपि वायवीयत्वानङ्गीकार इत्यर्थः । **पार्थिवा इति** । पृथिवीगुणा इत्यर्थः ।

**श्रीनिधि०— किञ्च वायुगुणत्व इति** । वायोस्तस्य तस्य नाशासम्भवेन यावद्द्रव्यभावित्वात् । कारणगुणप्रक्रमेणोत्पत्तिसम्भवाच्च । पृथिवीगुणत्वे तु यावद्द्रव्यभावित्वं नास्ति । शब्दापगमेऽपि शङ्खोपलम्भात् । कारणगुणपूर्वकत्वं सम्भवत्यपि तथापि । कारणगुणपूर्वकत्वे सति द्रव्यरूपादिनाशस्योपाधिनिमित्तत्वदर्शनान्निमित्तविशेषाभावेऽपि नाशो न स्यादिति परो ब्रूयादिति एवमुक्तम् । **विशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वादिति** । प्रत्यक्षविशेषगुणत्वेत्यर्थः । तेन वायुपरमाणुस्पर्शे व्यभिचारः । किञ्च (वा) आत्मन्यसमवायादित्यसिद्धम् ।

**शे०वा०—** माऽस्तूक्तहेतुभ्यां सतर्काभ्यां शब्दस्य पृथिव्यादित्रितयगुणत्वम्, स्पर्शवद्वायुविशेषगुणत्वं तु स्यादेवेत्याह **हेतुद्वयमसिद्धमिति** । वायुगुणत्ववादिना कारणगुणपूर्वकत्वस्य यावद्द्रव्यभावित्वस्यैवाङ्गीकारेण उक्तहेतुद्वयमसिद्धमित्यर्थः । **तर्कश्चेति** । अनुपलब्धिप्रसङ्गरूप इत्यर्थः । वायोरेव श्रोत्रदेशागमनेन वा वीचीतरङ्गन्यायेन वायावेव शब्दसन्तानोत्पत्त्या वा श्रोत्रसन्निकर्षसम्भवात् । शङ्खश्रवसोर्मध्ये तदनुपलब्धिस्त्वतीन्द्रियत्वाद्वायोरुपपद्यत एव । अन्यथा शङ्खश्रवसोर्मध्ये आकाशस्याप्यनुपलम्भबाधितत्वात् तद्गुणत्वमपि न स्यादिति भावः । शब्दस्य वायुगुणत्वे बाधकमाशङ्कते **नैवमिति** । **बहिरिन्द्रियत्वादिति** । प्रतिनियतार्थग्राहकस्य घ्राणादेर्बहिरिन्द्रियत्वदर्शनादिति भावः । **नियमादिति** । गन्धादिग्राहकस्य घ्राणादेर्गन्धादिमत्त्वदर्शनादिति भावः । **तथात्वे इति** । वायवीयत्व इत्यर्थः । तत्र बहिरिन्द्रियत्वसाधकतयोपन्यस्तं प्रतिनियतार्थग्राहकत्वं दूषयति **प्रतीति** । **मनसि व्यभिचारादिति** । तस्येन्द्रियान्तराग्राह्यसुखादिग्राहकत्वेऽपि बहिरिन्द्रियत्वाभावादिति भावः । ननु मनस इन्द्रियान्तराग्राह्यसुखादिग्राहकत्वेऽपि तद्ग्राह्यरूपादिग्राहकत्वस्यापि सत्त्वेनेन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वाभावान्न व्यभिचार इत्यतो माऽस्तु तर्हि व्यभिचार इन्द्रियान्तरग्राह्यसत्ताग्राहकत्वेन श्रोत्रस्येन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वाभावादसिद्धिः स्यादेवेत्याह **इन्द्रियान्तरेति** । न च इन्द्रियान्तराग्राह्यस्यैव गुणस्य ग्राहकतया विवक्षितत्वान्न सत्तादिग्राहकत्वेनासिद्धिः नापि मनसि व्यभिचार इति वाच्यम् । शब्दस्य गुणत्वासिद्ध्या एवमप्यसिद्ध्यपरिहारात् । गुणत्वसिद्धौ वा श्रोत्रस्यापि मनोरूपेन्द्रियान्तरग्राह्यशब्दलक्षणगुणग्राहकत्वेनासिद्धितादवस्थ्याच्च । न च बाह्येन्द्रियान्तराग्राह्यस्यैव गुणस्य ग्राहकत्वं हेतुरतो नासिद्धिरिति वाच्यम् । उपनीतस्य सौरभस्य चक्षुषेवोपनीतशब्दस्यापि बाह्येन्द्रियान्तरग्राह्यत्वेनोक्तदोषानतिवृत्तेः । न च बाह्येन्द्रियान्तरजन्यलौकिकप्रत्यक्षाविषयत्वं तथा । लौकिकप्रत्यक्षत्वानिर्वचनात् । समवायस्य





निराकरिष्यमाणत्वेन संयोगेन ग्राहकत्वस्य च परासम्प्रतिपत्त्या षोढाप्रत्यासत्त्यन्यतमप्रत्यासत्तिजन्यत्वेन वक्तुमशक्यत्वादिति भावः । एवं प्रतिनियतार्थग्राहकत्वेन श्रोत्रस्य न बहिरिन्द्रियत्वं सिद्ध्यतीत्युक्तम् । अस्तु वा कथञ्चित्तेन बहिरिन्द्रियत्वसिद्धिः । तथापि न बहिरिन्द्रियत्वेन ग्राह्यसजातीयविशेषगुणवत्त्वसाधनं युक्तमनैकान्त्यादित्याह **बहिरिति । स्नेहेति** । न च रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यं गुणं गृह्णाति तदिन्द्रियं तद्वदिति नियमस्य विवक्षितत्वान्नायं दोषः, रूपादिषु पञ्चसु मध्ये इत्यस्यासिद्धिवारकतया व्यर्थत्वात् । नियामकाभावेनाप्रयोजकत्वाच्च । अन्यथा यदिन्द्रियं चतुर्षु गुणेष्विति वा षट्सु सप्तसु मध्ये इत्यपि विशेषणप्रक्षेपापत्तेरिति भावः । यदुक्तं शब्दस्य वायवीयत्वे श्रोत्रस्यापि तथात्वं प्रसज्यत इति तदिष्टापादनत्वादनुपपन्नमित्याह **श्रोत्रस्येति** । ननु श्रोत्रस्य वायवीयत्वे त्वक्श्रोत्रयोरुभयोरपि वायवीयत्वेनाविशेषात् त्वचा स्पर्शस्येव शब्दस्यापि, श्रोत्रेण च शब्दस्येव स्पर्शस्यापि ग्रहणं स्यात् । ततश्च प्रतिनियतार्थग्राहकत्वाभावात् बधिरस्यापि त्वचा शब्दज्ञानोपपत्तेः बधिराभावप्रसङ्ग इत्यत आह **सामग्रीभेदेनेति** । व्यक्तिभेदेनेत्यर्थः । वायवीयत्वाविशेषेऽपि त्वक्श्रोत्रयोर्व्यक्तिभेदेन प्रतिनियतार्थत्वाविरोधादिति किरणावल्युक्तेः । यद्वा दृष्टादृष्टसामग्रीभेदेनेत्यर्थः । पार्थिवत्वाविशेषेऽपि तन्तुमृत्पिण्डयोस्तन्तुरेव पटजनको, न मृत्पिण्डो, मृत्पिण्ड एव घटजनको न तन्तुरिति दृष्टादृष्टकारणभेदेन व्यवस्थावद्वायवीयत्वाविशेषेऽपि त्वक्श्रोत्रयोस्त्वक्स्पर्शमात्रं गृह्णाति न शब्दं, श्रोत्रं शब्दमेव गृह्णाति न स्पर्शमिति व्यवस्थोपपत्तेः न बधिराभावप्रसङ्ग इति भावः ।

त्वक्श्रोत्रयोरेकप्रकृतिकत्वे इन्द्रियमात्रस्याप्येकप्रकृतिकत्वमेव स्यात् । त्वक्श्रोत्रयोरेकप्रकृतिकत्वेऽपि सामग्रीभेदेन प्रतिनियतार्थत्ववदिन्द्रियमात्रस्यापि तत एव प्रतिनियतार्थत्वोपपत्तेरिति बाधकसद्भावात् कथं तदभाव इत्याशङ्कते **घ्राणादीनामिति । एकप्रकृतिकत्वम्** एकभूतकार्यत्वम् । एतदपि नास्माकमनिष्टमित्याह **अस्त्विति** । एकप्रकृतिकत्वे बाधकसद्भावे हि भवेदिदमनिष्टम् । न च तदस्तीत्यतो नेदमनिष्टमिति भावः । ननु कथं घ्राणादीनामेकप्रकृतिकत्वे बाधकाभावः । 'घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतवत् । रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वाल्लालावत् । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् प्रदीपवत् । स्पर्शनं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् व्यजनवातवत्' इत्यनुमानानामेव बाधकत्वादित्यतो युक्तिपादे वक्ष्यमाणरीत्या सिद्धसाधनत्वादिकलङ्कितत्वेन एतेषामाभासत्वेऽपि अङ्गीकृत्यानाभासत्वं बाधकसद्भावाभावाभ्यां वैषम्यात् बाधकाभावेन त्वक्श्रोत्रयोरेकप्रकृतिकत्वस्य, तद्भावाच्च घ्राणादीनामनेकप्रकृतिकत्वस्य, च सम्भवान्न प्रतिबन्दीग्रहो युक्त इत्याह **बाधकसद्भावे त्विति** । लीलावतीकारीयं बाधकमाशङ्कते **शब्द इति । विशेषगुणत्वे सतीति** । अत्रासिद्धिवारणाय त्वगिन्द्रियेति विशेषणम् । त्वगिन्द्रिये व्यभिचारवारणार्थं गुणत्वे सतीति । वायुसंयोगादौ व्यभिचारवारणाय विशेषेत्युक्तम् । न चैवमपि त्वगिन्द्रियस्पर्शे वायुपरमाण्वादिस्पर्शे च व्यभिचारः । स्पर्शेतरविशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वस्यैव हेतुत्वेन विवक्षितत्वात् । अत एव लीलावतीवर्धमानकृता एवमेव हेत्वर्थो वर्णित इति ध्येयम् । अप्रयोजकत्वेनैतद्दूषयति **नेति** । अप्रयोजकस्यापि साधकत्वेऽतिप्रसङ्गं चाह **अन्यथेति । घ्राणवेद्यत्वादिति** ।





श्रोत्रस्यापद्यते उक्तनियमस्य व्यभिचारग्रस्तत्वादित्याह **बहिरिति** । ननु श्रोत्रस्य वायवीयत्वे त्वक्श्रोत्रयोर्विशेषाभावात् त्वचा शब्दस्य श्रोत्रेण स्पर्शस्यापि ग्रहणं स्यात्तथा च प्रतिनियतार्थग्राहकत्वाभावेन बधिराभावप्रसङ्ग इत्यत आह **सामग्रीभेदेनेति** । **घ्राणादीनामिति** । तत्रापि सामग्रीभेदेन प्रतिनियतार्थग्राहकत्वोपपत्तौ एकभूतोपादानत्वमेव तेषामापद्यतेति भावः । **विपक्ष इति** । तथा चाप्रयोजकमेतदिति भावः । **अन्यथेति** । विपक्षे बाधकाभावेऽपि वायवीयत्वानङ्गीकार इत्यर्थः । **पार्थिवा इति** । पृथिवीगुणा इत्यर्थः ।

**श्रीनिधि०**— **किञ्च वायुगुणत्व इति** । वायोस्तस्य तस्य नाशासम्भवेन यावद्द्रव्यभावित्वात् । कारणगुणप्रक्रमेणोत्पत्तिसम्भवाच्च । पृथिवीगुणत्वे तु यावद्द्रव्यभावित्वं नास्ति । शब्दापगमेऽपि शङ्खोपलम्भात् । कारणगुणपूर्वकत्वं सम्भवत्यपि तथापि । कारणगुणपूर्वकत्वे सति द्रव्यरूपादिनाशस्योपाधिनिमित्तत्वदर्शनान्निमित्तविशेषाभावेऽपि नाशो न स्यादिति परो ब्रूयादिति एवमुक्तम् । **विशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वादिति** । प्रत्यक्षविशेषगुणत्वेत्यर्थः । तेन वायुपरमाणुस्पर्शे व्यभिचारः । किञ्च (वा) आत्मन्यसमवायादित्यसिद्धम् ।

**शे०वा०**— माऽस्तूक्तहेतुभ्यां सतर्काभ्यां शब्दस्य पृथिव्यादित्रितयगुणत्वम्, स्पर्शवद्वायुविशेषगुणत्वं तु स्यादेवेत्याह **हेतुद्वयमसिद्धमिति** । वायुगुणत्ववादिना कारणगुणपूर्वकत्वस्य यावद्द्रव्यभावित्वस्यैवाङ्गीकारेण उक्तहेतुद्वयमसिद्धमित्यर्थः । **तर्कश्चेति** । अनुपलब्धिप्रसङ्गरूप इत्यर्थः । वायोरेव श्रोत्रदेशागमनेन वा वीचीतरङ्गन्यायेन वायावेव शब्दसन्तानोत्पत्त्या वा श्रोत्रसन्निकर्षसम्भवात् । शङ्खश्रवसोर्मध्ये तदनुपलब्धिस्त्वतीन्द्रियत्वाद्वायोरुपपद्यत एव । अन्यथा शङ्खश्रवसोर्मध्ये आकाशस्याप्यनुपलम्भबाधितत्वात् तद्गुणत्वमपि न स्यादिति भावः । शब्दस्य वायुगुणत्वे बाधकमाशङ्कते **नैवमिति** । **बहिरिन्द्रियत्वादिति** । प्रतिनियतार्थग्राहकस्य घ्राणादेर्बहिरिन्द्रियत्वदर्शनादिति भावः । **नियमादिति** । गन्धादिग्राहकस्य घ्राणादेर्गन्धादिमत्त्वदर्शनादिति भावः । **तथात्वे इति** । वायवीयत्व इत्यर्थः । तत्र बहिरिन्द्रियत्वसाधकतयोपन्यस्तं प्रतिनियतार्थग्राहकत्वं दूषयति **प्रतीति** । **मनसि व्यभिचारादिति** । तस्येन्द्रियान्तराग्राह्यसुखादिग्राहकत्वेऽपि बहिरिन्द्रियत्वाभावादिति भावः । ननु मनस इन्द्रियान्तराग्राह्यसुखादिग्राहकत्वेऽपि तद्ग्राह्यरूपादिग्राहकत्वस्यापि सत्त्वेनेन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वाभावान्न व्यभिचार इत्यतो माऽस्तु तर्हि व्यभिचार इन्द्रियान्तरग्राह्यसत्ताग्राहकत्वेन श्रोत्रस्येन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वाभावादसिद्धिः स्यादेवेत्याह **इन्द्रियान्तरेति** । न च इन्द्रियान्तराग्राह्यस्यैव गुणस्य ग्राहकतया विवक्षितत्वान्न सत्तादिग्राहकत्वेनासिद्धिः नापि मनसि व्यभिचार इति वाच्यम् । शब्दस्य गुणत्वासिद्ध्या एवमप्यसिद्ध्यपरिहारात् । गुणत्वसिद्धौ वा श्रोत्रस्यापि मनोरूपेन्द्रियान्तरग्राह्यशब्दलक्षणगुणग्राहकत्वेनासिद्धितादवस्थ्याच्च । न च बाह्येन्द्रियान्तराग्राह्यस्यैव गुणस्य ग्राहकत्वं हेतुरतो नासिद्धिरिति वाच्यम् । उपनीतस्य सौरभस्य चक्षुषेवोपनीतशब्दस्यापि बाह्येन्द्रियान्तरग्राह्यत्वेनोक्तदोषानतिवृत्तेः । न च बाह्येन्द्रियान्तरजन्यलौकिकप्रत्यक्षाविषयत्वं तथा । लौकिकप्रत्यक्षत्वानिर्वचनात् । समवायस्य





निराकरिष्यमाणत्वेन संयोगेन ग्राहकत्वस्य च परासम्प्रतिपत्त्या षोढाप्रत्यासत्त्यन्यतमप्रत्यासत्तिजन्यत्वेन वक्तुमशक्यत्वादिति भावः । एवं प्रतिनियतार्थग्राहकत्वेन श्रोत्रस्य न बहिरिन्द्रियत्वं सिद्ध्यतीत्युक्तम् । अस्तु वा कथञ्चित्तेन बहिरिन्द्रियत्वसिद्धिः । तथापि न बहिरिन्द्रियत्वेन ग्राह्यसजातीयविशेषगुणवत्त्वसाधनं युक्तमनैकान्त्यादित्याह **बहिरिति** । **स्नेहेति** । न च रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यं गुणं गृह्णाति तदिन्द्रियं तद्वदिति नियमस्य विवक्षितत्वान्नायं दोषः, रूपादिषु पञ्चसु मध्ये इत्यस्यासिद्धिवारकतया व्यर्थत्वात् । नियामकाभावेनाप्रयोजकत्वाच्च । अन्यथा यदिन्द्रियं चतुर्षु गुणेष्विति वा षट्सु सप्तसु मध्ये इत्यपि विशेषणप्रक्षेपापत्तेरिति भावः । यदुक्तं शब्दस्य वायवीयत्वे श्रोत्रस्यापि तथात्वं प्रसज्यत इति तदिष्टापादनत्वादनुपपन्नमित्याह **श्रोत्रस्येति** । ननु श्रोत्रस्य वायवीयत्वे त्वक्श्रोत्रयोरुभयोरपि वायवीयत्वेनाविशेषात् त्वचा स्पर्शस्येव शब्दस्यापि, श्रोत्रेण च शब्दस्येव स्पर्शस्यापि ग्रहणं स्यात् । ततश्च प्रतिनियतार्थग्राहकत्वाभावात् बधिरस्यापि त्वचा शब्दज्ञानोपपत्तेः बधिराभावप्रसङ्ग इत्यत आह **सामग्रीभेदेनेति** । व्यक्तिभेदेनेत्यर्थः । वायवीयत्वाविशेषेऽपि त्वक्श्रोत्रयोर्व्यक्तिभेदेन प्रतिनियतार्थत्वाविरोधादिति किरणावल्युक्तेः । यद्वा दृष्टादृष्टसामग्रीभेदेनेत्यर्थः । पार्थिवत्त्वाविशेषेऽपि तन्तुमृत्पिण्डयोस्तन्तुरेव पटजनको, न मृत्पिण्डो, मृत्पिण्ड एव घटजनको न तन्तुरिति दृष्टादृष्टकारणभेदेन व्यवस्थावद्वायवीयत्वाविशेषेऽपि त्वक्श्रोत्रयोस्त्वक्स्पर्शमात्रं गृह्णाति न शब्दं, श्रोत्रं शब्दमेव गृह्णाति न स्पर्शमिति व्यवस्थोपपत्तेः न बधिराभावप्रसङ्ग इति भावः ।

त्वक्श्रोत्रयोरेकप्रकृतिकत्वे इन्द्रियमात्रस्याप्येकप्रकृतिकत्वमेव स्यात् । त्वक्श्रोत्रयोरेकप्रकृतिकत्वेऽपि सामग्रीभेदेन प्रतिनियतार्थत्ववदिन्द्रियमात्रस्यापि तत एव प्रतिनियतार्थत्वोपपत्तेरिति बाधकसद्भावात् कथं तदभाव इत्याशङ्कते **घ्राणादीनामिति** । **एकप्रकृतिकत्वम्** एकभूतकार्यत्वम् । एतदपि नास्माकमनिष्टमित्याह **अस्त्विति** । एकप्रकृतिकत्वे बाधकसद्भावे हि भवेदिदमनिष्टम् । न च तदस्तीत्यतो नेदमनिष्टमिति भावः । ननु कथं घ्राणादीनामेकप्रकृतिकत्वे बाधकाभावः । 'घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतवत् । रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वाल्लालावत् । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् प्रदीपवत् । स्पर्शनं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् व्यजनवातवत्' इत्यनुमानानामेव बाधकत्वादित्यतो युक्तिपादे वक्ष्यमाणरीत्या सिद्धसाधनत्वादिकलङ्कितत्वेन एतेषामाभासत्वेऽपि अङ्गीकृत्यानाभासत्वं बाधकसद्भावाभावाभ्यां वैषम्यात् बाधकाभावेन त्वक्श्रोत्रयोरेकप्रकृतिकत्वस्य, तद्भावाच्च घ्राणादीनामनेकप्रकृतिकत्वस्य, च सम्भवान्न प्रतिबन्दीग्रहो युक्त इत्याह **बाधकसद्भावे त्विति** । लीलावतीकारीयं बाधकमाशङ्कते **शब्द इति** । **विशेषगुणत्वे सतीति** । अत्रासिद्धिवारणाय त्वगिन्द्रियेति विशेषणम् । त्वगिन्द्रिये व्यभिचारवारणार्थं गुणत्वे सतीति । वायुसंयोगादौ व्यभिचारवारणाय विशेषेत्युक्तम् । न चैवमपि त्वगिन्द्रियस्पर्शे वायुपरमाण्वादिस्पर्शे च व्यभिचारः । स्पर्शेतरविशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वस्यैव हेतुत्वेन विवक्षितत्वात् । अत एव लीलावतीवर्धमानकृता एवमेव हेत्वर्थो वर्णित इति ध्येयम् । अप्रयोजकत्वेनैतद्दूषयति **नेति** । अप्रयोजकस्यापि साधकत्वेऽतिप्रसङ्गं चाह **अन्यथेति** । **घ्राणवेद्यत्वादिति** ।





घ्राणग्रहणमसिद्धिपरिहाराय कृतम् । अत्रापि विशेषगुणत्वे सतीत्यस्य विवक्षितत्वान्न घ्राणे तद्गतसङ्ख्यादौ व्यभिचार इत्यवधेयम् ।

**वा०र०**— बहिरिन्द्रियस्य ग्राह्येति मूले यदिन्द्रियं यं गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति व्याप्तिशरीरमभिप्रेतमिति **दर्शयन् दृष्टान्तमाह गन्धग्राहकस्येति** । अत्र मूले नियमादित्यनन्तरं श्रोत्रस्येत्यनुवर्तते । शब्दगुणवत्वप्राप्तेरिति शेषोऽभिमतः । अत एव तथापि न बहिरिन्द्रियत्वेन ग्राह्यसजातीयविशेषगुणवत्वसाधनं युक्तमिति टीकाकृद्वक्ष्यति । तेन शब्दस्य वायवीयत्व इत्यादिकं सङ्गतमिति ज्ञेयम् । **न चेन्द्रियान्तराग्राह्यस्यैव गुणस्येति** । न चेन्द्रियान्तराग्राह्य एव यो गुणः तद्ग्राहकत्वमिति अर्थे मनसि व्यभिचारानिवृत्तिः । तस्य तादृशसुखादिग्राहकत्वादिति वाच्यम् । एवकारस्य गुणस्यैवेत्यन्वयेन तादृशगुणमात्रग्राहकत्वमित्यर्थपर्यवसानेन मनसश्च तादृशगुणातिरिक्तात्माद्यनेकार्थग्राहकत्वेनाव्यभिचारात् । न चैवमसिद्धिपरिहारः । तादृशगुणमात्रग्राहकत्वं नाम तद्ग्राहकत्वे सति इन्द्रियान्तराग्राह्यगुणाग्राहकत्वम् । एवं च श्रोत्रे इन्द्रियान्तरग्राह्यगुणग्राहकत्वाभावेन तन्मात्रग्राहकत्वस्य सत्त्वेनासिद्धिपरिहारसम्भवात् । अत एव गुणत्वासिद्धौ वेत्यनेनोक्तस्यापि असिद्धिरभिधास्यते । एवं बाह्येन्द्रियाग्राह्यस्यैवेति विवक्षायामपि योज्यम् । **तथेति** । बाह्येन्द्रियान्तराग्राह्यत्वमित्यर्थः । तस्य च प्रकृतेऽपि सत्त्वान्नासिद्धिरित्याशयः । अनिर्वचनमेवोपपादयति **समवायस्येति** । पाठो प्रत्यासत्तीति लौकिकप्रत्यक्षस्येति बुद्ध्या विविच्य वर्तते जन्यत्वेन तेन रूपेण वक्तुं निर्वक्तुमशक्यत्वादित्यर्थः । निर्वक्तुमिति पाठस्तु स्पष्ट एव ।

**स्नेहेतीति** । स्नेहेतीति चक्षुषेषु विशेषस्नेहग्राहकत्वेऽपि स्नेहगुणयुक्तत्वाभावाद्व्यभिचार इत्यर्थः । **नायमिति** । रूपादिषु पञ्चसु मध्ये रूपग्राहकतद्युक्तत्वं चक्षुषोऽस्त्येव । न च स्नेहः पञ्चकप्रविष्टः । अतः तद्ग्राहकस्यापि न तद्गुणवत्वप्राप्तिः ज्ञानादिग्राहकमनसस्तद्गुणवत्वाभावादिदर्शनादित्यर्थः । **असिद्धीति** । चक्षुरादिपक्षकतैजसत्वाद्यनुमानेषु रूपस्यैवाभिव्यञ्जकत्वादित्यादिहेतुरूपत्वादेरपि व्यञ्जकतयोक्तहेतुसिद्धिपरिहाराय रूपादिष्विति विशेषपक्षेऽपाश्रयणेनासिद्धिवारकत्वं तस्येत्यर्थः । **व्यर्थत्वादिति** । हेतौ व्यभिचारवारकस्यैव विशेषणस्य सार्थक्यस्य च नैयायिकैरङ्गीकारेण व्याप्तिशरीरेऽपि तत्प्रवेशस्य व्यर्थत्वादित्यर्थः । युक्तिचरणेऽधिकं स्पष्टम् । **बधिराभावप्रसङ्ग इत्यत इति** । तद्रूपं बाधकमस्तीत्यत इत्यर्थः । एवमुत्तरत्रापि । **अत एवोत्तरवाक्यावतार इति** । बाधकस्य सद्भावात् कथं तदभाव इति वक्ष्यत इति ज्ञेयम् । बाधकसद्भावे हीत्युत्तरमूलानुसारेण भावमाह **एकप्रकृतिकत्व इति** । **तद्भावाच्चेति** । बाधकसद्भावाच्चेत्यर्थः । **न घ्राणे तद्गतेति** । गुणत्वविशेषणान्न घ्राणे विशेषपदाच्च न सङ्ख्यादाविति योज्यम् ।

**स०व्र०**— मा भूत् पृथिव्यादित्रयगुणः शब्दः वायुगुणस्तु भविष्यतीत्याह **किञ्चेति** । आकाशगुणस्य शब्दस्य सन्तानन्यायेन कर्णशष्कुलीसमवेतस्योपलब्धिपक्षेऽपि भेर्यादिषु ताडितेषु यावद्वेगमभिप्रतिष्ठमानः पवमानो निमित्तीभवतीत्यभ्युपगमात् तेन शष्कुलीसंयुक्तस्य पवनवर्तिनः शब्दस्य संयुक्तसमवायादुपलब्धिरुपपन्ना ।





द्वितीयादिशब्देष्वपि पवनस्य कारणत्वं शब्दमात्रस्योत्तरशब्दान्तरं भवत्येवं शब्दसन्तानावच्छेदप्रसङ्गादित्यवसेयम् । तथा च आहुः 'वायुरापाद्यते शब्दमि'ति । **तर्काश्चानुपपन्न इति** । वायुगुणस्य शब्दस्य वायावेव शब्दान्तरोत्पादपरम्परया श्रोत्रसन्निकर्षेणोपलम्भसम्भवादिति भावः । **शब्दस्य वायुगुणत्वे** बाधकतर्कमाशङ्कते **मैवमिति** । **प्रतिनियतार्थग्राहकत्वेनेति** । असर्वविषयत्वेनेत्यर्थः । **ग्राह्यसजातीयेति** । विशेषगुणवत्त्वस्यानियामकत्वे बहिरिन्द्रियाणां गुणत्वावान्तरजात्या ग्राह्यविजातीयविशेषगुणग्रहणविरहे नियामकाभावेन सर्वाणि सर्वग्राहकाणि स्युः(...)। एवमेव वा सर्वग्राहको न प्रथमोऽन्धबधिराद्यभावप्रसङ्गात् । न द्वितीयः तद्व्यावृत्तौ गुणान्तरानुपलम्भप्रसङ्गात् । तथा च श्रोत्रस्य शब्दग्राहकत्वेन **शब्दवत्त्वस्थितौ** शब्दस्य विशेषगुणत्वेन पवमानापवमानसाधारणत्वानुपपत्तौ श्रोत्रस्यावायवीयत्वे शब्दस्यापि वायवीयत्वानुपपत्तेरिति भावः । **श्रोत्रस्यापि तथात्वप्रसङ्गादिति** । वायवीयत्वप्रसङ्गादित्यर्थः । श्रोत्रस्य बहिरिन्द्रियत्वेन बहिरिन्द्रियस्य च ग्राह्यसजातीयविशेषगुणवत्त्वनियमेन शब्दवत्त्वे प्राप्ते शब्दस्य च वायुगुणत्वस्वीकारात् तद्वतः श्रोत्रस्य वायवीयत्वप्रसङ्ग इति भाव इति केचिद्भावमाहुः । यत्तावत्प्रतिनियतार्थग्राहकत्वं बहिरिन्द्रियत्वे हेतुत्वेनोक्तं तत्र प्रतिनियतार्थग्राहकत्वशब्देन किमुच्यते किमिन्द्रियान्तराग्राह्यग्राहकत्वम् । किं वेन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वमिति । पक्षद्वयेऽपि दूषणमाह **न प्रतीति** । एतेन असर्वविषयत्वमेव दूषितं भवति । प्रतिनियतार्थग्राहकत्वेन श्रोत्रस्य बहिरिन्द्रियत्वं दुःसाधनमित्युक्तम् । न हि बहिरिन्द्रियत्वेन ग्राह्यसजातीयविशेषगुणत्वमपि साधयितुं शक्यतेऽनैकान्त्यादित्याह **बहिरिति** । यदुक्तं शब्दस्य वायवीयत्वे श्रोत्रस्यापि तथात्वं प्रसज्यत इति तदयुक्तमिष्टत्वादेवेत्याह **श्रोत्रस्येति** । ननु श्रोत्रस्य वायवीयत्वे त्वगिन्द्रियस्येव स्पर्शग्राहकत्वमपि स्यात्, न शब्दमात्रग्राहकत्वमित्यत आह **सामग्रीभेदेनेति** । कर्णशष्कुल्यवच्छिन्नत्वादिरूपसामग्रीभेदेनेत्यर्थः । **घ्राणादीनामपीति** । यथा त्वगिन्द्रियश्रोत्रेन्द्रिययोरेव वायुभूतकार्यत्वं स्वीकृत्य प्रतिनियतार्थत्वं सामग्रीभेदेनोक्तं तथा घ्राणादीनामपीति वायवीयत्वमेवाङ्गीकृत्य प्रतिनियतार्थत्वं तत्तद्गोलकावच्छिन्नत्वादिसामग्रीभेदेनैवेत्यस्तु । एवं च घ्राणादीनां पार्थिवत्वादिस्वीकारो न युक्त इति भावः । एकप्रकृतिकत्वं एकभूतकार्यत्वम् । ननु कथं घ्राणादीनामेकप्रकृतिकत्वम्; तथात्वे चक्षुषो गत्वाग्राहित्वं घ्राणादेस्तदभाव इति विलक्षणस्वभावानुपपत्तेरित्यत आह **बाधकसद्भावे त्विति** । तर्ह्यस्माद्बाधकाच्चक्षुरेकं तैजसमस्तु इतराणि तु अगत्वाग्राहीणीति तेजोभिन्नभूतप्रकृतिकान्येव सन्त्वित्यर्थः । शब्दस्य वायवीयत्वेऽनुमानं बाधकं शङ्कते **शब्द इति** । चक्षुराद्यवेद्यत्वं स्पर्शे विद्यत इति तत्र व्यभिचारः तदर्थं त्वगित्युक्तम् । तथापि त्वगिन्द्रिये व्यभिचारः तदर्थं गुणत्वे सतीति । तथापि वायुसंयोगादौ, तदर्थं विशेषेति । अप्रयोजकत्वेन परिहरति **नेति** । अतिप्रसङ्गत्वलक्षणप्रतिकूलतर्कपराहतत्वं चेत्याह **अन्यथेति** ।

**विट्ठल०— हेतुद्वयमिति** । शब्दो न स्पर्शवद्विशेषगुण इत्यत्र **यद्धेतुद्वयमुक्तं** तदसिद्धम् । शब्दस्य **वायुगुणत्वे** वायुगतस्पर्शस्येव प्रत्यक्षत्वे सति कारणगुणपूर्वकत्वस्य **यावद्द्रव्यभावित्वस्य** च सम्भवादिति भावः । **तर्कश्चेति** । वायुगुणस्य शब्दस्य वायोर्गमनसद्भावेन तस्मिन्नेव शब्दान्तरोत्पादपरम्परया श्रोत्रसन्नि-





कर्षेणोपलम्भसम्भवात् यदिशब्दः स्पर्शवद्विशेषगुणः स्यात् तर्हि शब्दान्तरोत्पादपरम्परया श्रोत्रदेशमासन्नो नोपलभ्येतेति तर्कश्चानुपपन्न इत्यर्थः । शब्दस्य वायुगुणत्वे बाधकमाशङ्कते **न चैवं युक्तमिति** । कुत इत्यत आह **श्रोत्रस्येति** । **तथात्वप्रसङ्गादिति** । वायवीयत्वप्रसङ्गादित्यर्थः । श्रोत्रस्य बहिरिन्द्रियत्वेन न बहिरिन्द्रियस्य ग्राह्यस्वजातीयगुणत्वनियमेन शब्दग्राहकतया शब्दवत्त्वे प्राप्ते शब्दस्य च वायुगुणत्व-स्वीकारात् तद्वतः श्रोत्रस्य वायवीयत्वं स्यात् । ततश्च त्वगिन्द्रियवत्स्पर्शस्यापि ग्राहकत्वप्रसङ्ग इति भावः । ननु रूपादिषु पञ्चसु मध्ये यदिन्द्रियं गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति नियमस्याभिप्रेतत्वेन नोक्तव्यभिचार इति चेदस्तु तर्हि उक्तनियमः तथात्वे चोक्तरीत्या श्रोत्रस्य वायवीयत्वं स्यादिति तदप्यस्तु बाधकाभावादित्याह **श्रोत्रस्येति** । ननु श्रोत्रस्य वायवीयत्वे त्वगिन्द्रियवत्स्पर्शग्राहकत्वे च स्याद्वायवीयत्वाविशेषात् त्वगिन्द्रिय-स्यापि शब्दग्राहकत्वं स्यात् । तथा च श्रोत्रस्यैव शब्दग्राहकत्वं त्वच एव स्पर्शग्राहकत्वमिति प्रतिनियतार्थ-ग्राहकत्वं न स्यादित्यत आह **सामग्रीभेदेनेति** । वायवीयत्वाविशेषेऽपि कर्णशष्कुल्यवच्छिन्नत्वादिरूप-सामग्रीवैचित्र्येण प्रतिनियतार्थतोपपत्तिरिति भावः । ननु त्वगिन्द्रियश्रोत्रिययोरेकभूतकार्यत्वं स्वीकृत्य सामग्री-भेदेन प्रतिनियतार्थत्वे घ्राणादीनामपि तथैव वायुभूतकार्यत्वमङ्गीकृत्य प्रतिनियतार्थत्वं तत्तद्गोलकगतत्वादि-सामग्रीभेदेनेत्यपि वक्तुं शक्यत्वात् घ्राणादीनां पृथिव्यादिकार्यतावादो न स्यादित्याशयेन शङ्कते **घ्राणादीना-मिति** । एकप्रकृतिकत्वमेकोपादानकत्वं आपाद्यस्य अनिष्ठत्वमिति परिहरति **अस्त्विति** । कथमेकप्रकृतिकत्व-मङ्गीकर्तुं शक्यते । चक्षुषो गत्वाग्राहित्वं घ्राणादेः तदभाव इत्यादि विलक्षणस्वभावत्वानुपपत्तिरूपबाधक-सद्भावादित्यत आह **बाधकेति** । **तत एव** बाधकादेव । तथा च त्वक्श्रवसोरेकभूतकार्यत्वे इन्द्रियत्वाविशेषात् सर्वेषामपीन्द्रियाणामेकभूतकार्यत्वं स्यादिति तर्क आपादकत्वेनोक्तो अविशेषः सत्त्वादिवदप्रयोजकः स्वभाव-वैलक्षण्यस्य विद्यमानत्वादिति गत्यन्तरमुक्तं भवति । शब्दस्य वायवीयत्वेऽनुमानविरोधमाशङ्कते **शब्द इति** । असिद्धिवारणाय **त्वगिति** । त्वगिन्द्रिये व्यभिचारवारणाय **गुणत्वे सतीति** ।

**चषकः**— **असिद्धमिति** । उभयत्र विशेष्यदलाभावनिबन्धनमसिद्धत्वमिति भावः । **तर्कश्चेति** । श्रोत्रसविधं वायोरेवागमनेन वीचीतरङ्गन्यायेन वायोः सकाशाच्छब्दान्तरोत्पत्त्या वा शब्दश्रोत्रसन्निकर्षसम्भवात् शब्दोपलब्धिसम्भवादिति भावः । **तथात्वप्रसङ्गादिति** । वायवीयत्वप्रसङ्गादित्यर्थः । श्रोत्रधर्मिकबहिरिन्द्रियत्व-विधेयकानुमित्यौपयिकत्वेनाभिप्रेतं प्रतिनियतार्थग्राहकत्वमपहस्तयते **प्रतीति** । व्यभिचारनिरूपकाधिकरणे मनसीन्द्रियान्तराग्राह्यसुखादिग्राहकत्वसत्त्वादिति भावः । **असिद्धेरिति** । चक्षुरादिरूपेन्द्रियान्तरग्राह्यरूपादि-ग्राहकत्वस्यापि मनसि सत्त्वेन तद्ग्राहकत्वाभावविशेषिततदग्राह्यग्राहकत्वरूपपरिष्कृतहेत्वभावेन तत्रानैकान्त्य-व्युदासेऽपि पक्षीकृतश्रोत्रे चक्षुरादिग्राह्यसत्तागुणत्वादिग्राहकत्वसत्त्वेन तदभावघटितहेतोरसत्त्वेन असिद्धिर्दुर्वारा इत्याशयः । **व्यभिचारादिति** । व्यभिचारनिरूपकाधिकरणे चक्षुषि बहिरिन्द्रियत्वहेतोः सत्त्वादिति भावः । श्रोत्रस्य वायवीयत्वे त्वगिन्द्रियस्येव स्पर्शग्राहकत्वापत्त्या प्रतिनियतार्थग्राहकत्वानुपपत्तिरित्यतोऽभिधत्ते **सामग्रीभेदेति** । त्वक्श्रोत्रयोर्वायवीयत्वावैशेष्येऽपि व्यक्तिभेदेनादृष्टवैचित्र्येण वा प्रतिनियतार्थतोपपद्यत इति





भावः । **एवं** व्यक्तिभेदेन सामञ्जस्योपपादने । **एकप्रकृति(क)त्वं** बहुव्रीहेर्भावप्रत्ययः एकभूतकार्यत्वम् । **अस्त्विति** । 'शरीरं पार्थिवं ज्ञेयं इन्द्रियाण्यौदकानि तु । तैजसः कोष्ठगो वह्निः छिद्रमाकाशसम्भवम्' इति निखिलेन्द्रियाणामौदकत्वोक्तेरिति भावः । अथ घ्राणं पार्थिवं रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुंकुम-गन्धादिव्यञ्जकघृतवत् । रसनमौदकं रूपाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् लालावत् । चक्षुस्तैजसं स्पर्शाद्यव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् प्रदीपवत् । स्पर्शनं वायवीयं शब्दाद्यव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वा-द्व्यजनवातवदिति बाधकानां स्फुटत्वादित्यत आह **बाधकसद्भाव इति** । **अन्या गतिरिति** । तत्तद्भूत-प्रकृतिकत्वरूपेत्यर्थः । लीलावतीप्रदर्शितं बाधकं निराचिकीर्षुराशङ्कते **शब्द इति** । त्वगिन्द्रियजनितवेदना-विषयत्वं विशेष्यदलार्थः । तत्र जन्यत्वान्तस्योपादानमसिद्धेः, त्वगिन्द्रियेऽनैकान्त्यस्य व्युदसनाय विशेषण-दलस्य, तत्र च वायवीयसंयोगसङ्ख्यापरिमाणादिषु तदपहस्तयितुं विशेषपदस्य । एवमपि त्वगिन्द्रियस्पर्श-वायुपरमाण्वादिस्पर्शे चानैकान्त्यमाशङ्कमानाः स्पर्शेतरत्वविशेषणदलस्थाने प्रत्यक्षत्वे सतीति वा निवेश्य समादधति **घ्राणावेद्यत्वादिति** । विशेषगुणत्वे सतीति अत्रानुषञ्जनीयम् । तेन हेतोर्व्यभिचारनिरूपक-घटादिसाधारण्येऽपि न क्षतिः । घटादिगतसङ्ख्यादौ तन्निरासाय विशेषपदम् ।

**॥ इति शब्दस्य वायुगुणत्वेऽनुपपत्तिः ॥**

* * *

**॥ तत्र शब्दस्य आत्मगुणत्वेऽनुपपत्तिः ॥**

**१३९ सु०— किञ्च 'आत्मगुणः कस्मान्न स्यात्, धर्मादीनामप्रत्यक्षत्वेऽपि सुखादीनां प्रत्यक्षत्ववदस्य बाह्येन्द्रियप्रत्यक्षत्वोपपत्तेः । अन्यथा प्रत्यक्षत्वेनाष्टद्रव्यातिरिक्तगुणोऽपि न स्यात् । तत्सिद्धौ बाधः । असिद्धावप्रसिद्धविशेषणते'ति चेन्न परिशेषानुमानेऽपि साम्यात् ।**

**परि०**— ननूक्तमात्मगुणत्वाभावे बाह्येन्द्रियप्रत्यक्षत्वादिहेतुचतुष्टयमित्यतः सर्वं क्रमेण निरस्यन् आद्यं निराह **धर्मादीनामप्रत्यक्षत्वेऽपीत्यादिना** । **तत्सिद्धाविति** । अष्टद्रव्यातिरिक्त-द्रव्यसिद्धौ शब्दगुणकत्वेनैव तस्य सिद्ध्या धर्मिग्राहकमानबाधः, 'शब्दो नाष्टद्रव्यातिरिक्तद्रव्यगुणः प्रत्यक्षत्वात् तदीयपरिमाणवत्' इत्यनुमानस्य । तादृशद्रव्यासिद्धावप्रसिद्धविशेषणतेति शङ्कार्थः । **परिशेषेति** । तदयं प्रमाणार्थ इत्यादिना प्रागुक्तपरिशेषेत्यर्थः । **साम्यादिति** । तत्सिद्धौ सिद्धसाधनं असिद्धावप्रसिद्धविशेषणतेति दोषसाम्यादित्यर्थः ।





**यादु॰— तत्सिद्धौ बाध इति** । शब्दोऽष्टद्रव्यातिरिक्तद्रव्यगुणो न भवति प्रत्यक्षत्वादित्यत्र अष्टद्रव्यातिरिक्तं द्रव्यं सिद्धं न वा । आद्ये बाधः । शब्दगुणकत्वेनैव तत्सिद्धेः । द्वितीयेऽप्रसिद्धविशेषणतेत्यर्थः । **परिशेषानुमानेऽपीति** । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रित इति त्वदीयपरिशेषानुमानेऽपि अष्टद्रव्यातिरिक्तं द्रव्यं सिद्धं न वा । आद्ये **सिद्धसाध्यता** । **द्वितीयेऽप्रसिद्धविशेषणतेति साम्यादित्यर्थः** ।

**वं॰प॰— धर्मादीनामिति** । यथा आत्मनिष्ठगुणेष्वपि द्वैविध्यं कल्पितमेवं शब्दरूपस्याप्यात्मगुणस्य बाह्येन्द्रियप्रत्यक्षत्वमपि किं न स्यात् । अन्यथा य आत्मगुणः सुखादिः स प्रत्यक्षो दृष्टः । धर्मादीनां च तदभावादात्मगुणत्वं न स्यादित्यपि वक्तुं शक्यत्वादित्यर्थः । **अन्यथा** बाह्येन्द्रियप्रत्यक्षत्वमङ्गीकृत्य आत्मगुणत्वानङ्गीकारे । **प्रत्यक्षत्वेनेति** । बाह्येन्द्रियप्रत्यक्षत्वेनेत्यर्थः । **साम्यादिति** । अतिरिक्तद्रव्यसिद्धौ सिद्धसाध्यताऽसिद्धावप्रसिद्धविशेषणतेति साम्यादित्यर्थः ।

**आनन्दः—** नन्वात्मगुणत्वे सुखादिवद्बाह्यप्रत्यक्षत्वं न स्यादित्यत आह **धर्मादीनामिति** । तथा चात्मगुणत्वाविशेषेऽपि **केषाञ्चिदप्रत्यक्षत्वे** केषाञ्चित्प्रत्यक्षत्वं तथात्मगुणानामेव केषाञ्चिद्बाह्यप्रत्यक्षत्वमपि स्यादित्यर्थः । **अन्यथेति** । एवं बाह्यप्रत्यक्षत्वेनात्मगुणत्वानङ्गीकार इत्यर्थः । **तत्सिद्धाविति** । अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ एव तत्सिद्धिः तेन तद्गुणत्वेनैव सिद्धिरिति तदभावे साध्यमाने बाध इत्यर्थः । **साम्यादिति** । अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ **सिद्धसाधनत्वात्** । अन्यथा त्वप्रसिद्धविशेषणतेत्यर्थः ।

**शे॰वा॰—** आत्मगुणत्वमभ्युपेत्य तत्रोक्तदोषं परिहर्तुमाह **किञ्चेति** । ननु बाह्येन्द्रियप्रत्यक्षत्वान्नात्मगुणत्वमित्यतः **तथा सति** सुखादीनामप्यात्मगुणत्वं न स्यात् । सुखादयो नात्मगुणाः प्रत्यक्षत्वात् रूपादिवत् व्यतिरेकेण **धर्मादिवत्** इत्यनुमानसम्भवात् । न च अप्रयोजकत्वम् । बाह्येन्द्रियग्राह्यत्वेऽप्यात्मगुणत्वे बाधकाभावेनाप्रयोजकत्वसाम्यादित्याह **धर्मादीनामिति** । किञ्च बाह्येन्द्रियप्रत्यक्षत्वेन आत्मगुणत्वाभावसाधनम् अनुपपन्नमेव । **तथा सति** तत एव रूपादिवदाकाशगुणत्वाभावस्यापि साधयितुं शक्यत्वेन तद्गुणत्वाभावस्याप्यापातादित्याह **अन्यथेति** । आकाशस्याद्याप्यसिद्धत्वाभिप्रायेण अष्टद्रव्यातिरिक्तेत्येवोक्तमित्यवधेयम् । अष्टद्रव्यातिरिक्तं द्रव्यं सिद्धमसिद्धं वा । आद्ये सिद्धिः शब्दगुणत्वेनैवेति बाधितविषयत्वम् । न चेदप्रसिद्धविशेषणत्वमित्याशङ्कते **तदिति** । **परीति** । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रित इत्यत्रापि अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ सिद्धसाधनत्वम् । अन्यथाऽप्रसिद्धविशेषणत्वमिति साम्यादित्यर्थः ।

**वा॰र॰— व्यतिरेकेण** धर्मादिवच्चेति पाठः । आकाशगुणोऽपि न स्यादित्यनुक्तौ निमित्तमाह **आकाशस्येति** । अष्टद्रव्यातिरिक्तत्वरूपेण सिद्धावपि तद्द्रव्यमाकाश इत्यस्यासिद्धेरिति भावः ।

**स॰व्र॰—** आत्मगुणत्वमभ्युपेत्य दोषं परिहर्तुमाह **किञ्चेति** । ननु बाह्येन्द्रियप्रत्यक्षत्वान्नात्मगुणत्वमित्युक्तम्, तत्राह **धर्मेति** । अन्यथा सुखादयो नात्मगुणाः प्रत्यक्षत्वात् रूपादिवदित्यपि प्रसङ्गादिति भावः ।





यदि बाह्येन्द्रियप्रत्यक्षत्वेनात्मगुणत्वं नास्तीत्युच्यते तदाकाशगुणत्वमपि न स्यादित्याह **अन्यथेति** । आकाशस्येदानीमप्यसिद्धत्वात् अष्टद्रव्यातिरिक्तेत्युक्तम् । नन्वष्टद्रव्यातिरिक्तद्रव्यगुणो न भवति बाह्येन्द्रियप्रत्यक्षत्वादित्यत्राष्टद्रव्यातिरिक्तद्रव्यं सिद्धं न चेदप्रसिद्धविशेषणता सिद्धं चेत् सिद्धिः शब्दगुणवत्त्वेनैवेति बाधितविषयत्वमिति शङ्कते **तदिति** । शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रित इत्यत्राष्टद्रव्यातिरिक्तद्रव्यं सिद्धं चेत् सिद्धसाधनता । असिद्धं चेदप्रसिद्धविशेषणतेति साम्येन परिहरति **नेति** ।

**विट्ठल०**— वायुगुणे सङ्ख्यादौ तद्वारणाय विशेषपदं तत्र तावदात्मगुणत्वाभावे साधकमाद्यं हेतुमप्रयोजकत्वेन दूषयति **धर्मादीनामिति** । **अन्यथेति** । अप्रयोजकेनापि प्रत्यक्षत्वेन शब्दस्यात्मगुणत्वाभावसाधने शब्दोऽष्टद्रव्यातिरिक्तद्रव्यगुणो न भवति । प्रत्यक्षत्वाद्रूपादिवदिति । तेनैव प्रत्यक्षत्वादिहेतुना अष्टद्रव्यातिरिक्तद्रव्यगुणत्वमपि न स्यात् । ततश्च नाकाशसिद्धिरिति भावः । **तत्सिद्धाविति** । अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ शब्दगुणकत्वेनैव तस्य सिद्ध्या धर्मिग्राहकमानबाधः । असिद्धौ शब्दोऽष्टद्रव्यातिरिक्तद्रव्यगुणः प्रत्यक्षत्वात् तदीयरूपादिवदित्यनुमानस्याप्रसिद्धविशेषणतेति शङ्काभिप्रायः । **परिशेषानुमानेऽपीति** । त्वदीयपरिशेषानुमानेऽप्यष्टद्रव्यातिरिक्तं द्रव्यं सिद्धं न वा । आद्ये सिद्धसाधनता, द्वितीये अप्रसिद्धविशेषणतेति साम्यादित्यर्थः ।

**चषकः**— **तत्सिद्धौ** अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ । **असिद्धौ** तदनिश्चये । **परिशेषानुमाने** शब्दधर्मिकाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसाध्यकानुमाने । तादृशद्रव्यं सिद्धमसिद्धं वा । आद्ये सिद्धसाधनं, द्वितीये अप्रसिद्धविशेषणतेत्यर्थः ।

**॥ तत्रापि आत्मान्तरग्राह्यत्वहेतोरर्थद्वयस्याप्यनुपपत्तिः ॥**

**॥ तत्राप्यादौ अनेकप्रतिपत्तृसाधारणत्वमिति प्रथमार्थानुपपत्तिः ॥**

**१४० सु०— आत्मान्तरग्राह्यत्वस्य च कोऽर्थः । अनेकप्रतिपत्तृसाधारणत्वमिति चेन्न सन्दिग्धासिद्धेः । सन्तानानुमानेन मूलप्रत्यभिज्ञानान्नैव(ष) दोष इति चेत्तर्हि सुखादीनामप्यनुमानेनानेकप्रतिपत्तृसाधारण्ये(णत्वे)नानैकान्तिकत्वं स्यात्, आत्मसमवेतस्यैव वीचीतरङ्गन्यायेन मूलप्रत्यभिज्ञानोपपत्तौ विपक्षे बाधकाभावाच्च ।**

**परि०**— आत्मान्तरग्राह्यत्वादिति द्वितीयहेतुं निराह **आत्मान्तरेति** । **सन्दिग्धासिद्धेरिति** । एकेन श्रुत एव शब्दोऽन्येनापि श्रुत इति निश्चयासम्भवात् । स्तम्भकुम्भादिवत् स्थायित्वे तत्स्यात् । न चैवम् । तस्य आशुतरविनाशित्वेन वीचीतरङ्गन्यायेन शब्दान्तराण्युत्पाद्य पूर्वपूर्वशब्दानां नष्टत्वेन अन्यान्यशब्दानामेव पुरुषान्तरैर्ज्ञातत्वसम्भवादिति भावः । ननु पुरुषान्तरैरन्यान्य-





शब्दश्रवणेऽपि तज्जनकशब्दपरम्परया मूलशब्दज्ञानमस्तीति मूलभूतशब्दप्रतिपत्तिः सर्वसाधारणीति शङ्कते **सन्तानेति** । **प्रत्यभिज्ञानादिति** । शङ्खशब्द एव मयापि श्रुत इति ज्ञानादित्यर्थः । **सुखादीनामप्यनुमानेनेति** । मुखप्रसादादिना चैत्रादिगतसुखस्यानेकैरनुमातुं शक्यत्वादिति भावः । **आत्मसमवेतस्यैवेति** । आत्मनोऽपि विभुत्वादिति भावः । एतेन तृतीयहेतुरप्यप्रयोजकत्वेन निरस्तो ध्येयः ।

**यादु०— आत्मान्तरग्राह्यत्वस्य चेति** । तत्प्रतिपादकवाक्यस्येत्यर्थः । तेनार्थस्य कोऽर्थ इति कथं प्रश्न इति शङ्कानवकाश इति ध्येयम् । उक्तव्याख्यानद्वयमध्ये किं व्याख्यानमिति प्रश्नाशयः । प्रथमं व्याख्यानमाशङ्क्य निराकरोति **अनेकेत्यादिना** । **सन्दिग्धेति** । शब्दस्यात्मगुणत्ववादिमते सर्वैरपि स्वस्वसमवेतशब्दस्यैव ग्रहेणात्मान्तरस्थस्याग्रहेण अनेकप्रतिपत्तृसाधारणत्वरूपहेतोरनिश्चयेन सन्दिग्धासिद्धेरित्यर्थः । ननूक्तरीत्या तैस्तैरात्मभिः श्रूयमाणे भेरीशब्देऽनेकप्रतिपत्तृसाधारण्यानिश्चयेऽपि तत्सन्तानलक्षणकार्येण तदारम्भकमूलशब्दानुमितिरनेकेषां शब्दप्रतिपत्तृणामविशिष्टा । तथा चैकस्यैव प्रथमोत्पन्नस्य अनेकसन्तानमूलभूतस्य भेरीशब्दस्यानुमित्या अनेकप्रतिपत्तृसाधारण्यात् न असिद्धिरिति शङ्कते **सन्तानानुमानेनेति** । सन्तानलक्षणानुमानेनेत्यर्थः । **प्रत्यभिज्ञानादिति** । तथा च य एव भेरीशब्दः त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञा उक्तरीत्या मूलशब्दविषयैव न श्रूयमाणशब्दविषया अतस्ताद्विरोधोऽपि नेति भावः । अनुमानेन अनेकप्रतिपत्तृसाधारण्यमनैकान्तिकमित्याह **तर्हीति** । **आत्मसमवेतस्यैवेति** । यद्युक्तरीत्या सन्तानानुमानेन मूलस्य प्रत्यभिज्ञानमेवानेकप्रतिपत्तृसाधारण्यमित्युच्यते तर्हीदं शब्दस्यात्मगुणत्वेऽप्युपपन्नम् । स्वस्वात्मोत्पन्नशब्दसन्तानमूलशब्दस्यैवानुमानेन अनेकेषां प्रत्यभिज्ञानोपपत्तेः । तथा च अप्रयोजकतेति भावः ।

**वं०प०— सन्दिग्धासिद्धेरिति** । वीचीतरङ्गन्यायपक्षे य एव त्वया श्रुतः शब्दः स एव मयाऽपीत्यस्य कथञ्चिदभ्रान्तित्वेऽपि कदम्बमुकुलन्यायपक्षे दशदिक्षूत्पद्यमानानां शब्दानां भिन्नानामेव दशदिक्ष्ववस्थितैः पुरुषैर्ग्रहणात् तत्प्रत्यभिज्ञाया भ्रमत्वस्यापि सम्भवादिति भावः । **सुखादीनामपीति** । मूलशब्दः कस्यचित्प्रत्यक्षः । तदितरस्य तु सन्तानलक्षणकार्येण मूलशब्दस्यानुमानमित्येवंरूपमेव चेदनेकप्रतिपत्तृसाधारण्यमात्मगुणत्वाभावे हेतुत्वेनोच्यते तर्ह्येकस्यात्मनः सुखमुत्पन्नं तस्यैव साक्षात्सुखानुभवो भवति । तदितरस्य तु तदीयमुखविकासादिना सुखानुमानं भवतीति तत्राप्येतादृशानेकप्रतिपत्तृसाधारण्यस्य विद्यमानत्वेऽप्यात्मगुणत्वस्यैव सत्त्वेन सुखे व्यभिचार इत्यर्थः ।

**आनन्दः— सन्दिग्धासिद्धेरिति** । य एवैकेन स्वकर्णशाष्कुल्यवच्छिन्ने प्रदेशे श्रुतः स एवापरेणेत्यत्र नियामकाभावेन हेतोः सन्दिग्धासिद्धिरित्यर्थः । सर्वैः स्वस्वकर्णशाष्कुल्यवच्छिन्नप्रदेशश्रुतशब्दानां मूलभूतशब्द-





परम्परानुमानेनाद्यस्य मूलभूतशब्दस्यैकत्वप्रत्यभिज्ञानान्नायं हेतुः सन्दिग्धासिद्ध इति शङ्कते **सन्तानेति** । आत्मसमवेतत्वेऽपि सन्तानानुमानेन मूलप्रत्यभिज्ञानसम्भवादप्रयोजको हेतुरित्याह **आत्मेति** ।

**श्रीनिधि०**— ननु शब्दोनात्मस्य (?) समवेतः । वीचीतरङ्गन्यायेन मूलप्रत्यभिज्ञानविषयत्वा-द्व्यतिरेकेण सुखादिवदिति चेत् तत्राह **आत्मसमवेतस्यैवेति** । **विपक्षे बाधकाभावाच्चेति** । हेतुनिराससमुच्चये चशब्दः ।

**शे०वा०**— शब्दस्य आत्मगुणत्वाभावसाधकतयोपन्यस्तं हेत्वन्तरमपि निराकरोति **आत्मान्तर-ग्राह्यत्वस्य चेति** । तद्वचनस्येत्यर्थः । उक्तव्याख्यानद्वयापेक्षया किंशब्दः । अत्राद्यं व्याख्यानमाशङ्कते **अनेकेति** । **सन्दिग्धासिद्धेरिति** । य एवैकेन स्वकर्णशष्कुल्यवच्छिन्नप्रदेशे श्रुतः स एवापरेणापीत्यत्र नियामकाभावेन हेतोः सन्दिग्धत्वादित्यर्थः । आत्मगुणत्ववादिमते सर्वैरपि स्वस्वसमवेतशब्दस्यैव ग्रहणेन आत्मान्तरस्थस्याग्रहणेन अनेकप्रतिपत्तृसाधारणत्वहेतोः सन्दिग्धत्वादिति भावः । शब्दस्यात्मगुणत्वमद्या-प्यसिद्धमिति निश्चितासिद्धत्वसम्भवाभिप्रायेण वा सन्दिग्धत्वोक्तिरिति ध्येयम् । सर्वैरपि स्वस्वकर्णशष्कुल्यव-च्छिन्नप्रदेशस्थशब्दानामेव श्रवणेऽपि शब्दः शब्दपूर्वकः शब्दत्वादित्येवं शब्दपरम्परानुमानेनाद्यस्य मूलभूतस्य शब्दस्य प्रत्यभिज्ञानात् शब्दस्यानेकप्रतिपत्तृसाधारणत्वसिद्धिरिति शङ्कते **सन्तानेति** । यद्वा सन्तानः शब्दपरम्परालक्षणः तल्लक्षणं यदनुमानं तेन मूलभूतस्य प्रथमोत्पन्नस्य शब्दस्य ज्ञानसम्भवेन, सन्तानिनोऽनेक-प्रतिपत्तृसाधारणत्वेन तत्सन्तानस्याप्यनेकप्रतिपत्तृसाधारणत्वसिद्धेः न सन्दिग्धासिद्धत्वमित्याशयः । अनुमानेन अनेकप्रतिपत्तृसाधारणत्वमनैकान्तिकमिति भावेन परिहरति **तर्हीति** । शब्दस्यात्मगुणत्वेऽपि सन्तानानुमानेन मूलप्रत्यभिज्ञानसम्भवादप्रयोजको हेतुरित्याह **आत्मेति** । यद्युक्तरीत्या सन्तानानुमानेन मूलशब्दस्य प्रत्यभि-ज्ञानमेवानेकप्रतिपत्तृसाधारण्यमित्युच्यते, तर्ह्येतच्छब्दस्यात्मगुणत्वेऽप्युपपन्नम् । स्वस्वात्मसमवेतशब्दसन्तानस्य अन्यसमवेतसन्तान्यनुमापकत्वेऽतिप्रसङ्गेन तदनुपपत्त्या स्वस्वात्मशब्दसन्तानेन स्वात्मसमवेतस्यैव मूलभूतस्य प्रत्यभिज्ञानसम्भवेन आत्मगुणत्वेऽप्यनेकप्रतिपत्तृसाधारणत्वसम्भवादिति भावः । ननु स्वस्वात्मोत्पन्नशब्द-सन्तानस्यैव तदनुमापकत्वे सन्तानिनोऽनेकप्रतिपत्तृसाधारणत्वेऽपि सन्तानस्यानेकत्वेन न तस्यानेकप्रतिपत्तृ-साधारणत्वसिद्धिरित्यत उक्तं **वीचीतरङ्गन्यायेनेति** । न्यायार्थः पूर्वमेव वर्णितः । तथा च कदम्बमुकुल-न्यायेनानेकशब्दारम्भपक्षे प्रत्यभिज्ञाऽसम्भवेऽप्युक्तन्यायेन सर्वदिक्ष्वेकशब्दारम्भपक्षे तु युज्यते प्रत्यभिज्ञानमिति भावः ।

**वा०र०**— प्रतिनियतार्थग्राहकशब्दस्येतिवत् अत्र शब्दपदप्रयोग आवश्यक इति भावेन व्याख्याति **तद्वचनस्येत्यर्थ इति** । **किंशब्द इति** । क इति किंशब्द इत्यर्थः । अन्ये त्वात्मान्तरग्राह्यत्वादित्यनेक-प्रतिपत्रित्यादिना अनूद्य दूषितः किरणावल्यां तदनुसारेण दूषणं, मूले यत्रस्थ इत्यादिना प्रागुपन्यस्तव्याख्यानं किरणावलीकारस्य, उभयं सङ्गृह्य मूले विकल्पादिति ज्ञेयम् । **अत्रेति** । अनेकप्रतिपत्तृसाधारणं ग्राहकस्थत्वेन





ग्रहणमित्यर्थद्वय इत्यर्थः । प्रकारान्तरेण व्याचष्टे **आत्मेति** । **स्वस्वसमवेतेति** । स्वस्वसुखादिवदिति शेषः । **भाव इति** । असिद्धेरित्यंशस्य भाव इत्यर्थः । अत्र पक्षे सन्दिग्धत्वे निमित्तमाह **शब्दस्यात्मेति** । **अभिप्रायेण वेति** सन्दिग्धत्वोक्तिः । शब्दस्यात्मगुणत्वमद्याप्यसिद्धमिति निश्चितासिद्ध्यसम्भवाभिप्रायेणेति वा ज्ञेयमिति योजना । तेन भाव इत्यस्यापि योजनान्तःप्रदेशात्मगुणत्वेत्यारभ्य ज्ञेयमित्यन्तस्य पक्षान्तरत्वप्राप्तिर्युक्तेति ध्येयम् । प्रथमव्याख्यानमनुरुध्योत्तरवाक्यमवतारयति **सर्वैरपीति** । सन्तानस्यानुमानेनेत्यर्थमाश्रित्य व्याचष्टे **शब्दपरम्परानुमानेति** । शब्दपरम्परया अनुमानेनेत्यर्थः । उत्तरपक्षेऽर्थभेदः स्पष्टः । **अनुमानेनानेकेति** । अनुमानेन यदनेकेत्यादि योजना । **तर्ह्येतदिति** । उक्तरूपेणानेकप्रतिपत्तृसाधारणत्वमित्यर्थः । स्वस्वात्मसमवेतेत्यादि भाव इत्यन्तसावधानमनसा व्याख्येयमस्ति ।

**स०व्र०**— आत्मान्तराग्राह्यत्वादिति हेत्वन्तरं विकल्प्य दूषयति **आत्मेति** । तत्प्रतिपादकवचनस्येत्यर्थः । तेनार्थस्य कोऽर्थ इति शङ्काऽनवकाश इति शङ्का परिहृता भवतीति ध्येयम् । व्याख्यानद्वयापेक्षया किंशब्दः । **सन्दिग्धासिद्धेरिति** । य एव त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञायां नियामकाभावादेकस्मिन्नेव श्रूयमाणशब्देऽनेकप्रतिपत्तृसाधारण्यं सन्दिग्धम् । न हि सर्वैः एक एव शब्दः श्रूयते । कैश्चित् द्वितीयादेरन्यैश्चरमस्य ग्रहणादिति भावः । यद्वा सर्वैरपि स्वसमवेतशब्दस्यैव ग्रहणेनात्मान्तरस्थस्याग्रहणात् अनेकप्रतिपत्तृसाधारणत्वहेतोः सन्दिग्धासिद्धत्वादित्यर्थः । शब्दस्यात्मगुणत्वस्याद्याप्यसिद्धत्वेन निश्चितासिद्धेः असम्भवेऽपि सन्दिग्धासिद्धेः सम्भवादिति भावः । ननूक्तरीत्या श्रूयमाणे एकस्मिन्शब्दे अनेकप्रतिपत्तृसाधारण्यानिश्चयेऽपि तत्सन्तानलक्षणकार्यात् तदारम्भकमूलशब्दानुमितिरनेकेषां शब्दस्य प्रतिपत्तृणामविशिष्टा । तथा च अनेकानुमितिविषयस्यैकस्यैव मूलशब्दस्यानेकप्रतिपत्तृसाधारण्यात् न असिद्धिरित्याशङ्कते **सन्तानानुमानेति** । सन्तानलक्षणानुमानेनेत्यर्थः । **मूलप्रत्यभिज्ञानादिति** । य एव त्वयाऽनुमितः स एव मयापीति प्रत्यभिज्ञानादित्यर्थः । **तर्हीति** । अनुमानेनानेकप्रतिपत्तृसाधारणत्वमनैकान्तिकमिति भावः । **आत्मसमवेतस्यैवेति** । यद्युक्तरीत्या सन्तानानुमानेन मूलस्य प्रत्यभिज्ञानमेवानेकप्रतिपत्तृसाधारण्यमित्युच्यते तर्हीदं शब्दस्यात्मगुणत्वेऽप्युपपन्नमित्यप्रयोजकतेत्यर्थः । वीचीतरङ्गन्यायेनेत्यनन्तरं सन्तानानुमानादिति शेषः । तथा च सर्वदिक्ष्ववस्थितेः प्रतिपत्तृभिः तरङ्गसन्तानलक्षणकार्येण तदारम्भकमूलतरङ्गोऽनुमीयते एवं मूलशब्दोऽपीत्युक्तं भवति । अत्रात्मगुणस्यैव सन्तानानुमानात् मूलप्रत्यभिज्ञोपपत्तावित्येव वक्तव्ये यदात्मसमवेतस्यैव वीचीतरङ्गन्यायेनेति वचनं तच्छ्रोत्रस्याकाशात्मकत्वेन शब्दस्यात्मगुणत्वे श्रोत्रेण सन्निकर्षाभावात् कथं तद्ग्रह इति विपक्षे बाधकशङ्कापरिहारायेति ज्ञातव्यम् । तेन कर्णशष्कुल्यवच्छिन्न एवात्मा श्रोत्रम् । वीचीतरङ्गन्यायेन तत्रोत्पन्नाः शब्दाः । समवायसन्निकर्षेण तद्ग्रह इत्यर्थसूचनात् ।

**विट्ठल०**— द्वितीयं हेतुं निराह **आत्मान्तरग्राह्यत्वस्य चेति** । तद्वाक्यस्येत्यर्थः । **सन्दिग्धासिद्धेरिति** । एकस्मिन्नेव श्रूयमाणे शब्दे अनेकप्रतिपत्तृसाधारण्यं सन्दिग्धम् । ननु य एव शब्दः त्वया श्रुतः





स एव मयापीत्यनुसन्धानान्न सन्दिग्धत्वमिति चेन्न । तस्यापि भ्रमत्वसम्भवात् वीचीतरङ्गन्यायेन शब्दान्तराण्युत्पाद्य नश्यमानानां शब्दानां मध्ये कैश्चित्पुरुषैर्द्वितीयादीनां अन्यैस्तदन्येषामपरैश्चरमाणामित्येवं ग्रहणादिति भावः । ननूक्तरीत्या श्रूयमाणे शब्देऽनेकप्रपतृसाधारण्यनिश्चयेऽपि श्रूयमाणशब्दस्य कार्यत्वात् तत्कारणमस्ति । तस्याप्येवमिति परम्परानुमानेन सर्वमूलभूतस्य य एव त्वयानुमितः स एव मयापीति प्रत्यभिज्ञानसद्भावात् तस्यानेकप्रतिपत्तृसाधारण्यमस्त्येवेति शङ्कते **सन्तानेति** । **सुखादीनामपीति** । देवदत्तगतसुखस्य मुखप्रसादादिना अनेकैरनुमातुं शक्यत्वे नानेकप्रतिपत्तृसाधारण्यरूपात्मान्तरग्राह्यत्वस्य हेतोः तत्र प्राप्त्यानैकान्तिकत्वं स्यादित्यर्थः । **आत्मसमवेतस्यैवेति** । यथा वीचीतरङ्गन्यायेन सर्वदिक्ष्ववस्थितैस्तरङ्गप्रतिपत्तृभिः तरङ्गसन्तानलक्षणकार्येण तदारम्भकमूलतरङ्गोऽनुमीयते । एवं सन्तानानुमानमूलप्रत्यभिज्ञानमेवानेकप्रतिपत्तृसाधारण्यम् । एवंविधं च साधारण्यं विभुत्वादाकाशस्य तत्समवेतत्व एव शब्दस्य सम्भवतीति यद्युच्यते तर्हि शब्दस्यात्मगुणत्वेऽपीदमुपपन्नम् । आत्मनोऽपि विभुत्वे तत्समवेतस्यैव शब्दस्योक्तन्यायात्सन्तानानुमानेन मूलप्रत्यभिज्ञानोत्पत्तेः । एवं च शब्दस्यात्मगुणत्वेऽपि बाधकाभावादप्रयोजको हेतुरिति भावः । ग्राहकस्थत्वेन ज्ञातृपुरुषगतत्वेन तदसिद्धमिति आत्मगुणत्वाङ्गीकारिभिः कर्णशष्कुल्यवच्छिन्नात्मगतस्यैव शब्दस्य ग्रहणाङ्गीकाराद्ग्राहकात्मस्थत्वेनाग्रहणमसिद्धिमिति भावः ।

**चषकः**— **आत्मान्तरग्राह्यत्वस्य** हेतुविभक्त्यन्तवाक्यस्य । **सन्दिग्धासिद्धेरिति** । शब्दस्यात्मगुणत्वमुपगच्छतां नये सुखादिवत् तत्तदात्ममात्रवेद्यत्वोपगत्या अनेकप्रतिपत्तृसाधारण्यरूपहेतोः सन्दिग्धासिद्धेरित्यर्थः । **सन्तानानुमानेति** । सन्तानरूपकार्येणानुमिततदारम्भकमूलीभूतशब्दस्यानेकप्रतिपत्तृसाधारण्यान्नोक्तक्षत्यवकाश इति भावः ।

**॥ इति अनेकप्रतिपत्तृसाधारणत्वमिति प्रथमार्थानुपपत्तिः ॥**

* * *

**॥ ततश्च तत्र ग्राहकस्थत्वेनाग्रहणमिति द्वितीयार्थानुपपत्तिः ॥**

१४१ **सु०— अपर आह, ग्राहकस्थत्वेनाग्रहणमात्मान्तरग्राह्यत्वमिति । तदसिद्धम् । आत्मन्यसमवायात्तत्सिद्धिरिति चेन्न, तस्याप्यसिद्धेः । अहङ्कारेण विभक्तस्य ग्रहणात् तत्सिद्धिरिति चेन्न, पादे मे सुखं शिरसि मे दुःखं मनो मे दुःखितमिति दर्शनात् सुखादिषु व्यभिचारात् । ग्रहणं प्रमितिरिति चेन्न, सन्दिग्धासिद्धत्वात् ।**

**परि०**— **ग्राहकस्थत्वेनेति** । श्रोतृपुरुषस्थत्वेनेत्यर्थः । **तस्याप्यसिद्धत्वादिति** । एतेन तृतीयहेतोरप्यप्रसिद्धिरुक्ता ध्येया । **व्यभिचारादिति** । एतेन चतुर्थहेतुरपि व्यभिचारेण निरस्तो





ध्येयः । नन्वहङ्कारेण वि(वि)भक्तस्य ग्रहणादित्यत्र ग्रहणादित्यस्य प्रतीयमानत्वादित्यर्थः । पादे मे सुखमिति भ्रमः अतो न दोष इति शङ्कते **ग्रहणमिति** । **सन्दिग्धेति** । आत्मगुणत्वाभावस्याद्याप्यसिद्ध्या अहङ्कारविविक्तत्वेन शब्दग्रहणमिदं भ्रान्तिः, उत प्रमितिरिति सन्देहास्कन्दनादिति भावः ।

**यादु०**— द्वितीयं व्याख्यानमनूद्य दूषयति **अपर आहेति** । **ग्राहकस्थत्वेनेति** । ज्ञातृपुरुषगतत्वेनेत्यर्थः । **तदसिद्धमिति** । स्वस्वात्मगतस्यैव शब्दस्य ग्रहणाङ्गीकारादिति भावः । आत्मन्यसमवायात् तत्सिद्धिरिति चेन्नेति फक्किकानन्तरं 'तस्याप्यसिद्धेः । अहङ्कारेण विभक्तस्य ग्रहणात् तत्सिद्धिरिति चेन्न'ति पाठः सुगमः स्वरसश्च । 'तथा तत्सिद्धेर्वक्ष्यमाणत्वादि'ति पाठो मृग्यार्थः । पादे मे सुखमित्युत्तरवाक्यस्य तदुपपादकत्वाभावात् । चशब्दाभावेन तस्य दूषणान्तरत्वासम्भवाच्चेति ज्ञातव्यम् । **पादे म इति** । शब्दवत् सुखादेरप्यहङ्कारभिन्नाधिकरणनिष्ठतया ग्रहणाद्व्यभिचार इत्यर्थः । **ग्रहणं प्रमितिरिति** । एवं च सुखादीनां पादाद्याश्रितत्वेन ग्रहणं भ्रम एवेति नोक्तदोष इति भावः । **सन्दिग्धेति** । वीणायां शब्द इत्यादिप्रतीतेरपि न प्रमात्वं निश्चितमिति भावः ।

**वं०प०**— **सुखादिषु व्यभिचारादिति** । अहङ्कारभिन्नाधिकरणनिष्ठतया ग्रहणेऽप्यात्मन्यसमवेतत्वाभावाद्व्यभिचार इत्यर्थः । **प्रमितिरिति** । तथा चाहङ्कारभिन्नाधिकरणनिष्ठतया प्रमीयमाणत्वादित्यर्थः । पादाद्याश्रितत्वेन च ग्रहणं न प्रमितिः किन्तु भ्रम एवेति न व्यभिचार इति भावः । **सन्दिग्धेति** । वीणायां शब्द इत्येवमहङ्कारभिन्नाधिकरणनिष्ठताप्रतीतेरपि न प्रमात्वं निश्चितमिति भावः ।

**आनन्दः**— **तदसिद्धमिति** । ग्राहकस्थत्वेनाग्रहणमसिद्धं किं तु ग्राहकस्थत्वेन गृह्यत एवेत्यर्थः । **तत्सिद्धेरिति** । ग्राहकस्थत्वेनाग्रहणस्य सिद्धिरित्यर्थः । **अन्यथा तत्सिद्धेरिति** । आत्मन्यसमवेतत्वेऽपि ग्राहकस्थत्वेन ग्रहणसिद्धेर्वक्ष्यमाणत्वाद्बाध इत्यर्थः । तथात्मन्यसमवेतत्वेन अतत्सिद्धिः तत्सिद्ध्यभावस्य ग्राहकस्थत्वेनाग्रहणसिद्ध्यभावस्येति यावत् । आत्मन्यसमवेतत्वहेतोरसिद्धत्वादिति भावः । अत्र यदुक्तमहङ्कारेण व्यधिकरणस्यैव ग्रहणादात्मन्यसमवेतत्वरूपहेतुसिद्धिरिति । तदसत् । पादे म दुःखमित्यादौ अहंत्वव्यधिकरणत्वेन गृह्यमाणत्वं दुःखादिष्वस्ति । न चात्मन्यसमवेत इति व्यभिचार इत्याह **पादे म इति** । नन्वहङ्कारेण व्यधिकरणस्यैव ग्रहणादित्यत्र ग्रहणशब्देन प्रमितिर्गृह्यते । न च पादे मे दुःखमितीयं प्रमितिः किन्तु भ्रम इति न व्यभिचार इत्याशङ्कते **ग्रहणमिति** । **सन्दिग्धासिद्धत्वादिति** । यथा पादादिगतत्वेन सुखादिप्रतीतिभ्रान्तिः तथा वीणादिगतत्वेन शब्दादिग्रहणं भ्रान्तिर्वा प्रमा वेति सन्देहात् सन्दिग्धासिद्धिरित्यर्थः ।

**श्रीनिधि०**— **ग्राहकस्थत्वेनाग्रहणमिति** । आत्मान्तरग्राह्यत्वादित्यस्यात्र तात्पर्यमिति भावः ।





**शे०वा०**— द्वितीयव्याख्यानमनूद्य दूषयति **अपर इति** । शब्दस्य वीणाद्याश्रयतया सन्तानन्यायेन श्रोत्रस्थतया वा प्रतीयमानत्वादात्मनिष्ठतया चाप्रतीयमानत्वान्नात्मगुणत्वम् । ततश्च यद्ययमात्मगुणः स्यादात्माविषयकग्रहणविषयो न स्यात् । तद्गुणानां सुखादीनां ग्राहकविषयकज्ञानविषयत्वदर्शनात् । न चायं ग्राहकविषयज्ञानविषयकः तस्मान्न गन्धादिवत्तद्गुण इत्याशयः । ग्राहकाविषयग्रहणविषयत्वसिद्धमित्याह **तदसिद्धमिति** । ततश्चेष्टापत्तिरिति भावः । शब्द आत्माविषयकग्रहणविषयः तत्रासमवेतत्वात् गन्धादिवत् इत्यनुमानेन तत्सिद्धेः, कथमसिद्धत्वमिति शङ्कते **आत्मनीति** । भवेदेवं कथञ्चिद्यद्यात्मन्यसमवेतत्वमेव सिद्धं स्यात् । न चैतदस्ति । तत्कथं तेनात्माविषयकग्रहणविषयत्वसिद्धिः स्यादित्याह **तस्याप्यसिद्धेरिति** । ननु शब्दो नात्मसमवेतोऽहन्त्वव्यधिकरणतया प्रतीयमानत्वात् इत्यनुमानात् तत्सिद्धिरिति शङ्कते **अहङ्कारेणेति** । वीणा वाद्यते, वेणुः पूर्यते, इतिवत्; अहं वाद्ये, पूर्ये वा, इति कस्यचिदप्रत्ययादिति भावः । नाहन्त्व-व्यधिकरणतया गृह्यमाणत्वेन शब्दस्यात्मन्यसमवेतत्वसाधनं युक्तम् । पादे मे दुःखम्, शिरसि मे सुखम्, इत्यहन्त्वव्यधिकरणतया प्रतीयमानानामपि सुखादीनाम् आत्मसमवेतत्वदर्शनेन व्यभिचरितत्वादित्याह **पादे म इति** । नन्वहङ्कारेण विभक्तस्य ग्रहणादित्यत्र ग्रहणं प्रमितिरेव । 'पादे मे सुखम्' इत्यादेश्च भ्रमत्वान्न तत्रानैकान्त्यमिति शङ्कते **ग्रहणमिति** । एवं तर्हि मास्तु अनैकान्त्यम् । वीणा वाद्यते, वेणुः पूर्यते, इति वीणाद्याश्रयत्वेनाहन्त्वव्यधिकरणतया शब्दग्रहणस्यापि भ्रमत्वप्रमात्वशङ्काकवलितत्वेन प्रमितत्वानिश्चयात् सन्दिग्धासिद्धत्वादेव न तेनात्मन्यसमवेतत्वसिद्धिरिति भावेनाह **सन्दिग्धेति** । अत्र च टीकायां 'तथा तत्सिद्धेर्वक्ष्यमाणत्वात्' इति क्वाचित्कः पाठः । स तु मूलपुस्तकेष्वदर्शनात् प्रक्षिप्त एव 'आत्मन्यसमवायात् तत्सिद्धिरिति चेन्न । तस्याप्यसिद्धेः । अहङ्कारेण विभक्तस्य ग्रहणात् तत्सिद्धिरिति चेन्न । पादे म' इत्यादिरेव च सर्वत्राकरे पाठदर्शनान्मूलपाठ इत्यवधेयम् ।

**वा०र०**— **शब्दस्य वीणादीति** आत्मा वीणादि श्रोत्रं वा तदनन्तरं आत्मा ग्रहणकर्ता पुरुष इत्यादि प्रागुक्तं सिद्धवत्कृत्येदमिति ज्ञेयम् । धर्मिग्राहकप्रमाणेन तेषां विशेषगुणप्रतिक्षेपादिति पाठः ।

**स०व्र०**— द्वितीयव्याख्यानमनूद्य दूषयति **अपर इत्यादिना** । **ग्राहकस्थत्वेनेति** । प्रतिपत्तृ-पुरुषगतत्वेनेत्यर्थः । **तदसिद्धमिति** । कर्णशष्कुल्यवच्छिन्नात्मगतस्यैव शब्दस्य ग्रहणाङ्गीकारादिति भावः । यद्वा यत्रस्थः शब्दः ततोऽन्य आत्मा आत्मान्तरं तद्ग्राह्यत्वं आत्मान्तरग्राह्यत्वमित्यर्थः । अयं भावः । शब्दस्य वीणाश्रयत्वेन वा प्रतीयमानत्वेन श्रोत्रस्थत्वेन वा प्रतीयमानत्वेन आत्मनिष्ठतया अप्रतीयमानत्वेन नात्म-गुणत्वम् यद्ययमात्मगुणः स्यात् तर्हि ग्राहकाविषयकग्रहणविषयो न स्यात् तद्गुणानां ग्राहकविषयक-ज्ञानविषयत्वदर्शनात् । न चायं ग्राहकविषयकज्ञानविषयकः तस्माच्च वेगादिवदात्मगुण इति । **तदसिद्ध-मिति** । ग्राहकाविषयकग्रहणविषयत्वमसिद्धमित्यर्थः । **आत्मन्यसमवायादिति** । वीणा वाद्यते वेणुः पूर्यते इतिवदहं वाद्ये पूर्ये चेति कस्यचिदपि प्रत्ययाभावेन ग्राहकस्यात्मनस्तद्ग्रहणाविषयत्वसिद्धिरित्यर्थः । आत्मा-





विषयकप्रत्यक्षविषयत्वेनात्मगुणत्वाभावसाधनमनुपपन्नम् । पादे मे सुखमिति सुखादीनामपि आत्मविषयकग्रहणविषयत्वेनं तत्र चात्मगुणत्वस्यैव सत्त्वेन व्यभिचारादित्याह **पाद इति** । **तद्दर्शनात्** आत्माविषयकसुखादिग्रहणदर्शनादित्यर्थः । क्वचित्पुस्तके पादे मे सुखम् इत्येतद्वाक्यात्पूर्वं तथा तत्सिद्धेर्वक्ष्यमाणत्वादिति ग्रन्थो दृश्यते । स तु मूलपुस्तकेष्वदर्शनात् उत्तरवाक्यस्यैतदुपपादकत्वाभावेन तस्यापि दूषणान्तरपरत्वे चशब्दापत्तेश्च कल्पितः । यद्वा क्वचिद्दर्शनात् चशब्दाभावेऽपि तदुत्तरवाक्यस्योपपन्नत्वाद्युक्त एव पाठः । तस्य च, **तथा** आत्मन्यसमवायेन **तत्सिद्धेः** आत्माविषयकग्रहणविषयत्वस्य सिद्धेर्वक्ष्यमाणत्वादित्यर्थः । अत एव स्वप्नाधिकरणे 'यत्र व्याहतता नास्ति कोऽतिसङ्गोऽस्ति साधने' इत्यनुव्याख्याव्याख्यावसरे 'केचिदन्यसमवेता अपि अन्यमुपरञ्जयन्ति यथा ज्ञानादयो घटादीनाम्' इत्युत्तरत्र ग्रन्थकार एव वक्ष्यतीति द्रष्टव्यम् । केचित्तु "**तथा** आत्मसमवेततयैव **तत्सिद्धेः** शब्दसिद्धेरिदानीमस्माभिरुच्यमानत्वादसिद्धिरिति । वक्ष्यमाणत्वादिति वचनं तूत्तरस्य पश्चाद्भावित्वादित्यवगन्तव्यमिति । तदर्थमाह त एव ग्राहकस्थत्वेनाग्रहणमित्यस्य व्यभिचारमप्याह **पादे मे सुखमित्यादिना** । अत्र सुखादेः पादादिगतत्वेन प्रतीत्या ग्राहकभिन्ननिष्ठत्वेन ग्रहणरूपं ग्राहकस्थत्वेनाग्रहणमस्तीति भावः । उदाहृतक्वचित्पाठे तु अहङ्कारेण विभक्तस्य ग्रहणादित्यस्य व्यभिचारमाह पादे मे सुखमित्यवतारिका द्रष्टव्या । अत्र शब्दवत्सुखादेरप्यहङ्कारभिन्नाधिकरणनिष्ठतया ग्रहणाद्व्यभिचार इत्यर्थः" इत्युत्तरवाक्यं व्याचक्षते । ननु ग्राहकाविषयकग्रहणविषयत्वमानस्यात्मगुणत्वाभावे हेतुत्वेनानभिप्रेतत्वात् ग्राहकाविषयत्वप्रमितिविषयत्वस्यैव च तत्त्वेनाभिप्रेतत्वात् पादे मे सुखमित्यादिप्रतीतेश्च भ्रमत्वेन सुखादेरात्माविषयकप्रमितिविषयत्वाभावेन हेत्वभावादेव न व्यभिचार इति भावेन शङ्कते **ग्रहणमिति** । तथात्वे वीणा वाद्यते वेणुः पूर्यते इति प्रतीतेरपि भ्रमत्वेनात्माविषयकभ्रमरूपप्रतीतिविषयत्वस्य शब्दे सत्त्वेऽपि तादृशप्रमितिविषयत्वस्य पक्षे सन्दिग्धत्वेन सन्दिग्धासिद्ध्या न शब्दस्य आत्मगुणत्वाभावानुमानमित्याशयेनाह **सन्दिग्धासिद्धत्वादिति** ।

**विट्ठल०**— ननु ग्राहकस्थत्वेनाग्रहणं नाम ग्राहकसमवेतत्वेनाग्रहणम् । तच्छब्दस्य सिद्धमेव तस्य ग्राहकात्मन्यसमवायादिति शङ्कते **आत्मन्यसमवायादिति** । **तस्याप्यसिद्धेरिति** । आत्मगुणत्वाङ्गीकारिण आत्मन्यसमवायोऽप्यसिद्ध इति भावः । अहं सुखीतिवदहंशब्द वा नित्यग्रहणादात्मन्यसमवायो निश्चीयते । आत्मनि समवेतत्वेऽहमर्थसंसृष्टतया सुखवद्गृह्येतेत्याशयेन शङ्कते **अहङ्कारेणेति** । कुतो नेत्यतः यत्राहङ्कारेण विभक्ततया ग्रहणम् तत्रात्मन्यसमवेतत्वमित्यत्र व्यभिचारादित्याह **पादे मे सुखमितीति** । अत्र शब्दस्येव सुखादेरप्यहङ्कारभिन्नाधिकरणतया ग्रहणाद्व्यभिचार इति भावः । अत्रात्मन्यसमवायात् तत्सिद्धिरिति चेन्नेत्यतःपरं तथा तत्सिद्धेर्वक्ष्यमाणत्वादिति क्वचित्पाठः । तत्रायमर्थः । तथा आत्मसमवेतत्वेनैव तत्सिद्धेः शब्दसिद्धेरिदानीं वक्ष्यमाणत्वादस्माभिरुच्यमानत्वादिति । वक्ष्यमाणत्वादिति वचनं तु उत्तरस्य पश्चाद्भावित्वादिति ज्ञातव्यम् । ग्राहकस्वत्वेनाग्रहणमित्यस्य व्यभिचारमप्याह **पादे मे सुखमित्यादिना** । वस्तुतस्त्वयं पाठः प्रामादिक इत्याहुः । अहङ्कारेण विभक्तस्य ग्रहण इत्यत्राहङ्कारेण विभक्ततया प्रमीयमानत्वं हेतुतया विवक्षितम् । तथा च





सुखादीनां पादाद्याश्रितत्वेन ग्रहणं भ्रम एवेति नोक्तव्यभिचार इत्याशङ्क्य परिहरति **ग्रहणं प्रमितिरिति** । **सन्दिग्धासिद्धत्वादिति** । शङ्खे शब्द इत्यादि प्रतीतेरपि प्रमात्वस्याद्याप्यसिद्धत्वेनाहङ्कारेण विभक्ततया प्रमीयमानत्वस्य सन्दिग्धासिद्धत्वादित्यर्थः ।

**चषकः**— तादृशहेतुवाक्यस्यार्थान्तरं दुदूषयिषुरनुवदति **अपर इति** । **ग्राहकस्थत्वेन** प्रत्येतृपुरुषाश्रितत्वेन **तदसिद्धमिति** । सुखादिकल्पत्वोपगमादिति भावः । **तत्सिद्धिः** ग्राहकाविषयकग्रहणविषयत्वसिद्धिः । इत उत्तरं तस्याप्यसिद्धेरहङ्कारेण विभक्तस्य ग्रहणात् तत्सिद्धिरिति चेन्नेत्यानुपूर्वीक एव पाठो व्याचक्षाणैरादृतः, तथा तत्सिद्धेर्वक्ष्यमाणत्वादिति तु न तादृश इति स्थितम् ।

**॥ इति तत्र ग्राहकस्थत्वेनाग्रहणमिति द्वितीयार्थानुपपत्तिः ॥**
**॥ इति आत्मान्तरग्राह्यत्वहेतोरर्थद्वयस्याप्यनुपपत्तिः ॥**
**॥ इति शब्दस्य आत्मगुणत्वेऽनुपपत्तिः ॥**

* * *

**॥ अथ 'आकाशस्यानुमानवेद्यत्वे तदनुमाननिरासे' आकाशस्य कालादिगुणत्वेऽनुपपत्तिः ॥**

१४२ **सु०— कालादिगुणो वा किं न स्यात् । प्रत्यक्षत्वादिति चेन्न, स्पर्शस्यापि प्रत्यक्षत्वेन अवायवीयत्वप्रसङ्गात् । कालादीनां विशेषगुणवत्त्वे बाधकाभावात् । तद्विरहिततयैव तत्सि(द्धिरि)द्धेर्नेति चेन्न, अन्यथा तत्सिद्धेर्वक्ष्यमाणत्वात् ।**

**परि०**— यदपि दिक्कालमनसां गुणत्वाभावे प्रत्यक्षत्वाद्विशेषगुणत्वाच्चेति हेतुद्वयम् । तत्राद्यमाशङ्क्य निराह **प्रत्यक्षत्वादितीति** । द्वितीयं निराह **कालादीनामिति** । **अन्यथा तत्सिद्धेरिति** । आनुमानिकत्वप्रकारापेक्षया प्रकारान्तरेण साक्षिणैव सिद्धेरनुपदमग्रे वक्ष्यमाणत्वादित्यर्थः । येन धर्मिग्राहकमानबाध इति भावः ।

**यादु०**— **स्पर्शस्यापीति** । तदितरवायुगुणानामप्रत्यक्षत्वादिति भावः । **कालादीनामिति** । तथा च विशेषगुणत्वादिति हेतुरप्रयोजक इति भावः । **तद्विरहिततयैवेति** । तपनपरिस्पन्दानां पिण्डं प्रत्युपनायकतया हि कालसिद्धिः । विशेषगुणवतस्तदुपनायकत्वे आकाशादिनाऽन्यथासिद्धिप्रसङ्गात् कालासिद्धिरेव स्यात् । अतो विशेषगुणशून्यमेव द्रव्यं तदुपनायकं कल्पनीयमिति कालः सिद्ध्यन् विशेषगुणविरहिततयैव सिद्ध्यतीत्यर्थः । **अन्यथासिद्धेरिति** । साक्षिणैव कालसिद्धेरनुपदमेव वक्ष्यमाणत्वादित्यर्थः ।





**आनन्दः— स्पर्शस्यापीति** । स्पर्शो न वायवीयः प्रत्यक्षत्वाद्रूपवदित्यर्थः । ननु कालस्य शब्दगुणवत्त्वे विशेषगुणवत्वं स्यादित्यत आह **कालादीनामिति** । **तद्विरहिततयैवेति** । विशेषगुणविरहवत्वरूपेणेत्यर्थः । **अन्यथेति** । उक्तरूपातिरिक्तप्रकारेणेत्यर्थः ।

**श्रे०वा०—** कालादिगुणत्वमप्यभ्युपेत्य तत्रोक्तं दूषणमुद्धर्तुमाह **कालादीति** । कालदिङ्मनोगुण इत्यर्थः । कालादिगुणत्वाभावसाधकतयोपन्यस्तमाद्यं हेतुं दूषयितुमाशङ्कते **प्रत्यक्षत्वादिति चेदिति** । **स्पर्शस्यापीति** । स्पर्शो न वायवीयः प्रत्यक्षत्वाद्रूपादिवदित्यपि प्रसङ्गात् तदितरवायुगुणानामप्रत्यक्षत्वादिति भावः । द्वितीयं हेतुमप्रयोजकत्वेन दूषयति **कालादीनामिति** । **तद्विरहिततयैवेति** । विशेषगुणविरहवत्वरूपेणेत्यर्थः । धर्मिग्राहकप्रमाणेन तेषां विशेषगुणवत्त्वप्रतिक्षेपान्न विशेषगुणवत्त्वमिति भावः । भवेदेवं कथञ्चिद्यदि क्रियोपनायकत्वसंयोगोपनायकत्वादिप्रकारेण कालादिसिद्धिः स्यात् । न चैवम् । साक्षिणैव कालादिसिद्धेः । 'कालो हि साक्षिप्रत्यक्षः' इत्यादिनाऽनुपदमेव वक्ष्यमाणत्वात् । ततश्च धर्मिग्राहकप्रमाणेन विशेषगुणशून्यत्वासिद्धेरप्रयोजकत्वतादवस्थ्यमित्याह **अन्यथेति** ।

**स०व्र०— स्पर्शस्यापीति** । तदितरवायुगुणानामप्रत्यक्षत्वादिति भावः । तथा च स्पर्शः न वायवीयप्रत्यक्षत्वात् रूपादिवदित्यतिप्रसङ्गादित्यर्थः । विशेषगुणत्वादिति हेत्वन्तरविघटनायाह **कालादीनामिति** । धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायादित्यर्थः । **अन्यथा तत्सिद्धेरिति** । **अन्यथा** तदुक्तप्रकारापेक्षया प्रकारान्तरेण साक्षिणैवेति यावत् ।

**विट्ठल०—** कालादिगुणत्वाभावे यत्प्रत्यक्षत्वाद्विशेषगुणत्वादिति हेतुद्वयमभिहितं तत्राद्यमाशङ्क्य दूषयति **प्रत्यक्षत्वादिति** । **स्पर्शस्यापीति** । कालादिगुणानां सर्वेषामप्रत्यक्षत्वाच्छब्दस्य प्रत्यक्षत्वात् तेन कालादिगुणत्वाभावसाधने वायुगुणानामितरेषामप्रत्यक्षत्वात्स्पर्शस्य प्रत्यक्षत्वात् तेन वायुगुणत्वाभावस्यापि शक्यसाधनत्वेनावायवीयत्वप्रसङ्गः स्यादिति भावः । द्वितीयमप्रयोजकतया दूषयति **कालादीनामिति** । **अन्यथा तत्सिद्धेरिति** । उक्तप्रकारापेक्षया अन्यथा प्रकारान्तरेणैव साक्षिणैवेति यावत् कालो हि साक्षिप्रत्यक्ष इत्यादिना वक्ष्यमाणत्वादित्यर्थः ।

**चषकः— स्पर्शस्यापीति** । प्रत्यक्षत्वेन शब्दे कालगुणत्वाभावसाधने तेनैव हेतुना स्पर्शे वायुगुणत्वाभावसाधनप्रसङ्ग इति भावः । तथा च आभाससाम्यमिति हृदयम् । **कालादीनामिति** । तथा च अप्रयोजकेन विशेषगुणत्वेन शब्दे कालाश्रितत्वाभावसाधनं न सङ्गच्छत इत्याशयः । **तद्विरहिततयैवेति** । विशेषगुणाभाववत्तयैवेत्यर्थः । विशेषगुणवतः पिण्डं प्रति तरणिपरिस्पन्दोपनायकत्वे आकाशादिना अन्यथासिद्ध्या कालासिद्धिप्रसङ्गेन विशेषगुणशून्यतदुपनायकं कल्पनीयमिति विशेषगुणाभाववत्तयैव कालः सिद्ध्यतीति





भावः । अन्यथा **तत्सिद्धेरिति** । 'कालो हि साक्षिप्रत्यक्ष इत्यादिना अनुपदमेव साक्षिणैव कालसिद्धेरभिधास्यमानत्वादित्यर्थः ।

**॥ इति 'आकाशस्यानुमानवेयत्वे तदनुमाननिरासे' आकाशस्य कालादिगुणत्वेऽनुपपत्तिः ॥**
**॥ इति तदनुमाननिरासः (शब्दस्य पृथिव्यादिगुणत्वे बाधकानि) ॥**

* * *

**॥ अथ 'आकाशस्यानुमानवेयत्वनिरासे' शब्दस्य आकाशगुणत्वे साधकम् ॥**

**१४३ सु०— किञ्चात्र सर्वत्र साहचर्यदर्शने सङ्कोच एव द्रव्यान्तरकल्पनाया लघीयान् ।**

**परि०— किञ्चात्र सर्वत्रेति** । शब्दस्य आत्माद्यष्टद्रव्यगुणत्वाभावे ये प्रयोगा अभिहिताः तत्र सर्वत्र व्याप्तिग्रहणसमये यत्र शब्दान्यत्वे सति बाह्यप्रत्यक्षत्वादिकं तत्रात्मादिगुणत्वाभाव इत्यादिरूपेण सहचारदर्शनं सङ्कोचनीयमित्यर्थः । एतत्सङ्कोचस्यैव लघुतमत्वादिति भावः ।

**गु०दी०— साहचर्यदर्शने सङ्कोच** इत्यत्र अन्यत्र सर्वत्र हेतुसाध्ययोस्साहचर्येऽप्यत्र हेतुरस्तु साध्यं मास्त्वित्यङ्गीकारः साहचर्यदर्शनसङ्कोच इत्युच्यत इत्यर्थः ।

**यादु०— किञ्चात्र सर्वत्रेति** । शब्दो न स्पर्शवद्विशेषगुण इत्यादिप्रतिषेधसाधकानुमानेषु व्याप्तिः पक्षातिरिक्तस्थल एव पक्षेऽपीत्येवं सङ्कोचनीया । धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायात् । तथा च गौरवतर्कपराहतिरिति भावः ।

**वं०प०— साहचर्यदर्शनसङ्कोच इति** । सर्वत्र सहचरितत्वेन दर्शनस्य पक्षे सङ्कोच इत्यर्थः । **द्रव्यान्तरेति** । आकाशरूपद्रव्यान्तरेत्यर्थः । धर्मिकल्पनातो धर्मकल्पना शब्दे स्पर्शवद्गुणत्वरूपधर्मकल्पना लघीयसीति भावः ।

**आनन्दः**— यो बाह्येन्द्रियप्रत्यक्षः स आत्मगुणो न यः प्रत्यक्षः स कालगुणो नेत्यादि साहचर्यदर्शन एव सङ्कोचं कृत्वात्मादीनामेव शब्दगुणवत्त्वं स्वीकार्यं उत साहचर्यदर्शनं सङ्कोचमकृत्वा आकाशादि द्रव्यान्तरमङ्गीकार्यम् । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वात् साहचर्यदर्शनं सङ्कोच्य आत्मादीनामेव तद्वत्त्वं स्वीकार्यमित्याह **किञ्चात्रेति** ।

**शे०वा०**— एवं पृथिव्यादिगुणत्वे बाधकानि परिहृत्य तद्गुणत्वे साधकमप्याह **किञ्चेति** । **अत्र सर्वत्रेति** । शब्दो न स्पर्शवद्विशेषगुण इत्यादिप्रसक्तप्रतिषेधसाधकानुमानेष्वित्यर्थः । **साहचर्येति** । पक्षातिरिक्त





एव हेतुसाध्ययोर्व्याप्तिः न तु पक्षतदितरसाधारण्येनेति साहचर्यदर्शनसङ्कोच एवेत्यर्थः । **लघीयानिति** । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वादिति न्यायादिति भावः ।

**स०व्र०— किञ्चात्र सर्वत्रेति** । आत्माद्यगुणत्वे ये हेतवस्तेषु सर्वेषु । पक्षातिरिक्ते व्याप्तिः न तु पक्षेऽपीति सङ्कोच एव लघीयानित्यर्थः ।

**विट्ठल०— किं चात्रेति** । शब्दो न स्पर्शवद्विशेषगुण इत्यादिषु आकाशसाधकसर्वानुमानेषु व्याप्ति-पक्षातिरिक्तस्थल एव न तु पक्षेऽपीति सङ्कोच एवाकाशाख्यद्रव्यान्तरकल्पनया लघीयानित्यर्थः ।

**चषकः—** उक्तदिशा शब्दस्य पृथिव्यादिगुणत्वोपगतौ बाधकानि प्रतिविधाय तत्तद्गुणत्वसमर्थ-नौपयिकमप्याह **किञ्चात्र सर्वत्रेति** । प्रसक्तप्रतिषेधविधेयकानुमितिजनकेषु 'शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सतीत्याद्यनुमानेषु साध्यनिरूपिता हेतुनिष्ठा व्याप्तिः पक्षान्यावच्छेदेनैव न तु पक्षीकृतव्यक्त्यव-च्छेदेनेत्येव सङ्कोचनीया । द्रव्यान्तराख्यधर्मिकल्पनातो व्याप्तिसङ्कोचाख्यधर्मकल्पनस्य लघीयस्त्वात् । तथा च गौरवप्रतिसन्धानपराहतमनुमानजातमिति भावः ।

**॥ इति 'आकाशस्यानुमानवेद्यत्वनिरासे' शब्दस्य आकाशगुणत्वे साधकम् ॥**

* * *

**॥ तत्र च परिशेषानुमानस्य निरासः ॥**

**१४४ सु०— परिशेषानुमानं तु अष्टद्रव्यातिरिक्तद्रव्याप्रसिद्धेः अप्रसिद्धविशेषणम् । प्रसिद्धौ च अनुमानवैयर्थ्यम् । अष्टद्रव्यातिरिक्ताश्रित इत्येव साधने गुणादिवृत्ति-सामान्यादपि व्यावृत्तत्वेन असाधारणता स्यात् । शब्दाश्रयः इतरेभ्यो भिद्यते शब्दा-श्रयत्वात् व्यतिरेकेण पृथिवीवत् इति प्रयोग इति चेत् (न); पृथिव्यादिप्रतियोगि-कानेकभेदानां प्रत्येकं साधनेऽबादीनां सपक्षत्वेन तत्रावृत्तेः असाधारण्यात्, समुदित-साधने पुनरप्रसिद्धविशेषणत्वात् । अभावस्य साध्यत्वात् अभावाभावस्य च भावत्वेन प्रतियोग्यनपेक्ष्यतया व्याप्तिग्रहणसम्भवान्न दोष इति चेन्न; तथाऽपि प्रतिषेधमुखेन प्रतीतेरनिवारणात्, शब्दाश्रयो नेतरेभ्यो भिद्यते प्रमेयत्वाद्घटवदिति सत्प्रतिपक्षत्वाच्च । सर्वप्रतियोगिकैकभेदसाधने तु प्रमाणबाधश्च अधिकः, प्रतियोगिभेदेन भेदभेदस्यापि दर्शनादिति ।**





**परि०**— ननु प्रामाणिकत्वान्न द्रव्यान्तरकल्पनं दोषायेत्यत आह **परिशेषेति** । **असाधारणता स्यादिति** । अष्टद्रव्यवृत्तौ बाधकोपपन्नत्वे सति गुणत्वादिति हेतोरिति बोध्यम् । **इतरेभ्यो भिद्यत इति** । पृथिव्याद्यष्टद्रव्यप्रतियोगिकभेदवानित्यर्थः । ननु समुदितानामेवास्तु साधनम् । न चैकाधिकर(णा)ण्यावच्छेदकावच्छिन्नानामेतेषां क्वाप्यप्रसिद्धत्वेन अप्रसिद्धविशेषणत्वं शङ्क्यम् । असिद्धविशेषणत्वस्य साध्याप्रसिद्धौ तन्निरूपितव्याप्तिज्ञानायोगेन व्याप्तिग्रहप्रतिबन्धकत्वेन दोषत्वात् । इह च साध्यसाधनव्यतिरेकयोरेव व्याप्त्यङ्गीकारेणान्वयव्याप्तेरनभ्युपगमात् अभावसाध्यकव्यतिरेकिप्रयोगे च साध्यत्वेनाभिमतेतरान्योन्याभावानां समुदितानां व्यतिरेकस्य इतरत्वरूपभावपदार्थत्वेनान्योन्याभावरूपसाध्यज्ञानं विनैव यत्रेतरत्वं तत्र शब्दाश्रयत्वाभाव इति पृथिव्यादौ व्यतिरेकव्याप्तिग्रहसम्भवेन अभावसाध्यकव्यतिरेकिणि साध्याप्रसि(द्धे)द्ध्यादेरदोषत्वादिति भावेन शङ्कते **अभावस्येति** । **न दोष इति** । अप्रसिद्धविशेषणत्वमिति योज्यम् । **तथापीति** । साध्यभूताभावव्यतिरेकस्य भावत्वेऽपि साध्याभावरूपेण प्रतिषेधमुखेन साध्यभूताभावव्यतिरेकज्ञानमावश्यकम् । साध्याभावव्यापकाभावप्रतियोगित्वस्य व्यतिरेकिहेतौ गमकताप्रयोजकरूपम् । तच्च न स्वरूपसत्तया । व्यतिरेक्याभासोच्छेदापत्तेः । किन्तु ज्ञातमेव तत् । ज्ञानं च न वस्तुगत्या साध्याभावव्यापकाभावप्रतियोगिज्ञानतया । यत्र पटादौ घटाभावाभावत्वमारोप्य तद्व्यापकतया लोष्ठत्वादिकं गृहीतं तत्र लोष्ठत्वाद्यभावेन घटाभावानुमानाऽऽपातात् । तत्र पटस्य वस्तुतः साध्यभूतघटाभावाभावत्वाभावात् । किन्तु साध्याभावत्वेन ज्ञायमानाभावव्यापकाभावप्रतियोगिज्ञानत्वेनैव वाच्यमित्यप्रसिद्धिर्दोष एवेति भावः । **सर्वप्रतियोगिकैकेति** । पृथिव्यादित्रयोदशपदार्थपरः सर्वशब्दः ।

**गु०दी०**— **प्रत्येकं साधन** इत्यस्य शब्दाश्रयः पृथिवीतो भिद्यत इत्याद्याकारेण साधन इत्यर्थः ।

**यादु०**— **समुदितसाधन इति** । ऐकाधिकरण्यावच्छिन्नेतरभेदानां साधन इत्यर्थः । अप्रसिद्धस्यापि साध्यस्य सिद्धिरप्रत्यूहेत्याशङ्कते **अभावस्येत्यादिना** । पृथिव्याद्यन्योन्याभावानामत्र साध्यत्वादन्योन्याभावाभावस्य च प्रतियोगितावच्छेदकरूपतया पृथिवीत्वादेर्भावस्यैवात्र व्याप्यतया तद्ग्रहे प्रतियोगिज्ञानानपेक्षणात् सुशको व्याप्तिग्रह इत्यर्थः । एतन्मते प्रथमं साध्यविशेष्यकानुमितेरेव स्वीकारेण न विशेषणज्ञानतयाऽपि साध्यप्रसिद्धिरपेक्षितेति द्रष्टव्यम् । **तथापि प्रतिषेधमुखेनेति** । साध्याभावत्वेनाभिमते भावरूपे पृथिव्यादौ साध्याभावत्वप्रकारकबुद्धेरावश्यकत्वादित्यर्थः । अन्यथा साध्याभावत्वेनोपस्थितव्यापकाभावप्रतियोगित्वरूपस्य व्यतिरेकिणि गमकतौपयिकस्याज्ञानेनानुमित्यनुपपत्तेः । न च वास्तवसाध्याभावव्यापकाभावप्रतियोगित्वज्ञानमेव





व्यतिरेकिणि गमकतौपयिकम् । तच्च व्याप्यत्वेनाभिमतस्य भावस्य साध्याभावत्वेनाज्ञानेऽपि सम्भवतीति वाच्यम् । तथा सति व्यतिरेक्याभासविलयापत्तेः । ननु नेदं व्यतिरेकिणि गमकतौपयिकं तदभिप्रेतं किन्तु यस्य भावस्य व्यापकतया हेत्वाभावो गृहीतस्तदभावाभावेन तदभावः सिद्ध्यतीत्येवंरूपम् । न चातिप्रसङ्गः । व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञानावश्यम्भावादिति चेत् । तर्हि विवादपदं पृथिवीत्वाद्यभाववत् तद्व्यापकशब्दाश्रयत्वाभावशून्यत्वात् । यद्यद्व्यापकशून्यं तत्तदभाववत् यथा सम्प्रतिपन्नमित्यन्वयित्वमेवास्य स्यान्न व्यतिरेकित्वम् । तथा च व्यतिरेक्यनुमानं पृथगभिलषितोक्तमेव प्रयोजकं तत्राङ्गीकार्यम् । तत्र च व्याप्तत्वेनाभिमतस्य भावस्य साध्याभावत्वेन ज्ञातव्यत्वात् साध्याज्ञाने च तदसम्भवाद्व्याप्तिग्रहानुपपत्तिरेवेति भावः । अन्ये त्वविप्रतिपन्नं प्रति साधनस्य व्यर्थत्वेन अभावः साध्यं नास्तीति वदन्तं प्रत्येव तस्य कर्तव्यत्वाद्भावरूपस्यापि साध्याभावत्वेन ज्ञानमावश्यकमिति भावमाहुः । **नेतरेभ्यो भिद्यत इति** । नन्वत्रेतरभेदनिषेधः पृथिवीत्वादिरूप एव । स किमेकैकः साध्यतया विवक्षित उत मिलितः । नाद्यः व्यभिचारात् । न द्वितीयः दृष्टान्ते साध्यवैकल्यात् । न हि घटे जलत्वादिकमस्तीति चेन्न । इतरभेदनिषेधस्य चतुर्दशत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिकस्य पृथिवीत्वाद्यतिरिक्तस्यैवात्र साध्यतया विवक्षितत्वात् । पृथिवीत्वादेस्तद्भेदनिषेधरूपत्वेऽपि चतुर्दशभेदनिषेधरूपत्वाभावात् । घटे जलादित्रयोदशभेदसत्त्वेऽपि पृथिवीभेदाभावेन चतुर्दशभेदाभावस्य साध्यतया विवक्षितस्य सत्त्वेन साध्यवैकल्याभावादित्यभिप्रायात् । प्रमाणबाधश्चेत्यत्र चशब्दोऽप्रसिद्धविशेषणत्वसमुच्चायकः । अधिक इत्यनेनेदं दूषणं न प्रत्येकभेदसमुदायसाधनपक्ष इति सूचयति । अन्यथा चशब्दस्य सत्त्वेन तस्य वैयर्थ्यात् । **प्रतियोगिभेदेनेति** । न च प्रतियोगिभेदेनाभावभेदे एकघटप्रतियोगिकाभावचतुष्टयानुपपत्तिः । प्रतियोगिभेदेनाभावेऽपि भेदभेदे बाधकाभावात् । तदिदमुक्तम् । **भेदभेदस्यापीति** । इदं परीत्योक्तम् । स्वमते तु भेदस्याधिकरणस्वरूपत्वेनाधिकरणभेदेनैव तद्भेद इत्यवधेयम् ।

**वं०प०**— **अष्टद्रव्यातिरिक्तेति** । इदं च गुणत्वादौ प्रसिद्धमिति नाप्रसिद्धविशेषणत्वमित्यर्थः । **तत्रावृत्तेः** परस्परमवृत्तेः । अप्रसिद्धविशेषणत्वं नास्तीत्याशङ्कते **अभावस्येति** । अत एव नेदं निरात्मकमित्येव प्राचां प्रयोग इति भावः । **अभावाभावस्येति** । इतरेभ्यो भिद्यत इत्यत्र अन्योन्याभावानां साध्यत्वादन्योन्याभावाभावस्य पृथिवीत्वादिरूपप्रतियोगितावच्छेदकरूपत्वेन भावरूपतया न प्रतियोगिज्ञानापेक्षेत्यर्थः । ननु पृथिव्यादिप्रतियोगिकानेकभेदानां प्रत्येकं साधने अस्त्वसाधारण्यम् । पृथिव्यादिसर्वप्रतियोगिकस्यैकभेदस्य साधने तु नोक्तदोष इत्यत आह **सर्वप्रतियोगिकैकेति** । प्रमाणबाधमुपपादयति **प्रतियोगीति** । **भेदभेदस्येति** । भेदानां भेदस्येत्यर्थः ।

**आनन्दः**— एवं प्रसक्तप्रतिषेधकानुमानदूषणं विधायाधुना परिशेषं दूषयति **परिशेषेति** । **अष्टद्रव्येति** । तथा चाष्टद्रव्यातिरिक्ते गुणाश्रितरूपत्वादेः सपक्षत्वेन तत्र गुणत्वरूपहेतोरभावेन सपक्षाप्रवेशित्वा-





दसाधारण्यमित्यर्थः । अत्र हि पृथिव्यादिप्रतियोगि अनेको वा भेदः साध्यते उत भेदसमुदायः अथवा सर्वप्रतियोगिकैकभेदः । नाद्य इत्याह **पृथिव्यादीति** । द्वितीयं प्रत्याह **समुदितेति** । ननु मास्तु तर्ह्यन्वय-व्याप्तिग्रहः व्यतिरेकव्याप्तिग्रहस्तु भविष्यति । अभावाभावस्य भावत्वेन तत्र प्रतियोगिज्ञानानपेक्षणादिति शङ्कते **अभावस्येति** । व्यापकाभावेन व्याप्याभाव आपादनीये प्रतियोगिज्ञानत्वेन पृथिव्यादिप्रतियोगिकान्योन्याभावत्वेन साध्यज्ञानमावश्यकमित्यत्रासिद्धिरिति भावः । **तथापीति** । यत्र पृथिवीत्वादिकं तत्र शब्दाश्रयत्वाभाव इति व्याप्तम् । न प्रयोजकत्वापत्तौ । तृतीयं निराह **सर्वेति** । प्रमाणबाधां विशदयति **प्रतियोगीति** । भेदानां भेदस्येत्यर्थः ।

**श्रीनिधि०— समुदितसाधने पुनरिति** । नन्वत्र शब्दाश्रय **अष्टद्रव्येभ्यो** भिद्यत इति साधने नाप्रसिद्धविशेषणता, अष्टद्रव्यभेदस्य गुणादिषु प्रमितत्वादिति चेन्न । तर्हि गुणादिवृत्तित्वमादायार्थान्तरता स्यात् । तदर्थं त्रयोदशान्योभावसाधने यथोक्तं दूषणमिति द्रष्टव्यम् ।

**शे०वा०—** अष्टद्रव्यातिरिक्तद्रव्याश्रित इत्यत्र अष्टद्रव्यातिरिक्त**द्रव्यमप्रसिद्धं** प्रसिद्धं वेति विकल्पौ मनसि निधाय क्रमेण दूषयति **परिशेषानुमानं त्वित्यादि** । षट्सहस्रीकृतोक्तमिति शेषः । **अप्रसिद्ध-विशेषणमिति** । ततश्च न व्याप्तिग्रह इति भावः । ननु द्रव्याश्रितः **शब्दोऽष्टद्रव्यातिरिक्ता**श्रित इत्येव साध्यते न तु तादृशद्रव्याश्रित इत्यपि । तथा च नोक्तविकल्पदोषप्रसङ्गः । **द्रव्याश्रित** इति पक्षविशेषणमहिम्ना अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वस्यैव पर्यवसानगत्या सिद्धत्वान्न प्रकृतानुपयोगोऽपीति युक्तः परिशेष इति किरणावलीवर्धमानोक्तं पक्षं दूषयति **अष्टेति** । **व्यावृत्तत्वेनेति** । तद्वृत्तौ **बाधकोपपन्नत्वे** सति गुणत्वहेतोरिति शेषः । उक्तहेतोर्विपक्षभूताद्गुणादेः सपक्षभूताद्गुणादिवृत्तिसामान्याच्च **व्यावृत्त्या पक्षमात्र**वृत्तित्वादिति भावः । किरणावलीलीलावतीकारोक्तं परिशेषानुमानमाशङ्कते **शब्दाश्रय इति** । **नन्वितरभेदः** पृथिव्यादिप्रतियोगि-कान्योन्याभावः । तत्र किं पृथिव्यादिप्रतियोगिनोऽनेके भेदाः प्रत्येकं **साध्यन्ते,** उतैकाधिकरण्यावच्छिन्नाः, किंवाऽनेकप्रतियोगिक एको भेदः; इति विकल्पान्मनसि निधायाद्यं **दूषयति पृथिव्यादीति** । द्वितीयं दूषयति **समुदितेति** । इतरभेदानां प्रत्येकं प्रसिद्धत्वेऽपि एकाधिकरण्याव**च्छेदेनाप्रसिद्ध्या** समुदितानामप्रसिद्धेरिति भावः । नन्वप्रसिद्धविशेषणत्वं व्याप्तिग्रहप्रतिबन्धकत्वेन दूषणम् । **साध्यस्याप्रसिद्धौ** प्रतियोगिप्रसिद्धेरभावेन **साध्याभावस्य ज्ञातुमशक्यत्वात्** तदभावे च सम्बन्धिज्ञानाभावेन **ससम्बन्धिकपदार्थ**रूपसाधनाभावनिरूपित-साध्याभावनिष्ठव्याप्तेर्गृहीतुमशक्यत्वात् । इदं च व्याप्तिग्रहप्रतिबन्धकत्वं **'भावः** केवलव्यतिरेकिणा साध्यते' इति **पक्ष** एव **सम्भवति,** तत्र साध्याभावस्याभावतया साध्याप्रसिद्धा**वुक्तरीत्या साध्या**भावज्ञानासम्भवात्, न तु 'अभाव एव केवलव्यतिरेकिणा साध्यते' इति पक्षे, तत्कथमप्रसिद्ध**विशेषणत्व**मिति शङ्कते **अभावस्येति** । **प्रतियोग्यनपेक्षत्वादिति** । प्रतियोगिप्रतीत्यनपेक्षप्रतीतिकत्वादित्यर्थः । **पृथिव्याद्यन्योन्या**भावानामत्र साध्यत्वात् अन्योन्याभावाभावस्य च प्रतियोगितावच्छेदकरूपत्वात् पृथिवीत्वादे**र्भावस्यैव व्यतिरेक**व्याप्तौ व्याप्यतया तद्ग्रहे





**वं०प०— तत्र व्यापकसम्बन्धेति** । सम्बन्धप्रमितीत्यर्थः । **एवं सतीति** । एतदिति प्रतीतौ कालप्रतिभासाङ्गीकार इत्यर्थः । कुतो न प्रसङ्ग इत्यत उपनीतभानसम्भवादित्याह **साक्षिसिद्धेति** । साक्षिसिद्धं यत्कालरूपं विशेषणं तद्विशिष्टप्रत्ययस्य सुरभिचन्दनमितिवत् चक्षुषैवोपपत्तेरिति भावः । **असङ्गतमिति** । सिद्धसाधकोऽसङ्गत इत्युक्तत्वादिति भावः ।

**आनन्दः— ननु** लिङ्गज्ञानमात्रस्यैवानुमानोपयोगात्र व्याप्त्यादिस्मरणोपयोग इत्यत्राह **इदमुक्तं भवतीति** । ततः किमत्राह **स्मृत्यनुभवेति** । ननु एवं सति कालस्य चक्षुरादिविषयत्वस्यापि स्वीकारात् साक्षीतरप्रमाणविषयत्वमुक्तं व्याहतमत्राह **अनिश्चित इति** । सन्दिग्ध इत्यर्थः ।

**श्रीनिधि०— रूपमित्येवेति** । पदार्थमात्रोल्लेखोपलक्षणमिदम् । न हि द्रव्यादिकमेवैषाम् ।

**शे०वा०—** 'तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरमि'ति मूले यथायोग्यमन्वयो न तु यथाक्रममतो नानुपपत्तिरित्यभिप्रेत्य तमाह **तदितीति** । टीकायां स्मृतिगोचर इत्येव मूलपाठः । स्मृतिगोचरमिति पाठस्तु तादृशानुव्याख्यानपाठानुसारेण मूलटीकयोरेकप्रकारत्वमिति व्याख्यातृभ्रान्तिकल्पित एव । अनुव्याख्याने तु विष्णवीत्यादिवत् परमवैदिकत्वख्यापनार्थ इत्यवधेयम् । यद्वा स्मृतिः गोचरो यस्येति तथोक्तम् । गोचरत्वं च विषयितासम्बन्धेन विवक्षितमिति न किञ्चिदेतत् । अत एव टीकायामपि 'प्रामाण्यं साक्षिगोचरमि'त्येतदेवमेव समाहितमिति द्रष्टव्यम् । ननु कालप्रतिभासं विना व्याप्तिस्मरणाद्यसम्भवेऽपि कुतोऽनुमानाप्रवृत्तिः । कथं च कालप्रतिभासं विना व्याप्तिसम्भवाद्यसम्भवः । न च वाच्यं तदित्यादिरूपेणैव स्मृत्यादेर्घटादिविषयकत्वात् साक्षिसिद्धकालविषयकत्वं सिद्धमिति । तत्रापि कालविषयकत्वासिद्धेः । न हि तदित्यादिरूपेण घटादिविषयकत्वे कालविषयकत्वेन भाव्यमित्यत्र नियामकमस्ति । तथात्वेऽपि वा तद्विषयस्य कालस्य न साक्षिवेद्यत्वं किन्तु चक्षुरादिवेद्यत्वमेवेत्यत आह **इदमुक्तं भवतीति** । **अभूदिति वेति** । अनेन तदेतदिति मूलमुपलक्षणमित्युक्तं भवति । **सर्वानुभवसिद्धत्वादिति** । अनेन मूले हिशब्दोऽनुभवप्रसिद्धयर्थकतया व्याख्यातो भवति । **उपपत्तेरिति** । अन्यथा, परस्यापि मते परमाण्वादेर्मानसप्रत्यक्षत्वप्रसक्तेरिति भावः । **अनिश्चिते ह्यर्थ इति** । 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क' इति गौतमसूत्रादिति भावः । **परेषामिति** । तार्किकादीनामित्यर्थः । **आश्रयासिद्धमिति** । सिद्धसाधनस्थले सन्देहगर्भितपक्षताया अभावेन पक्षरूपाश्रयाभावादाश्रयासिद्धिरिति भावः । **असङ्गतमिति** । सिद्धसाधकोऽसङ्गत इत्यन्यत्रोक्तेरिति भावः ।

**वा०र०— साक्षिगोचरमित्येतदिति** । तृतीयस्य चतुर्थे नियमेन सुखाद्येषु प्रामाण्यं साक्षिगोचरमित्येतदनुव्याख्यानस्थं साक्षिगोचरमित्येतदित्यर्थः । **एवमेवेति** । अयं च प्रकारातिदेश एव न तु प्रकृतोपयुक्तविशेषसमाधानातिदेशः । साक्षिगोचरो यस्य तत्तथोक्तं गोचरत्वं चाश्रयतया विवक्षितमिति तत्र मूलकारोक्तिरिति ज्ञेयम् । तदेव प्रमाणगोचरमिति पञ्चमगीतातात्पर्यप्रयोगोपपादनमपि छान्दसत्वादिरूप-तट्टीकोक्त-





प्रकारद्वयेनोपपाद्यम् । ईक्षत्यधिकरणमूलटीकोक्तप्रकारोऽप्यनुगुणतया योज्यः । विशेष्यांशवद्विशेषणांशेऽपि चक्षुर्व्यापारकल्पनाया अप्रसक्तौ नियामकमाह **अन्यथा परस्यापीति** । परमाणुमहं जानामि इति परमाणुविशिष्टज्ञानविषयकमनसः परमाण्वंशेऽपि सामर्थ्यकल्पनम् । मानसाप्रत्यक्षत्वप्रसक्तेरित्यर्थः । **अविज्ञाततत्त्वेऽर्थ इति** । एतच्च सूत्रं जिज्ञासाधिकरणे वाक्यार्थचन्द्रिकायां व्याख्यातम् । ..........व्याख्यावसरे टीकाकृता व्याख्यास्यते । उपपादितं च तदस्माभिस्तत्रैव । तदनुसारेणात्रापि तदर्थोऽवधेयः ।

**स०व्र०— असङ्गतमिति** । सिद्धसाधकोऽसङ्गत इत्युक्तत्वादिति भावः ।

**विट्ठल०—** ननु दृश्यादेः सर्वस्य कालखचितत्वेऽपि कथं धर्म्यादिदर्शनादिति भावः । मास्तु च धर्म्यादिदर्शनं तथाऽप्यनुमानप्रवृत्त्यभावः कुतः । किञ्च दृश्यादेः सर्वस्य कालखचितत्वमेव न सम्भवति । कालखचितघटादेश्चाक्षुषत्वेन कालस्यापि तथापत्त्या कालो हि साक्षिप्रत्यक्ष इत्युक्तिविरोधादित्यत आह **इदमुक्तं भवतीति** । स्मर्यमाणे वा धर्मिणीति पूर्वेद्युर्दृष्टपर्वते वह्निः स्थितः धूमस्य स्थितत्वादित्याद्यनुमानसद्भावादियमुक्तिरिति ज्ञातव्यम् । हिशब्दाभिप्रायः **एतच्चेति** । सिद्धसाधनस्य दूषकताप्रकारं दर्शयितुं परेषामित्युक्तं **अस्माकमिति** । **सिद्धसाधकोऽसङ्गत इति** । मानलक्षणोक्तेरिति भावः ।

**॥ इति कालविषयाणां सर्वानुमानानां सामान्यतो निराकरणम् ॥**

* * *

**॥ ततः कालविषयानुमानानां विशेषतो निराकरणम् ॥**

१५२ **सु०—** एवं कालविषयाणि सर्वानुमानानि सामान्यतो निराकृत्य विशेषतो निराकरोति **तदेतदिति** । तथा हि । कालः परापरव्यतिकर-यौगपद्यायौगपद्य-चिरक्षिप्रप्रत्ययलिङ्ग इति परेषां भाष्यम् । तदेवं केचिद्व्याचक्षते "अस्ति तावत्स्थविरे परोऽयमिति प्रत्ययः, यूनि चापर इति । सोऽयं दिक्कृतपरापरप्रत्ययविलक्षणत्वात् परापरव्यतिकरप्रत्ययः । तथा युगपदागतौ अयुगपदागतौ चिरेणागतः क्षिप्रमागतः इति प्रत्ययाः । (त) एते षट्प्रत्ययाः कालस्य लिङ्गानि । कथम् । स्थविरादिविषयेषु जायमानानामेषां कालमन्तरेण विषयानवक्लृप्तेः । न हि द्रव्यादिकमेवैषामालम्बनम्, तत्प्रत्ययविलक्षणत्वादिति ।

**एतदयुक्तम्** । **तथा हि** । तदिति परमिति एतदपरमिति । युगपदादीनामुपलक्षणमेतत् । दृश्यं वा स्मृतिगोचरं (वा) प्रतीयमानमिति यावत् । तत्सर्वं साक्षिसिद्धेन कालेन





**खचितमेव वर्तते । तस्मात्तन्नित्यसिद्धेः नानुमानावसरो भवेत् । तस्मादित्यस्यैव विवरणं न तं विनेति । न शक्यं हीति सम्बन्धः ।**

**परि०**— प्रकारान्तरेणापि व्याख्यातुं तदेव वाक्यमन्यथाऽप्यवतारयति **एवमिति** । **परेषाम्** = तार्किकाणाम् । **स्थविरे** = वृद्धे । **प्रत्यया इति** । सन्तीति शेषः । कथमिति प्रश्नस्योत्तरं **स्थविरादीत्यादि** । **न हि द्रव्यादिकमिति** । स्थविरादिपिण्डरूपद्रव्यं यत्तद्गतगुणकर्मादिकं तन्न विषय इत्यर्थः । एतन्निरासकतया मूलं योजयितुमाह **तथा हीति** । अनुभवत्वादिविशेषस्य प्रकृतेऽनुपयोगात् 'तदेतदिति दृश्यं वा स्मृतिगोचरम्' इत्यस्य परमपरमिति प्रतीयमानं युगपदागतावित्यादिरूपेण प्रतीयमानमित्यर्थपरतया योजयति **तदितीत्यादिना** । तदितीत्यस्य प्रतिपदं परमितीति । एवमग्रेऽपि । तस्मादित्येतद्विवरणत्वद्योतनाय हिशब्दस्य यस्मादित्यर्थमुपेत्य योजनामाह **न शक्यं हीति सम्बन्ध इति** ।

**यादु०— न हि द्रव्यादिकमेवेति** । स्थविरादिपिण्डगतं द्रव्यगुणादिकमेतत्प्रत्ययविषयो नेत्यर्थः ।

**आनन्दः— सामान्यतो निराकृत्येति** । कालसाधकमनुमानं कालधान्यपक्षकं वा । आद्ये कालसिद्धौ सिद्धसाधनं असिद्धावप्रसिद्धविशेषणत्वम् । द्वितीये व्याप्तिपक्षधर्मताज्ञानमावश्यकम् । तच्च स्मृतिरूपं वाऽनुभवरूपं वा । आद्ये तदित्येवं जायमानस्मृतेरतीतकालविषयत्वात् कालमवश्यं वक्तव्यम् । द्वितीये यदनुभवरूपज्ञानं तत्सर्वं अभूदिति चाभवतीति वा सर्वमपि कालविशिष्टमेव वस्तुविषयीकरोतीति व्याप्तिज्ञानादेरपि कालाविशेषितवस्तुग्रहणेन सामर्थ्यमिति कथं तेन कालसाधनमित्येव निराकृत्येत्यर्थः । तत्र विशेषतोऽनुमानानि दर्शयितुं परभाष्यमुपन्यस्यति **तथा हीति** । स्थविरादिप्रत्यया इति एते परापरादिप्रत्ययाः आत्मविषयाः प्रत्ययत्वात् घटादिप्रत्ययवदिति सामान्यतः सविषयत्वे सिद्धे एते प्रत्ययाः न प्रसिद्धद्रव्यमात्रविषयाः ते प्रत्ययलक्षणत्वात् प्रत्ययवदिति । गुणादिप्रत्ययवत् नापि दिग्विषयः दिक्कृते परापरप्रत्ययविलक्षणपरापरप्रत्ययत्वादिति प्रत्येकमेव द्रव्यगुणाद्यविषयत्वे सिद्धे अनन्तरमेते प्रत्ययाः अष्टद्रव्यातिरिक्तद्रव्यविषयाः विषयान्तरानुपपत्तौ सत्यां सविषयत्वादित्यनेन कालसिद्धमित्यर्थः ।

**श्रीनिधि०— आलम्बनमिति** । पृथिव्याद्यष्टकं गुणादि चेत्यर्थः ।

**शे०वा०**— परकीयकालानुमानानां विशेषतोऽनिरासेन प्रसक्तां भाष्ये न्यूनतामसहमानः सामान्यतः कालविषयकानुमाननिरासपरतया योजितं तदेतदित्यादिभाष्यमेव विशेषतोऽनुमाननिरासपरत्वेनापि योजयति **एवमिति** । तत्र कानि तानि विशेषानुमानानीत्यतः प्रशास्तपादभाष्योदितान्येवेत्याशयेन कालानुमानसङ्ग्राहकं





प्रशास्तपादभाष्यमेवोदाहरति **काल इति** । अस्य भाष्यस्य चिरन्तनव्याख्यानमनुवदति **तदेवमिति** । अस्मिंश्च व्याख्याने परत्वं बहुकालीनत्वमपरत्वमल्पकालीनत्वं यौगपद्यमेककालीनत्वमयौगपद्यमनेककालीनत्वं चिरत्वं दीर्घकालत्वं क्षिप्रत्वमल्पकालत्वमभिप्रेतमिति द्रष्टव्यम् । **कथमिति** । नैते प्रत्ययाः कारणतया कालव्यवस्थापका आत्मेन्द्रियादीनामेव तत्कारणत्वात् । तथा च कथमेतैः प्रत्ययैः कालसिद्धिरिति भावः । न कारणतया कालव्यवस्थापकत्वं प्रत्ययानामभिमतं येनोक्तदोषः, किन्तु विषयतयैव । कालमन्तरेणैतेषां प्रत्ययानां विषयानवक्लृप्तेरित्याह **स्थविरादिविषयेष्विति** । ननु स्थविरादिद्रव्यस्यैव वा तद्गतगुणकर्मादेरेव वा एतत्प्रत्ययालम्बनत्वसम्भवात् कथं कालमन्तरेण विषयानवक्लृप्तिरित्यत आह **न हीति** । **तत्प्रत्ययेति** । द्रव्यगुणादिप्रत्ययेत्यर्थः ।

ननु तदेतदिति प्रतीयमानस्य कालखचितत्ववर्णनपरेण कथं परादिप्रत्ययानां कालानुमापकत्वनिराकरणसिद्धिः । परादिप्रत्ययानां कालखचितवस्तुविषयत्वासिद्धेरित्यतः तदेतदित्येतत्परापरमित्येतत्परतया व्याचष्टे **तथा हीति** । ननु तथाऽपि परापरप्रत्ययस्य कालखचितवस्तुविषयकत्ववर्णनेन परापरप्रत्ययस्य तदनुमापकत्वप्राप्तावपि यौगपद्यादिप्रत्ययस्य तदप्राप्त्या कालानुमापकत्वोपपत्तेः कथमनेन परोक्तसर्वानुमाननिराकरणमित्यत आह **युगपदादीनामुपलक्षणमेतदिति** ।

**वा०र०**— अन्ये तु व्याचक्षत इति श्रीवल्लभोदीरितप्रकारान्तरकथने एकतपनप्रचारेत्यादिना यौगपद्यादेर्निरूपयिष्यमाणत्वात् तदुक्तविलक्षणं यौगपद्याद्यत्राभिमतमिति विशेषं दर्शयति **अस्मिंश्च व्याख्यान इति** । एतद्यौगपद्यमेककालतेत्यादिना किरणावल्यां प्रतिपादितम् । यद्यपि परापरव्यतिकरप्रत्ययेति तेन योजितम् । परापरशब्दौ भावप्रधानावित्याश्रित्य दिक्कृताभ्यां परत्वापरत्वाभ्यां विपरीतपरत्वापरत्वे इत्येवं परापरव्यतिकरशब्दार्थमभिधाय परापरव्यतिकरश्च यौगपद्यादिप्रत्ययाश्चेति समास इत्येव तत्रोक्तत्वात् । तथापि भाष्याभिप्रेतोऽर्थः किरणावल्यामपि ज्ञेयः । विग्रहप्रदर्शनं तु परत्वापरत्वानुमेयः काल इति स्थूलमार्गाश्रयणेन वस्तुतस्तु तयोरपि प्रत्यय एव विवक्षिता इत्याशयेन मूले प्रत्ययपर्यन्तमुक्तमिति ज्ञेयम् । शङ्कते कथमितीत्यवतारं सिद्धवत्कृत्वा प्रतीकोपादानमात्रं कृत्वा भावमाह **नैत इत्यादि** । इति परिहरति स्थविरादीति पाठः स्वरसः । इत्याह स्थविरादीति पाठेऽपि इत्याहेत्यस्येति परिहरति इत्येवार्थ इति ज्ञेयम् । **परापरादिप्रत्ययानामिति** । षट्प्रत्ययानामित्यर्थः । **कालखचितवस्त्विति** । तदादिशब्दानां कालघटिततत्तादिवाचित्वेन कालखचितवस्तुवाचितत्वस्य पूर्वोपपादितस्य परापरशब्दयोरयोगः । न हि तावतापि तत्तेदन्तावाचिता स्यादिति भावः । पूर्वयोजनायां तदिति स्मृतिगोचरमेतदिति दृश्यमिति प्रत्ययविशेषघटितपदयोरन्वयवत् नैतद्योजनायां तथाऽन्वयोऽभिप्रेतः । परप्रतीतिरपि अनुभवरूपा वा स्मृतिरूपा वा । एवं अपरप्रतीतिर्यत्किञ्चिद्रूपैवेति परापरप्रतीत्योः प्रतीतित्वं सामान्येनोपादानमिह विवक्षितम् । तथा च दृश्यं वा स्मृतिगोचरं वेति पदाभ्यां विशेषाविशेषितं प्रतीयमानत्वमात्रं ग्राह्यमित्याशयेनाह **प्रतीयमानमिति यावदिति** मूलम् ।





**स०व्र०— न हि द्रव्यादिकमेवैषामालम्बनमिति** । स्थविरादिपिण्डगतद्रव्यगुणादिकमेव तत्प्रत्ययविषयो नेत्यर्थः । ननु 'तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते । तस्मात्तन्नित्यसिद्धेर्हि नानुमाऽवसरो भवेदि' त्येतावता पूर्णत्वात् 'न तं विने'त्यादि व्यर्थमित्यत आह **तस्मादित्यस्यैव विवरणमित्यादि** ।

**विट्ठल०—** कानि तान्यनुमानानि कथं च तन्निराकरणमित्यतस्तद्दर्शयितुमाह **तथा हीति** । तत्र तावत्परानुमानानि परभाष्यमुदाहृत्य दर्शयति **काल इति** । कथमिति प्रश्नस्योत्तरं **स्थविरादीत्यादि** । **न हि द्रव्यादिकमिति** । स्थविरादिपिण्डगतं द्रव्यगुणादिकं एतत्प्रत्ययविषयो नेत्यर्थः । अनुभवत्वादिविशेषस्य प्रकृतेऽनुपयोगात् प्रकृतोपयोगितया योजयति **तदिति** । **परमितीत्यादिना** । तदित्यस्य प्रतिपदं परमितीति । एवमग्रेऽपि । तथा च परमिति अपरमिति युगपदागतौ अयुगपदागतावित्यादि प्रकारेण प्रतीयमानं सर्वमिति योजना तस्मात्तन्नित्यसिद्धेरित्यतः पूर्वं हि यस्मादेवमिति द्रष्टव्यम् । **तस्मादित्यस्यैव विवरणमिति** । तस्मात् तस्य कालस्य नित्यसिद्धेर्नित्यमनुभूयमानत्वादित्यस्य विवरणमित्यर्थः । विवरणत्वज्ञापनायैव सर्वानुभवसिद्धिद्योतकहिशब्दस्य न शक्यमित्यनेनान्वय इत्याह **न शक्यं हीति सम्बन्ध इति** ।

**चषकः—** तत्र कालसाधकविशेषानुमानजिज्ञासापूरणाय तादृशानुमानसङ्ग्राहकं प्रशस्तपादभाष्यमेवोदाहरति **काल इति** ।

**॥ तत्रादौ उक्तार्थस्पष्टीकरणम् ॥**

१५३ **सु०— एतदुक्तं भवति । परापरादि(विषयाः) प्रत्ययास्तावत् कालविशिष्टपिण्डविषयाः इति परेणैवोक्तम् ।**

**तथा च लिङ्गप्रतीतावेव लिङ्गिनः कालस्य स्फुरणात् कथं तेन तदनुमानम् । न हि दण्डिज्ञानेन दण्डोऽनुमीयते ।**

**अथ विशिष्टज्ञानत्वादिदं विशेषणज्ञानपूर्वकम्, विशेषणं च न कालातिरिक्तमस्तीत्यनुमीयते । तर्हि नेदं कालानुमानम्, किन्तु ज्ञानानुमानम् । तच्च सिद्धसाधनम् । साक्षिसिद्धकालविशिष्टप्रत्ययाभ्युपगमादिति ।**

**परि०— साक्षिसिद्धकालविशिष्टप्रत्ययेति** । सुरभि चन्दनमिति चाक्षुषप्रत्ययवदिति भावः ।





**यादु०— परेणैवोक्तमिति** । स्वग्रन्थ इति शेषः । यद्यपि यौगपद्यमेककालता, अयौगपद्यमनेककालता, चिरत्वं दीर्घकालता, क्षिप्रत्वमदीर्घकालतेत्येवं यौगपद्यादिप्रत्ययानामेव कालविशिष्टपिण्डविषयत्वम् । परापरशब्दौ तु भावप्रधानौ गुणविशेषवाचकौ न कालविशिष्टस्य । ततश्च परापरव्यतिकरश्च यौगपद्यादिप्रत्ययश्चेति समासः । ते लिङ्गानि यस्य स तथोक्त इति परत्वापरत्वे योगपद्यादिप्रत्ययाश्च कालानुमापका इत्येवं किरणावलीकारेणोक्तम् । तथाऽपि बहुकालीनत्वं परत्वम्, अल्पकालीनत्वमपरत्वम्, यौगपद्यादिकं चोक्तमेव; तेषां प्रत्यया लिङ्गानि यस्य स तथोक्त इति चिरन्तनव्याख्यानमभिप्रेत्यैवमुक्तमित्यवगन्तव्यम् । अत एव पूर्वं त एते षट्प्रत्यया इत्यनुवादः कृतः ।

**वं०प०— इदं विशेषणज्ञानपूर्वकमिति** । परापंरादिप्रत्ययषट्कमित्यर्थः । कथमित्यत उपनीतभानाङ्गीकारादित्याह **साक्षिसिद्धेति** । **प्रत्ययेति** । परापरादिप्रत्ययेत्यर्थः ।

**आनन्दः— ननु** कथमनेन विशेषतोऽनुमानानि रूपितानीत्यत्राह **एतदुक्तं भवतीति** । साक्षिसिद्धेनेत्येतन्निवर्त्याशङ्कां दर्शयति **अथेति** ।

**श्रीनिधि०— लिङ्गप्रतीतावेव लिङ्गिनः कालस्य स्फुरणादिति** । लिङ्गप्रतीतिविषयत्वादित्यर्थः ।

**शे०वा०— ननु** परमपरमिति प्रतीयमानस्य कुतः कालखचितत्वम् । तथात्वेऽपि कुतोऽनुमानानवसर इत्यत आह **एतदुक्तं भवतीति** । **परेणैवोक्तमिति** । द्रव्यादिप्रत्ययवैलक्षण्येन द्रव्याद्यालम्बनत्वानुपपत्त्या स्थविरादिविषयेषु जायमानानामेषां प्रत्ययानां कालमन्तरेण विषयानवक्लृप्तिं वर्णयता परेण परादिप्रत्ययानां कालविशिष्टपिण्डविषयताया वर्णितत्वान्न तदुपपादनं पृथङ्मूले कर्तव्यमिति भावः । अस्तु परापरादिप्रत्ययानां कालविशिष्टपिण्डविषयत्वम् । तथापि कुतोऽनुमानावसर इत्यतः किमत्र कालमात्रमनुमेयतयाऽभिमतं किं वा विशिष्टज्ञानत्वेन विशेषणज्ञानपूर्वकत्वं तथाऽभिमतमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथा चेति** ।

द्वितीयं शङ्कते **अथेति** । अस्तु तर्हि कालज्ञानानुमानमेवेदमित्यत आह **तच्चेति** । कथं तदित्यतः साक्षिरूपकालज्ञानपूर्वकताया मयाऽप्यङ्गीकारादित्याह **साक्षीति** ।

**वा०र०— तदनुमानमिति** मूलम् । तदिति शब्दः कालपरः कालानुमानं च तत्सम्बन्धानुमानं वा सम्बन्धकालानुमानं वा विवक्षितं हेतुबलेन पक्षसाध्यसम्बन्ध्यस्यैव वा सम्बन्धसाध्यस्यैव वा अनुमानविवक्षयैव साध्यानुमानमिति वह्निमान् धूमादित्यनुमानेषु सकलतान्त्रिकव्यवहारादर्शनात् । अत एव मिथ्यात्वानुमानखण्डनटीकायां पक्षलक्षणे साध्यविशिष्ट इत्येवोक्ते वस्तुतोऽग्निविशिष्टस्य साध्यत्वादित्यादिना धर्मपदकृत्यमुक्तम् । तेन पक्षः साध्य इति प्राप्तेः । वक्ष्यति च कालसम्बन्धे अनुमित इति कालसम्बन्धोऽनुमीयत इत्यादि च ।





एतावांस्तु विशेषः । क्वचित्सम्बन्धवत् साध्यप्राधान्यविवक्षया प्रयोगः । यथा कालसम्बन्धे अनुमित इति कालसम्बन्धे तदनुमानम् । नेदं कालानुमानमित्यादिः । प्राक् च कालेऽनुमानस्यावसर इत्यादिश्च । क्वचिच्च तत्सम्बन्धवत् साध्यप्राधान्यविवक्षया प्रयोगः यथा कालसम्बन्धे अनुमित इत्यादिरिति । एवमेवंजातीयके सर्वत्रापि विवेकः स्पष्ट एव । एतेन अनुमानमपि कालमेव पक्षीकृत्य प्रवर्तेत । कालेऽनुमानस्यावसरः, कालविषयाण्यनुमानानि, कालस्य लिङ्गानि, लिङ्गतः कालस्य, तदनुमानं कालानुमानम्, इत्येवंरूपेण च कालस्यैव साध्यतया प्रयोगः । कालसम्बन्धे अनुमिते । कालसम्बन्धोऽनुमीयते कालसम्बन्धस्य नित्यं बहुकालसम्बन्धः । तत्सम्बन्धस्यापीत्येवंरूपेण च उत्तरत्र सम्बन्धस्य साध्यतया प्रयोग इति कालस्य वा साध्यत्वं तत्सम्बन्धस्य वा साध्यत्वमिति सन्देहप्रसङ्ग इति निरस्तम् । अत एव सम्बन्धप्राधान्यपुरस्कारेण प्रवृत्ताथ वलीपलितेत्याद्युत्तरग्रन्थेऽपि निमित्तानुमानार्थ इति अनुमानात् प्राक्काल इति कालस्य प्रागनुमानादिति कालानुमान इति च कालपुरस्कारेणापि प्रयोगः । परकीयकालानुमानानामित्यादिटीकाग्रन्थोऽपि मूलानुसारेणैव प्रवृत्त इति तद्वदेव विवक्षाविशेषाभ्यां प्रयोगभेद उपपादनीयः । अत एव विवक्षाविशेषमात्रेण प्रयोगभेदेऽपि फलत एकार्थत्वात् किन्तु वलीपलितकार्कश्यादिना तदनुमानमित्यादौ मूलोक्तसम्बन्धमपुरस्कृत्य कालपुरस्कारेणैव टीकाकृद्व्यवहरिष्यतीति सुधीभिरालोचनीयम् ।

**विट्ठल०**— नन्वेतेषामनुमानानामनेन को दोष उक्त इत्यतः अनुमानानुदय एव तावत् उदयेऽपि वा सिद्धसाधनतेत्याशयेनाह **एतदुक्तं भवतीति** ।

**चषकः**— **परेणैवोक्तमिति** । स्वग्रन्थ इत्यादिः । किरणावल्यां कृतद्वन्द्वानां यौगपद्यायौगपद्यचिर-क्षिप्रपदानां प्रत्ययपदेन तत्पुरुषः ततः परापरव्यतिकरपदेन प्रत्ययान्तस्येतरेतरयोगद्वन्द्वः ततो लिङ्गपदेन षष्ठ्यर्थे बहुव्रीहिः परापरशब्दौ भावप्रधानौ गुणविशेषाभिधायकौ न कालकलितार्थकौ क्षिप्रान्तस्तु कालकलितार्थक इति यद्यपि व्याकुशासीत् तथापि तदपेक्षया चिरन्तनव्याकर्तारः परत्वं बहुकालीनत्वम् अपरत्वम् अल्पकालीनत्व-मिति व्याचख्युरिति तदनुरुन्धानाः प्रकृतेऽपि द्वन्द्वगर्भतत्पुरुषगर्भबहुव्रीहिमेवान्ववदन् न तु द्वन्द्वगर्भबहुव्रीहिमिति मन्तव्यम् ।

**१५४ सु०— अथ वलीपलितकार्कश्यादिना कालसम्बन्धेऽनुमिते, विप्रतिपन्नं प्रति परापरादिप्रत्ययानां कार्यत्वेन निमित्तानुमानमिदं भाष्यमिति । मैवम् । शरीरावस्थया हि तस्य कालसम्बन्धोऽनुमीयते, यत्किञ्चिद्द्रव्यसम्बन्धो वा ।**

**परि०**— **वलीपलितेति** । वलीति लम्बमानचर्मवत्त्वमुच्यते । **पलितेति** । शुक्ल-केशत्वम् । **कार्कश्यं** च आलम्बमानचर्मोपेतसर्वावयवदेहकत्वम् । यौवनावस्थेत्यर्थः । कार्कश्यादिना





तत्कारण(त्वेन)कालसम्बन्धेऽनुमिते सति लिङ्गषट्कोक्तिपरभाष्यं व्यर्थमापद्येतेत्यत आह **विप्रतिपन्नं प्रतीति** । स्वार्थानुमानेन स्वस्य कालसम्बन्धज्ञाने सत्यपि यस्तु कालसम्बन्धे विप्रतिपद्यते तादृशवादिनं प्रति 'परत्वादिप्रत्ययाः किञ्चिन्निमित्तकाः कार्यत्वात् घटादिवदि'ति कार्यत्वेन हेतुना परापरादिप्रत्ययनिमित्तस्य कस्यचिद्वस्तुनोऽनुमानार्थं परार्थानुमानषट्कप्रदर्शनपरं परापरव्यतिरेके-त्यादिप्रागुक्तभाष्यमित्यर्थः । परिशेषात् स कालसम्बन्ध एव सेत्स्यतीति भावः ।

**यादु०**— ननु कालसम्बन्धस्य पूर्वानुमानेनैव सिद्धत्वाद्व्यर्थमिदमनुमानमित्यत आह **विप्रतिपन्नं प्रतीति** । पूर्वानुमानेन काले सिद्धेऽपि तस्य परापरादिप्रत्ययजनकत्वे यो विप्रतिपन्नः तं प्रति इदमनुमान-मित्यर्थः । **निमित्तानुमानार्थमिति** । अन्यविशिष्टप्रत्ययानां विशेषणसम्बन्धपूर्वकतानियमादिति भावः । पूर्वानुमानेनैव विशेषणीभूतकालसिद्धेः न लिङ्गप्रतीतावेवेत्यादिनोक्तदोषावकाशोऽत्रेति ज्ञातव्यम् । यद्वा पूर्वा-नुमानेन काले सिद्धेऽपि प्रतिवादिवाक्यादिना यो विप्रतिपन्नः तं प्रति दार्ढ्यानुमानान्तरमुच्यत इत्यर्थः ।

**वं०प०**— **कालसम्बन्धे** शरीरस्येति शेषः । **विप्रतिपन्नं** तस्य कालस्य परापरादिप्रत्ययजनकत्वे विप्रतिपन्नं प्रतीत्यर्थः । **निमित्तेति** । परापरादिप्रत्यये पूर्वानुमानसिद्धकालसम्बन्धस्य निमित्तत्वानुमानार्थ-मित्यर्थः । **तस्य** शरीरस्य । **कालसम्बन्धः** कालेनैव सम्बन्धः । **अस्मादनुमानादिति** । शरीरावस्थया कालसम्बन्धानुमानात्प्रागित्यर्थः । तथा च तादृशकालसम्बन्धस्य पक्षीभूते शरीरे सिद्धत्वान्नानुमानावसरः । अन्यथेदमिति पक्षीकरणायोग इति भावः । **अप्रसिद्धेति** । कालस्यासिद्धौ तत्सम्बन्धस्याप्यप्रसिद्धत्वादित्यर्थः ।

**आनन्दः**— ननु नैवं सर्वान्प्रत्यनुमानं क्रियते किन्तु प्रकारान्तरेण कालसम्बन्धेऽनुमितेति प्रतिपन्नं प्रत्युक्तरीत्यानुमानप्रदर्शनार्थमिदं भाष्यमित्यभिप्रेत्य शङ्कते **अथ वलीपलितेति** । **आद्ये तन्नित्यसिद्धेरिति** । तथा च सिद्धसाधनमनुमानमिति भावः ।

**शे०वा०**— ननु न परापरादिप्रत्ययैः कालानुमानं ब्रूमो येन लिङ्गप्रतीतावेव लिङ्गिनः कालस्य स्फुरणात् कथं तेन तदनुमानमिति पर्यनुयुज्येत किन्तु वलीपलितकार्कश्यादि तदनुमानम् । तथा च नानुमान-वैयर्थ्यम् । वलीपलितादिलिङ्गावगतौ लिङ्गिनः कालस्य स्फुरणात् परापरादिप्रत्ययानामिव कार्कश्यादि-प्रत्ययानामपि कालखचितवस्त्वालम्बनत्वासिद्धेः । न चैवं भाष्ये परापरादिप्रत्ययरूपलिङ्गोपन्यासानर्थक्यमिति वाच्यम् । भाष्ये न कालानुमापकतया परापरादिप्रत्ययोपन्यासः किन्तु कालसिद्धिमुक्तरीत्याऽङ्गीकृत्यापि परा-परादिप्रत्ययानां कालनिमित्तकत्वे यो विप्रतिपद्यते तं प्रति परापरादिप्रत्ययानां कार्यत्वेन कालनिमित्तक-त्वानुमानार्थं भाष्ये परापरादिप्रत्ययरूपलिङ्गोपन्यासस्यार्थवत्त्वादित्यभिप्रायेण शङ्कते **अथेति** । अत्र शरीरा-वस्थाविशेषो वलीशब्दार्थः । पलितशब्दः केशशौक्ल्यपरः । यद्यपि वलीपलितादिना कालसम्बन्धेऽनुमित इति पूर्वपक्षिणा स्पष्टमभिधानान्न वक्ष्यमाणरीत्या विकल्पावसरोऽस्ति । तथाऽपि साक्षात्कालसम्बन्धसाधन-





पक्षोक्तदोषभिया यत्किञ्चिद्द्रव्यसम्बन्ध एव वलीपलितादिना साध्यते । कालसम्बन्धसिद्धिस्तु वक्ष्यमाणरीत्या परिशेषादितरप्रतिषेधेनेति कालसम्बन्धस्यैव पर्यवसानगत्या सिद्ध्यभिप्रायेण पूर्वपक्षीया विशेषोक्तिरित्यपि पूर्वपक्ष्यभिसन्धेर्वर्णयितुं शक्यत्वादस्त्येव विकल्पावसर इति भावेन विकल्प्यैव दूषयति **मैवमित्यादिना** । **नानुमानावसर इति** । आद्ये सिद्धसाधनत्वे परस्याश्रयासिद्धिप्रसक्तेरस्माकं त्वसङ्गतिप्रसक्तेः । द्वितीये च व्याप्तिपक्षधर्मताविरहप्रसक्तेर्नानुमानावसर इत्यर्थः ।

**वा०र०— कालानुमानं ब्रूम इति । कार्कश्यादिना तदनुमानमिति च** । न च मूले कालसम्बन्धे अनुमित इति स्पष्टम् । कालसम्बन्धानुमानस्यैव प्रतिपादनात् कालानुमानमित्याद्याशयवर्णनायोग इति वाच्यम् । प्राक्कालप्राधान्येनैव नेदं कालानुमानमित्यन्तग्रन्थेन कालानुमानस्यैव कालः परापरेति परभाषार्थतया शङ्कितत्वेनानुव्याख्यानार्थतया निराकृतत्वेन च कालानुमानस्यैव शङ्कापरिहारोभयविषयत्वेन प्रकृततया कालानुमानं ब्रूम इत्यंशेन तावदनुपपत्तेरभावात् । अथ कार्कश्यादिना तदनुमानमित्यत्र तच्छब्देन प्रकृतकालपरामर्शानुपपत्तिरिति वाच्यम् । न चेयमप्यनुपपत्तिरस्ति । तत्तच्छब्दस्य बुद्धिप्रकृतसम्बन्धपरत्वेन मूलोक्तसम्बन्धानुमानस्यैवोक्तिलाभात् । अनुमानात् प्राक् कालः सिद्धः कालस्य प्रागनुमानात् कारणत्वेन कालानुमानमिति चानेकस्पष्टमूलोक्त्यनुसारेण कालसम्बन्धानुमानस्यापि कालानुमानतायाः सिद्ध्या कार्कश्यादिना कालानुमाननित्यस्याप्युपपत्तेः । वस्तुतस्तु विवक्षाविशेषेण प्रयोगभेदो मूलटीकयोरित्युपपादितत्वान्नानुपपत्तिरिति किञ्चिदेतत् । **परापरादिप्रत्ययानां कालनिमित्तकत्व इति । न च कालसम्बन्धेऽनुमिते विप्रतिपन्नं प्रतीति** मूले प्रकृते काले वा तत्सम्बन्धे वायो विप्रतिपद्यते इत्यर्थस्यैव प्रतीत्या परापरादिप्रत्ययानां कालनिमित्तकत्वे यो विप्रतिपद्यत इत्यर्थस्य लाभायोग इति वाच्यम् । विप्रतिपन्नं प्रतीत्यस्य परापरादिप्रत्ययानामित्युत्तरग्रन्थानुसारेण टीकाकृदुक्तार्थस्यैव लाभेऽपि प्रकृतकाल इत्याद्युक्तार्थस्यालाभात् । किञ्च प्रकृतकाले विप्रतिपत्तिरपि फलतः कालनिमित्तकत्वे विप्रतिपत्तिरित्यर्थतो विशेषाभावेन तयोर्मूललब्धत्वाल्लब्धत्ववैषम्योक्त्ययोगः । अतः कार्कश्यादिना कालसम्बन्धेऽनुमिते विप्रतिपन्नं प्रतीति मूलेन कार्कश्यादिहेतुककालसम्बन्धसाधन एव यो विप्रतिपद्यत इत्यर्थस्य लब्धतया युक्तं वैषम्याभिधानमित्याशय इति वाच्यम् । न चैतदपि सम्भवति । परापरादिप्रत्ययानां कार्यत्वेन कालानुमानप्रतिपादनस्योक्तविप्रतिपत्तिविषयसमर्थनपरत्वाभावेन वाक्यस्यासङ्गतार्थत्वप्रसङ्गात् । विप्रतिपन्नविषयपरित्यागेनाविप्रतिपन्नविषयान्तरप्रतिपादनपरं भाष्यं न तु विप्रतिपन्नार्थसमर्थनपरमित्यादि कुसृष्टिकल्पनं तु कार्कश्यादिना कालसम्बन्धानुमानशङ्कानिरासस्य महाप्रयत्नेन करिष्यमाणस्य वैय्यर्थ्यापादकत्वेनायुक्तमेव ।

किञ्च परापरादिप्रत्ययानामिति वक्ष्यमाणं कार्यत्वानुमानं परापरादिप्रत्ययैर्विषयतया कालानुमानादभिन्नमिति न केनापि वक्तुं शक्यम् । प्राक्कालमन्तरेण विषयानवक्लृप्तेरिति । अत्र च कार्यत्वेन निमित्तेत्युक्तत्वात् । ततोऽवश्यमनुमानान्तरमेव कालसाधकत्वेन भाष्यार्थतया वर्णितमिति वाच्यम् ।





तथात्वे च परापरादिप्रत्ययानां कार्यत्वेन निमित्तानुमानार्थमिदं भाष्यमित्येतावदंशस्यैव पूर्णत्वेन वलीपलितेत्यादि विप्रतिपद्यत इत्यन्तकथाकथनस्य वैय्यर्थ्यमेव । न हि परभाष्ये उक्तरीत्या अनुमान-क्रमोऽस्ति । अपि च अनुमानान्तरपदतया भाष्ययोजनाशङ्कापरत्वपक्षे उत्तरत्र तदनुमानस्यापि निराकर्त-व्यत्वप्रसङ्गः । न च परापरादिप्रत्ययानां कालनिमित्तकत्वे यो विप्रतिपद्यत इत्यर्थपक्षेऽपि पूर्वानुक्त-स्यैवानुमानस्याशङ्कनलाभेन तत्परित्यागप्रसङ्गष्टीकाकृद्योजनायामप्यविशिष्ट इति वाच्यम् । टीकाकृता कार्कश्यादिनैव कालानुमानं सिद्धिकालविशिष्टप्रत्ययत्वनिरासायाङ्गीकृत्य परापरादिप्रत्ययलिङ्गत्वप्रतिपादक-भाष्यगतिमाशङ्क्य कालसिद्ध्यर्थतया भाष्येन परापरादिप्रत्ययाभिधानं किन्तु तेषां प्रत्ययानां काल-निमित्तकत्वानुमानप्रदर्शनार्थमित्यभिप्राय उक्तः । न च तावता कालसिद्धिः प्रत्ययैर्भाष्याभिप्रेततया स्वीकृता । निराकृतपरापरप्रत्ययादिलिङ्गककालसाधकानुमानपरभाष्यस्य कथञ्चित्सार्थक्यप्रतिपादनात् । यं प्रति च सार्थक्यं प्रतिपाद्यते तेन कार्कश्यादिनाऽवधृत एव कालः । एते प्रत्ययाः केवलं तन्निमित्तकतया नावधृताः । तद्यथा दण्डादौ प्रत्यक्षेण सिद्धे सति घटादिकं तन्निमित्तकमित्यत्र यो विप्रतिपद्यते तं प्रति तदन्वयव्यतिरेका-नुविधायित्वेन घटादेर्दण्डादिनिमित्तकत्वं साध्यते नैतावतेदं दण्डाद्यनुमानं भवति । अत एव निमित्तानुमानार्थमित्येतन्निमित्तत्वानुमानार्थमिति टीकाकृद्विभावयिष्यति । सिद्धान्तिनापि कालस्य साक्षि-प्रत्यक्षसिद्धत्वसमर्थने भारवता साक्षिसिद्धत्वविरोधितया कार्कश्यादिना कालसिद्धिमात्रमेव निराकरिष्यते न त्वविरोधिभूतं तत्परापरादिप्रत्ययानां कालनिमित्तकत्वं तदपि निराकरिष्यत इत्यलं प्रसक्तानुप्रसक्तवर्णनेन । **कालनिमित्तकत्वानुमानार्थमिति** । एतच्च मूलस्थं निमित्तानुमानपदं निमित्तकत्वेन कालानुमानार्थकं फलतस्तु निमित्तकत्वानुमानार्थमिति लभ्यत इत्याशयेन । अतः निमित्तभूतकालस्य सिद्धत्वेन तन्निमित्तकत्वस्यैवा-नुमेयत्वाङ्गीकारे निमित्तानुमानार्थमिति मूलानुपपत्तिरिति शङ्कानवकाशः । न चैवं सति भाष्यानारूढोऽयमर्थः प्रसज्यते । भाष्ये कालः परापरव्यतिकरे प्रत्ययलिङ्ग इति कालानुमानस्यैवाभिप्रेतत्वाप्रतीतेरिति वाच्यम् । भाष्ये कालानुमानमित्येवोक्तावपि कालस्य विषयतया वा निमित्तत्वेन वा अनुमानस्यापि कालानुमानमित्यर्थोप-पत्त्योक्तभाष्यस्य सामान्यतया विशेषपरवत्वेन व्याख्याने विरोधाभावात् । तावता निमित्तत्वेन काला-नुमानप्राप्तावपि तन्निमित्तकत्वानुमानस्य भाष्यादिप्रतीतिरेवेति चेन्न । निमित्तानुमानशब्दस्य स्वरूपतः कालसाधकपरत्वाभावेन परापरादिप्रत्ययानां कालनिमित्तकत्वानुमान एव पर्यवसानेन तथाभूतार्थस्यापि भाष्येऽभिप्रेतताया वक्तुं शक्यत्वात् ।

न चैवमपि मूले कालनिमित्तकत्वेनानुमानमेव कालसाधकमस्तु रूपाद्युपलब्धेः सकारणकत्वानुमानस्यैव चक्षुरादिसाधकत्वप्रतीतेरिति वाच्यम् । अत्र हि कालनिमित्तकत्वे विप्रतिपन्नं प्रतीत्यनेन प्रमाणान्तरेण कालसिद्धिमतो वादिन एव विप्रतिपत्तिप्रतिपादनेन तं प्रति तन्निमित्तकत्वसाधनस्यैवार्थतया कालसाधनस्य च व्यर्थत्वेनोक्तानुमानस्य च तत्साधकतया योजयितुमशक्यत्वात् कालस्यासिद्धौ कालनिमित्तकत्वसाध्यस्या-प्रसिद्धतया प्रागुक्तदोषानुद्धारप्रसङ्गाच्च । तस्मात्कालमङ्गीकृत्यापि यः परापरादिप्रत्ययेषु कालनिमित्तकत्वे





विप्रतिपद्यते तं प्रति विशिष्यैव कालनिमित्तकत्वसाधनमेतदिति न कालसाधकतया अस्योपन्यासो युक्तः । न चैवं कार्यत्वहेतोर्व्यभिचार इति वाच्यम् । सर्वस्यापि कार्यस्य कालनिमित्तकत्वाभ्युपगमेन व्यभिचारानवकाशात् । असाधारण्येन कालनिमित्तकत्वानुमानविवक्षायामपि कार्यविशेषत्वस्य कालकार्यवलीपलिताद्यनवगतस्य हेतुतया विवक्षितत्वेन व्यभिचारानवकाश एव । इत्थमथ वलीपलितकार्कश्यादित्यादिशङ्कामूलतट्टीकाविचारं सूरयो विदांकुर्वन्तु ॥

तं प्रति तेषां कार्यत्वेनेति पाठः । लिङ्गोपन्यासस्यार्थवत्वमित्यङ्गीकारादिति च पाठः । अर्थवत्वादिति पाठेऽप्यर्थवत्वमित्यङ्गीकारादित्येवार्थः । **केशशौक्ल्यपर इति** । 'पलितं रजसा शौक्ल्यमि'त्यभिधानादिति भावः । मूले कार्कश्यं नाम कर्कशस्य भावमात्रमिति स्पष्टमिति न व्याख्यातं टीकायां शरीरावस्थाया हीत्यादिविकल्पानुत्थानमाशङ्क्य परिहरन्नवतारयति **यद्यपि वलीत्यादिना** । **वक्ष्यमाणरीत्येति** । अथ परिशेषादितरनिषेधः करिष्यत इति वक्ष्यमाणेत्यर्थः ।

**स०व्र०**— ननु कालसम्बन्धस्य पूर्वानुमानेनैव सिद्धत्वाद्व्यर्थमिदमनुमानमित्यत आह **विप्रतिपन्नं प्रतीति** । पूर्वानुमानेन सिद्धेऽपि काले तस्य परापरादिविषयप्रत्ययजनकत्वे यो विप्रतिपन्नः तं प्रति इदमनुमानमित्यर्थः । तथा च विशिष्टप्रत्ययानां विशेषणसम्बन्धपूर्वकतानियमादिति भावः । पूर्वानुमानेनैव विशेषणीभूतकालसिद्धेः न लिङ्गप्रतीतावेवेत्यादिनोक्तदोषावकाशोऽत्रेति द्रष्टव्यम् । **तस्येति** । शरीरस्येत्यर्थः ।

**स०ना०— तदेतदिति सर्वं च दृश्यं चास्मृतिगोचरमिति** मूले **अथ वलीपलितकार्कश्यादिनेति** । वलीपलितादिना कालसम्बन्धे प्रथमतः अनुमिते अभ्यधिकाशङ्कया वा आप्ताभासवाक्येन वा पुनः काले विप्रतिपद्यमानं प्रति निमित्तत्वेन पुनः कालसाधनाय भाष्योक्तं अनुमानं प्रवर्तते । तथा हि । परापरप्रत्ययाः प्रसिद्धकारणातिरिक्तकारणसापेक्षाः विलक्षणकार्यत्वात् । तच्च कारणं अन्यन्न सम्भवतीति परिशेषात् कालसिद्धिः । यद्यप्यस्माभिः प्रत्ययाः पक्षत्वेन निर्दिष्टाः तथापि ते स्वयं अनुपपद्यमानाः स्वोपपत्तये कारणीभूतं कालं गमयन्तीति भाष्ये लिङ्गत्वोक्तिर्नानुपपन्ना । अस्माभिस्तु तदेव स्पष्टीकर्तुं विधान्तरमवलम्ब्योक्तम् । न चैवं लिङ्गप्रतीतावेव लिङ्गिनः कालस्य स्फुरणात् कथं तेन तदनुमानमिति दोषो भवति । सर्वथा यत्रासिद्धमेव साध्यं साध्यते तत्रैव लिङ्गप्रतीतौ साध्यप्रतीतिर्दोषः । लिङ्गप्रतीतौ साध्यप्रतीतिः । साध्यप्रतीतौ लिङ्गप्रतीतिरित्यन्योन्याश्रयापादकत्वात् । यत्र तु सिषाधयिषया वा अभ्यधिकशङ्कया वा अनुमानं प्रवर्तते न तत्र लिङ्गप्रतीतौ साध्यप्रतीतिर्दोषः । एतदनुमानप्रवृत्तेः प्रागपि मानान्तरेण साध्यस्य सिद्धत्वेन अन्योन्याश्रयाभावात् । नाप्यनुमानस्य वैयर्थ्यम् । अभ्यधिकाशङ्कानिरासकत्वात् ।

**विट्ठल०— वलीति** लम्बमानचर्मकत्वमुच्यते । **पलितं** शुक्लकेशत्वम् । **कार्कश्यं** कर्कशत्वं कृशत्वं वा । नन्वेतेनैवानुमानेन कालसम्बन्धेऽनुमितिलिङ्गषट्कोक्तिपरं भाष्यं व्यर्थमापद्येतेत्यत आह **विप्रतिपन्नं**





**प्रतीति** । पूर्वानुमानेन सिद्धेऽपि काले तस्य परापरादिप्रत्ययजनकत्वे यो विप्रतिपन्नो भवति तं प्रति कालविशिष्टपिण्डविषयकाणां परापरादिप्रत्ययानां कार्यत्वेन विशिष्टप्रत्ययरूपकार्यस्य विशेषणसम्बन्धपूर्वकता-नियमाद्विशेषणीभूतस्य कालस्य तन्निमित्ततानुमानार्थमनुमानषट्कप्रदर्शनपरं भाष्यमुदाहृतमित्यर्थः । **अत एव** लिङ्गप्रतीतावेव । लिङ्गिनः कालस्य स्फुरणादित्युक्तदोषावकाशो नेति द्रष्टव्यम् । **कालसम्बन्धोऽनुमीयत इति** । वलीपलितादिकं कालकारणकं कारणान्तरशून्यत्वे सति कार्यत्वादित्यनुमीयत इत्यर्थः ।

**चषकः**— **वलीशब्दः** शरीरावस्थाविशेषवचनः । **पलितशब्दः** केशधावल्यवचनः । **निमित्तानु-मानार्थमिति** । परापरादिप्रत्ययानां कालकार्यत्वेन तादृशप्रत्ययनिमित्तभूतकालानुमानार्थमित्यर्थः ।

**१५५ सु०— आद्ये किमस्मादनुमानात्प्राक्कालः सिद्धोऽथवा नेति वाच्यम् । आद्ये तन्नित्यसिद्धेस्तस्य कालस्य प्रागनुमानान्नित्येन साक्षिणा सिद्धेः । द्वितीये चाप्रसिद्ध-विशेषणत्वान्नानुमानावसरो भवेत् ।**

**किञ्च वलीपलित(कार्कश्य)ादिशरीरावस्थाकारणत्वेन कालानुमाने तन्नित्यसिद्धे-स्तस्य कालसम्बन्धस्य नित्यं सर्वदा वलीपलितादिवैधुर्यदशायामपि सिद्धेः नित्ये परमाणावपि सिद्धेर्बाधितविषयत्वेन नानुमानावसरो भवेत् ।**

**अथ बहुकालसम्बन्धोऽनुमीयते । तन्न । बहुत्वं हि कालस्य किं परमाणूनामिव सहैव, उत क्रियाणामिव पूर्वापरभा(वित)वेन । नाद्यः, तत्सम्बन्धस्यापि नित्यसिद्धेः । नेतरः (नोत्तरः) तस्य कालस्य नित्यसिद्धेः । नित्यतयाऽङ्गीकृतत्वात् ॥**

**परि०**— एके तु कालसम्बन्धस्य परापरादिप्रत्ययनिमित्तत्वे विप्रतिपन्नं प्रति तन्निमि-त्तत्वानुमानार्थमित्यर्थ इति व्याचक्षते । तन्नित्यसिद्धेरित्यादि योजयति **तन्नित्यसिद्धेरिति** । कालसम्बन्धेऽनुमिते इत्यत्र कालसम्बन्धमात्रं बहुकालसम्बन्धो वा । आद्ये आह **किञ्चेति** । नित्यपदस्यार्थद्वयमुपेत्याह **नित्यं सर्वदेति** । **नित्ये परमाणाविति** । बाधितविषयत्वेन वलीपलितादिदेहावस्थारहितेऽपि देहे स्वतःकालसम्बन्धस्यान्वयव्यभिचारेण देहावस्थाकारणत्वस्य बाधेन कारणत्वेन कालसम्बन्धानुमानं बाधितविषयमित्यर्थः । द्वितीयं शङ्कते **अथ बहुकालेति** । **तत्सम्बन्धस्यापीति** । न्यायमते बहुत्वस्यौपाधिकत्वेनोपाधीनां युगपद्बाहुल्यसम्भवेन काल-बहुत्वस्यापि सम्भवादौपाधिकबहुकालसम्बन्धस्य वलीपलितादिवैधुर्यदशायामपि सिद्धत्वेन व्यभि-चारितया वलीपलितादिकारणत्वेन तदनुमानं बाधितविषयमिति भावः । यद्वा काले परमाणूनामिव





युगपद्बहुत्वाभावमभ्युपेत्य दोषोक्तिरियम् । अथवा सिद्धान्ते क्षणलवादेरप्यनन्तांशोपेतत्वात् तेषां च भिन्नाभिन्नत्वादेकक्षणादिसम्बन्धदशायामेव बहुकालसम्बन्धोऽस्तीत्येवमुक्तिः । **नित्यतयेति** । ननु औपाधिकानां कालानां पौर्वापर्यमस्त्येवेति चेन्न । उपाधीनां कारकत्वस्याग्रे समयपादे निरसिष्यमाणत्वात् । ज्ञापकत्वे च स्वत एव पूर्वापरीभावापन्नकालविशेषाणां प्राप्त्या अपसिद्धान्तापत्तेरिति भावः ।

**गु०दी०— बाधितविषयत्वेन नानुमावसरो भवेत्** इत्यत्र कालसामान्यसम्बन्धस्य वलीपलिताभावदशायां सर्वथा वलीपलितरहिते परमाणौ च सत्त्वात् वलीपलितकारणत्वासम्भवात् बाध इत्यर्थः । **तत्सम्बन्धस्यापि नित्यसिद्धेः** इत्यत्र परमते कालस्यैकत्वेनास्मन्मते कालबाहुल्यस्य क्रमिकत्वेन च सहैव बहुकालसम्बन्धासम्भवाद्वर्तमानैकैककालसम्बन्ध इत्येवोक्तं स्यात् । तस्य च पूर्ववन्नित्यं वलीपलिताभावदशायां नित्ये परमाणौ च सिद्धेरित्यर्थः ।

**यादु०— बाधितविषयत्वेनेति** । अन्वयव्यभिचारेण कारणताप्रविष्टनियमानुपपत्तौ कारणतैव बाधितेति भावः । **तत्सम्बन्धस्यापीति** । नित्ये परमाण्वादौ सिद्धेरन्वयव्यभिचारेणोक्तदोषतादवस्थ्यमित्यर्थः । इदं च काले सहैव बहुत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु तदेव नास्तीति ज्ञातव्यम् ।

**वं०प०— कारणत्वेनेति** । वलीपलितादिशरीरावस्थया तत्कारणत्वेन कालानुमाने तत्सम्बन्धानुमान इत्यर्थः । अनुमीयमानं कारणत्वं नियमगर्भम् । तच्चान्वयव्यतिरेकावसेयम् । तथा च कालसम्बन्धे सति वलीपलितादिकं तदभावे तदभाव इत्यन्वयव्यतिरेकौ वाच्यौ । तत्र नियमज्ञापकान्वयो न सम्भवतीत्याह **नित्यं सर्वदेति** । वैधुर्यदशायामपीत्युक्त्या साध्याभाव उक्तः । तथा च यौवनावस्थायां व्यभिचारेण कारणत्वं बाधितमिति भावः । **परमाणावपीति** । कालसम्बन्धे सत्यपि वलीपलितादेरभावेन अन्वयव्यभिचारादत्रापि कारणत्वं बाधितमित्याशयः । वलीपलितादिशरीरावस्थाकारणत्वेन केवलकालसम्बन्धो नानुमीयते । किं नाम बहुकालसम्बन्ध एव शरीरावस्थाकारणत्वेनानुमीयत इत्याशङ्कते **अथेति** । **सहैवेति** । युगपन्मेलनरूपमित्यर्थः । **क्रियाणामेवेति** । त्रिक्षणावस्थायित्वेन परमाणूनामिव मेलनासम्भवात् पूर्वापरीभावेनैव बहुत्वम् । पूर्वक्रियाणां नाशे क्रियान्तराणामुत्पाद एव बहुत्वमित्यर्थः । अत्रापि बहुकालसम्बन्धस्य वलीपलितादिशरीरावस्थाकारणत्वस्य परमाण्वादौ व्यभिचारेण नियमो न युक्त इति, कारणत्वं बाधितमित्याह **तत्सम्बन्धस्यापीति** । **नित्यतयेति** । नित्यत्वात् क्रियाणामिव पूर्वापरीभावेन बहुत्वायोगात् तस्मिन्साध्ये बाध इति भावः ।

**आनन्दः—** किञ्च वलीपलितादिशरीरावस्थैव कालसम्बन्धानुमापिका अन्यद्वा किञ्चित् । तत्राद्ये ह्येवमनुमातव्यम् । अयं पिण्डः कालसम्बन्धवान् वलीपलिताद्यवस्थावत्त्वादिति । एवं हि सति यदा धूमस्तदा





वह्निसिद्धिवत् वलीपलिताद्यवस्थादशाया कालमेव सम्बन्धस्य सिद्धिः स्यात् । तथा वलीवलिपलितादिवैधुर्य-दशायामपि कालसम्बन्धस्य सिद्धत्वेन बाधितविषयत्वात् । नित्यपरमाण्वादौ वलीपलिताद्यभावात्काल-सम्बन्धस्य सिद्धिः न स्यादिति । तर्कपराहतत्वाच्च नास्यानुमानस्यावसर इत्याह **किञ्चेति** । नान्त्यः । तथा सति वलीपलितादेरुपन्यासवैयर्थ्यात् । **अथ बह्विति** । तथा च न बाध इति भावः । **तत्सम्बन्ध-स्यापीति** । बहूनां कालानां नित्यत्वेन तत्सम्बन्धस्यापि नित्यसिद्धत्वात्सिद्धसाधनमिति भावः । नित्य-सिद्धेरित्यस्य नित्यतयाङ्गीकृतत्वादिति व्याख्या । तथा च पूर्वापरीभावसाधने बाध इति भावः ।

**श्रीनिधि०— वलीपलितादिवैधुर्यदशायामपीति** । नन्वेवं कारणमात्रविलोपप्रसङ्गः । धूमाद्यभाव-दशायामपि वह्न्यादिसिद्धेरिति चेन्न । तत्सिद्धेः प्रमाणान्तराधीनत्वात् । न हि काले तथेष्यते । यदि धूमादि वारणत्वेनैव वह्न्यादिसिद्धिः स्यात् । तदायं दोषो वह्न्यादौ सत्यपि धूमाद्यभावे न चैवमित्युक्तम् । **नित्य-तयाङ्गीकृतत्वादिति** । अखण्डतया चेत्यपि द्रष्टव्यम् ।

**शे०वा०— वलीपलितादिवैधुर्यदशायामपीति** । तथा च यूनि कालसम्बन्धे सत्यपि वलीपलिता-द्यभावात् तत्रान्वयव्यभिचार इति भावः । **नित्ये परमाणावपीति** । तथा च तत्राप्यन्वयव्यभिचार इति भावः । **बाधितविषयत्वेनेति** । उक्तरीत्या अन्वयव्यभिचारेण कारणताशरीरप्रविष्टनियमानुपपत्त्या काल-सम्बन्धस्य वलीपलिताद्यवस्थाकारणत्वाभावस्यैव सिद्धत्वेन वलीपलितादिकारणत्वेन कालानुमानस्य बाधित-विषयत्वेनेत्यर्थः ।

ननु कालसम्बन्धमात्रस्य वलीपलिताद्यवस्थाकारणत्वानभ्युपगमात् बहुकालसम्बन्धस्यैव तद्धेतुत्वेना-भ्युपगमात् वलीपलिताद्यवस्थाविधुरे यूनि च बहुकालसम्बन्धस्याप्यभावेन अन्वयव्यभिचाराभावादुक्त-नियमोपपत्तेरवस्थाकारणत्वेन बहुकालसम्बन्धानुमाने न बाधितविषयत्वमिति शङ्कते **अथ बह्विति** । **तत्सम्बन्धस्यापीति** । न्यूनयुक्तरीत्या व्यभिचारपरिहारेऽपि नित्ये परमाणाववस्थाविधुरेऽपि कालसम्बन्धस्य सत्त्वेनान्वयव्यभिचारापरिहारादुक्तदोषतादवस्थ्यमिति भावः । इदं च काले सहैव बहुत्वमङ्गीकृत्यैवोक्तम् । सिद्धान्ते सहैव बहुत्वस्य कालेऽनङ्गीकारादिति ध्येयम् । **नित्यतया अङ्गीकृतत्वादिति** । परेणेति शेषः । तथा च पूर्वापरीभावापन्नबहुकालसम्बन्धसाधने बाध इति भावः ।

**वा०र०—** वलीपलितादिवैधुर्यदशायामपीत्यनेन तद्दशायुक्तस्य यून एव ग्रहणम् । तेन धर्म्यनुक्तिः न दोषायेत्याशयेन धर्मिनिर्देशपूर्वकं सिद्धेत्यनेनोक्तं दोषं च विशदयति **तथा चेत्यादिना** । **अन्वयव्यभिचार इति** । कारणताघटकान्वये तद्व्यभिचार इत्यर्थः । एवमुत्तरत्रापि । कालसम्बन्धस्यापि साध्यसमुच्चयाय **अपिशब्दः** । प्राक् यूनीव परमाणुष्वपि व्यभिचारस्योक्ततया बहुकालानुमानसम्बन्धविवक्षयोभयत्र व्यभिचार-परिहाराशयः प्रतीयते, न चासौ युक्त, इत्याशयेन यून्येव व्यभिचारपरिहारपरतया योजनमिति ज्ञेयम् ।



**यून्युक्तरीत्या व्यभिचारेति** । नन्वङ्गीकारवादेन काले सहैव बहुत्वं तादृशबहुकालसम्बन्धश्च वलीपलितादि-कारणमित्यङ्गीकारे परमाणुष्विव यून्यपि सहैव बहुत्ववत्कालसम्बन्धस्यावर्जनीयतया तत्र व्यभिचारपरिहारासम्भवात् कथमेतत् । न हि किञ्चित्कालसम्बन्धिनि यूनि तत्कालेन सहावस्थितकालान्तरसम्बन्धो नास्तीति शक्यते वक्तुम् । विशेषनियामकाभावेन किञ्चित्कालसम्बन्धोऽपि न स्यादिति चेन्मैवम् । देशानामनेकत्वेऽपि तत्तद्देशावस्थितानां तत्तद्देशमात्रसम्बन्धेऽपि देशान्तरासम्बन्धवत् कालेऽपि बहुत्वेऽपि तत्तत्कालीनानां कालान्तरसम्बन्धानङ्गीकारे बाधकाभावेन सहैव बहुत्ववत्कालसम्बन्धस्य यून्यभावोपपत्तेः । न हि काले सहैव बहुत्वाङ्गीकारे व्यभिचारपरिहारं तदङ्गीकारमात्रेण मन्यते । येन तावन्मात्रमङ्गीकृत्य तुष्येत् । किन्तु यावता व्यभिचारपरिहारस्तावदङ्गीकारेण । तथा च काले सहैव बहुत्वमङ्गीकृत्य यूनि स्वोत्पत्तिमारभ्य यावत्काल-सम्बन्धो जातः तावत्कालसम्बन्धित्वेऽपि यत्सम्बन्धो भविता तत्कालसम्बन्धाभावेन बहुकालसम्बन्धाभावं च यून्यङ्गीकृत्य व्यभिचारपरिहारं मन्यते । अन्यथा बहुकालसम्बन्धिनिर्वाहः तस्य न स्यात् । न चैतावता कालान्तरं तत्कालसहभूतं यूनापि सम्बन्धमित्यायातीति शक्यते वक्तुम् । देशतुल्यतया नित्येष्वपि कालेषु तत्तत्कालसम्बन्धानां क्रमेण जायमानत्वाङ्गीकारेण तत्पदार्थानां तत्तद्देशैः क्रमेण सम्बन्धस्याप्युपपत्त्या बहुकालसम्बन्धाभावोपपत्तेरिति तस्याशयात् । ततश्च युक्त एव व्यभिचारपरिहारः । अवस्थानिमित्तत्वेन तत्तत्कालानां सम्बन्धस्येश्वरनियततया यूनि क्रमेण तत्तत्कालसम्बन्धप्रसङ्गेऽपि सर्वावस्थाविधुरे परमाणवादौ व्यवस्थाप्रयोजकत्वेन कालसम्बन्धप्रसक्त्या भावेन सर्वदिगवस्थितगगनादेस्तत्तद्देशावस्थितत्वप्रयुक्तविशेष-शून्यत्वेऽपि सर्वदिक्सम्बन्धवत् सर्वकालसम्बन्धसद्भावोपपत्तेश्च तत्र व्यभिचारपरिहारकथनस्यापि युक्तत्वात् । तस्मात् कालानां सहैव बहुत्वेऽपि तत्सम्बन्धस्य यून्यभावेन व्यभिचारपरिहारेऽपीति साधूक्तमिति मङ्गलम् ।

**स०व्र०— बाधितविषयत्वेनेति** । कार्येण कारणानुमानस्थले कार्यसमानकालीनाया एव कारण-सिद्धेर्दृष्टत्वात् कार्यवत्येव च दृष्टत्वेन कारणाभाववति सर्वथा तत्सिद्धेरदृष्टत्वाच्च प्रकृतेऽपि शरीरकारणत्वेन कालसम्बन्धवत् तत्कार्यवलीपलितादिमत्त्वादित्यत्र कार्यभूतवलीपलिताद्यभावदशायामपि यूनि कालसम्बन्धस्यैव दर्शनेन कार्यसमानकालीनकारणसिद्धेरभावेन वलीपलितादिरूपकार्याभाववत्यपि परमाणौ कालसम्बन्धदर्शनेन कार्यवत्येव तत्सिद्धेरभावेन कालसम्बन्धस्य वलीपलिताद्यवस्थाकारणत्वाभावेन तत्साधने बाधः स्यादिति भावः । कार्येणैव यत्र कारणानुमानं तत्र कार्याभावेऽपि कारणस्य कालसम्बन्धस्य सत्त्वेन कालसम्बन्धानुमानं बाधितविषयम् । न च कारणीभूतस्य कालसम्बन्धस्य सत्त्वेऽपि कारणान्तराभावेन कार्याभावस्योपपन्नत्वान्न बाधितविषयत्वमिति वाच्यम् । कालसम्बन्धस्यैव सामग्रीरूपत्वेन तदतिरिक्तकारणाभावादिति सम्प्रदायविदः । **अथ बह्विति** । तथा च न बाध इति भावः । **तत्सम्बन्धस्यापीति** । बहूनां कालानां नित्यत्वेन तत्सम्बन्ध-स्यापि नित्यसिद्धत्वात्सिद्धसाधनमिति भावः । अन्ये तु **बहुकालसम्बन्धस्यापि नित्यतयाऽङ्गीकृतत्वा-दिति** । तथा च पूर्वापरभावसाधने बाध इति भावः । नित्ये परमाणौ सिद्धेर्व्यभिचारात् बाध इत्यर्थः । इदं च काले सहैव बहुत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु तदेव नास्तीति ज्ञातव्यमित्याहुः ।





**स०ना०— तत्सम्बन्धस्यापि नित्यसिद्धेरिति** । एकस्य कालक्षणस्य अनन्तावयवत्वेन युगपदनेककालसम्बन्धस्य नित्यसिद्धेरित्यर्थः ।

**विट्ठल०—** किञ्च नानुमानेन कालसिद्धिर्युज्यते । सत्यपि कालसम्बन्धे यूनि परमाण्वादौ च वलीपलिताद्यभावेन वल्याद्यनुकृतान्वयव्यतिरेकित्वाभावात् । अकारणतानिश्चयेन कालात्ययापदिष्टतयानुमानस्य दुष्टत्वादित्याशयेनाह **किञ्चेति** । ननु न कालसम्बन्धमात्रं वल्यादिकारणत्वेनानुमीयते येनोक्तदोषः किन्तु बहुकालसम्बन्ध एव । तथा च यत्र बहुकालसम्बन्धः तत्र वल्यादिकमित्यन्वयस्य यूनि व्यभिचाराभावेन बहुकालसम्बन्धस्य वल्यादिकारणतानिश्चयान्न बाधितविषयत्वमिति शङ्कते **अथेति** । **सहैवेति** । अनेकपरमाणुकारणमिवेत्यर्थः । **तत्सम्बन्धस्यापीति** । बहुकालसम्बन्धस्यापि नित्ये परमाणौ सिद्धेर्व्यभिचाराद्बाध इति भावः । यद्वा बहूनां कालानां नित्यत्वेन तत्सम्बन्धस्यापि नित्यसिद्धत्वाद्वलीपलितवैधुर्येऽपि सिद्धत्वाद्बाध इति भावः । इदं च काले बहुत्वं परमतरीत्योक्तं न्यायमते बहुत्वस्यौपाधिकत्वेन तदुपाधीनां च युगपद्बाहुल्यसम्भवेन कालस्य सहैव बहुत्वसम्भवात् । वस्तुतस्तु अस्मन्मते आशुतरविनाशिनां कालावयवानां सहैव बहुत्वं नोपपद्यत इति मन्तव्यम् ।

**चषकः— बाधितविषयत्वेनेति** । सत्यपि तस्मिन् कार्यानुत्पत्त्या अन्वयव्यभिचारेण तद्धेतुतैव बाधितेति भावः । **तत्सम्बन्धस्यापीति** । परमाण्वाद्यवच्छेदेन कालसम्बन्धस्यान्वयव्यभिचारान्न तस्यापि हेतुतेति भावः ।

**१९६ सु०— न द्वितीयः, तस्य नित्यसिद्धेः सिद्धसाधनत्वात् । अथ परिशेषादितरनिषेधः करिष्यत इति चेन्न, परिशेषावधारणानुपपत्तेरिति ॥**

**परि०—** यत्किञ्चिद्द्रव्यसम्बन्धो वेति पक्षं निराह **न द्वितीय इति । तस्येति** । पृथिव्यादिरूपयत्किञ्चिद्द्रव्यसम्बन्धस्य शरीरे नित्यं सिद्धेरित्यर्थः । **परिशेषावधारणेति** । पूर्वत्राकाशे परिशेषावधारणोक्त्या तत्तुल्यन्यायतया वा काल एवाग्रे वक्ष्यमाणपरिशेषानुपपत्तितुल्यन्यायतया वा द्रव्यान्तरकल्पनापेक्षया पृथिव्याद्यष्टद्रव्येष्वेव परापरव्यतिकरादिप्रत्ययनिर्वाहकल्पनौचित्येन वा अष्टद्रव्यातिरिक्तकालाख्यनवमद्रव्यपरिशेषावधारणायोगादित्यर्थः ।

**वं०प०—** वलीपलितादिशरीरावस्थया तस्य यत्किञ्चिद्द्रव्यसम्बन्धोऽनुमीयत इति द्वितीयो न सम्भवतीत्याह **न द्वितीय इति । सिद्धसाधनत्वादिति** । पृथिव्यादियत्किञ्चिद्द्रव्यसम्बन्धस्य शरीरे सिद्धत्वादित्यर्थः । सिद्धसाधनत्वं नास्तीति शङ्कते **अथेति** । शरीरावस्थया यत्किञ्चिद्द्रव्यसम्बन्धेऽनुमिते तद्द्रव्यमन्यत्र





सम्भवति । अतः परिशेषात् काल एवेत्यङ्गीकार्यमित्याशयः । **परिशेषावधारणेति** । परिशेषं विधाय काल एवेत्यवधारणानुपपत्तेरित्यर्थः । परिशेष एवानुपपन्न इत्याशयः ।

**आनन्दः—** **न द्वितीय इति** । यत्किञ्चिद्द्रव्यसम्बन्धोऽनुमीयते इति द्वितीयो नेत्यर्थः । **परिशेषादिति** । हेत्वा(?)दिति भावः । तत्र कथमनुमानप्रकार इत्यतस्तद्दर्शयति द्वितीयो नेत्यर्थः । **परिशेषादिति** । हेत्वभावान्तरणि (?) परिस्पन्दा हीति ।

**श्रीनिधि०—** **परिशेषावधारणानुपपत्तेरिति** । वक्ष्यमाणदिशा बहुतरपरिस्पन्दस्वरूपसम्बन्धसम्भवेन तत्कृतत्वेनाप्युपपत्तौ परिशेषो नावधारयितुं शक्यत इति भावः ।

**शे०वा०—** यत्किञ्चिद्द्रव्यसम्बन्धोऽनुमीयत इति द्वितीयं दूषयति **न द्वितीय इति** ।

**विट्ठल—** यत्किञ्चिद्द्रव्यसम्बन्ध इति पक्षं दूषयति **न द्वितीय इति** । **तस्येति** । पृथिव्यादियत्किञ्चिद्द्रव्यसम्बन्धस्य नित्यं शरीरे सिद्धेरित्यर्थः । ननु शरीरे वल्याद्यवस्था पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसम्बन्धनिमित्तका सत्स्वप्यन्यसम्बन्धेषु अजायमानत्वे सति जायमानत्वादिति परिशेषादितरनिषेधः करिष्यते । अतो न सिद्धसाधनतेति शङ्कते **अथेति** । **परिशेषावधारणानुपपत्तेरिति** । आकाशसमानन्यायेनाप्रसिद्धविशेषणत्वाद्यापत्तेरिति भावः ।

**॥ इति उक्तार्थस्पष्टीकरणम् ॥**

* * *

**॥ ततः परभाष्यव्याख्यानामसाधारणदोषेण दूषणम् ॥**
**॥ तत्रादौ वल्लभोदीरितकालसमर्थनरीतिदूषणम् ॥**
**॥ तत्राप्यादौ तद्रीत्युद्भावनम् ॥**

**१५७ सु०— अन्ये तु व्याचक्षते । बहुतरतरणिपरिस्पन्दान्तरितजन्मत्वं परत्वम् । अल्पतरसौरसञ्चारान्तरितजन्मत्वं चापरत्वम् । एकतपनप्रचारविशिष्टत्वं यौगपद्यम् । अनेकतद्विशिष्टत्वमयौगपद्यम् । बहुक्रियाविशिष्टत्वं चिरत्वम् । कतिपयक्रियाविशिष्टत्वं क्षिप्रत्वम् । तत्प्रत्ययैः कालोऽनुमीयते । तरणिपरिस्पन्दा हि पदार्थसार्थे विशिष्टप्रत्ययोत्पत्तौ स्वप्रत्यासत्तिमपेक्षन्ते, स्वरसतोऽप्रत्यासन्नत्वे सति विशिष्टव्यवहारजनकत्वात्, चन्दनसौरभवत् । परम्परासम्बन्धिनश्च साक्षात्सम्बन्धविरहे सति सम्बन्धित्वात्, पट-**





**संसृष्ट(सम्बन्धि)नीलिमवत् । अतः पिण्डतपनपरिस्पन्दयोः संयुक्तसंयोगिसमवायात्मनि परम्परासम्बन्धे यद्द्रव्यं निमित्तं स काल इति ।**

**परि०— बहुतरतरणीति** । यस्य जन्मानन्तरं सूर्यमण्डलगतगमनक्रियारूपपरिस्पन्दाः बह्वोऽतीताः तद्वत्त्वं पिण्डे परत्वं सूर्यमण्डलगतातीतबहुपरिस्पन्दविशेषणकत्वं पिण्डे परत्वमित्यर्थः । एवमग्रेऽपि । **सूरेति** । सूर्यशब्दपर्यायः सूरशब्दः । 'सूरसूर्यार्यमादित्ये'त्यमरकोशात् । सौरेति पाठे सूरशब्दात् तस्येदमित्यण्प्रत्यये रूपम् । **एकेति** । चैत्रमैत्रौ युगपदागतावित्यत्र चैत्रमैत्रागत्योर्यौगपद्यं नाम यस्मिंस्तपनपरिस्पन्दे चैत्रागतिस्तस्मिन्नेकस्मिन्नेव परिस्पन्दे मैत्रस्यागतिश्चेत् तदा एकपरिस्पन्दविशेषणयुक्तत्वमागतिमतोः पिण्डयोर्यौगपद्यमित्यर्थः । **अनेकेति** । यस्मिन्प्रचारे चैत्र आगतः ततोऽन्यस्मिन्परिस्पन्दे मैत्र आगतश्चेदयौगपद्यमित्यर्थः । **तत्प्रत्ययैरिति** । रविबिम्बगतबहुतरपरिस्पन्दविशेषणकपिण्डविशेष्यकप्रत्ययरूपपरत्वप्रत्ययेन १, अल्पतरतत्सञ्चारविशेषणकपिण्डविशेष्यकप्रत्ययरूपापरत्वप्रत्ययेन २, रविमण्डलगतैकक्रियाविशेषणकाऽनेकवस्तुविशेष्यकप्रत्ययरूपयौगपद्यप्रत्ययेन ३, अनेकतद्विशेषणकानेकविशेष्यकप्रत्ययरूपायौगपद्यप्रत्ययेन ४, रविमण्डलगतबहुक्रियाविशेषणकवस्तुविशेष्यकप्रत्ययरूपचिरत्वप्रत्ययेन ५, अल्पतत्क्रियाविशेषणकवस्तुविशेष्यकप्रत्ययरूपाचिरत्वप्रत्ययेन ६ चेत्यर्थः । कथमेतैः कालानुमानमित्यतो रविबिम्बगतक्रियाणामवनिगतपिण्डविशेष्यकोक्तरूपषड्विधप्रत्ययेषु विशेषणतया उपनायकप्रत्यासत्तित्वेन कालस्यानुमानमिति भावेनाह **तरणिपरिस्पन्दा हीति** । **पदार्थसार्थ इति** । पदार्थसमूहविशेष्यकस्वविशेषणकप्रत्ययरूपविशिष्टप्रत्ययोत्पत्तावित्यर्थः । **स्वप्रत्यासत्तिमिति** । स्वात्मना पदार्थैः सह प्रत्यासत्तिं साक्षात्परम्परासाधारणं सम्बन्धमात्रमित्यर्थः ॥ **स्वरसत इति** । दण्डयादौ दण्डादेरिव संयोगेन, गुणादेर्गुण्यादिनेव समवायेन, ज्ञानादेर्ज्ञेयादिनेव स्वरूपसम्बन्धेन वेत्यर्थः । **चन्दनसौरभवदिति** । सुरभिचन्दनमिति चाक्षुषप्रत्ययविषयचन्दनविशेषणरूपसौरभवदित्यर्थः । तत्र संस्कारो ज्ञानं वा प्रत्यासत्तिरिति भावः । हेतौ सत्यन्तमात्रोक्तौ घटत्वपटत्वादौ व्यभिचारः । घटत्वपटत्वयोरन्योन्यं तादृशत्वेऽपि प्रत्यासत्त्यपेक्षाभावात् अतो विशेष्योक्तिः । तावन्मात्रस्य घटादिस्थगुणक्रियादौ व्यभिचारात्सत्यन्तम् । सा च प्रत्यासत्तिः साक्षाच्चेत् कालसिद्धिर्नेति भावेनाह **परम्परासम्बन्धिनश्चेति** । परिस्पन्दा इति प्राक्तनपक्षनिर्देशस्यानुषङ्गः । न केवलं प्रत्यासन्ना इति चार्थः । **पटेति** । कर्दमादिलिप्तपटसंयुक्तकर्दमादिद्रव्यसमवेतनीलिमगुणवदित्यर्थः । **अत इति** । परस्परासम्बन्धरूपप्रत्यासत्तेः प्रमितत्वादित्यर्थः । **पिण्डेति** ।





भूम्यादिगतपिण्डस्य गगनगततपनपरिस्पन्दस्य चेत्यर्थः । **संयुक्तसंयोगीति** । भूम्यादिस्थ-पिण्डसंयुक्तं किञ्चिद्द्रव्यं तत्संयोगोपेतं तपनमण्डलं तत्समवायात्मनीत्यर्थः । रविबिम्बसमवेतानां परिस्पन्दानां रविबिम्बस्य भूमिस्थपिण्डस्य च मध्ये तन्तुवत् उभाभ्यां संयुक्तं महद्द्रव्यं किञ्चित्सिद्ध्यति; स काल इत्यर्थः ।

**यादु०**— स्वप्रत्यासत्तिं स्वनिरूपितातिरिक्तसम्बन्धमपेक्षन्त इत्यर्थः । **स्वरसत इति** । स्वभावत इत्यर्थः । इदं च, घटाभाववद्भूतलमित्यादौ, व्यभिचारवारणाय । **निमित्तमिति** । घटकमित्यर्थः ।

**वं०प०**— **एकतपनेति** । उभयोरपीति शेषः । सार्थे = समूहे । **स्वरसत इति** । स्वरूप-सम्बन्धेनेत्यर्थः ।

**आनन्दः**— **चन्दनेति** । चन्दनसौरभ्यचक्षुषा स्वरसतः प्रत्यासत्त्यभावेऽपि विशिष्टव्यवहारजनकत्व-सत्त्वादस्ति स्वप्रत्यासत्त्यपेक्षा एवं पटसंसृष्टनीलिमवदित्यपि द्रष्टव्यम् । ननु प्रकृते कीदृशपरम्परासम्बन्धः सिद्ध्यतीत्यत्राह **अत इति** । **संयुक्तेति** । पिण्डसंयुक्तं यद्द्रव्यं तत्संयोगवति नयने क्रियाया यः समवायस्तदा-त्मनीत्यर्थः ।

**श्रीनिधि०**— **चन्दनसौरभवदिति** । तत्र हि चन्दनसौरभस्य सुरभिचन्दनमिति विशिष्टप्रत्ययोत्पत्तौ स्वरूपसम्बन्धातिरिक्तसम्बन्धापेक्षा अस्ति । स्वरूपसम्बन्धराहित्ये सति विशिष्टव्यवहारजनकत्वं वास्तीति भावः ।

**शे०वा०**— श्रीवल्लभोदीरितकालसमर्थनरीतिं दूषयितुं तद्रीतिमुद्भावयति **अन्ये त्विति** । **तरणीति** । **तरणिः** = सूर्यः । **पदार्थसार्थ इति** । स्थविरयुवादिशरीरपिण्डसमुदाय इत्यर्थः । अयमाशयः । अनुभूयते तावदन्वयव्यतिरेकाभ्यां तरणिपरिस्पन्दविशेषाणां युवस्थविरशरीरादिपिण्डेषु मासदिवसादिविचित्रबुद्धिजननद्वारेण तत्तदुपहितेषु परत्वादिविशिष्टबुद्धिजनकत्वम् । न च पिण्डैरसम्बद्धानां रविस्पन्दानां तत्र बुद्धिजनकत्वं सम्भवति । अतिप्रसङ्गात् । किन्तु प्रत्यासन्नानामेवेति रविस्पन्दानां पिण्डैः सह प्रत्यासत्तिसिद्धिः । तथा चायं प्रयोगः । तरणिपरिस्पन्दा घटनिष्ठविशिष्टबुद्धिजनकप्रत्यासत्तिमन्तो घटविषयकविशिष्टधीजनकविशेषणत्वात् घटरूपवदिति । अस्त्वेवं तरणिपरिस्पन्दानां पिण्डैः सह प्रत्यासत्तिः । सा तु स्वभावप्रत्यासत्तिरेवास्त्विति । किं कालेनेत्यत्राप्येतदेवोत्तरं स्वप्रत्यासत्तिमपेक्षन्त इति । स्वभावप्रत्यासत्त्यतिरिक्तप्रत्यासत्तिमित्यर्थः ।

ननु स्वभावप्रत्यासत्तिमात्रेणैव विशिष्टप्रत्ययजनकत्वनिर्वाहोपपत्तौ किं तदतिरिक्तसम्बन्धेनेत्यतः स्याद-प्येवं यदि पिण्डैः परिस्पन्दानां स्वभावप्रत्यासत्तिः स्यात् । न चैवम् । ततश्च स्वभावतोऽप्रत्यासन्नानामेतेषां





विशिष्टबुद्धिजनकतायाः स्वभावप्रत्यासत्त्यतिरिक्तप्रत्यासत्तिं विनाऽनुपपत्तेर्नानुपपत्तिरित्याशयेनोक्तप्रतिज्ञाया-मनुरूपं हेतुमाह **स्वरसत इति** । सम्बन्धान्तरं विना विशिष्टधीजनकत्वाभावे सतीत्यर्थः । इदं च विशेषणं घटवद् भूतलमित्यादौ व्यभिचारवारणार्थम् । अस्त्वेवं स्वाभाविकसम्बन्धातिरिक्तसम्बन्धसिद्धिः तरणिपरि-स्पन्दानां पिण्डैः । स च सम्बन्धः साक्षादेव भविष्यतीति न वक्ष्यमाणरीत्या कालसिद्धिरित्यतः स्यादेवं यदि तरणिपरिस्पन्दानां पिण्डैः साक्षात्सम्बन्ध उपपद्येत । न चैतदस्ति । न तावत्पिण्डसंयोगः परिस्पन्दानां सम्भवति । अद्रव्यत्वात् । नापि समवायः । तरणिसमवेतस्य तस्य पिण्डेन तदयोगात् । अतः परम्परासम्बन्ध एव वाच्य इति कालसिद्धिरित्याह **परम्परासम्बन्धिनश्चेति** । **नीलिमवदिति** । नीलद्रव्यवृत्तिनीलिम-वदित्यर्थः । **संयुक्तेति** । पिण्डसंयुक्तद्रव्यसंयोगवति तपने समवेतानां परिस्पन्दानां संयुक्तसंयोगिसमवायोऽस्ति सम्बन्धः । अतः संयुक्तवर्तिधर्माणां स्वयं संयुक्तवस्त्वन्तरसङ्क्रामकः कश्चिद्द्रव्यविशेषः स्वीकर्तव्यः । तस्यैव कालसंज्ञेत्यर्थः । स काल इति वक्ष्यमाणरीत्येतरस्य निमित्तत्वासम्भवादिति भावः । अत्र परिशेषस्य परेण व्युत्पादितत्वेऽपि निरासावसर एव तत्स्पष्टनं भविष्यतीत्याशयेन पृथगत्र परिशेषो न प्रदर्शित इति द्रष्टव्यम् ।

**वा०र०— श्रीवल्लभेति** । श्रीमदाचार्यवल्लभेत्यर्थः । स च लीलावतीकारः । तद्ग्रन्थसमाप्तिप्रतिपादने तथैव निर्देशात् । अल्पतरसूरसञ्चारेति किरणावलीतद्वर्धमानादिषु पाठः । तदनुसारेणात्र परत्वापरत्वनिर्वचनात् तथैव पाठो मूले दृश्यते । तावत् दिवसमासादिवैचित्र्येण तपनपरिस्पन्दभेदानां तत्पदार्थसार्थे विशिष्टबुद्धि-जनकत्वमित्यादि लीलावतीमनुसन्धाय तद्व्याख्यानवर्धमानादिकं चानुसन्धाय ननु तरणिपरिस्पन्दभेदानां युवस्थविरादिपिण्डैरित्यादि तत्त्वप्रदीपिकां तद्व्याख्यानरूपनयनप्रसादिनीं च मनसि निधायाभिप्रायमाह **अयमाशय इति** । लीलावतीव्याख्याने तर्कचन्द्रिकायां सार्थः समूह इत्येवोक्तेऽपि युवस्थविरादीति तत्त्वप्रदीपिकानुसारेण स्थविरयुवादीति प्राक् व्याख्यातम् । तदनुसारेणैवात्र युवस्थविरादीति प्रयुक्तमिति ज्ञेयम् । **तत्तदुपहितेषु** दिवसमासाद्युपहितेषु । **बुद्धीति** । विशिष्टबुद्धीत्यर्थः । सूर्यस्पन्दाः घटनिष्ठेत्यादि वर्धमानानुसारेणानुमानप्रकारं दर्शयति **तथा चायं प्रयोग इति** । स्वस्य प्रत्यासत्तिपदं स्वप्रत्यासत्तिमिति विगृह्य प्रत्यासत्तिमात्रपरत्वेन योजितम् । इत्यादीनि उक्तविग्रहमाश्रित्यैव स्वस्येति षष्ठ्यर्थसम्बन्धोप-पादकभिन्नप्रत्यासत्तिपरत्वेनापि व्याख्यातुं तद्व्यावर्त्यशङ्कामुत्थाप्य तन्निवर्तकतया स्वप्रत्यासत्तिमित्येतद्योजयति **अस्त्वेवमिति** । प्रत्यासत्तिमात्रसाधने स्वरूपसम्बन्धसत्त्वेऽपि प्रत्यासत्तिसद्भावेन स्वभावतोऽप्रत्यासन्नत्वे सतीति विशेषणं व्यर्थमापद्येत । अतः साध्यमानप्रत्यासत्तिं विवृणोति **स्वभावप्रत्यासत्तीति** । स्थविर-शरीरप्रत्यासत्तिमपेक्षन्त इत्येतत्किरणावलीव्याख्यावसरे स्वभावातिरिक्तस्थविरप्रत्यासत्तिमन्त इत्युक्तत्वा-दित्याशयः । **सम्बन्धान्तरं विनेति** । स्वरूपसम्बन्धातिरिक्तसम्बन्धं विनेत्यर्थः । एतच्च स्वरसत इत्यस्य व्याख्यानम् । स्वरसतोऽप्रत्यासन्नत्वं नाम स्वभावप्रत्यासत्तिराहित्यमात्रमुच्यत इति प्रतीयते । तावता विशिष्टव्यवहारोपयोगेन प्रत्यासत्तिः न निषिद्धा स्यात् हेतुसाध्ययोः प्रयोज्यप्रयोजकभावश्च न विशदो





भवेदित्यतस्तदर्थसूचनाय सम्बन्धान्तरं विना विशिष्टधीजनकत्वाभावेन सतीति व्याख्यातम् । अन्यथा स्वभावप्रत्यासत्तिराहित्ये सतीत्येव व्याख्या स्यात् । सम्बन्धान्तरं विनेत्यादि व्याख्याने तु सम्बन्धान्तराभावे सति यद्विशिष्टधीजनकत्वमित्युक्त्या सम्बन्धान्तरस्य विशिष्टव्यवहारोपयोगो निषिद्धो भवति । तदभावकथनेन भावसमवायादौ सम्बन्धान्तरमपेक्ष्य विशिष्टधीजनकत्वाभावेऽपि दण्डीत्यादौ तदपेक्ष्य तज्जनकत्वमस्ति । प्रकृते च सम्बन्धान्तरं विना विशिष्टधीजनकत्वं नास्ति । अतः सम्बन्धान्तरमपेक्ष्यमिति प्रयोज्यप्रयोजकभावोऽपि स्पष्टीकृतो भवति । स्वभावप्रत्यासत्तिशून्यत्वमात्रे उक्ते तु तदतिरिक्तप्रत्यासत्त्यपेक्षां प्रति प्रयोजकता च स्पष्टं प्रतीयते । तथा च स्वरसतोऽप्रत्यासन्नत्वे सति स्वरूपतः प्रत्यासन्नत्वाभावे सति स्वभावप्रत्यासत्ति-विशिष्टधीजनकत्वाभावादित्यर्थ इति वर्धमानोऽनुसृत इति ज्ञेयम् । पुनः सङ्ग्रहेण व्याख्येयमस्ति ।

**घटवद्भूतलमिति** । घटस्य विशेषणतया विशेषणतारूपस्वरूपसम्बन्धेन विशिष्टव्यवहारजनकत्वेन सम्बन्धान्तरं विनैव विशिष्टव्यवहारजनकत्वासम्बन्धान्तरं विना विशिष्टव्यवहारजनकत्वस्याभावो नास्तीत्यर्थः । आदिपदेन घटाभाववद्भूतलरूपसमवायवान् घट इत्यादेः सङ्ग्रहः । **परिस्पन्दानां पिण्डैरिति** । परिस्पन्दानां पिण्डैः सम्बन्धसिद्धिरित्यन्वयः । न च स्वरूपेण तासां प्राप्तिरस्तीति किरणावलीव्याख्यानरूपपिण्डसूर्यक्रिययोः संयोगसमवायान्यतरसम्बन्धो नेत्यर्थ इति वर्धमानं मनसि निधाय साक्षात्सम्बन्धं निराकरोति **न तावदिति** । पिण्डैरिति पूर्वानुसारात्पिण्डेन संयोग इति स्वरसः पाठः । पिण्डेन समवाय इत्युत्तरत्रोक्तेश्च । लीलावत्यां पटसंसृष्टनीलत्ववदिति पटसमवेतनीलरूपसमवेतनीलत्वजातिर्दृष्टान्तीकृता । परन्तु पिण्डतपनपरिस्पन्दयोस्तेनैव वक्ष्यमाणसंयोगद्वयसमवायगर्भः संयुक्तसंयोगिसमवायरूपसम्बन्धो न दृष्टान्तेऽस्ति । संयोगत्वेनैकीकारेऽपि संयोगप्रसक्तिरेव तत्र नास्ति किन्तु समवेतसमवाय एव । अतो दृष्टान्तदार्ष्टान्तिकयोः परम्परासम्बन्धविशेषस्यापि साम्याशयेन मूलकृता नीलत्वदृष्टान्तत्यागेन नीलिमवदिति संयोगसमवायघटितप्रत्यासत्तिस्थलं दृष्टान्तीकृतम् । अत एव किरणावल्यां पटावच्छेदकमहारजनरागवदिति दृष्टान्तः कृत इति बोध्यम् । नीलिमशब्दस्य नीलरूपमात्रपरत्वे समवायस्यैव प्राप्त्या वक्ष्यमाणसम्बन्धो न दृष्टान्ते उक्तः स्यादित्यतो नीलद्रव्यस्य पटे नीलिमोपसङ्क्रामकत्वेत्युत्तरमूलानुसारेण परम्परासम्बन्धो यथा सिद्ध्यति तथा व्याचष्टे **नीलद्रव्येति** । तथा च पटसंसृष्टनीलद्रव्यं तत्रत्यो नीलिमा नीलिमपदेन गृहीत इति संयुक्तसमवायसम्बन्धरूपपरम्परासम्बन्धोदा-हरणत्वमस्य युक्तमिति सूचितम् । संयोगे एकत्वद्वित्वयोरविवक्षणाद्युक्तो दृटान्तदार्ष्टान्तिकभावः । ततः परिशेषात्पिण्डसंयुक्तस्तपनेनापि संयुज्यमानस्तत्समवेतपरिस्पन्दानां परम्परया पिण्डसम्बन्धहेतुः कालः सिद्ध इति लीलावतीकार इति लीलावत्याशयकथनरूपतत्त्वप्रदीपिकां तन्नयनप्रसादिनीं च मनसि निधाय परम्परासम्बन्धफलमाह **अतः संयुक्तेति** । संयुक्तैकवस्तुवृत्तिधर्माणामित्यर्थः । **वक्ष्यमाणरीत्येति** । परिशेष-निरासाय परिशेषसाधकतपनपिण्डाभ्यामसंसर्गादित्युक्तशङ्काग्रन्थरीत्येत्यर्थः । **परेण व्युत्पादितत्वेऽपीति** । न तावत्पृथिव्यादिकं हेतुः । तपनपिण्डाभ्यामसंसर्गादित्यादिविशेषः ।





**स०व्र०— स्वप्रत्यासत्तिमिति** । साक्षात्परम्परया स्वनिरूपितातिरिक्तसम्बन्धमपेक्षन्त इत्यर्थः । **स्वरसतोऽप्रत्यासन्नत्वे सतीति** । स्वरूपसम्बन्धेनाप्रत्यासन्नत्वे सतीत्यर्थः । इदं, घटाद्यभाववद्भूतलमित्यादौ, व्यभिचारवारणाय द्रष्टव्यम् । **निमित्तमिति** । घटकमित्यर्थः ।

**विट्ठल०— एकतपनेति** । यस्मिन् तपनपरिस्पन्दे देवदत्तस्यागमनं तस्मिन्नेव चेद्यज्ञदत्तस्याप्यागतिः तदा देवदत्तयज्ञदत्तागत्योरेकतपनपरिस्पन्दलक्षणविशेषणविशिष्टत्वं इदमेव यौगपद्यमित्यर्थः । **अनेकेति** । भिन्नभिन्नतपनप्रचारे आगतत्वं यदा तदा देवदत्तयज्ञदत्तागत्योरेकतपनप्रकारविशिष्टत्वमयौगपद्यमित्यर्थः । **बहुक्रियेति** । बहुतपनक्रियेत्यर्थः । **तत्प्रत्ययैरिति** । उक्तरूपपरत्वादि प्रत्ययैरित्यर्थः । अनुमानप्रकारमेवाह **तरणिपरिस्पन्दो हीति** । **पदार्थसार्थेति** । पदार्थसमूहविशिष्टप्रत्ययोत्पत्ताविति पदार्थसमूहविशेष्यकस्वात्म-विशेषणकप्रत्ययरूपविशिष्टप्रत्ययोत्पत्तावित्यर्थः । बहुतरतरणिपरिस्पन्दान्तरितजन्मवत्त्वादिरूपपरत्वादिप्रकारक-प्रत्ययोत्पत्ताविति यावत् । **स्वप्रत्यासत्तिमिति** । स्वात्मनः पदार्थैः सह विशेषणविशेष्यभावातिरिक्त-प्रत्यासत्तिमित्यर्थः । **स्वरसत इति** । स्वरूपसम्बन्धेनाप्रत्यासन्नत्वे सतीत्यर्थः । विशेषणविशेष्यभावरहितत्वे सतीति यावत् । अत्र विशिष्टव्यवहारजनकत्वादित्येवोक्ते घटाभाववद्भूतलमिति विशिष्टव्यवहारजनके अभावे व्यभिचारः । **अतः स्वरसतोऽप्रत्यासन्नत्वे सतीति** । तावन्मात्रोक्तौ घटत्वपटत्वादौ व्यभिचारः घटत्वपटत्वयोः अन्योन्यं तादृशत्वेऽपि प्रत्यासत्त्यपेक्षत्वाभावात् । अतो विशेष्योक्तिः **चन्दनसौरभवदिति** । सुरभिचन्दनमिति विशिष्टप्रत्ययोत्पत्तौ चन्दनसौरभो हि चक्षुषा सह स्वनिरूपितप्रत्यासत्तिमपेक्षते । चक्षुषा स्वरूपसम्बन्धेनाप्रत्यासन्नत्वे सति विशिष्टव्यवहारजनकश्च भवतीति द्रष्टव्यम् । घ्राणेन्द्रियजन्यज्ञानं वा तदाहितसंस्कारो वा चक्षुर्गन्धयोः संयुक्तसमवायात्मनि सबन्धे निमित्तभूतमुपनायकमिति ध्येयम् । सा च प्रत्यासत्तिः दण्डीत्यादौ संयोगादिवत् साक्षाच्चेन्न कालसिद्धिरिति भावेनाह **परम्परेति** । **नीलिमवदिति** । पङ्कानुलिप्तपटे नीलिमवदित्यर्थः । तत्र संयुक्तसमवाय एव सम्बन्ध इति भावः । **अत इति** । परम्परा-सम्बन्धरूपप्रत्यासत्तेः प्रमितत्वात् पिण्डतपनपरिस्पन्दयोः परम्परासम्बन्धे द्रव्यं घटकं स एव काल इत्यर्थः । कालेन सम्पादितपरम्परासम्बन्धं दर्शयति **संयुक्तेति** । भूमण्डलगतपिण्डस्य कालस्य च संयोगः तेन सह मार्ताण्डमण्डलस्य संयोगः तस्मिन्परिस्पन्दानां समवाय इत्येवं संयुक्तसंयोगिसमयात्मनीत्यर्थः । न ह्येवं-विधसम्बन्धघटकत्वं मूर्तद्रव्यपञ्चकस्य सम्भवति नाप्यात्माकाशयोः तयोर्विशेषगुणवत्त्वात् पृथिव्यादिवत् नापि दिशः तस्या एतद्विपरीतपरत्वादिघटकत्वात् । अतः परिशेषात् कालसिद्धिरिति भावः ।

**चषकः— अन्ये** श्रीवल्लभप्रभृतयः । **स्वरसतः** निसर्गतः । इदं च घटाभाववद्भूतलमित्यादा-वनैकान्त्यव्युदासकम् । **निमित्तम्** घटकम् ।

**॥ इति तद्रीत्युद्भावनम् ॥**

* * *





**॥ अथ वल्लभोदीरितकालसमर्थनरीतिदूषणम् ॥**

**१५८ सु०— एतदप्यसत्, घटशून्यं भूतलमित्यादिवत्स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोपपत्तेः । अन्यथा अभावे परापरयौगपद्यादिप्रत्ययानुपपत्तिप्रसङ्गात् । दृश्यते च युगपदुत्पन्नावभावावित्यादिप्रत्ययः ॥ अत्र सम्बन्धे बाधकाभावान्नैवमिति चेन्न, अन्यसमवेतत्वस्यैव बाधकत्वात् । उपनायकद्रव्यान्तरकल्पनया तदुपपत्तिरिति चेत्, तर्हि भूतलघटाभावयोस्तृतीयसम्बन्धकल्पनयोपपत्तौ बाधकाभावात् । स्वारसिकसम्बन्धेनैव विशिष्टप्रत्ययोपपत्तौ किमप्रतीयमानसम्बन्धकल्पनया इति चेत्, तर्हि तथैव परापरादिविशिष्टप्रत्ययोत्पत्तौ किमप्रतीयमानद्रव्यकल्पनयेति समानम् । तदिदमुक्तम् तेषां विशिष्टप्रत्ययानां नित्यसिद्धेर्द्रव्यान्तरकल्पनां विना स्वभावादेव सिद्धेः द्रव्यान्तरानुमानावसरो न भवेदिति । तदनेन स्वरसतोऽप्रत्यासन्नत्वे सतीति विशेषणासिद्धिः । विशिष्टव्यवहारजनकत्वमात्रस्य चानैकान्त्यमुक्तं भवति ।**

**परि०— अत्रेति** । भूम्यादिस्थपिण्डरविबिम्बक्रिययोरित्यर्थः । परोक्तानुमानस्य किं दूषणमुक्तं स्यादित्यत आह **तदनेनेति** । स्वभावसम्बन्धकथनेनेत्यर्थः । **अनैकान्त्यमुक्तमिति** । भूतलनिष्ठघटाभावादौ ।

**यादु०— अत्रेति** । पिण्डे तपनपरिस्पन्दनिरूपितसम्बन्ध इत्यर्थः । **तृतीयसम्बन्धेति** । तथापि तत्रापि विशिष्टप्रत्ययार्थं स्वरूपसम्बन्धो न कल्पनीय इति भावः ।

**वं०प०— अन्यसमवेतत्वस्यैवेति** । परिस्पन्दस्य तपनसमवेतत्वेन पिण्डसमवेतत्वाभावरूपबाधकात् पिण्डतपनपरिस्पन्दयोरतिरिक्तसम्बन्धो नास्तीत्यर्थः । **द्रव्यान्तरं** = कालः । **तदुपपत्तिरिति** । पिण्डेऽन्यसम्बद्धस्यापि परिस्पन्दस्योपपत्तिरित्यर्थः । तर्हि त्यज्यते तद्विशेषणमिति तत्राह **विशिष्टेति** । **अनैकान्त्यम्** अभाव इति शेषः ।

**आनन्दः**— विशेषणासिद्धिं दूषयति **घटशून्यमिति** । **अन्यथेति** । स्वभावप्रत्यासत्त्या विशिष्टप्रत्ययानुपपादन इत्यर्थः । **अत्र सम्बन्ध इति** । पिण्डतनया परिस्पन्दयोः सम्बन्धाङ्गीकारे बाधकाभावान्न स्वभावस्य प्रत्यासत्तित्वम् । अभावस्थले तु द्रव्ययोरेव प्रयोग इत्यादि बाधकसद्भावात्स्वभावस्यैव प्रत्यासत्तित्वमित्यर्थः । अत्रापि तरणिपरिस्पन्दस्य तरणिसमवेतत्त्वेन सपिण्डसम्बन्धाभावात्तदङ्गीकारेऽन्यसमवेतत्वमेव बाधकमिति असिद्धस्तदभाव इत्याह **अन्यसमवेतत्वस्येति** । **तदुपपत्तिरिति** । अन्यसमवेताया अपि क्रियायाः





पिण्डसम्बन्धोपपत्तिरित्यर्थः । नन्वस्तु तर्हि विशेष्यमात्रमेव हेतुरित्यतो घटाभाववद्भूतलमित्यत्रानैकान्त्यात् नायं हेतुरित्याह **विशिष्टेति** ।

**श्रीनिधि०— स्वारसिकसम्बन्धेनैवेति** । स्वरूपसम्बन्धेनैवेत्यर्थः ।

**शे०वा०—** किमत्र स्वभावतोऽप्रत्यासन्नत्वे सति विशिष्टप्रत्ययजनकत्वं हेतुः किंवा विशिष्टप्रत्ययजनकत्वमात्रमिति विकल्पद्वयं मनसि निधाय आद्ये विशेषणासिद्धिरिति भावेन द्वितीयमनैकान्त्येन दूषयति **घटशून्यमिति** । **विशिष्टेति** । परापरादिविशिष्टप्रत्ययोपपत्तेरित्यर्थः । ननु स्वभावप्रत्यासत्त्या यत्किञ्चिद्विशिष्टप्रत्ययोत्पत्तावपि तस्यात्राहेतुत्वात् । हेतूकृतस्य च विशिष्टप्रत्ययजनकत्वस्य निर्घटं भूतलमित्यादिविशिष्टज्ञानजनकेऽभावान्न तत्रानैकान्त्यमित्यत आह **अन्यथेति** । परापरादिविशिष्टप्रत्ययस्यातिरिक्तसम्बन्धमात्रनिबन्धनत्व इत्यर्थः । तत्राभावेन तरणिपरिस्पन्दानां स्वभावप्रत्यासत्त्यतिरिक्तसम्बन्धाभावादिति भावः । नन्वभावे परापरादिविशिष्टप्रत्यय एव नास्तीति न तदनुपपत्तिर्दोषायेति चेन्न । तत्र तस्य दृष्टतयाऽपलापायोगादन्यथाऽतिप्रसङ्गादित्याह **दृश्यते चेति** ।

अयमत्र समुदायार्थः । तरणिपरिस्पन्दमात्रपक्षीकारेऽभावे विशिष्टप्रत्ययहेतुतरणिपरिस्पन्दांशे बाधः । भावे तद्धेतुपरिस्पन्दानामेव पक्षीकारे चाभावे तद्धेतुपरिस्पन्देष्वेव व्यभिचारः । अभाव इव भावेऽपि स्वभावप्रत्यासत्त्यैव परापरादिप्रत्ययोपपत्तेर्विशिष्टसाध्येन विनाऽप्युक्तहेतूपपत्तेरन्यथासिद्धिश्च । अभावे स्वभावप्रत्यासत्त्यैव तन्निर्वाहः । भावे तु स्वभावप्रत्यासत्त्यन्यप्रत्यासत्त्यैव तन्निर्वाह इति द्विधाकल्पनायाः कल्पकाभावेन अयोगाच्चेति ।

ननु न द्विधाकल्पनायां कल्पकाभावः । अभावे सम्बन्धे बाधकसद्भावेन स्वभावप्रत्यासत्त्यैव तन्निर्वाहकल्पनात् । भावे च सम्बन्धे बाधकाभावेन स्वभावप्रत्यासत्त्यन्यप्रत्यासत्त्यैव तन्निर्वाहकल्पनादिति शङ्कते **अत्रेति** । तरणिपरिस्पन्दपिण्डयोरित्यर्थः । **सम्बन्ध इति** । अतिरिक्तसम्बन्ध इत्यर्थः । अभावे च द्रव्ययोरेव संयोग इत्यादिकमेव बाधकमिति भावः । यद्वा न विशिष्टप्रत्ययजनकत्वमात्रं हेतुः येन अभाववद्भूतलमिति स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययजनके व्यभिचारश्चोद्येत । किं तर्हि स्वभावतोऽप्रत्यासन्नत्वे सति विशिष्टप्रत्ययजनकत्वमेव । न चाघटं भूतलमिति विशिष्टप्रत्ययजनकस्य स्वभावतोऽप्रत्त्यासन्नत्वमस्तीति विशिष्टहेत्वगमनान्न व्यभिचारः । न चैवं व्यभिचाराप्रसक्तावपि तरणिपरिस्पन्दानां युवस्थविरशरीरादिपिण्डैः स्वभावतः प्रत्यासन्नत्वेनाप्रत्यासन्नत्वविरहाद्धेतुविशेषणासिद्धिः स्यादिति वाच्यम् । तरणिपरिस्पन्दा युवादिपिण्डैः स्वभावप्रत्यासत्तिरहिताश्चातिरिक्तसम्बन्धे बाधकाभावादिति लीलावत्युपदर्शितमार्गेण विशेषणसिद्धेः सम्भवादिति शङ्कते **अत्रेति** । सम्बन्ध इत्यस्य पूर्व एवार्थः । **समवेतत्वस्येति** । रविकर्मणः पिण्डसमवेतत्वे तत्र चलतीति धीप्रसङ्गादिति भावः । **बाधकत्वादिति** । तथा चाभाव इव भावेऽप्यतिरिक्तसम्बन्धे बाधकसद्भावेनोभयत्रापि





स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोत्पादप्रसक्त्या क्वचित्स्वभावप्रत्यासत्त्या क्वचिच्च स्वभावप्रत्यासत्त्यन्यप्रत्यासत्त्या विशिष्टप्रत्ययनिर्वाह इति वैलक्षण्यकल्पनाऽनवकाशः । अतिरिक्तसम्बन्धे बाधकाभावासिद्ध्या तेन स्वरसप्रत्यासत्तिराहित्यासिद्धेर्हेतुविशेषणासिद्धिश्चेत्यभिप्रायः ।

न तरणिपरिस्पन्दानां पिण्डेन साक्षात्सम्बन्धं ब्रूमः । येनान्यसमवेतत्वं बाधकं स्यात् । किन्तु परम्परासम्बन्ध एव । अस्ति च संयुक्तसंयोगिसमवायरूपः परम्परासम्बन्धः पिण्डपरिस्पन्दयोः । पिण्डसंयुक्तकालसंयोगवति तपने परिस्पन्दानां समवेतत्वादतः स्वसंयुक्तवर्तिधर्माणां स्वसंयुक्तवस्त्वन्तरे सङ्क्रामकद्रव्यान्तरकल्पनया अन्यसमवेतत्वोपपत्तेरस्त्येव बाधकाभाव इति नोक्तदोष इति शङ्कते **उपनायकेति** । तथा च अतिरिक्तसम्बन्धेनैव विशिष्टप्रत्ययनिर्वाह इति भावः । तर्हि भूतलाभावयोरपि न स्वभावप्रत्यासत्त्या विशिष्टप्रत्ययनिर्वाहोऽभ्युपगमनीयः स्यात् । स ह्यतिरिक्तसम्बन्धे बाधकादेव कल्पनीयः । न च अतिरिक्तसम्बन्धे बाधकं तत्रास्ति । अद्रव्यत्वादिना संयोगसमवाययोरसम्भवेऽपि तदन्यस्य सम्बन्धस्योपपत्त्या स्वभावप्रत्यासत्तेरन्येन तेनैव विशिष्टप्रत्ययनिर्वाहस्योपपन्नत्वात् । तथा च नोक्तरीत्या वैषम्यकल्पनाऽवकाश इति भावेनाह **तर्हीति** । स्यादेतदेवं यदि सम्बन्धान्तरकल्पना तत्रोपपद्यते । अप्रतीयमानसम्बन्धान्तरकल्पनाया अन्यथाऽनुपपत्तिमात्रकारणत्वात् । न च कल्पिकान्यथाऽनुपपत्तिरत्रास्ति । स्वारसिकसम्बन्धेनाघटं भूतलमित्यादिविशिष्टप्रत्ययनिर्वाहसम्भवात् तत्कथं साम्यमित्याशङ्कते **स्वारसिकेति** । तर्हि तरणिपरिस्पन्दानामपि पिण्डेन सम्बन्धोपनायकद्रव्यान्तरकल्पनाऽपि न स्यात् । अप्रतीयमानद्रव्यान्तरकल्पनाया अपि विशिष्टप्रत्ययान्यथाऽनुपपत्तिमात्रनिबन्धनत्वात् । न चात्र विशिष्टप्रत्ययान्यथाऽनुपपत्तिरस्ति । तरणिपरिस्पन्दानां पिण्डेन स्वभावप्रत्यासत्त्यैव परापरादिविशिष्टप्रत्ययनिर्वाहसम्भवात् । तथा चाभाव इव भावेऽपि स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययनिर्वाहान्नोक्तरीत्या वैषम्यसिद्धिरित्याह **तर्हीति** । **तथैवेति** । स्वभावप्रत्यासत्त्यैवेत्यर्थः । कृतस्य व्युत्पादनस्योद्घाष्यत्वशङ्कापरिहारायाह **तदिदमिति** ।

**वा०र०— किमत्रेति** । यद्यप्युक्तरीत्या विशिष्टहेतोरेव परेणोक्तत्वान्न विकल्पावकाशः तथापि वक्ष्यमाणरीत्या विशेषणासिद्धौ प्रतिपादितया परो विशेष्यमन्त्रहेतुरिति यदि ब्रूयात् तदाशयेन विकल्पावतारः । अत एव तदनेन स्वरसत इत्यादिना विकल्पाशयं मूलकृद्व्यक्तीकरिष्यतीति भावः । **विशेषणासिद्धिरिति भावेनेति** । स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोपपत्तेरित्युक्ते स्वभावप्रत्यासत्त्यतिरिक्तप्रत्यासत्तिमत्वरूपसाध्यं विनापि हेतोरुपपत्तेरित्यर्थप्राप्तिवत्स्वभावप्रत्यासत्तिभिन्नसम्बन्धं विनापि विशिष्टे धीजनकत्वोपपत्तेरुक्ततज्जनकत्वाभावरूपविशेषणस्यासिद्धिरित्यपि प्रतिपादनस्य लाभात् । किन्तु विशिष्टव्यवहारजनकत्वस्य घटशून्यं भूतलमित्यादौ व्यभिचारप्रतिपादनपरवाक्यादतस्तद्वदेव हेतुसत्त्वेऽपि साध्याभावोपपत्तेरुक्तहेतुना साध्यसाधनमनुपपन्नमिति यथा द्वितीयपक्षनिराकरणं मुखतो जातं तथाद्यपक्षे विशेषणासिद्धिरूपदूषणप्रतिपादनं न मुखतः स्वभावप्रत्यासत्त्यैवेत्युक्तेऽपि स्वभावप्रत्यासत्त्यतिरिक्तप्रत्यासत्तिं विनेति मुखतः कीर्तनाभावात् किन्त्वर्थत एवेत्याशयेनेति ज्ञेयम् । विशिष्टप्रत्ययोपपत्तेरित्यर्थ इति पाठः । उत्पत्तिपदं तु लेखकदोषात् । **तस्यात्रेति** ।





यत्किञ्चित् विशिष्टप्रत्ययोत्पत्तिरेवात्र सामान्येन परामृश्यते । सामान्ये नपुंसकमिति नपुंसकत्वम् । उपादानस्येति यावत् । तच्च जनकतासम्बन्धेन पक्षे वर्तत इति उत्पत्तिहेतुत्वमेव लभ्यत इति ज्ञेयम् ।

तस्येत्यनेन प्रत्ययपरामर्श एव जनकतासम्बन्धेन प्रत्ययहेतुत्वं लभ्यत इति वा प्रत्ययोत्पत्तावपीत्यनेन संसर्गमर्यादया प्रत्ययोत्पत्तिजनकत्वं लभ्यत इति तस्य परामर्श इति वा तेन नपुंसकोपपत्तिरिति ज्ञेयम् । **हेतुकृतस्य चेति** । परापरविशिष्टप्रत्ययजनकत्वरूपविशेषस्येत्यर्थः । **परापरादिविशिष्टप्रत्ययस्येति** । तज्जनकत्वरूपहेतोरित्यर्थः । **अतिरिक्तेति** । स्वभावेत्याद्युक्तविशिष्टसाध्यप्रयोज्यत्व इत्यर्थः । यद्यप्यत्र दृष्टान्तीकृतचन्दनसौरभे उक्तरीत्या हेतोरभावसाधनवैकल्यं रूपादिज्ञानजनकचक्षुरादौ स्वभावप्रत्यासत्तिरित्यप्रत्यासत्तिसापेक्षत्वसद्भावेन सपक्षे तस्मिन्नुक्तहेत्वभावेनासाधारण्यं च मूलाकृता शक्यं वक्तुम् । तथापि स्पष्टत्वाच्छिष्यैरेव तदुभयं तूह्यतामिति भावेन तदनुक्तिरिति ज्ञेयम् । अन्यथेत्यस्य परापरादीत्यादि व्याख्यानेनैव घटाभावभूतलयोः स्वभावप्रत्यासत्त्यनङ्गीकार इति पूर्ववाक्यसङ्गततया योजनाभ्रान्तिरपि निरस्ता । अप्रयोजकत्वाद्यापत्तेरिति सूचितं मूले **युगपदुत्पन्नाविति** । यद्यपि परापरयौगपद्यादिप्रत्ययेति पूर्ववाक्योक्तपरापरप्रत्ययावेव प्रथमत उपपाद्यौ तथापि परत्वापरत्वयोर्गुणभूतयोरभावेऽयोग इति शङ्कायाः वैशेषिकप्रक्रियाखण्डनसाध्यपरिहारायासेन किं प्रयोजनम् । पराङ्गीकृतयौगपद्यादिप्रत्ययमात्रेण कालसम्बन्धसिद्धिरित्याशयेन मुखतः यौगपद्यादिप्रत्ययप्रदर्शनम् । तेन पूर्वोत्तरवाक्ययोर्वैपरीत्यायोग इति परास्तम् । **समुदायार्थ इति** । अन्यथेति दृश्यते चेति वाक्यद्वयं समुदायत्वेन विवक्षितम् । न तु घटशून्यमिति पूर्ववाक्यमपि तेन विशिष्टप्रत्ययमात्रजनकत्वस्य हेतुत्वे घटशून्यं भूतलमित्यादौ व्यभिचारः । परापरादिघटितस्य हेतुत्वेत्यधिकस्य पूर्ववाक्यलभ्यार्थस्य वक्तव्यतया तदनुक्त्ययोग इति परास्तम् । **विशिष्टप्रत्ययेति** । परापरादिविशिष्टप्रत्ययेत्यर्थः । ननु न द्विधाकल्पनायां कल्पकाभाव इति पाठः । अव्यवहितपूर्ववाक्यानुसारेण युक्तत्वात् मूलकोशे तथैव पाठाच्च । बाधकपदं तु लेखकप्रयुक्तम् । एवं घटशून्यमिति पूर्ववाक्योक्तान्यथासिद्धिबीजभूतद्विधाकल्पने कल्पकाभावस्याक्षेपपरतया अत्रेति वाक्यं योजितम् । अधुना घटशून्यमितिवाक्योक्तव्यभिचारस्य अन्यथाऽभाव इत्युत्तरवाक्योक्ताभावांशे तरणिपरिस्पन्देषु व्यभिचारस्य च परिहारपरतया अत्र सम्बन्ध इति वाक्यं योजयति **यद्वा न विशिष्टेति** । **अभाववद्भूतलमितीति** । अभावांशे परापरादिप्रत्ययजनकतरणिपरिस्पन्दानां उपलक्षणं चेदम् । प्रागुक्ततरणिपरिस्पन्दमात्रपक्षीकाराभिप्रायेणैतद्वाक्यप्रवृत्त्यङ्गीकारपक्षे तु नोपलक्षणाश्रयणं न वा एतद्योजनायाः प्रागुक्तरीत्या व्यभिचारद्वयपरिहारपरत्वेन वर्णनीयता । अभावे विशिष्टप्रत्ययहेतुतरणिपरिस्पन्दांशे बाधहेतुविशेषणासिद्धी अनिवार्ये स्पष्टत्वान्नोक्ते इति कल्पनीयमेव । पुनः शोध्यम् । नापि वा तथा चाभाव इवेति वक्ष्यमाणग्रन्थे अभावपदेनाभावोपलक्षणाश्रयणप्रसक्तिरिति द्रष्टव्यम् ।

**न चाघटं भूतलमितीति** । अघटं भूतलमिति विशिष्टप्रत्ययजनकस्य स्वभावतो प्रत्यासन्नत्वं न चास्तीति सम्बन्धः । एतदपि पूर्वोपलक्षणम् । तत्फलमाह **इतीति** । इत्यतो हेतोर्विशिष्टहेत्वगमनान्न व्यभिचार इत्यर्थः । **तरणिपरिस्पन्दा इति** । यद्यप्युक्तरीत्या लीलावत्यां प्रयोगो नोक्तः साध्ये स्वरसप्रत्यासत्तिपदरहितश्च





हेतावतिरिक्तपदाभावश्च सम्बन्धे बाधकाभावादित्येव लीलावत्यामुक्तत्वात् तथापि तत्र ते चेति प्रकृततरणिपरिस्पन्दानां पक्षतायोग्यतया पदार्थसार्थ इति प्रकृतानां युवादीनां ग्रहणम् । सम्बन्धपदस्यातिरिक्तसम्बन्धार्थकतया वर्धमानव्याख्यानं चास्ति । तदेतन्मनसि निधायायं प्रयोग उक्तः । अत एव लीलावत्युपदर्शितमार्गेणेति वक्ष्यतीति ज्ञेयम् । **पूर्व इति** । अतिरिक्तसम्बन्ध इत्येवंरूप इत्यर्थः । अन्यसमवेतत्वस्येतीति प्रतीकोपादानपाठः । अन्यपदाभावस्तु लेखकदोषात् । **भावेऽपीति** । अभावेऽपीत्यपि ज्ञेयम् । पूर्वयोजनापक्षे परापरादिप्रत्ययविषयाभावस्यादृष्टान्तिकत्वात् किन्तु परम्परासम्बन्धमेवेति पाठः । पिण्डपरिस्पन्दयोः परम्परासम्बन्ध इति पूर्वेणान्वयः । **तथा च नोक्तरीत्येति** । अनेन बाधकाभावादित्यन्तानन्तरं आकाङ्क्षितपूरणान्न मूले न्यूनतेति सूचितम् । **मात्रकारणत्वादिति** । मात्रकारणकत्वादित्यर्थः । अन्यथानुपपत्तिमात्रकल्पत्वादिति मात्रकारणकत्वादित्यर्थः । अन्यथानुपपत्तिमात्रकल्पत्वादिति यावत् । वक्ष्यति च कल्पितान्यथानुपपत्तीरितीति ज्ञेयम् । एवमन्यथानुपपत्तिमात्रनिबन्धनत्वादित्यत्रादितन्मात्रकार्यत्वादित्यर्थः ।

**स०व्र०— विशिष्टप्रत्ययोपपत्तेरिति** । तथा च अप्रयोजकतेति भावः । **अत्र सम्बन्ध इति** । अत्र पिण्डतपनपरिस्पन्दयोरित्यर्थः । **तृतीयसम्बन्धकल्पनेति** । तथा च तत्रापि विशिष्टप्रत्ययार्थं स्वरूपसम्बन्धो न कल्पनीय इति भावः ।

**विट्ठल०— अन्यथेति** । तपनपरिस्पन्दानां स्वरूपप्रत्यासत्त्यैव परत्वादिप्रत्ययजनकत्वाङ्गीकारे देवदत्तीयघटाभावः परः यज्ञदत्तीयघटाभावस्त्वपर इत्यादि प्रत्ययो न स्यात् । अभावे संयुक्तसंयोगसमवायरूपसम्बन्धस्य वक्तुमशक्यत्वादिति भावः । अत्र सम्बन्ध इति तपनपरिस्पन्दस्य पिण्डेन सह सम्बन्धे उक्तरूपेऽङ्गीक्रियमाणे बाधकाभावान्नात्र स्वरूपसम्बन्धः कल्पनीयः । अभावस्याद्रव्यत्वाद्गुणगुण्यादिरूपत्वाभावाच्च संयोगसमवाययोरसम्भवेन स्वरूपसम्बन्धः कल्प्यत इति चेदित्यर्थः । **अन्यसमवेतस्यैवेति** । तपनपरिस्पन्दस्य पिण्डेन सह सम्बन्धे तस्य तपन एव समवेतत्वमेव बाधकमिति भावः । अन्यसमवेतस्यापि परिस्पन्दस्य उपनायकद्रव्यान्तरेणान्यत्रोपनयसम्भवान्न दोष इति शङ्कते **उपनायकेति** । **तृतीयसम्बन्धकल्पनयेति** । तथा च तत्रापि विशिष्टप्रत्ययार्थं स्वरूपसम्बन्धो न कल्पनीय इति भावः । **तर्हि तथैवेति** । स्वरूपसम्बन्धेनैवेत्यर्थः । किमेतावतानुमानदूषणमित्यत आह **तदनेनेति** । विशेषणासिद्धिभयेन विशेषणत्यागे विशेष्यमात्रस्याभावेनैकान्त्यमिति भावः ।

१५९ **सु०— ननु विषम उपन्यासः । भूतलाभावयोरस्ति सान्निध्यम्, तेन सम्बन्धाभावेऽपि भविष्यति विशिष्टव्यवहारः, दर्शनस्य दुरपह्नवत्वात्, सम्बन्धान्तरकल्पनस्य च व्यर्थत्वात् । न च तरणिपरिस्पन्दानां पिण्डसान्निध्यमस्ति, ततो भवितव्यं मध्ये द्रव्यान्तरेणेति । मैवम् । विनाऽपि सान्निध्येन घटज्ञानमिति विशिष्टप्रत्ययदर्शनात् ।**

किञ्चाभावस्यापि न भूतलसान्निध्यं परपक्षे किमपि पश्यामः । अस्तु वा तपन-परिस्पन्दानां पिण्डं प्रत्युपनायकं द्रव्यान्तरम्, तच्च पृथिव्यादिकं किं न स्यात् । तपन-पिण्डाभ्यामसंसर्गान्नेति चेन्न, एकैकस्याव्यापकत्वेऽपि बहूनां संयुक्तसंयोगभूयस्त्वेन क्रियोपनायकत्वोपपत्तेः । न च तरणिपिण्डान्तराले तानि न सन्त्यनुपलम्भादिति वाच्यम्, सूक्ष्माणां कल्पनीयत्वात् । न च विनिगमनायां कारणाभावः, संशयेऽपि परिशेषाव-धारणानुपपत्तेः, धर्मिकल्पनातो धर्मकल्पनस्य लघीयस्त्वात् ।

आकाशो वा किं न स्यात् । न स्यात्, विशेषगुणवत्त्वात् पृथिव्यादिवदिति चेन्न; विशेषगुणवतोऽपि नीलद्रव्यस्य पटे नीलिमोपसङ्क्रामकत्वदर्शनात् । सूर्यगत्युप-नायकत्वं च द्रव्यस्वरूपं वा, अतीन्द्रियशक्तिर्वा, सहकारिशक्तिर्वा । नाद्यः द्रव्यमात्रे प्रसङ्गात् । न द्वितीयः, अनभ्युपगमात् । तृतीये(ऽपि) किं तद्व्यापकत्वं वा, विशेष-गुणविरहो वेति व(विवे)क्तव्यम् ।

**परि०— विशिष्टप्रत्ययदर्शनादिति** । घटविशेषणकज्ञानविशेष्यकप्रत्ययेत्यर्थः । **परपक्षे किमपि न पश्याम इति** । सामीप्यशब्दितसान्निध्यस्य संयोगादिसम्बन्धहेतुकत्वात् । सिद्धान्ते भूतलाभावयोः संयोगाङ्गीकारेण तत्सम्भवेऽपि परपक्षे तदभावादिति भावः । **क्रियोपनायकत्वेति** । अन्यगतक्रियाणामन्यत्रोपसङ्क्रामकत्वोपपत्तेरित्यर्थः । **संशय इति** । सूक्ष्मद्रव्याणि मध्ये सन्ति, अथानुपलम्भान्न सन्ति वेति संशये सति कालाख्यापूर्वद्रव्यपरिशेषनिश्चयायोगादित्यर्थः । **धर्म-कल्पनस्येति** । क्लृप्तद्रव्येष्वेव क्रियोपनायकत्वरूपधर्मकल्पनस्येत्यर्थः । **विशेषगुणवत्त्वादिति** । आकाशो नोपसङ्क्रामक इति प्रतिज्ञा ध्येया । गुणोपसङ्क्रामकत्वोपलम्भेऽपि क्रियोपसङ्क्रामकत्वं विशेषगुणवतो नोपलब्धमित्यतोऽप्रयोजकोऽयं विशेषगुणवत्त्वहेतुः क्रियोपनायकत्वाभावे इति वक्तुं साध्यप्रविष्टं सूर्यगत्युपनायकत्वं विकल्प्य निराह **सूर्यगत्युपनायकत्वं चेति** । उपनायकत्व-प्रयोजकत्वं च किमित्यर्थः । व्यापकत्वस्य प्रयोजकतायां इत्यग्रे व्यवहारात् । **व्यापकत्वं वेति** । सकलमूर्तद्रव्यसंयोगित्वरूपं विभुत्वमित्यर्थः ।

**गु०दी०— सूक्ष्माणां कल्पनीयत्वात्** इत्यत्र पृथिवीमारभ्य सूर्यमण्डलपर्यन्तं परिवर्तिनामन्योन्य-सम्बद्धपार्थिवपरमाणूनां सत्त्वादित्यर्थः । षोढा सम्बन्धं वदता त्वयैव संयुक्तसंयोगिसमवायाख्यापूर्वसम्बन्धस्य कल्पितत्वात् । बहुतरसंयोगपरम्पराकल्पनमपि न्याय्यम् । धर्मिकल्पनातो धर्मकल्पनस्यैव लघुत्वादिति भावः ।





**यादु०**— **विनापि साध्यसान्निध्येनेति** । स्वरूपसम्बन्धेनैवेति शेषः । **सान्निध्यमिति** । सामीप्यापरपर्यायस्य सान्निध्यस्य वक्ष्यमाणरीत्या अतिरिक्तसम्बन्धघटितत्वादिति भावः । **विशेषगुणवतोऽपीति** । तथा च यद्विशेषगुणवत् तन्नान्यत्रान्यधर्मोपनायकमिति सामान्यव्याप्तिरनुपपन्नेति भावः । आकाशो न पिण्डे सूर्यगत्युपनायको विशेषगुणवत्त्वादित्यत्र अप्रयोजकतामपि वक्तुं साध्यप्रविष्टं सूर्यगत्युपनायकत्वं विवेचयति **सूर्यगत्युपनायकत्वमिति** ।

**वं०प०**— सान्निध्याभावस्थले विशिष्टव्यवहारनिर्वाहाय मध्ये किञ्चिद् द्रव्यान्तरकल्पनेऽतिप्रसङ्गमाह **विनाऽपीति** । घटस्य बहिष्ठत्वेन ज्ञानस्य चात्मगतत्वेन तयोः सान्निध्याभावात् घटज्ञानमिति विशिष्टप्रत्ययदर्शनाच्च अन्यसमवेतज्ञानस्य घटस्य च विशिष्टप्रत्ययनिर्वाहाय तत्रापि मध्ये किञ्चिद् द्रव्यान्तरं कल्पनीयं स्यादित्यर्थः । **एकैकस्येति** । पृथिव्यप्तेजोवायूनां मध्ये एकैकस्येत्यर्थः । **बहूनामिति** । पिण्डसम्बद्धा पृथिवी तत्सम्बद्धा बहवः परमाणवो मिलित्वा पृथिवीमारभ्य तपनपर्यन्तं व्याप्ताः सन्तीत्येवं संयुक्तसंयोगानां भूयस्त्वेनेत्यर्थः । **तानि** बहूनि क्रियोपनायकद्रव्याणि । **सूक्ष्माणां** परमाणूनाम् । **विनिगमनायामिति** । पृथिव्यादिकमेवोपनायकमित्यत्र कारणाभावात् काल एव किं न स्यादिति भावः । **परिशेषेति** । काल एवेत्यवधारणेत्यर्थः । **धर्मीति** । कालरूपाप्रसिद्धद्रव्यकल्पनापेक्षया, सिद्धस्य पृथिव्यादेरेवोपनायकत्वरूपधर्मकल्पने लाघवमित्यर्थः ।

**आनन्दः**— **किञ्चाभावस्येति** । संयोगसमवाययोरसम्भवासम्बन्धान्तरस्य चाभावादिति भावः । नन्वस्त्वेवं भावभूतलयोः वैशिष्ट्यरूपसम्बन्धान्तरलक्षणं सान्निध्यं न चैवं प्रकृतेऽस्ति अत उपनायकं द्रव्यान्तरं स्वीक्रियत इति यदि कश्चिन्मीमांसकमतमालम्ब्य ब्रूयात् तं प्रति अङ्गीकारवादेनाह **अस्तु वेति** । **तपनेति** । यस्य तपनसंसर्गो न तस्य पिण्डसंसर्गो यस्य च पिण्डसंसर्गो न तस्य तपनसंसर्ग इत्यर्थः । ननु संयुक्तसंयोगभूयस्त्वकल्पनापेक्षया द्रव्यान्तरकल्पनैव ज्यायसीत्यत आह **धर्मीति** । नन्वाकाशो नोपनायको विशेषगुणत्वात्पृथिव्यादिवदित्यनुमानेनोपनायकत्वाभाव आकाशस्य साध्यत इत्याशङ्कते **विशेषेति** । अत्र किं यद्विशेषगुणवत्वं नोपनायकमिति वा विवक्षितं सूर्यगत्युपनायकं नेति वा । नाद्य इत्याह **विशेषगुणवतोऽपीति** । द्वितीये त्वप्रयोजकत्वम् । विशेषगुणवत्वमस्तु सूर्यगत्युपनायकत्वाभावो मास्तु । उपनायकत्वमेवास्तु विपक्षे बाधकाभावात् । उपनायकत्वं हि परम्परासम्बन्धघटकत्वं तत्र हि उभयसम्बन्धित्वं प्रयोजकं न तु विशेषगुणशून्यत्वं तच्चाकाशेऽस्तीति वक्तुं उपनायकत्वं प्रयोजकं विकल्पयति **सूर्यगतीति** । उपनायकत्वं उपनायकत्वप्रयोजकं द्रव्यमात्र इति । द्रव्यस्वरूपस्य द्रव्यमात्रे सत्त्वेन न घटादेरप्युपनायकत्वं स्यादित्यर्थः ।

**शे०वा०**— ननु भूतलघटाभावयोः स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोपपत्तेः न अप्रतीयमानसम्बन्धस्य अकल्पनीयत्वमभिमतम् । येन तथा सति तयैव प्रत्यासत्त्या परत्वादिविशिष्टप्रत्ययस्याप्युपपत्तेः





न अप्रतीयमानद्रव्यान्तरकल्पनमित्युक्तदोषावकाशः स्यात् । किन्त्वभावभूतलयोरसत्यपि सम्बन्धे निमित्तान्तरादेव तत्र विशिष्टप्रत्यय इत्येव । तथा च तादृशनिमित्तभावाभावाभ्यां वैषम्यान्न प्रतिबन्दीग्रहो युक्त इति शङ्कते **नन्विति** । ननु भूतलाभावयोर्विशिष्टप्रत्यय एव नास्तीति वा सतोऽपि तृतीयसम्बन्धनिमित्तकत्वमेवेति वा वैषम्यस्य शङ्कितुं शक्यत्वात् । तथा वैषम्यमनाशङ्क्योक्तरीत्या वैशम्यशङ्कायां नियामकभाव इत्यत आद्यप्रकारासम्भवे हेतुमाह **दर्शनस्येति** । भूतलाभावयोर्विशिष्टप्रत्ययस्य दृष्टत्वान्न तदपलापो युक्तः । अन्यथा सकलव्यवस्थोच्छेदप्रसक्तेरिति भावः । द्वितीयप्रकारासम्भवेऽपि तमाह **सम्बन्धान्तरेति** । क्लृप्तेन सान्निध्येनैव विशिष्टप्रत्ययोपपत्तेः न सम्बन्धान्तरकल्पनस्य विशिष्टप्रत्ययोपपत्तिः प्रयोजनं सम्भवति । न च तदतिरिक्तं किञ्चित्सम्बन्धान्तरकल्पनस्य प्रयोजनमस्तीति व्यर्थत्वान्न तत्कल्पनमपि युक्तमिति भावः । नन्वेवं भूतला-भावयोरिव स्वभावप्रत्यासत्त्या परत्वादिविशिष्टप्रत्ययानिवहेऽपि तद्वदेव सान्निध्येन तद्वैशिष्ट्यप्रत्ययस्याप्युपपत्तेः न वैषम्यमिति युक्त एव प्रतिबन्दीग्रह इत्यतः स्यादेवं यदि तरणिपरिस्पन्दानां स्थविरादिपिण्डेन भूतलाभावयोरिव सान्निध्यं स्यात् । न चैतदस्तीति वैषम्यमेवेत्याह **न च तरणीति** । **विनाऽपीति** । आत्मसमवेतत्वात् घटज्ञानस्य, तरणिपरिस्पन्दस्य पिण्डेनेव, न घटेन सान्निध्यमस्तीत्यर्थः ।

एवमङ्गीकृत्य घटाभा५भूतलयोः सान्निध्यम् उदाहरणस्य अनादरणीयत्वात् भूतलाभत्वयोः सान्निध्येन विशिष्टप्रत्ययनिवहेऽपि घटतज्ज्ञानयोरसान्निध्येन तत्र स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययनिर्वाहस्य वाच्यत्वात् तद्वदेव तरणिपरिस्पन्दानां पिण्डेन स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोपपत्तेः न द्रव्यान्तरकल्पनं युक्तमित्यभि-हितम् । इदानीं तु घटाभावभूतलयोरपि न सान्निध्यमिति न तेन तत्र विशिष्टप्रत्ययनिर्वाह इत्यगत्या तत्रापि स्वभावप्रत्यासत्तिरेव विशिष्टप्रत्ययनिर्वाहकतयेष्टव्या । तथा च अविशेषाद्युक्त एव प्रतिबन्दीग्रह इत्याशेनाह **किञ्चेति** । **सान्निध्यमिति** । सामीप्यापरपर्यायसान्निध्यस्य वक्ष्यमाणरीत्या अतिरिक्तसम्बन्धघटितत्वात् स्वाति-रिक्तसम्बन्धाभावे न भूतलाभावयोः सान्निध्यमपीति भावः । **उपनायकमिति** । स्वसंयुक्तवर्तिधर्माणां स्वसंयुक्तवस्त्वन्तरे सङ्क्रामकमित्यर्थः । अत्रास्तु वा तपनपरिस्पन्दानां पिण्डं प्रत्युपनायकं द्रव्यम् । तच्च न द्रव्यान्तरं नवमं द्रव्यम् । पृथिव्यादिभिरेवास्यार्थस्य सम्पादयितुं शक्यत्वादिति योजना । **पृथिव्यादिक-मिति** । पृथिव्यादिचतुष्टयमित्यर्थः । **तपनेति** । पृथिव्यादिचतुष्टयस्येति शेषः । अव्यापकत्वादिति भावः । **न सन्तीति** । मध्येऽसतां च न सम्बन्धघटकत्वमिति भावः । असत्त्वमेव कुतः सिद्धमित्यत उक्तम् **अनुपलम्भादिति** । नानुपलम्भमात्रमभावनिश्चायकमतिप्रसङ्गात् किन्तु योग्यानुपलम्भ एव । तथा च तेन मध्ये योग्यद्रव्याभावसिद्धावपि परमाण्वादिरूपसूक्ष्मद्रव्याणां मध्ये सत्त्वेऽप्यनुपलम्भोपपत्त्याऽनुपलम्भेन मध्ये तदभाव-निश्चयासम्भवेन मध्ये स्थितानां तेषामेवोपसङ्क्रामकत्वमस्त्वित्याशयेनाह **सूक्ष्माणामिति** । **विनिगमनाया-मिति** । सूक्ष्माणामेवोपसङ्क्रामकत्वं न द्रव्यान्तरस्येति विनिगमनायामित्यर्थः । द्रव्यान्तरापेक्षया सूक्ष्माणा-मगृह्यमाणविशेषत्वादिति भावः । अगृह्यमाणविशेषतयाऽन्यतरपक्षानवधारणेऽपि नास्माकं काचित्क्षतिरित्याह **संशयेऽपीति** । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु न विनिगमनायां कारणाभाव इत्याह **धर्मीति** । **आकाशो**





**वेति** । भवतु आकाशः तरणिपिण्डसम्बन्धघटकः तस्य सर्वगतत्वेनोभयसंसर्गवत्तयोक्तसर्वानुपपत्तिरहितत्वादिति भावः । व्योमशिवाचार्यमतमाशङ्कते **विशेषगुणवत्त्वादिति** । आत्मनोऽपि पक्षतुल्यत्वान्न तत्र व्यभिचार इति भावः । किमत्र यद्विशेषगुणवत् तन्नोपनायकमिति सामान्यव्याप्तिरभिमता किंवा यद्विशेषगुणवत् तत् सूर्यगत्युपनायकं नेति विशेषव्याप्तिरिति विकल्पं मनसि निधाय आद्यं व्यभिचारेण दूषयति **विशेषगुणवतोऽपीति** । द्वितीयेऽपि विशेषगुणवतोऽपि सूर्यगत्युपनायकत्वे बाधकाभावादप्रयोजकत्वम् । उपनायकत्वं हि परम्परासम्बन्धघटकत्वम् । तत्र चोभयसम्बन्धित्वमेव प्रयोजकं न तु विशेषगुणशून्यत्वम् । तच्चाकाशेऽप्यस्तीति युक्तं तस्योपनायकत्वमिति भावेन सूर्यगत्युपनायकत्वं विवेचयति **सूर्येति** । **सहकारिशक्तिर्वेति** । सहकारिभूतः ऐन्द्रियको विशेषधर्म इत्यर्थः । **प्रसङ्गादिति** । स्वरूपमात्रस्य द्रव्यमात्रे सत्त्वादिति भावः । **अनभ्युपगमादिति** । अभ्युपगमे चापसिद्धान्तादिति भावः ।

**वा०२०— कल्पनीयत्वमभिमतमिति** । कल्पनीयत्वमित्यभिमतमित्यर्थः । **एवं भूतलाभावयोरिवेति** । भूतलाभावयोः स्वभावप्रत्यासत्त्या घटाभाववद्भूतलमिति विशिष्टप्रत्ययनिर्वाहो यथा भवति तथा तया प्रत्यासत्त्या परत्वादिविशिष्टप्रत्ययनिर्वाहाभावेऽपीत्यर्थः । **तद्वदेवेति** । भूतलाभावयोः सान्निध्येन घटाभाववद्भूतलमिति विशिष्टप्रत्ययजनकत्वप्रयोजकसान्निध्यवद्भूतलघटाभावयोरिव पिण्डतपनपरिस्पन्दयोः सान्निध्येनेत्यर्थः । **न भूतलाभावयोरिति** । भूतलाभावयोः सान्निध्यमपि तेन सम्बन्धः । अस्तु उपनायकं द्रव्यान्तरमित्यनेन पृथिव्याद्यष्टद्रव्यातिरिक्तं नवमं द्रव्यमस्त्वित्युक्त्वा पुनस्तच्च पृथिव्यादिकमेव किं न स्यादिति तस्य पृथिव्यादित्वसम्भवप्रतिपादनमयुक्तमित्यतो यथाश्रुतार्थं परित्यज्यार्थान्तरसमर्पकतया योजनामाह **अत्रास्तु वेति** । अनेन किं न स्यादिति नञः द्रव्यान्तरमित्यनेनान्वये द्रव्यान्तरत्वनिषेधेन द्रव्यत्वमात्रलाभः । नञो भिन्नक्रमत्वे सति न द्रव्यान्तरं किन्तु पृथिव्यादिकं स्यादिति लभ्यत इति सूचितं भवति । न तावत्पृथिव्यादिकं हेतुरिति लीलावत्यां न च पृथिव्यादिस्तथेत्येव किरणावल्यां चोक्तत्वेऽप्युत्तरत्राकाशात्मदिशामपि पृथङ्निराकरणेनाव्यापकत्वयुक्तिविषयत्वाभावेन चादिपदसङ्कोचमाश्रित्य पृथिव्यादिभूतचतुष्टयत्वमवच्छेदकमाश्रयणीयम् । अत एव तत्त्वप्रदीपिकायां पृथिव्यादिचतुष्टयमित्युक्तमित्याशयेन व्याचष्टे **पृथिव्यादिचतुष्टयमित्यर्थ इति** । लीलावत्यामपि तपनपिण्डाभ्यामित्येवोक्तेऽपि योग्यतया पृथिव्यादिचतुष्टयस्येति पूरणमभिप्रेतम् । अत एव तत्त्वप्रदीपिकायां तस्य तपनपिण्डाभ्यामित्युक्तमित्याशयेनानुरूपं शेषं पूरयति **पृथिव्यादीति** । नयनप्रसादिन्यनुसारेणाह **अव्यापकत्वादिति भाव इति** । **योग्यद्रव्येति** । द्रव्याभावसिद्धावपि तदभावनिश्चयासम्भवेनेति सम्बन्धः कुतोऽनुपलम्भेन सूक्ष्मद्रव्याभावनिश्चयासम्भव इत्यत उक्तं **परमाण्वादीति** । अनुपलम्भोऽन्यथासिद्ध इति भावः । **अगृह्यमाणेति** । विशेषणानुपलम्भादित्यर्थः । विशेषगुणवत्पृथिव्यादिवदित्याचार्य इति किरणावलीव्याख्याने आचार्यः व्योमशिवाचार्य इति व्याख्यातम् । तदनुसारेण विशेषगुणत्वशङ्काकर्तारं निर्दिशति **व्योमशिवेति** । स्थविरादिषु परत्वादिकमुत्पद्यमानमसमवायिकारणवत् कार्यत्वादिति सामान्यतो समवायिकारणसिद्ध्यादिकं व्युत्पाद्य असमवायिकारणसंयोगाश्रयो विभुद्रव्यमात्माकाशरूपमिति शङ्कापरिहाराय विशेष-





गुणवत्वस्य तेनोपन्यासात् । तथा तपनसमवेतकर्मणा स्थविरशरीरस्य सम्बन्धान्तराभावाद्बहुतरतपनपरिस्पन्दान्तरितजन्मवत्वरूपविप्रकर्षायोगादादित्यगतेः स्थविरसम्बन्धतया संयुक्तसंयोगिसमवायिलक्षणप्रत्यासत्तेराश्रयणीयतया तद्घटद्रव्यस्याव्यापकत्वेन पृथिव्यादिचतुष्टयरूपत्वायोगादात्माकाशयोरपि पृथिव्यादिवद्विशेषगुणवत्तया प्रत्यासत्तिघटकद्रव्यत्वायोग इति तेन प्रतिपादनायोगात् । तथा च विशिष्टप्रतिपादनाय प्रवृत्तेन विशेषगुणवत्वरूपयुक्तेरात्माकाशनिराकरणाय प्रयुक्तत्वेऽपि पृथिव्यादिनिराकरणांशस्य स्वल्पतया तदंशे तदाचार्यमतत्वमनुक्त्वा आकाशनिराकरणस्य बहुत्वात् तदंशे तदुपन्यस्तयुक्तेः तन्मतत्वेन कीर्तनमित्यदोष इति ज्ञेयम् ।

**स०व्र०— विनापि साध्यसान्निध्येनेति** । स्वरूपसम्बन्धेनैवेति शेषः । **सान्निध्यमिति** । वक्ष्यमाणरीत्या सामीप्यापरपर्यायस्य सान्निध्यस्यातिरिक्तसम्बन्धघटितत्वादिति भावः । किं विशेषगुणवतः अन्यधर्मस्य अन्यत्रोपसङ्क्रामकत्वमनुपपन्नमित्यभिप्रायः किं वा सूर्यगत्युपनायकत्वमेव न सम्भवतीति । नाद्य इत्याह **विशेषगुणवतोऽपीति** । नान्त्य इत्याह **सूर्यगत्युपनायकत्वं चेति** । अन्ये तु विशेषगुणवत्त्वादित्यत्र अप्रयोजकतां वक्तुं साध्यप्रविष्टसूर्यगत्युपनायकत्वं विवेचयति सूर्यगत्युपनायकत्वं चेतीत्याहुः । **सहकारिशक्तिर्वेति** । सहकारिण उपनायकद्रव्यस्य शक्तिः सामर्थ्यं उपनायकताऽवच्छेदकधर्म इति यावत् ।

**विट्ठल०— सम्बन्धाभावेऽपीति** । स्वरूपसम्बन्धातिरिक्तसम्बन्धाभावेऽपीत्यर्थः । **दर्शनस्येति** । सान्निध्यदर्शनस्येत्यर्थः । **विनापीति** । घटस्य बाह्यत्वेन ज्ञानस्य चान्तरत्वेन तयोः सान्निध्यं नेति भावः । यद्वा ज्ञानेन देशकालव्यवहितघटादिग्रहणसम्भवेन तत्र सान्निध्यप्रसक्तेरेवाभावादिति भावः । **सान्निध्येनेति** । वक्ष्यमाणरीत्या सामीप्यापरपर्यायसान्निध्यस्य संयोगघटिततत्परपक्षे भूतलाभावयोः संयोगाभावेन सान्निध्यासम्भवादिति भावः । **असंसर्गादिति** । मूर्ततया स्वयमुभयसम्बन्ध्यन्तरास्थितत्वाभावादिति भावः । **एकैकस्य** पार्थिवादिद्रव्यस्य । **विनिगमनायामिति** । न काल उपनायकः किन्तु तरणिपिण्डान्तराले उपनायकानि सूक्ष्मद्रव्यादिमध्ये सन्ति अनुपलम्भस्तु सूक्ष्मतयेत्येवं निश्चय इत्यर्थः । तपनपरिस्पन्दोन्नायकत्वस्य कस्यचिदावश्यकत्वेन तदन्यथानुपपत्त्या कालाख्यद्रव्यपरिशेषो निश्चीयत इति चेन्न । पृथिव्यादिद्रव्याणामेव तदुपनायकत्वस्योक्तत्वात् । ननु पृथिव्यादिद्रव्याणां तदुपनायकत्वं कल्पनीयम् । तरणि पिण्डान्तराले स्थितामनुपलभ्यमानत्वं च कल्पनीयम् । ततो वरं द्रव्यान्तरकल्पनमित्यस्ति विनिगमनमित्यत आह **धर्मिकल्पनात इति** । नन्वाकाशस्य विशेषगुणत्वेन हेतुना उपनायकत्वाभावमात्रं साध्यते उत सूर्यगत्युपनायकत्वाभाव इति विकल्प्य आद्ये पटादौ नीलिमोपसङ्क्रामके पङ्कादिद्रव्ये व्यभिचार इत्याह **विशेषगुणवत इति** । द्वितीयं दूषयितुं सूर्यगत्युपनायकत्वं विकल्प्य पृच्छति **सहकारिशक्तिर्वेति** । सहकारिण उपनायकद्रव्यस्य शक्तिः सामर्थ्यं उपमापकतावच्छेदकधर्म इति यावत् । **अनभ्युपगमादिति** । नैयायिकेन अतीन्द्रियशक्तिमात्रस्यानभ्युपगमादित्यर्थः । **व्यापकत्वमिति** । सकलमूर्तसंयोगित्वं विभुत्वमित्यर्थव्यापकत्वमेव तदिति । तथा च विशेषगुणराहित्यस्य उपनायकत्वावच्छेदकत्वाभावाद्विशेषगुणवत्वं नानुपनायकतासाधकमिति भावः ।





चषकः— **विनापि सान्निध्येनेति** । स्वरूपसम्बन्धेनेति पूरणीयम् । **घटज्ञानमिति** । घटस्य भूतलादिनिष्ठत्वात् । ज्ञानस्य च मतभेदेन आत्माऽन्तःकरणनिष्ठत्वादिति भावः ।

**१६० सु०— वयं तु ब्रूमः, व्यापकत्वमेव तदिति, अन्यथा मनसोऽपि तत्प्रसङ्गात् । व्यापकत्वस्य प्रयोजकतायामात्मनोऽपि तत्प्रसङ्ग इति चेन्न, तद्व्यापकत्वाभावस्य वक्ष्यमाणत्वात्, व्यापकत्वेऽप्यनिष्टाभावात् । क्रियोपनायकत्वं खल्वान्तरालिकस्य द्रव्यस्य नोभयसंयोगातिरिक्तं किञ्चित् । तदेकस्येवानेकेषामपि समानम् । यद्याकाशं(ः) स्वसम्बन्धेनान्यगतं धर्मम् अन्यत्र सङ्क्रामयेत्, तदा सर्वं सर्वत्र सङ्क्रामयेत्, अविशेषादिति चेन्न, नियतोपसङ्क्रामकत्वस्यैव कल्पनीयत्वात् । गुर्वी हि धर्ममात्रकल्पनातो धर्मिकल्पना । अन्यथा कालेऽपि समानः प्रसङ्गः ।**

**परि०— अन्यथेति** । विशेषगुणरहितस्यैवोपनायकत्वतन्त्रत्व इत्यर्थः । **तद्व्यापकताऽभावस्येति** । आत्मनो व्यापकत्वाभावस्य द्वितीये 'उत्क्रान्तिगत्यागतीनामि'त्यत्र वक्ष्यमाणत्वादित्यर्थः । व्यापकत्वेऽङ्गीकृतेऽपि नानिष्ट इत्याह **व्यापकत्वेऽपीति** । आत्मन इत्यनुषङ्गः । आकाशवदात्मनोऽपि, गत्युपनायकत्वप्रसङ्ग इत्यतो नैषोऽनिष्ट इत्याह **क्रियेति** । न चात्मनोऽनेकत्वाद्विनिगमनाभावात् अनेकेषामुपनायकत्वं स्यादित्यतो नैतदप्यनिष्टमित्याह **अनेकेषामिति** । आत्माकाशपृथिव्यादीनामिति वाऽर्थः ।

**यादु०— व्यापकत्वमेव तदिति** । तथा च विशेषगुणराहित्यस्योपनायकतायामप्रयोजकत्वे विशेषगुणवत्त्वं नानुपनायकत्वे प्रयोजकमिति भावः । **वक्ष्यमाणत्वादिति** । उत्क्रान्तिगत्यागतीनामित्यत्र सूत्रकारेणेति शेषः । **उभयसंयोगेति** । पिण्डतपनसंयोगातिरिक्तमित्यर्थः । **अनेकेषामिति** । तथा च व्यापकत्ववतामाकाशदिशां सूर्यक्रियोपनायकत्वं यत्प्रसक्तं तन्नानिष्टमिति भावः । **नियतोपसङ्क्रामकत्वस्यैवेति** । सूर्यगतिमात्रोपनायकत्वस्येत्यर्थः ।

**वं०प०— तदिति** । उपनायकतावच्छेदकमित्यर्थः । तथा च आकाशस्योपनायकत्वसिद्धिरिति भावः । **अन्यथेति** । व्यापकत्वं नोपनायकताऽवच्छेदकं किन्तु विशेषगुणविरह एवेत्युच्यमान इत्यर्थः । **मनसोऽपीति** । तस्य विशेषगुणरहितत्वादिति भावः । तत्प्रसङ्गात् = उपनायकत्वप्रसङ्गात् । **अनेकेषामपि समानमिति** । तथा च आत्माकाशयोरुभयोरपि पिण्डतपनसंयुक्तत्वादुपनायकत्वं स्यादिति भावः । कुत इत्यत आह **गुर्वी हीति** । प्रसिद्धस्याकाशस्योपनायकत्वरूपधर्मकल्पनापेक्षयाऽप्रसिद्धकालरूपधर्मिकल्पना गुरुभूतेत्यर्थः ।





**आनन्दः**— **वयं त्विति** । तच्चास्त्याकाश इति तस्योपनायकत्वं स्यादिति भावः । **अन्यथेति** । यदि विशेषगुणशून्यत्वमेव प्रयोजकं न तु व्यापकत्वं इति यदीत्यर्थः । **तद्व्यापकत्वाभावस्येति** । तद्व्यापकत्वाभावस्येत्यर्थः । ननु तर्ह्युभयोरप्यनायकत्वं प्रसक्तमित्यत आह **क्रियेति** । तथापि कल्पना-साम्यात् कालकल्पनैवास्त्वित्यत आह **अन्यथेति** । यदि नियतोपसङ्क्रामकत्वकल्पनया अतिप्रसङ्गो न परिहियत इत्यर्थः ।

**श्रीनिधि०**— नन्वात्मनां बहुत्वात् कथं क्रियोपनायकत्वमित्यत आह **तदेकस्येवेति** । **सर्वं सर्वत्र सङ्क्रामयेदि**ति काशिस्थमहारजनादिकं रामेश्वरस्थपटादौ सङ्क्रामयेदित्यर्थः ।

**शे०वा०**— ननु विनिगमनायां कारणाभावादुभयमपि प्रयोजकमित्युच्यते । ततश्च नाकाश-स्योपनायकत्वं सम्भवति । तत्र सत्यपि व्यापकत्वे विशेषगुणविरहाभावादित्यत आह **वयं त्विति** । उभयोरपि प्रयोजकत्वे गौरवापत्तेरिति भावः । अस्तु तर्हि विशेषगुणविरह एव तत्र प्रयोजको लाघव-स्यैवमप्यनपायादित्यत आह **अन्यथेति** । **तत्प्रसङ्गात्** उपनायकत्वप्रसङ्गादित्यर्थः । विशेषगुणरहितस्य तत्राप्यविशिष्टत्वादिति भावः । तर्हि व्यापकत्वमपि न प्रयोजकमिति प्रसङ्गतौल्यादिति कथमाकाशस्योप-नायकत्वमिति शङ्कते **व्यापकत्वस्येति** । आत्मनोऽपि व्यापकत्वादिति भावः । भवेदेवं यदि व्यापकत्वस्य प्रयोजकतायामतिप्रसङ्गः स्यात् । न चैतदस्ति । आत्मनो व्यापकत्वाभावस्योत्क्रान्तिगत्यागतीनामित्यत्र वक्ष्यमाणत्वेन तदप्रसङ्गात् । ततश्च व्यापकत्वस्य प्रयोजकत्वनिश्चयोपपत्तेर्युक्तमाकाशस्योपनायकत्वमित्या-शयेनाह **तद्व्यापकत्वाभावस्येति** । अस्तु वा आत्मनो व्यापकत्वम् । न चैवं तस्याप्युपनायकत्वप्रसङ्गः । तदङ्गीकारेऽप्यनिष्टाभावादित्याह **व्यापकत्वेऽपीति** । नन्वात्मनामनेकत्वात् कथमुपनायकत्वमित्यत आह **क्रियोपनायकत्वमिति** । तपनपरिस्पन्दरूपक्रियोपनायकत्वमित्यर्थः । **उभयसंयोगेति** । तपनपिण्डसंयोगे-त्यर्थः । यद्वाकाशमित्युपलक्षणम् । यद्वात्मा चेत्यपि द्रष्टव्यम् । **नियतेति** । सूर्यगतिमात्रोपनायकत्व-स्येत्यर्थः । **अन्यथेति** । नियतोपसङ्क्रामकत्वकल्पनयाऽतिप्रसङ्गापरिहार इत्यर्थः । **प्रसङ्ग इति** । यदि कालः स्वसम्बन्धेनान्यगतं धर्ममन्यत्र सङ्क्रामयेत् तदा सर्वं सर्वत्र सङ्क्रामयेदविशेषादिति समानः प्रसङ्ग इत्यर्थः ।

**वा०र०**— तद्व्यापकभावाभावेत्यत्र व्यापकभावपदस्य व्यापकत्वार्थकत्वं स्पष्टयन् प्रतीकमुपादत्ते **तद्व्यापकत्वाभावस्येतीति** । तेन तद्व्यापकभावेत्यादि मूलप्रतीकोपादानमेतत् कथमिति शङ्कानवकाशः । प्रागाकाशस्येवात्मनोऽपि निराकरणाय यदि च गमनमात्मा चान्यधर्मेणान्यमवच्छिन्द्यात् काश्मीरवर्तिना कुसुमरागेण कर्नाटकचक्रवर्तिकरकमलवच्छिन्द्यादिति लीलावत्याद्युक्तेश्चाह **यद्वाकाशमिति** ।

**स०व्र०**— **व्यापकत्वमेव तदिति** । तथा च विशेषगुणराहित्यस्योपनायकतायामप्रयोजकत्वे विशेषगुणवत्त्वं नानुपनायकत्वे प्रयोजकमिति भावः । **प्रयोजकतायामिति** । अवच्छेदकतायामित्यर्थः ।





**तद्व्यापकताभावस्येति** । आत्मनो व्यापकत्वाभावस्य 'उत्क्रान्तिगत्यागतीनामि'त्यत्र वक्ष्यमाणत्वादित्यर्थः । अस्तु वा आत्मनो व्यापकत्वम् । न चैवं तस्याप्युपनायकत्वापत्तिरिति वाच्यम् । आकाशवदात्मनोऽप्युपनायकत्वाङ्गीकारेऽनिष्टाभावादित्याह **व्यापकत्वेऽपीति** ।

**विट्ठल०— प्रयोजकतायामिति** । अवच्छेदकतायामित्यर्थः । **आत्मनोऽपीति** । आत्मनोऽप्युपनायकतावच्छेदकावच्छिन्नतया उपनायकताप्रसङ्गादित्यर्थः । **तद्व्यापकत्वाभावस्येति** । आत्मनो व्यापकत्वाभावस्योत्क्रान्तिगत्यागतीनामित्यत्र वक्ष्यमाणत्वादित्यर्थः । ननु कथमनिष्टाभावः तपनपरिस्पन्दोन्नायकत्वस्यैवानिष्टत्वादतो नास्यानिष्टत्वमित्याशयेनाह **क्रियेति** । उभयसंयोगातिरिक्तं पिण्डतरणिसंयोगातिरिक्तं न भवति । तदात्मनोऽप्यङ्गीक्रियत इति भावः । नन्वात्मनामनेकत्वेन विनिगमकाभावात् सर्वेषामप्युपनायकत्वं स्यादित्यतो नैतदनिष्टमित्यत आह **तदेकस्येति** । यथा व्यापकत्वस्यैवोपनायकतावच्छेदकत्वे तद्वतामात्माकाशादीनामप्युपनायकत्वं स्यादित्यतो नैतदप्यनिष्टमित्याह **तदेकस्येति** । **नियतेति** । सूर्यगतिमात्रोपनायकत्वमेतदतिप्रसङ्गपरिहारार्थमाकाशस्य कल्पनीयमिति भावः । तर्हि कल्पनागौरवमित्यत आह **गुर्वीति** । आकाशस्य नियतोपसङ्क्रामकत्वरूपधर्मकल्पनापेक्षया कालाख्यधर्मिककल्पना गुर्वीत्यर्थः । **अन्यथा** नियतोपसङ्क्रामकत्वाकल्पने ।

**१६१ सु०— तत्सिद्ध्यसिद्धिभ्याम् अनवसरदुःस्थत्वमिति चेन्न, भावानवबोधात् । विशिष्टप्रत्ययदर्शनानन्तरं हि बहवः पक्षाः प्राप्नुवन्ति, किमयं स्वरसम्बन्धनिबन्धनः किंवा अतिरिक्तसम्बन्धाधीन इति । द्वितीयेऽपि किं साक्षात्सम्बन्धोऽत्र निमित्तमुत द्रव्यान्तरकृत इति । उत्तरत्रापि तद्द्रव्यं प्रसिद्धेष्वन्यतमं वा भवत्वन्यद्वेति । सर्वत्र बाधकानि पर्यालोचयन् प्रसिद्धद्रव्येषु यद्बाधकं पश्येत्तदप्रसिद्धेऽपि कल्प्यमाने कथं नानुसन्दध्यात् । अनुसन्दधानश्च तत्स्वाभाव्येन परिहारं चिन्तयन् कल्पनागौरवव्यसनमपहाय लघीयांसमेव पक्षं न कथं (वा) रोचयत इत्यस्यार्थस्य विवक्षितत्वात् । पर(प्र)सिद्धत्वेन प्रसङ्गस्य न दोष इत्यस्याप्ययमेवाभिप्रायः ।**

**परि०— तत्सिद्ध्यसिद्धिभ्यामिति** । कालस्य सिद्धौ न कल्पनागौरवप्रसङ्गस्यावसरः । प्रमितत्वात् । असिद्धौ त्वनाश्रयत्वात् न कल्पनागौरवप्रसङ्गस्यावसरः अतोऽनवसरदुःस्थत्वान्नैव का(ले)लस्य समानः प्रसङ्ग इत्यर्थः । **विशिष्टप्रत्ययदर्शनेति** । अयं परोऽयमपर इत्यादि तपनक्रियाविशिष्टज्ञानानुभवानन्तरमित्यर्थः । **अन्यतमद्वेति** । अन्यतमं वेति पाठः साधुः । अन्यतमदिति लेखकदोषमूलम् । 'अद्ड्डतरादिभ्यः पञ्चभ्य' इति सूत्रे डतर-डतम-इतर अन्य-अन्यतरेति





पञ्चानामेव ग्रहणेनान्यतमशब्दस्य अग्रहणात् । न चायं डतमप्रत्ययान्त एवेति शङ्क्यम् । अन्यशब्दे डतमो विधानाभावात् । 'अन्यतरान्यतमशब्दावव्युत्पन्नावि'ति कैयटोक्तेश्च । आचारार्थात् क्विबन्ता-दन्यतमशब्दाच्छतृप्रत्ययेऽन्यतमदितिरूपं भविष्यतीत्येके समादधुः । **सर्वत्र च बाधकानीति** । स्वरससम्बन्धेऽसान्निध्यं बाधकम् । साक्षात्सम्बन्धे तदनुपलम्भनम् । प्रसिद्धेष्वाकाशादिरूप-मन्यतममिति पक्षे सर्वसङ्क्रामकत्वमिति बाधकानीत्यर्थः । **तदिति** । सर्वसङ्क्रामकत्वरूपं बाधक-मित्यर्थः । तत्स्वाभा(विकत्वे)व्येन = क्रियामात्रोपसङ्क्रामकत्वस्वाभाविकत्वेन । ननु यदि कालः स्वसम्बन्धेनान्यगतं धर्ममन्यत्रोपनयेत् तदा सर्वं सर्वत्र सङ्क्रामयेदविशेषात् इत्युक्तप्रसङ्गस्य कालस्य सिद्ध्यसिद्धिभ्यामनवसरदुःस्थत्वे परेण चोदिते सति परसिद्धत्वात् कालस्य परसिद्धेन कालेन परस्यापादनात् न दोष इत्येव परिहारः सुवचः । स एवात्र कुतो नोक्त इत्यत आह **परसिद्ध-त्वेनेति** । **प्रसङ्गस्येति** । कालेऽपि समान इत्युक्तप्रसङ्गस्येत्यर्थः । **अयमेवेति** । विशिष्टप्रत्यये-त्यादिनोक्त एवेत्यर्थः ।

**यादु०— तत्सिद्ध्यसिद्धिभ्यामिति** । कालोऽसिद्धश्चेदुक्तप्रसङ्गस्याश्रयासिद्धिः । सिद्धश्चेन्नोक्त-प्रसङ्गपराहतिः तस्य नियतोपसङ्क्रामकतयैव सिद्ध्या प्रसङ्गस्य बाधितत्वादित्युभयथाऽप्युक्तप्रसङ्गस्यावसरा-भावेन दुःस्थत्वं स्थातुमशक्यत्वमप्रवृत्तिरिति यावत् । **प्रसिद्धद्रव्येष्विति** । आकाशादिषु यद्बाधकं यद्याकाशं स्वसम्बन्धेनान्यगतधर्ममन्यत्र सङ्क्रामयेत् तदा सर्वं सङ्क्रामयेदविशेषादित्येवंरूपमित्यर्थः । **तत्स्वाभाव्येनेति** । अप्रसिद्धं कालाख्यं द्रव्यं सिद्ध्यद्धर्मिग्राहकमानेनान्यगतक्रियामात्रोपनायकस्वभाववत्तयैव सिद्ध्यति । अतो नातिप्रसङ्ग इति परिहारमित्यर्थः । **लघीयांसमिति** । प्रसिद्धद्रव्य एवाकाशे अन्यगतक्रियामात्रोपनायकत्व-स्वभावकल्पनायामप्यतिप्रसङ्गाभावेन धर्ममात्रकल्पनालाघवोपेतमित्यर्थः । तत्सिद्ध्यसिद्धिभ्यामित्यादिनोक्तस्य भावानवबोधादित्यादिना किमुत्तरं जातमिति चेदुच्यते । कालेऽपि प्रसङ्गपराहततायामुच्यमानायां कालः सिद्धो न वेति विकल्प्य दूषणाभिधानं त्वदीयं कथञ्चित्परं प्रति स्यात् । स्वार्थानुमित्यवसरे तर्कितं कालमादायोक्त-प्रसङ्गपराहत्यादिप्रतिसन्धाने स्वार्थानुमितिः न भविष्यतीत्युत्तरमत्राभिप्रेतमिति । ननु परन्यायैश्च दूषण-मित्युक्तत्वेन परसिद्धैरेवाश्रयादिभिस्तर्कप्रवृत्तेर्नाश्रयासिद्धिरिति कस्मान्न समाधीयत इत्यत आह **परसिद्ध-त्वेनेति** । परमात्रसिद्धाश्रयादिमत्त्वेनेत्यर्थः । **अयमेवेति** । स्वन्यायप्राप्ताश्रयाद्युपजीवनेन प्रवृत्तौ तादृशतर्क-पराहतिप्रतिसन्धाने परस्यापि स्वार्थानुमितिः न भविष्यतीत्युक्त एवाभिप्राय इत्यर्थः ।

**आनन्दः**— ननु कालः सिद्धो न वा । यदि सिद्धस्तर्हि अन्यगतधर्मोपसङ्क्रामकत्वेनैव सिद्ध इति तदभावे साध्ये बाधः । यदि न सिद्धस्तर्ह्याश्रयासिद्धिरिति शङ्कते **तत्सिद्ध्यसिद्धीति** । ननु परं प्रति कालस्य सिद्धत्वात् परन्यायेनेदमापादनमिति कुतो न परिह्रियत इत्यत आह **परसिद्धत्वेनेति** ।





**श्रीनिधि०**— ननु कालसिद्धो न वेति कल्पे सिद्ध इत्युत्तरम्, तर्हि आश्रयासिद्धेरनवसरदुस्थत्वमिति चेन्न । परसिद्धत्वेनाश्रयसम्भवात् । अन्यथा कथामात्रपरिलोप इति समाधानं कुतो नोक्तमित्यत आह **परसिद्धत्वेन प्रसङ्गस्येति** ।

**शे०वा०**— ननु च यत्र स्वसंयुक्तसमवेतस्य परिस्पन्दस्य स्वसंयुक्तेऽन्यस्मिन् सङ्क्रामकत्वं तत्र स्वसंयुक्तसमवेतधर्माणां स्वसंयुक्तेऽन्यस्मिन् सङ्क्रामकत्वमिति प्रसङ्गभूतव्याप्तेर्दृष्टान्ताभावेन विशिष्यासम्भवादविशेषलक्षणैव व्याप्तिः तन्मूलतया वाच्या । न च साऽपि सम्भवति । कालसिद्धौ तस्य धर्मिग्राहकमानेन नियतपरधर्मोपसङ्क्रामकत्वेनैव सिद्ध्या स्वसंयुक्तसमवेतपरिस्पन्दोपसङ्क्रामकत्वस्य प्रामाणिकत्वेन स्वसंयुक्तसमवेतसकलधर्मोपसङ्क्रामकत्वस्य च तेनासिद्ध्याऽप्रामाणिकत्वेन प्रामाणिकत्वाप्रामाणिकत्वाभ्यां वैलक्ष्यण्येन अविशेषासिद्धेः । तथा च प्रसङ्गमूलभूतव्याप्तिशैथिल्ये नोक्तप्रसङ्गस्य कालेऽवसरोऽस्ति । अथ कालासिद्धावुक्तप्रसङ्गोऽभिधीयतेऽतो नाविशेषानुपपत्तिः । न । तथा सति प्रसङ्गस्याश्रयासिद्धिप्रसक्त्याऽनवसरप्रसक्तेः । तत्कथं कालेऽप्युक्तप्रसङ्गस्य समीकरणमिति भावेन शङ्कते **तत्सिद्ध्यसिद्धिभ्यामिति** । यद्यप्यसिद्धिदशायां प्रसङ्गस्याश्रयासिद्धेः सिद्धिदशायां च बाधितत्वादिति किरणावल्यां तस्यासिद्धावाश्रयासिद्धेः सिद्धौ वा नियतपरधर्मोपसङ्क्रामकत्वेनैव सिद्ध्या बाधादिति लीलावत्यां चोपाधिसम्बन्धोपनायकत्वेनैव कालसिद्धेस्तत्पक्षीकारेण तद्विपर्ययप्रसञ्जने धर्मिग्राहकप्रमाणबाध एव स्यात् । तदसिद्धावाश्रयासिद्धेः । इत्येतद्वाक्यार्थानुवादपरःसहस्रानेकवेदान्तग्रन्थेषु च कालसिद्धौ धर्मिग्राहकप्रमाणबाध एवोक्तः । तथापि बाधस्य प्रसङ्गेऽनुकूलत्वेन तथा तात्पर्यस्य वर्णयितुमशक्यत्वात् अन्यथातात्पर्यमुपवर्णितम् । अत एव लीलावतीवर्धमानकृता यद्यपि बाधस्तर्केऽनुकूल एवेत्याशङ्क्यैवमेव तात्पर्यमुपवर्णितमिति ध्येयम् । वस्तुतस्तु प्रसङ्गस्य विपर्यये पर्यवसानहीनस्य तदाभासत्वात् । न च कालः स्वसंयुक्तसर्वधर्माणां सर्वत्र सङ्क्रामकः । तस्मान्न स्वसंयुक्तपरिस्पन्दस्य पिण्डे उपसङ्क्रामक इति विपर्यये पर्यवसानं वाच्यम् । न च तद्वक्तुं शक्यम् । सूर्यपरिस्पन्दोपनायकत्वस्य धर्मिग्राहकमानसिद्धत्वेन तद्विपर्ययस्य तद्बाधितत्वात् । विपर्ययपर्यवसाने बाधस्य च तर्केऽपि दूषणत्वस्य स्वपरसम्मतत्वात् तदभिप्रायकमेवेदं बाधाभिधानम् । ततश्च सिद्धिपक्षे सूर्यगत्युपसङ्क्रामकत्वस्य धर्मिग्राहकमानसिद्धत्वान्न सूर्यगत्युपसङ्क्रामक इति विपर्ययः प्रमाणबाधित इत्येव तात्पर्यमुपवर्णनीयम् । लीलावतीवर्धमानस्य च तदुक्तेरापाद्यस्य प्रमाणबाधिततायाः तर्केऽनुकूलत्वाभिप्रायकत्वेन स्थूलदृश्यत्वान्न कश्चिद्विरोध इति दिक् । न वयं कालविषयकपरार्थानुमाने उक्तप्रसङ्गपराहतिं ब्रूमो येन कालः सिद्धो न वेति विकल्प्य दूषणाभिधानं परकीयं प्रवर्तेत । किन्तु कालविषयस्वार्थानुमान एव । तत्र तर्कितं कालमादायोक्तप्रसङ्गपराहत्यादिप्रतिसन्धानदशायां स्वार्थानुमानासम्भवस्य न्यायप्राप्तत्वादित्याशयवान् समाधत्ते **नेति** । **प्रसिद्धद्रव्येष्विति** । आकाशादिष्वित्यर्थः । **यद्बाधकमिति** । यद्याकाश आत्मा वा स्वसम्बन्धेनान्यगतं धर्ममन्यत्र सङ्क्रामयेत् तदा सर्वं सर्वत्र सङ्क्रामयेदविशेषादित्येवंरूपमित्यर्थः । **तत्स्वाभाव्येनेति** । अप्रसिद्धं कालाख्यं द्रव्यं सिद्ध्यद्धर्मिग्राहकमानेन अन्यगतक्रियामात्रोपनायकस्वभाववत्तयैव सिद्ध्यतीत्यतो नातिप्रसङ्ग इति परिहार-





मित्यर्थः । **लघीयांसमिति** । प्रसिद्धद्रव्ये आकाशादावन्यगतक्रियामात्रोपनायकत्वस्वभावत्वकल्पनायामप्यति-प्रसङ्गाभावेन धर्ममात्रकल्पनालाघवोपेतमित्यर्थः । ननु परन्यायैश्च **दूषणमिति** वक्ष्यमाणरीत्या परसिद्धै-रेवाश्रयादिभिस्तर्कप्रवृत्तिसिद्धेः न आश्रयासिद्धिरित्येव कस्मान्न समाधीयत इत्यत आह **परसिद्धत्वेनेति** । परमात्रसिद्धाश्रयादिमत्त्वेनेत्यर्थः । **अयमेवेति** । स्वन्यायप्राप्ताश्रयाद्युपजीवनेन प्रवृत्तैतादृशतर्कपराहतिप्रतिसन्धाने परस्यापि स्वार्थानुमितिः न भवितुमर्हतीत्युक्त एवाभिप्राय इत्यर्थः ।

**वा०र०**— अविशेषमेव निमित्तकथनेनोपपादयंस्तमाक्षिपति **ननु चेति** । **परिस्पन्दस्य स्वसंयुक्त इति** । परिस्पन्दस्येति कर्मणि षष्ठी परिस्पन्दनिरूपितो यः स्वसंयुक्तेऽस्मिन् सङ्क्रमस्तद्धेतुत्वमित्यर्थः । एवमुत्तर-त्रान्यत्र चार्थोऽवधेयः । **समवेतधर्माणामिति** । परिस्पन्दातिरिक्तसूर्यगतानां धर्माणां स्वसंयुक्तं सूर्यातिरिक्तं यत् वस्त्वन्तरं तद्गतधर्माणां चेत्यपि कर्मणि षष्ठीयुक्तसंयुक्तवस्तुगतसकलधर्मनिरूपितो यः स्वसंयुक्तेऽस्मिन् सङ्क्रमस्तद्धेतुत्वमित्यर्थः । **नियतपरेति** । नियतो यः परधर्मः कश्चिद्देवपरधर्मविशेषः सूर्यगतिरूपः तन्मात्रोप-सङ्क्रामकत्वेनेत्यर्थः । **तेनासिद्धत्त्वेति** । कालसाधकधर्मिग्राहिकप्रमाणेनासिद्धत्वेत्यर्थः । वैलक्षण्येन वैषम्येन विशेषवत्वेनेति यावत् । **व्याप्तीति** । अविशेषलक्षणेत्यर्थः । व्याप्तिशैथिल्येन नोक्तेति नकारद्वययुक्तपाठः । एकनकारपाठेऽपि शैथिल्य इति निमित्तसप्तमीव्याख्यानादपेक्षितार्थसिद्धिरिति बोध्यम् । काले धर्मिग्राहक-प्रमाणसिद्ध इति शेषः । यद्वा कालसिद्धावित्यनुवर्तते **तथा चेति** । वाक्यस्याद्यपक्षनिराकरणोपसंहारतया तस्यावश्यकत्वादिति ज्ञेयम् । एवं पक्षान्तरमुत्थाप्य तन्निराकरोति **न तथा सतीति** । कालस्य प्रमाणसिद्धौ प्रमाणबाधेनावसरपदतात्पर्यविषयतया वक्तव्ये तत्परित्यागेन प्रामाणिकत्वे वैषम्यलाभमाश्रित्य अविशेषव्याप्ति-शैथिल्यं तात्पर्यविषयतयोक्तं तत्स्वोक्तमेव समर्थयितुं आक्षिप्य समाधत्ते **यद्यप्यसिद्धीति** ।

**परःसहस्रेति** । परःसहस्रा इति बहुत्वाभिप्रायं चेदम् । तथाविधप्रयोगाणां अनन्तदोषदुष्टं चेत्यादि बहुस्थले दृष्टत्वात् उपाधिसम्बन्धेत्ययं ग्रन्थस्तु तत्त्वप्रदीपिकास्थः । **बाध एवोक्त इति** । तथा चास्माभि-रप्यनवसरपदार्थतया कालसिद्धिपक्षे बाध एव व्याख्येय इति भावः । अन्यथा तात्पर्यमुपवर्णितमित्यत्रास्माभिरिति शेषः । **एवमेवेति** । तथापि कालस्य नियतपरधर्मोपसङ्क्रामकत्वं धर्मिग्राहकमानसिद्धमित्येवात्र विवक्षितमिति तत्रोक्तेः । तावता च न च कालेऽप्येष प्रसङ्ग इति लीलावतीशङ्कापरिहाराय प्रामाणिकत्वाप्रामाणिकत्वाभ्यां वैषम्यस्यैव लाभ इति मनसि निधाय एवमेव तात्पर्यमुपवर्णितमित्युक्तमिति ज्ञेयम् । एवं चायं ग्रन्थः स्वोक्त-तात्पर्यवर्णनाक्षेपसमाधानपर इति मूलग्रन्थोपरि विचाररूपो न भवति । तेन मूले प्रमाणबाधवक्तव्यता-शङ्कायाः तत्परिहारेण प्रकारान्तरेण तात्पर्यवर्णनोपपादनस्य चायोग इति शङ्कानवकाश इति बोध्यम् । एवं लीलावतीवर्धमानानुसारेणानवसरपदतात्पर्यं स्वयमुपवर्ण्य तदुपपादनं कृतम् । अधुना अवसरपदस्य अस्तु बाध एव तात्पर्यम् । तथा च कालसिद्धौ धर्मिग्राहकप्रमाणबाध इत्येवार्थः । न चैवं बाधाभिधानायोगः । बाधस्य तर्के अनुकूलत्वादिति वाच्यम् । विपर्ययपर्यवसाने तस्य दूषणत्वोपपत्तेरित्याशयेन बाधार्थकतया अनवसरपदं व्याचष्टे **वस्तुतस्त्विति** । **इदं बाधाभिधानमिति** । अनवसरपदेन विवक्षितं बाधाभिधानमित्यर्थः । अत्र चेदं





बाधाभिधानं तच्च तदभिप्रायकमिति वाक्यभेदेन योजनाश्रयणाद्विवक्षितार्थसिद्धिरसङ्गतिशङ्कानवकाशश्च बाध एवोक्त इत्यादिशङ्कासमाधानग्रन्थे बाधाभिधानस्य कर्तव्यत्वाक्षेपसमाधानाभ्यां बाधाभिधानं प्रकृतमितीदमित्यपि युक्तमेवेतीदं बाधाभिधानं तदभिप्रायकमेवेत्येकवाक्यतया वा योजनेति ज्ञेयम् । तर्हि प्रागुक्ततात्पर्य-वर्णनपरित्यागप्रसङ्ग इत्यतस्तत्परित्यागेनैव बाधाभिधाने तात्पर्यान्तरस्यैवोपवर्णनान्नानुपपत्तिरित्याशयेनाह **ततश्चेति** । उपवर्णनीयमित्यत्रापि अस्माभिरिति शेषः स्पष्ट एव । तर्हि लीलावतीवर्धमानविरोध इत्यतः तद्विरोधस्य अकिञ्चित्करत्वान्न दोष इत्याह **लीलावतीति** । प्रमाणबाधितताया इति पाठः । विशिष्टप्रत्यये-त्यादिना को भावः प्रदर्शित इति न प्रतीयते । कालवादिनोद्भाविताश्रयासिद्ध्यादेरपरिहारादित्यतो विशिष्टेत्यादेः प्रकारान्तरेणाभिप्रायमाह **न वयमिति** । **साक्षात्सम्बन्धोऽत्रेति** मूलम् । अत्र विशिष्टप्रत्यये कृत इत्यनन्तरं सम्बन्धोऽत्र निमित्तमित्यनुवर्तते । साक्षात्सम्बन्धाधीनो वा द्रव्यान्तरकृतसम्बन्धाधीनो वेति फलितोऽर्थः । एवं द्रव्यविकल्पेऽपि पर्यवसानं बोध्यम् । **स्वन्यायप्राप्तेति** । परस्यापि स्वन्यायेति योजना । परपदोक्तकालवाद्येव स्वपदार्थः ।

**स०व्र०— तत्सिद्ध्यसिद्धिभ्यामिति** । कालसिद्ध्यसिद्धिभ्यामित्यर्थः । कालसिद्धौ नियतोपसङ्क्रामकत्वेनैव तस्य सिद्धत्वेन सर्वत्र सङ्क्रामयेदिति प्रसङ्गानुपपत्तेः, असिद्धौ च कस्य सर्वत्र सङ्क्रामकत्वापादनमिति भावः । **दुःस्थत्वं** स्थातुमशक्यत्वम् । अप्रवृत्तिरिति यावत् । **प्रसिद्धद्रव्येषु यद्बाधकमिति** । आकाशादिषु यद्बाधकम् यदि आकाशं स्वसम्बन्धेनान्यगतं धर्ममन्यत्र सङ्क्रामयेत् तदा सर्वं सर्वत्र सङ्क्रामयेदविशेषा-दित्येवंरूपमित्यर्थः । **तत्स्वाभाव्येनेति** । अप्रसिद्धं कालाख्यं द्रव्यं सिध्यत् धर्मिग्राहकमानेनान्यगत-क्रियामात्रोपनायकस्वभाववत्तयैव सिद्ध्यति अतो नातिप्रसङ्ग इति परिहारमित्यर्थः । **लघीयांसं पक्षमिति** । प्रसिद्धद्रव्य एवाकाशे अन्यगतक्रियामात्रोपनायकत्वस्वभावकल्पनायामप्यतिप्रसङ्गाभावेन धर्ममात्रकल्पनाल्लाघव-मिति भावः । तत्सिद्ध्यसिद्धिभ्यामित्यादिनोक्तस्य भावानवबोधादित्यादिना किमुत्तरं जातमिति चेदुच्यते । कालेऽतिप्रसङ्गपराहतावुच्यमानायां कालः सिद्धो न वेति विकल्प्य दूषणाभिधानं त्वदीयं कथञ्चित् परं प्रति स्यात् । स्वार्थानुमानावसरे तर्कितं कालमादायोक्तप्रसङ्गपराहत्यादिप्रतिसन्धाने स्वार्थानुमितिः न भविष्यतीति परिहाराभिप्राय इति । ननु 'स्वन्यायैः साधनं कार्यं परन्यायैश्च दूषणमि'त्युक्तत्वेन परसिद्धैरेवाश्रयादिभिस्तर्क-प्रवृत्तेर्नाश्रयासिद्धिरिति कस्मान्न समाधीयत इत्यत आह **परसिद्धत्वेन प्रसङ्गस्येति** । परमात्रसिद्धा-श्रयादिमत्वेनेत्यर्थः । **अयमेवाभिप्राय इति**. । स्वमात्रसिद्धाश्रयाद्युपजीवनेन प्रवृत्तौ तादृशतर्कपराहतिप्रतिसन्धाने परस्यापि स्वार्थानुमितिः न भविष्यतीत्युक्त एवाभिप्राय इत्यर्थः ।

**विट्ठल०—** ननु कालसिद्धौ तस्य नियतोपसङ्क्रामकत्रयैव सिद्धेर्नोक्तप्रसङ्गावसरः । कालासिद्धौ त्वाश्रयासिद्धेः सुतरामनवसर इति प्रसङ्गस्य दृष्टत्वान्न कालेऽपि प्रसङ्गः समान इति शङ्कते **तत्सिद्ध्य-सिद्धिभ्यामिति** । दुःस्थत्वं स्थातुमशक्यत्वं अप्रवृत्तिरिति यावत् । **प्रसिद्धद्रव्येष्विति** । आकाशादिषु





यद्बाधकयुक्ततर्करूपमित्यर्थः । **तत्स्वाभाव्येनेति** । अप्रसिद्धकालाख्यं द्रव्यं सिद्ध्यद्धर्मिग्राहकमानेनान्यगत-क्रियामात्रोपनायकस्वभावतयैव सिद्ध्यति । अतो नातिप्रसङ्ग इति परिहारमित्यर्थः । ल.......यां संपक्षमि(?) अप्रसिद्धकालकल्पनापेक्षया प्रसिद्धद्रव्य एवाकाशे नियतोपसङ्क्रामकत्वस्वभावकल्पनायामप्यतिप्रसङ्गाभावे तन्मात्रकल्पनापक्षं लाघवोपेतं कथं न रोचयेदित्यर्थः । तत्सिद्ध्यसिद्धिभ्यामित्यादिनोक्तस्याभावानव-बोधादित्यादिना किमुत्तरं लब्धमिति चेदुच्यते । कालेऽपि प्रसङ्गपराहतानुच्यमानायां कालः सिद्धो न वेति दूषणाभिधानं त्वदीयं कथञ्चित्परं प्रति स्यात् । स्वार्थानुमानावसरे प्रसङ्गपराहत्यादि प्रतिसन्धाने स्वार्थानुमितिः न भविष्यतीत्युत्तराभिप्राय इति । ननु 'स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणमि'त्युक्तत्वेन परसिद्धै-रेवाश्रयादिभिस्तर्कप्रवृत्तेः न दोष इति कस्मान्न समाधीयत इत्यत आह **परसिद्धत्वेनेति** । परमात्र-सिद्धाश्रयादिमत्वेनेत्यर्थः । **इत्यस्यापीत्यस्य** इत्येवंतात्पर्यकग्रन्थस्यापीत्यर्थः । **अयमेवाभिप्राय इति** । स्वमात्रसिद्धाश्रयाद्युपजीवनेन प्रवृत्तौ तादृशतर्कपराहतिप्रतिसन्धाने परस्यापि स्वार्थानुमितिः न भविष्यती-त्युक्तोऽभिप्राय इत्यर्थः ।

**१६२ सु०— किञ्चायं प्रसङ्गो वस्तुतः साधुः अथाभासः । नाद्यः कालप्रतीत्युत्तरकालं व्याप्तिभङ्गात् । द्वितीये कथमाकाशस्य क्रियोपनायकत्वं त्याजयेत्, अन्यथा जातिनिरा-करणमपि न स्यादिति ।**

**अस्तु वाऽऽकाशस्य विशेषगुणवतः क्रियोपनायकत्वाभावः; दिशस्तु स्यात् विशेषगुणशून्यत्वात्, व्यापकत्वाच्च । तस्याः संयोगोपनायकत्वेन सिद्धत्वान्नेति चेन्न, उभयोपनायकत्वेऽपि बाधकाभावात् । सहकारिभेदेन च व्यवस्थिताव्यवस्थितप्रतीति-जनकत्वं कल्प्यतां लाघवादेव, अन्यथा कालेऽपि भेदकल्पनाप्रसङ्गादिति । तदिदमुक्तम्, तस्य विशिष्टप्रत्ययस्य नित्येन नियतेन प्रसिद्धेनैव पृथिव्यादिना सिद्धेर्नाप्रसिद्धे द्रव्ये-ऽनुमानावसरो भवेदिति ।**

**परि०**— यद्याकाशः स्वसम्बन्धेनेत्यादिनोक्तप्रसङ्गं स्वव्याहत्या निरस्य व्याप्तिहीनत्व-रूपप्रकारान्तरेणापि निराह **किञ्चायमिति** । किमाकाशस्येत्यत्र किंशब्द आक्षेपार्थः । **अन्यथेति** । असाधुप्रसङ्गस्यापि परबाधनक्षमत्वे सिद्धमपि दूषणासमर्थमुत्तरं जातिरित्यसाधुत्वेनोक्तजात्युत्तरस्यापि परबाधकत्वसम्भवेन जात्युत्तरं सदुत्तरं नेति निराकरणं न स्यादित्यर्थः । असाधुप्रसङ्गस्यास्मदुक्त-दिशा निरासाभावे सिद्धमपि दूषणासमर्थमुत्तरं जातिरिति व्याहत्यादिना असाधुत्वेनोक्तजात्युत्तर-स्यापि निराकरणं न स्यादित्यर्थः । त्वदुक्तप्रसङ्गस्यापि व्याहतियुक्ताङ्गहीनत्वरूपसाधारणासाधारणा-





सामर्थ्ये(र्थ्योपेतत्वे)न जात्युत्तरत्वादिति भावः । **संयोगोपनायकत्वेनेति** । दूरस्थे पिण्डे परत्वप्रत्ययः समीपस्थे चापरत्वप्रत्ययश्च यौ जायेते तौ च दूरदेशसंयोगसमीपदेशसंयोगविशेषणपिण्डविशेष्यकौ भवत इति कालकृतपरत्वापरत्वविपरीतपरत्वापरत्वप्रत्यये विशेषणीभूतसंयोगोपनायकत्वेनेत्यर्थः । ननु समीपस्थेऽपरत्वं दूरस्थे च परत्वं चाव्यवस्थितम् । कालकृतं तु व्यवस्थितम् । समीपस्थो युवा चेदपरः स्थविरश्चेत्परः । एवं दूरस्थोऽपि । तथा च कथं दिश एव व्यवस्थिताव्यवस्थितपरत्वापरत्वप्रत्ययजनकतेत्यत आह **सहकारीति** । संयोगपरिस्पन्दरूपगुणक्रियालक्षणसहकारिभेदेनेत्यर्थः । व्यवस्थिताव्यवस्थितेत्यस्यान्योन्यं विपरीतेत्यर्थः । **अन्यथा कालेऽपीति** । कालेऽपि सहकारिभेदेन विचित्रप्रतीतिजनकत्वानङ्गीकारे एकस्मिन्नेव पुरुषे स्थविरापेक्षयाऽपरत्वेन प्रतीतेऽपि ततो न्यूनवयस्कपुरुषापेक्षया परत्वप्रतीतेः स्थविरे ततोऽपि स्थविरापेक्षयाऽपरत्वप्रतीतेश्च जायमानत्वेन कालस्यापि व्यवस्थिताऽव्यवस्थितपरत्वापरत्वप्रतीतिजनकत्वात् तत्रापि कालेऽवान्तरभेदः कल्प्येतेत्यर्थः । अस्तु वेत्यादिनोक्तमपि मूलारूढं दर्शयति **तदिदमिति** ।

**गु०दी०— अन्यथा जातिनिराकरणमपि न स्यात्** इत्यत्र सदनुमाने स्वकपोलकल्पनयोक्तदोषेण जातिवादिना वक्ष्यमाणदूषणानुमाननिराकरणं हि जातिनिराकरणम् । तच्च जात्यसिद्धावसिद्धमेवेति त्वदुक्तन्यायेन जातिनिराकरणमपि न स्यादिति भावः । यद्वा असाधकस्यापि तर्कस्यार्थसाधकत्वे जातेरपि दूषणसमर्थत्वेन तन्निराकरणं न स्यादित्यर्थः । **तस्याः संयोगोपनायकत्वेन** इत्यत्र दिक्कृतपरापरत्वोपयोगिनोस्समीपे दूरे च दिक्पिण्डसंयोगयोरुपनायकत्वेन सिद्धत्वादित्यर्थः । **अन्यथा कालेऽपि** इत्यत्र परत्वकल्पककालस्यापरत्वकल्पककालस्य च भेदकल्पनाप्रसङ्गादित्यर्थः ।

**यादु०— अन्यथेति** । आभ्यासस्यापि साधकत्व इत्यर्थः । **जातिनिराकरणमिति** । स्वन्यायविरोधादिना जात्युत्तरनिराकरणं परीक्षकाणां न स्यादित्यर्थः । तत्राप्याभासे साधकत्वस्य परेण वक्तुं शक्यत्वादिति भावः । **तस्याः संयोगोपनायकत्वेनेति** । मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वस्मदादिपूर्वमस्मदादिपश्चिममिति पूर्वत्वादिविशिष्टप्रत्ययस्तावदुत्पद्यते । तत्र पूर्वत्वमवध्यपेक्षया सूर्योदयाचलसंयोगसन्निहितत्वम् । पश्चिमत्वमवध्यपेक्षया सूर्यास्ताचलसंयोगसन्निहितत्वम् । सन्निधिस्तु सूर्यसंयुक्तसंयोगाल्पीयस्त्वम् । प्रथमरविसंयोगवत्त्वं पूर्वत्वं, चरमसंयोगवत्त्वं पश्चिमत्वमिति यावत् । एवञ्च भूतलवर्तिनि द्रव्ये प्रथमचरमसूर्यसंयोगोपनायकं किञ्चिद्व्यापकमेव द्रव्यमङ्गीकर्तव्यम् । अन्यथोक्तविशिष्टप्रत्ययानुपपत्तेः । आत्माकाशयोः विशेषगुणवत्त्वेन कालस्य च क्रियामात्रोपनायकतया सिद्धत्वेन, विवक्षितपिण्डे सूर्यसंयोगोपनायकत्वासम्भवे तदुपनायकतया परममहत्परिमाणं किञ्चिदतिरिक्तं द्रव्यमङ्गीकार्यं सैव दिगित्यादित्यसंयोगोपनायकत्वेन दिशः सिद्धत्वादित्यर्थः । **उभयेति** । क्रियासंयोगरूपोभयोपनायकत्वेऽपीत्यर्थः । ननु संयोगक्रियोपनायकं





नैकमङ्गीकर्तुमुचितम् । एकस्माद्व्यवस्थिताव्यवस्थितप्रतीतिरूपविरुद्धकार्यद्वयासम्भवात् । वर्तमानत्वादिकं हिं व्यवस्थितमेव । यदेकं प्रति वर्तमानं तस्य सर्वान्प्रति वर्तमानत्वात् । पूर्वत्वादिकं त्वव्यवस्थितम् । अस्माकं पूर्वस्यान्येषां पश्चिमत्वात् । तथा च विरुद्धोभयप्रतीतिजनकं भिन्नस्वभावं द्रव्यद्वयमेवाङ्गीकार्य-मित्यत आह **सहकारिभेदेनेति** । आदित्यक्रियासंयोगरूपसहकारिभेदेनेत्यर्थः । **लाघवादिति** । क्लृप्त एव धर्मिणि धर्ममात्रकल्पनालाघवादित्यर्थः । **अन्यथेति** । एकस्मादेव कालाद्व्यवस्थितं वर्तमानत्वादिकमव्यवस्थितं परत्वापरत्वचिरत्वादिकं च प्रतीयत इत्यङ्गीकारो भज्येतेति भावः ।

**आनन्दः— द्वितीय इति** । आभासभूतस्य दूषणे वाऽसमर्थत्वादिति भावः । **अन्यथेति** । आभासभूतस्यापि दूषणादिसमर्थत्व इत्यर्थः । जात्युत्तरेणापि सदनुमानदूषणं स्यादिति तन्निराकरणं न कर्तव्यमित्यर्थः । तुष्यतु दुर्जन इति न्यायेनाह **अस्तु वेति** । **तस्या इति** । देवदत्तस्य स्वेन ह्यल्पदेशसन्निकृष्टे अपरमिति बुद्धिः बहुदेशसन्निकृष्टेव परमिति बुद्धिर्ज्ञायते । तत्राल्पे भूयांसोर्वा ये संयोगा अन्यनिष्ठाः तान्पिण्डसम्बद्धादिकस्वसम्बद्धे देवदत्तं सङ्क्रामयतीत्येव तस्याः संयोगोपसङ्क्रामकत्वमित्यर्थः । नन्वेकमेकस्या एव दिशः तरणिक्रियोपयनायकत्वाङ्गीकारे व्यवस्थितपरापरत्वप्रतीतिजनकत्वम् । संयोगोपनायकत्वे तु अव्यवस्थिततज्जनकत्वमित्येतद्विरुद्धमित्यत आह **सहकारीति** । **अन्यथेति** । सहकारिभेदेन उभयोरनङ्गीकारे कालेऽपि कदाचित्परबुद्धिजनकत्वम् । कदाचिदपरत्वबुद्धिजनकत्वमिति विरुद्धधर्मवत्वाद्भेदः स्यादित्यर्थः ।

**श्रीनिधि०— संयोगोपनायकत्वेनेति** । मूर्तद्रव्यं मध्ये अवधिं विधाय अयमस्मात्पूर्वः अयमस्मात्परं अयमस्माद्दक्षिणः अयमस्मादुत्तर इति प्रत्ययेऽन्यस्य निमित्तत्वासम्भवात् । प्रथमादित्यसंयोगेन पूर्वः परसंयोगेनापरः इत्यनित्यसंयोगस्य निमित्तत्वं वाच्यम् । आषाढादिषण्मास एव तरणिसम्बन्धी उत्तर इति च । अत्राप्यादित्यसंयोगस्य निमित्तत्वं वाच्यम् । तदुपनायकत्वं च दिश एव । आकाशे पततोर्गरुडयोः कस्मिंश्चित्सन्निकर्षे अपरत्वं विप्रकृष्टे परत्वं जन्यते । तत्र संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वे सन्निकर्षविप्रकर्षौ तदुपनायकत्वं च दिश एव । तथा हि एकस्मिन् गरुडे स्वसंयुक्तदिक्संयोग एवेत्यल्पः । अन्यस्मिन् विप्रकृष्टे तस्मिन् तद् बहु स्वसंयुक्तदिक्संयुक्तगरुडदिगन्तरसंयोगः । तत्र गरुडान्तरसंयोग इति अनेकत्वादिति द्रष्टव्यम् ।

**शे०वा०— अयं प्रसङ्ग इति** । यद्याकाशादिकं स्वसंयुक्तधर्ममन्यत्र सङ्क्रामयेत् तदा सर्वं सर्वत्र सङ्क्रामयेदित्ययं प्रसङ्ग इत्यर्थः । **अन्यथेति** । आभासस्यापि साधकत्व इत्यर्थः । **जातिनिराकरणमिति** । स्वन्यायविरोधेन जात्युत्तरनिराकरणं न स्यात् । तत्राप्याभासस्य साधकतायाः परेण वक्तुं शक्यत्वादिति भावः । **संयोगोपनायकत्वेनेति** । मूर्तद्रव्यमवधिं कृत्वा मूर्तद्रव्येष्वेवेदमस्मात्पूर्वमिदमस्माद्दक्षिणमिदमस्मा-त्पश्चिममिति पूर्वत्वादिविशिष्टप्रत्ययानां जायमानत्वात् तेषां च कादाचित्कत्वेन निर्निमित्तत्वानुपपत्त्या सनिमित्तकत्वेऽपि द्रव्यगुणादीनां व्यभिचारेण निमित्तत्वानुपपत्त्या प्रथमचरमादित्यसंयोगानामेव निमित्तत्वेन वाच्यत्वात् तेषां च सूर्यसमवेतानां, पिण्डेन विना सम्बन्धेन, पिण्डे संयोगविशिष्टप्रत्ययजनकत्वस्याति-





प्रसङ्गेनायोगेन सम्बद्धानामेव पिण्डे स्वविशिष्टप्रत्ययजनकत्वस्याभ्युपगमनीयत्वात् । अन्यसमवेतत्वादेव पिण्डेन साक्षात्सम्बन्धस्य बाधितत्वाद् द्रव्यान्तरकृतसम्बन्धपक्षेऽपि पृथिव्याद्यव्यापकसम्बन्धमाश्रित्य सूर्यसंयोगानां विशिष्टप्रत्ययजनकत्वायोगात् संयोगोपनायकतया व्यापकद्रव्यसिद्धौ तत्राप्यात्माकाशयोर्विशेषगुणवत्त्वेनोक्त-रीत्योपनायकत्वायोगात् कालस्य विशेषगुणरहितत्वेऽपि धर्मिग्राहकमानेन तरणिपरिस्पन्दमात्रोपनायकतया सिद्धत्वेन पिण्डे सूर्यसंयोगोपनायकत्वासम्भवात् तदतिरिक्तमेव परममहत्परिमाणं किञ्चिद्द्रव्यं सूर्यसंयोगोप-नायकमङ्गीकार्यमिति सैव दिगिति दिक्सिद्धिरिति संयोगोपनायकत्वेन दिशः सिद्धत्वादित्यर्थः । **उभयेति** । तरणिपरिस्पन्दतत्संयोगलक्षणोभयोपनायकत्वेऽपीत्यर्थः । ननु संयोगक्रियोपनायकं नैकं द्रव्यमङ्गीकर्तुमुचितम् । एकस्माद्व्यवस्थिताव्यवस्थितप्रतीतिरूपविरुद्धकार्यद्वयायोगात् वर्तमानत्वादिकं हि व्यवस्थितमेव । यदेकं प्रति वर्तमानं तस्य सर्वान्प्रति वर्तमानत्वात् पूर्वत्वादिकं त्वव्यवस्थितम् । अस्माकं प्राच्या एवान्येषां प्रतीचीत्वात् । तथा च विरुद्धोभयप्रतीतिजनकं भिन्नभिन्नस्वभावं द्रव्यद्वयमङ्गीकार्यं तत्कथमेकस्या एव दिशो विरुद्धोभय-जनकत्वमित्यत आदित्यक्रियासंयोगरूपसहकारिभेदेनैकस्या एव दिशो व्यवस्थिताव्यवस्थितकार्यजनकत्वं नानुपपन्नमित्याह **सहकारीति** । **अन्यथेति** । कस्माच्चित्परस्याप्यन्यस्मादपरत्वेन परापरादिप्रत्ययस्याव्यव-स्थितत्वाद्वर्तमानत्वस्य चोक्तरीत्या व्यवस्थितत्वेन तद्व्यवहारस्य व्यवस्थितत्वाद्व्यवस्थिताव्यवस्थितविरुद्ध-कार्यजनकतया कालस्यापि भेदप्रसक्त्या कालैक्यवादिना त्वया सहकारिभेदेनैव विरुद्धकार्यद्वयजनकत्वनिर्वाहो वाच्यः । स च प्रकृतेऽप्यविशिष्ट इति भावः । यद्वा । ननु दिशः क्रियोपनायकत्वे तस्या एव पूर्वापरादिप्रत्ययजनकत्वं परापरादिप्रत्ययजनकत्वं च वाच्यम् । तच्च न सम्भवति । अस्माकं प्राच्या एवान्येषां प्रतीचीत्वेन पूर्वापरादिप्रत्ययानामव्यवस्थितत्वात् परापरादिप्रत्ययानां च व्यवस्थितत्वादेकस्य च विरुद्धोभय-कार्यजनकत्वायोगादित्यतः क्रियासंयोगरूपसहकारिभेदेन व्यवस्थिताव्यवस्थितकार्यजनकत्वोपपत्तेर्नानुपपत्ति-रित्याह **सहकारीति** । केचित्तु दिक्कृतयोः परत्वापरत्वयोरव्यवस्थितत्वात् कालकृतयोश्च तयोर्व्यवस्थितत्वात् कथं विरुद्धोभयकार्यजनकत्वं दिशः स्यादित्यतः क्रियारूपसहकारिसमवहितायास्तस्या व्यवस्थितकार्य-जनकत्वस्य संयोगरूपसहकारिसमवहितायाश्च अव्यवस्थितकार्यजनकत्वोपपत्तेरदोष इत्याह सहकारीति ग्रन्थार्थ इत्याहुः । **अन्यथेति** । परत्वापरत्वयौगपद्यादीनामपि परस्परविरुद्धत्वात् तत्कारित्वेन कालरूपव्यक्त्यैक्यमपि न स्यादित्यर्थः ।

**वा०र०**— दिक् पूर्वापरादिप्रत्ययलिङ्गात् मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येषु अस्मादिदं पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणपश्चिमेन पश्चिमोत्तरेण उत्तरपूर्वेण अधस्तादुपरिष्टाच्चेति दश प्रत्ययाः यतो भवन्ति सा दिगिति । अन्यनिमित्तासम्भवात् । इत्येतत्प्रशस्तपादभाष्यं तद्व्याख्यानरूपकिरणावली च मनसि निधाय संयोगोपनायकत्वेन दिक्सिद्धिं दर्शयति **मूर्तद्रव्यमवधिकृत्वेत्यादिना** । अमूर्तद्रव्य-स्यावधित्वानुपपत्तेः । उक्तं **मूर्तद्रव्यमिति** । अमूर्तस्य पूर्वपश्चिमादित्वरूपावधित्वस्यायोगात् । उक्तं च **मूर्तद्रव्येष्वेवेति** । अयमाशयः । इदमस्मात्पूर्वमित्यवध्यविधिमद्भावं तत्रैव भवति । यत्रावध्यविधिमतोः





परस्परवैय्यधिकरण्यम् । मूर्तामूर्तयोस्तु न परस्परवैय्यधिकरण्यम् । अमूर्तस्य व्यापकतया सकलमूर्तसमानदेशत्वेन तयोः परस्परसामानाधिकरण्यात् । तस्मादमूर्तं नावधिः नाप्यवधिमदिति । अस्मदादिः पूर्वेणेत्यादि भाष्यवाक्ये कर्तृकरणयोः तृतीयार्थयोरभावेन तयोरर्थयोस्तृतीयाया अयोगात् पूर्वं दक्षिणमित्याद्यर्थप्रकृत्यादिभ्य उपसङ्ख्यानमिति तृतीयेत्याशयेन भाष्यार्थानुवादः । **इदमस्मात्पूर्वमित्यादि पश्चिममितीति** । उपलक्षणं चैतत् । इदमस्मादुत्तरं इदं पूर्वदक्षिणमित्यादिप्रत्ययान्तरस्यापि ग्राह्यत्वात् प्रागुदाहृतभाष्ये दश प्रत्यया इत्युक्तेरिति ज्ञेयम् । अन्यनिमित्तासम्भवादिभाष्ये निमित्तान्तरशून्यत्वमात्रोक्तावपि अर्थतः सनिमित्तिकत्वमप्युक्तं भवतीत्याशयेन निर्निमित्तकत्वपक्षः स्वयं दूषयति **कादाचित्कत्वेनेति** । एवमुत्तरत्रापि किरणावल्यादावप्रतीतस्यापि स्वयमेव टीकाकृता प्रतिपादनं तत्र तत्र करिष्यत इति ज्ञातव्यम् । **प्रथमचरमादित्येति** । यद्दिशि यद्दिगपेक्षया सूर्योदयाचलसंयोगसान्निध्यं तत्र दिशि प्रथमादित्यसंयोगाः पूर्वत्वविशिष्टप्रत्ययजनकाः यस्यां च दिशि यदपेक्षया सूर्योदयाचलसंयोगव्यवधानं तत्र दिशि चरमादित्यसंयोगः । पश्चिमत्वविशिष्टप्रत्ययजनकाः इत्येवं प्रथमचरमादित्यसंयोगानां निमित्तत्वेन वाच्यत्वादित्यर्थः । इदमत्रावधेयम् । आदित्यसंयोगादिह तत्समवेताः आदित्यश्चोदयाचलसंयुक्तः । उदयाचलसंयुक्तः च भूतलावयवः तत्संयुक्तोऽयं घट इति सूर्यसंयुक्तोदयाचलसंयुक्तसंयोगाल्पीयस्त्वमादित्यसंयोगेन पिण्डे सान्निध्यमित्युच्यते । तत्पूर्वत्वविशिष्टप्रत्ययकरणं तु उक्तसंयुक्तसंयोगभूयस्त्वं तु व्यवधानमित्युच्यते । तद्व्यवधानं सूर्यसंयोगसमवायिसूर्यसंयुक्तोदयाचलसंयुक्तभूतलावयवसंयुक्ततदवयवान्तरसंयुक्तपिण्डे पश्चिमत्वविशिष्टप्रत्ययकरणं भवतीति । किरणावल्यां प्रथमचरमादित्यसंयोगो ह्यत्र निमित्तम् । **न च तेऽपीत्यादिना** । पूर्वत्वपश्चिमत्वविशिष्टप्रत्ययजनकप्रथमचरमादित्यसंयोगयोरेवोपादानात् तावन्मात्रमेव टीकाकृतोदाहृतम् । दक्षिणत्वादिविशिष्टप्रत्ययकरणं तु प्राचीदिगभिमुखावस्थितपुरुषस्य वामप्रदेशावच्छिन्नो दक्षिणः इत्याद्युत्तरकिरणावलीवर्धमानाद्यनुसारेण ज्ञेयम् । सम्बन्धेन विनेति सम्बन्धः । सूर्याख्यद्रव्यापेक्षया पिण्डस्य द्रव्यान्तरत्वादिति भावः । **अन्यसमवेतत्वादेवेति** । उदयाचलस्थितसूर्यपिण्डयोरन्तराले त्वेति यः संयोगस्तद्वत्पिण्डस्य न साक्षात्सम्भवति । सूर्यस्य योगादीनां पिण्डावृत्तित्वादिति भावः ।

**पिण्डे सूर्यसंयोगेति** । संयोगोपनायकत्वाङ्गीकारे यो यदपेक्षया वर्तमानः स तदपेक्षया वर्तमान एव । तथा तं प्रतीवान्यमपि तत्समानकालं प्रति वर्तमानो भवति । प्राची तु यन्निरूपिता प्राची भवति सैव तमेवापेक्ष्य प्रतीच्यपि भवति । तथाऽस्माकं प्राच्यन्येषां प्रतीची भवतीति न प्राच्येवेति प्राचीनैकेति व्यवस्थायोगप्रसङ्गादिति भावः । **तस्य सर्वान्प्रतीति** । उपलक्षणं चैतत् । एकं प्रीत्यैव वर्तमानं वर्तमानमेवेति व्यवस्थापि ज्ञेया । **अस्माकं प्राच्या एवेति** । उपलक्षणं चैतत् । प्राची यन्निरूपिता तमेव प्रतीचीत्यपि भवतीति प्राची प्राच्येवेति व्यवस्था नास्तीत्यपि ज्ञेयम् । यद्यपि अस्माकं प्राच्या अन्येषां प्रतीचीत्ववत् । अस्माकं वर्तमाने पूर्वकालीनोत्तरकालीनवस्तुविवक्षया भावित्वभूतत्वयोरपि सत्त्वेन वर्तमान एवेत्यपि नियमो नास्ति । तथा चास्माकमेव कालभेदेन वर्तमानादीनामव्यवस्थाऽस्तीति समानमिति न व्यवस्थिता-





व्यवस्थितत्वसम्बन्धः । तथापि एकस्मिन्नेव काले एकमेव प्रति यो वर्तमानः कालः स तत्काल एव तमेव प्रति न भूतादिः । तथा तत्कालीनानन्यान्प्रति च न भूतादिरिति युक्ता व्यवस्था कालभेदेनाव्यवस्थाया अदोषत्वात् । प्राच्यादौ तु एकस्मिन्नेव काले तत्कालीनं तमेव प्रतीतकालीनानन्यान्प्रति च न व्यवस्थेति एककाल एवाव्यवस्थेति तात्पर्यं प्रतिभाति **आदित्यक्रियासंयोगेति** । आदित्यक्रिया चादित्यसंयोगश्चातद्रूपेत्यर्थः । **कस्माच्चिदिति** । युवत्वेन सम्प्रतिपन्नापेक्षया यः परत्वेन सम्प्रतिपन्नस्थविरस्तस्यापीत्यर्थः । **अन्यस्मादिति** । ततोऽपि बहूत्तरसूरसञ्चरणान्तरितजन्मन इत्यर्थः । उपलक्षणं चैतत् । युवत्वेन सम्प्रतिपन्नस्यापि स्वापेक्षया अल्पतरसूरसञ्चरणान्तरितजन्मनः सकाशात्परत्वेनेत्यपि द्रष्टव्यम् । वर्तमानत्वस्य चोक्तरीत्येति पाठः । एवं संयोगोपनायकद्रव्यस्य क्रियोपनायकत्वेन उभयोपनायकं द्रव्यमेव विवक्षितत्वात् तस्य तदुभयोपनायकत्वानुपपत्तिशङ्कानिरासपरत्वेनैतद्वाक्यं योजितम् । इदानीं प्रकृतदिशा दित्त्वपुरस्कारेणैव कालकार्यक्रियोपनयहेतुत्वानुपपत्तिशङ्कापरिहारपरतयैतद्वाक्यं योजयति **यद्वा ननु दिश इति** । अव्यवस्थितकार्यजनकत्वस्य चोपपत्तेरिति पाठः । जनकत्वोपपत्तेरिति पाठेऽप्ययमेवार्थः । तेनोपपत्तेरित्यस्य प्राचीनजनकत्वस्येत्यनेनान्वयानुपपत्तिरिति निरस्तम् । द्वितीयपाठे बुद्ध्या विवेकेनान्वयाभ्युपगमात् । आद्ये चानुपपत्तेरभावात् । **सहकारीति ग्रन्थेति** । इति शब्दस्यावृत्त्येति ग्रन्थार्थ इति योज्यम् । व्यवस्थिताव्यवस्थितकार्यपदेन हि विरुद्धकार्यमुक्तमिति तत्पुरस्कारेणैवोपपादयति **परत्वापरत्वेति** ।

**स०व्र०— अन्यथा जातिनिराकरणमिति** । असाधोरपि प्रसङ्गस्य यदि स्वार्थसाधकत्वं तदा असदुत्तररूपजातिनिराकरणं परीक्षकाणां न स्यात् । इदं जात्युत्तरमतो न स्वार्थसाधकमिति निराकरणं न स्यादित्यर्थः । तदपि स्वार्थसाधकं स्यादिति भावः । **संयोगोपनायकत्वेनेति** । मूर्तद्रव्यमवधिं कृत्वा मूर्तद्रव्येष्वेव एतस्मादिदं पूर्वेण दक्षिणेन पश्चिमेन उत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण उत्तरपूर्वेण अधस्तादुपरिष्टाच्चेति जायमानपूर्वादिप्रत्ययानां निर्निमित्तत्वासम्भवेन सनिमित्तत्वे च द्रव्यगुणादीनां व्यभिचारेण निमित्तत्वानुपपत्त्या प्रथममाचरदित्यसंयोगानामेव तन्निमित्तत्वेन वक्तव्यत्वात् तेषां च द्रव्यान्तरवर्तिना परममहतोपनायकेन द्रव्यान्तरेण विना द्रव्यान्तरेणेदृशविशिष्टप्रत्ययोत्पादकत्वानुपपत्त्या आत्माऽऽकाशकालानां तदसम्भवेन तदुपनायकत्वेन दिशोऽभ्युपेया इति भावः । अन्ये तु यद्देशापेक्षया समीपस्थे स्थविरपिण्डेऽल्पदेशसंयोगान्तरितदेशत्वलक्षणमपरत्वं दूरस्थे यूनि च बहुलदेशसंयोगव्यवहितदेशत्वलक्षणं परत्वं प्रतीयते तद्देशमारभ्य परत्वाश्रयपिण्डपर्यन्तं ये देशांशानां परस्परसंयोगाः पिण्डे तदुपनायकत्वेन दिशः सिद्धत्वादिति भाव इत्याहुः । **उभयोपनायकत्वेऽपीति** । क्रियासंयोगरूपोभयोपनायकत्वेऽपीत्यर्थः । ननु दिशः क्रियोपनायकत्वे तस्या एव पूर्वापरादिप्रत्ययानामव्यवस्थितत्वात् परादिप्रत्ययानां च व्यवस्थितत्वेन विरुद्धोभयकार्यजनकत्वं कथमित्यतः क्रियासंयोगरूपसहकारिभेदेन व्यवस्थिताव्यवस्थितकार्यजनकत्वोपपत्तिरिति भावेनाह **सहकारिभेदेनेति** । अन्ये तु ननु दिश एवोभयोपनायकत्वे समीपस्थे स्थविरपिण्डेऽपरत्वं, यूनि च परत्वं, यद्दिकृतं व्यवस्थितं, तत्रैव स्थविरे परत्वं यूनि चापरत्वं कालकृतं दिक्कृतपरत्वापरत्वापेक्षयाऽव्यवस्थितं विपरीतं यत्प्रतीयते





तदयुक्तं स्यात् । दिश एवोभयप्रतीतिजनकत्वाङ्गीकारेण तद्वैचित्र्ये कारणाभावादित्यत आह **सहकारिभेदेनेति** । विषयीभूतयोश्च परत्वापरत्वयोश्च देशसंयोगतरणिपरिस्पन्दविशेषघटितत्वेन विलक्षणतया सहकारिभेदेनेत्यर्थः । **व्यवस्थिताव्यवस्थितेति** । दिक्कृतपरत्वापरत्वे व्यवस्थिते, ये च तदपेक्षयाऽव्यवस्थिते विपरीते परत्वापरत्वे तत्प्रतीतिजनकत्वं दिशः कल्प्यतामित्यर्थ इत्याहुः । **अन्यथा कालेऽपीति** । कालस्यापि एकस्मात् परस्यापि कस्माच्चिदपरत्वेन परापरादिव्यवहारस्याव्यवस्थितत्वेन तज्जनकत्वेनाव्यवस्थितव्यवहारजनकत्वात् वर्तमानस्य सर्वान्प्रति वर्तमानत्वेन तद्व्यवहारजनकत्वेन व्यवस्थितव्यवहारजनकत्वेन भेदकल्पना स्यादिति भावः । अन्ये तु प्रतीतिवैचित्र्येणैवोपनायकवैचित्र्ये परत्वापरत्वचिरक्षिप्रादिप्रतीतिवैचित्र्येण तदुपनायकतयाऽङ्गीकृते कालेऽपि भेदप्रसङ्गादित्यर्थ इत्याहुः ।

**विट्ठल०**— यद्याकाशः स्वसम्बन्धेनेत्यादिनोक्तं प्रसङ्गं स्वव्याहत्या निरस्य व्याप्तिहीनत्वरूप-प्रकारान्तरेणापि निराह **किञ्चायमिति** । **व्याप्तिभङ्गादिति** । यत्स्वसम्बन्धेनान्यधर्ममन्यत्रोपसङ्क्रामयति तत्सर्वत्र सर्वधर्मोपसङ्क्रामकमिति व्याप्तेः काले व्यभिचारेण भङ्गादित्यर्थः । **अन्यथेति** । असाधोरपि प्रसङ्गस्य साधनबाधनाङ्गत्वे असाधोरपि जात्युत्तरस्य तथात्वापत्त्या नेदं स्वसाध्यसाधकं जात्युत्तरत्वादिति तस्यासाधकतानिराकरणं न स्यात् । तदपि स्वार्थासाधकं स्यादिति यावत् । ततश्च सिद्धमपि दूषणासमर्थमुत्तरं जातिरिति लक्षणव्याघाताभावः । **तस्याः संयोगोपनायकत्वेनेति** । मूर्तद्रव्यमवधीकृत्य दूरस्थे यूनिपिण्डे परत्वं प्रतीयते समीपस्थे स्थविरपिण्डे अपरत्वं प्रतीयते । तत्र परत्वं न बहुतरपरिस्पन्दवत्वं यून्येव परत्व-बुद्धेर्जायमानत्वात् किन्तु बहुतरदेशसंयोगान्तरितत्वमेव परत्वं एवमल्पतरदेशसंयोगान्तरितत्वमपरत्वमित्येव वक्तव्यम् । तत्रावधीभूतमूर्तद्रव्यावस्थितप्रदेशमारभ्य परत्वापरत्वाश्रयपिण्डावस्थानप्रदेशपर्यन्तं ये आन्तरालिक-देशानां संयोगाः तदुपनायकत्वेन तद्घटकत्वेन दिशः सिद्धत्वादित्यर्थः । तथा च दूरस्थत्वसमीपस्थत्व-रूपपरत्वापरत्वप्रत्यये विशेषणीभूतसंयोगोपनायकत्वेन प्रसिद्धायाः दिशः स्थविरादिपिण्डे जायमानपरत्वा-परत्वप्रत्ययविशेषणीभूततपनपरिस्पन्दोपनायकत्वमयुक्तमिति भावः । नन्वस्त्येव बाधकं कालकृतपरत्वापरत्वं हि स्थविरपरत्वं यून्यपरत्वमेवेति व्यवस्थितम् । दिक्कृतत्वव्यवस्थितं वृद्धे समीपस्थे ह्यपरत्वं दूरस्थे यूनिपरत्वमिति किञ्च यत्र वृद्धे समीपस्थे अपरत्वं स एव दूरस्थश्चेत्तत्र परत्वमिति व्यवस्थारहितत्वात् । तथा च वृद्धोभयप्रतीतिजनकं भिन्नभिन्नस्वभावं द्रव्यमेवाङ्गीकर्तव्यमित्यत आह **सहकारिभेदेनेति** । आदित्य-परिस्पन्दसंयोगरूपसहकारिभेदेनेत्यर्थः । ननु मया विरुद्धोभयप्रतीतिव्यवस्थापनार्थं द्रव्यभेदः कल्प्यते भवद्भि-स्त्वेकस्मिन्नेव द्रव्ये सहकारिभेद इति । एवं च पक्षद्वयस्यापि साम्योक्तिमन्यतरनियत्येत्यत आह **लाघवा-देवेति** । धर्मिकल्पनातः क्लृप्तयेव धर्मिणि धर्ममात्रकल्पनायाः लघुत्वादित्यर्थः । **अन्यथेति** । सहकारिभेदेन विचित्रकार्यजनकत्वाङ्गीकारे कस्मिन्नेव स्थविरापेक्षया अपरत्वेन प्रतीतेति ततो न्यूनवयस्कपुरुषापेक्षया परत्वप्रतीतेः तथा युवापेक्षया परत्वेन प्रतीते स्थविरेऽपि ततोऽपि स्थविरापेक्षया अपरत्वबुद्धेर्जायमानत्वेन कालस्यापि व्यवस्थिताव्यवस्थितप्रतीतिजनकत्वात् तत्रापि काले अवान्तरभेदः कल्प्यतेत्यर्थः ।





**चषकः— अन्यथा जातिनिराकरणमिति** । आभासस्यापि साधकत्वे स्वन्यायविरोधादिना जात्युत्तरनिराकरणं परीक्षकाणां न स्यादित्यर्थः । **तस्याः संयोगोपनायकत्वेनेति** । किञ्चिन्मूर्तद्रव्यमवधिभूतं विधाय मूर्तान्तरेषु इदमस्मात्पूर्वमिदमस्मात्पश्चिममिति च पूर्वत्वादिविशिष्टप्रत्ययास्तावदुत्पद्यन्ते । तत्र पूर्वत्वं किञ्चिदवधिकं सूर्योदयाचलसंयोगसन्निहितत्वम् । पश्चिमत्वमपि किञ्चिदवधिकं सूर्यास्ताचलसंयोगसन्निहितत्वम् । सन्निधिस्तु सूर्यसंयुक्तसंयोगाल्पीयस्त्वम् । प्रथमतरणिसंयोगवत्त्वं पश्चिमत्वमिति फलितम् । इत्थं च भूतलाद्याश्रितद्रव्ये प्रथमचरमतरणिसंयोगोपनायकं किञ्चिद्व्यापकमेव द्रव्यं विशिष्टप्रत्ययानुरोधेनोरीकार्यम् । तच्च नात्माकाशौ विशेषगुणवत्त्वात् । क्रियामात्रोपनायकत्वात् न कालश्चेति तदुपनायकतया परममहत्परिमाणकिञ्चिद्द्रव्यान्तरमास्थेयम् । सैव दिगिति तरणिसंयोगोपनायकतया दिशः सिद्धत्वादित्यर्थः । **उभयेति** । क्रियासंयोगरूपोभयेत्यर्थः । **सहकारिभेदेन** = तरणिपरिस्पन्दसंयोगरूपसहकारिभेदेन । **व्यवस्थिताव्यवस्थितेति** । वर्तमानत्वादिकं हि व्यवस्थितम् । पूर्वत्वादिकं त्वव्यवस्थितम् । तदुभयप्रतीतिजनकत्वमित्यर्थः । **लाघवादिति** । द्रव्यान्तरकल्पनात् क्लृप्त एव धर्मिणि तादृशधर्मकल्पनायाः लघीयस्त्वादित्यर्थः । **अन्यथा** एकस्य व्यवस्थिताव्यवस्थितप्रतीत्यजनकत्वे । **कालेऽपीति** । एकस्मादेव कालाद्व्यवस्थितं वर्तमानत्वादिकमव्यवस्थितं च परत्वादिकं प्रतीयत इत्यङ्गीकारादिति भावः ।

**॥ इति वल्लभोदीरितकालसमर्थनरीतिदूषणम् ॥**

* * *

**॥ अथ परभाष्यव्याख्यानामसाधारणदोषेण दूषणे**
**किरणावलीकारोदितकालसमर्थनरीतिदूषणम् ॥**

१६३ **सु०— अन्ये तु परापरशब्दाभ्यां परत्वापरत्वे गुणौ युवस्थविरपिण्ड(वर्तिनौ) गतौ आचक्षते, तौ असमवायिकारणसंयोगाश्रयतया, निमित्तकारणापेक्षाबुद्धिसम्पादकतया वा, कालमनुमापयत इति । तदप्युक्तन्यायेन निरस्तमिति ।**

**परि०— निमित्तकारणेति** । स्थविरे परत्वगुणोत्पत्तौ युवापेक्षाबुद्धिः यूनि अपरत्वोत्पत्तौ स्थविरापेक्षाबुद्धिः निमित्तकारणमिति निमित्तकारणापेक्षाबुद्धीत्युक्तम् । **उक्तन्यायेनेति** । तस्य असमवायिकारणसंयोगाश्रयत्वस्य अपेक्षाबुद्धिसम्पादनस्य च नित्येन प्रसिद्धेनाकाशादिना द्रव्येण सिद्धेः न कालस्यानुमावसरो भवेदित्युक्तन्यायेन निरस्तमित्यर्थः ।

**यादु०— तावसमवायिकारणेति** । बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यमानसमवायिकारणवत् कार्यत्वादिति स्थिते रूपादीनां च नीरूपादावपि परत्वोत्पत्त्या व्यभिचारे





तपनपरिस्पन्दानां च वैयधिकरण्येन तदवच्छिन्नद्रव्यसंयोगोऽसमवायिकारणमिति विज्ञायते । न चाविभुनो द्रव्यस्य संयोगस्तथा भवितुमर्हति व्यभिचारादिति तद्द्रव्यम् विभु स्यात् । न चात्माकाशौ तथा भवितुमर्हतः । विशेषगुणवत्त्वात् पृथिव्यादिवत् । अतः परत्वासमवायिकारणसंयोगाश्रयभूतमतिरिक्तं कालाख्यद्रव्यमङ्गीकार्यम् । एवमपरत्वमपि पक्षीकृत्य प्रयोक्तव्यमित्यर्थः । **अपेक्षाबुद्धिसम्पादकतयेति** । विप्रकृष्टसन्निकृष्टबुद्धिकारण-सम्बन्धघटकतयेत्यर्थः । परत्वं विप्रकृष्टबुद्धिमपेक्ष्योत्पद्यमानं विप्रकृष्टबुद्धिं निमित्तीकरोति । अल्पतरसूर्य-सञ्चरणापेक्षया बहुतरतरणिपरिस्पन्दान्तरितजन्मत्वं च विप्रकर्षः । न चैषः स्थविरशरीरस्य स्वतः सम्भवति । तपनसमवेतेन कर्मणास्य सम्बन्धाभावात् । अतो यद्द्वारेण संयुक्तसमवायलक्षणया प्रत्यासत्त्याऽऽदित्यगतिः स्थविरमुपावर्तते तद्द्रव्यमस्ति । तच्चोक्तरीत्या नेतरदित्यपेक्षाबुद्धिकारणसम्बन्धघटकतया कालः सिद्ध्यति । तदमी प्रयोगाः । स्थविरादौ परत्वं तपनपरिस्पन्दविप्रकृष्टबुद्धिजन्यं तदनुविधायित्वात् । ते च परिस्पन्दाः स्थविर-शरीरप्रत्यासत्तिमपेक्षन्ते स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् पटावच्छेदकमहारजनरागवत् । सा च प्रत्यासत्तिर्द्रव्यकृता प्रकारान्तराभावे सति प्रत्यासत्तित्वात् महारजनरागप्रत्यासत्तिवत् । तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वानुमेयत्वाद्व्यतिरेकेण पृथिव्यादिवत् । एवमपरत्वमपि पक्षीकृत्य प्रयोक्तव्यमिति । **उक्तन्यायेनेति** । आकाशो वा किं न स्यादित्याद्युक्तन्यायेनाकाशादेरेवासमवायिकारणसंयोगाश्रयत्वादेर्वक्तुं शक्यत्वादित्यर्थः ।

**वं०प०— अपेक्षाबुद्धीति** । अयमेतत्तदपेक्षया परः, अयमेतत्तदपेक्षयाऽपर इत्येवं परस्परावधिक-परत्वापरत्वविषयकापेक्षाबुद्धिसम्पादकतयेत्यर्थः । कालाभाव एतादृशापेक्षाबुद्धेरजननादिति भावः ।

**आनन्दः— ताविति** । तथा च परत्वापरत्वरूपयोर्गुणयोर्जन्यत्वात् तदसमवायिकारणं किञ्चिदवश्यं वक्तव्यम् । तच्च कालपिण्डसंयोगरूपमेवायास्यतीति विवक्षितकालसिद्धिः । एवं परत्वापरत्वबुद्धिं प्रत्यपेक्षा-बुद्धिर्निमित्तकारणम् । सा चायमेतदपेक्षया बहुकाले सम्बन्धवानित्येवंरूपा कालघटितेति कालमनुमापयतीत्यर्थः । **उक्तन्यायेनेति** । असमवायिकारणसंयोगाश्रयत्वं वाऽपेक्षाबुद्धिसम्पादकत्वं वा क्लृप्तस्याकाशस्यैव च स्यादिति नाक्लृप्तकालकल्पना युक्तेत्यर्थः ।

**शे०वा०—** किरणावलीकारमतमुत्थापयति **अन्ये त्विति । परापरत्वे गुणाविति** । परापरेति भाष्ये भावप्रधानो निर्देश इति भावः । **तौ असमवायिकारणेति** । बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यमानसममायिकारणवत्, भावकार्यत्वादिति स्थिते, रूपादीनां च नीरूपेऽपि वायौ नीरसे तेजसि निर्गन्धे जलेऽपि परत्वोत्पत्त्या व्यभिचारेण स्पर्शस्य च मनसि व्यभिचारेण वोष्णशीतादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारेण वा परिमाणस्य विजातीयानारम्भकत्वेन तपनपरिस्पन्दानां च वैयधिकरण्येना-समवायिकारणत्वायोगात् तदवच्छिन्नद्रव्यसंयोगोऽसमवायिकारणमिति विज्ञायते । न चाविभुनो द्रव्यस्य संयोगः तथा भवितुमर्हति व्यभिचारादिति पिण्डमार्तण्डाभ्यां संयुक्तं तद् द्रव्यं विभ्वेव स्यात् । न चात्मा-





काशौ तथा भवितुमर्हतो विशेषगुणवत्त्वात् पृथिव्यादिवदिति । अतः परत्वासमवायिकारणसंयोगाश्रयभूतमतिरिक्तद्रव्यमङ्गीकार्यम् । एवं स्थविरमवधिं कृत्वोत्पद्यमानं यून्यपरत्वमपि पक्षीकृत्य प्रयोक्तव्यमिति कालसिद्धिरिति तद्व्युत्पादनप्रकारोऽत्रानुसन्धेयः । **अपेक्षाबुद्धिसम्पादकतयेति** । विप्रकृष्टसन्निकृष्टबुद्धिकारणसम्बन्धघटकतयेत्यर्थः । युवानमवधिं कृत्वा स्थविरे विप्रकृष्टबुद्धिमपेक्ष्योत्पद्यमानं परत्वं विप्रकृष्टबुद्धिं निमित्तीकरोति । एवं स्थविरमवधिं कृत्वा यूनि सन्निकृष्टबुद्धिमपेक्ष्योत्पद्यमानमपरत्वं सन्निकृष्टबुद्धिं निमित्तीकरोति । बहुतरतरणिपरिस्पन्दान्तरितजन्मत्वं विप्रकर्षः । अल्पतरसूर्यपरिस्पन्दान्तरितजन्मत्वं च सन्निकर्षः । न च विप्रकर्षसन्निकर्षौ स्थविरादेः स्वतः सम्भवतः । तपनसमवेतकर्मणा स्थविरादेः साक्षात्सम्बन्धासम्भवात् । अतो यद्द्वारेण संयुक्तसमवायलक्षणया प्रत्त्यासत्त्या आदित्यगतिः स्थविरादिपिण्डमुपावर्तते तद् द्रव्यमस्ति । तच्चोक्तरीत्या नेतरदिति अपेक्षाबुद्धिकारणसम्बन्धघटकतया कालसिद्धिः । तदमी प्रयोगाः । स्थविरादौ परत्वादिकं तपनपरिस्पन्दविप्रकृष्टसन्निकृष्टबुद्धिजन्यम् । तदनुविधायित्वात् । ते च परिस्पन्दाः स्थविरशरीरप्रत्यासत्तिमपेक्षन्ते । स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् । पटावच्छेदकमहारजनरागवत् । सा च प्रत्यासत्तिर्द्रव्यकृता प्रकारान्तराभावे सति प्रत्यासत्तित्वान्महारजनरागप्रत्यासत्तिवत् । तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वानुमेयत्वादिति । **उक्तन्यायेनेति** । क्रियोपनायकत्वोपपादकन्यायेन आकाशादेरेव असमवायिकारणसंयोगाश्रयत्वापेक्षाबुद्धिसम्पादकत्वयोरुपपादितप्रायत्वादिति भावः ।

**वा०र०— किरणावलीकारेति** । तेन परापरेति भावप्रधानो निर्देशः । परत्वापरत्वयोर्व्यतिकरः परापरव्यतिकरः । दिक्कृताभ्यां परत्वापरत्वाभ्यां विपरीते परत्वापरत्वे इति व्याख्याय परत्वापरत्वयोरेव लिङ्गत्वार्थतया भाष्यव्याख्यानादिति भावः । ते च युवस्थविरयोर्वर्तमाने कालमनुमापयतः कथं बहुतरेत्यादि किरणावल्यनुसारेणोपपादयति **बहुतरेत्यादिना** । कार्यत्वमात्रस्य किरणावल्यां हेतूकरणेऽपि ध्वंसे व्यभिचारपरिहाराय भावविशेषणम् । तत्राभिप्रेतमित्याशयेन भावकार्यत्वादिति हेतूकृतं रूपादीनां व्यभिचार इति किरणावलीवाक्यं निरूप इत्यादिना व्याकृतं तदनुसारेणाह **निरूप** इत्यादिना **व्यभिचारेणे**त्यन्तेन । ननु स्पर्शे न व्यभिचारी न च मनसि व्यभिचार इति वर्धमानमनुसन्धायोक्तं **स्पर्शस्य चेति** । ननु नित्ये जन्यत्वगर्भापेक्षाबुद्धिजन्यज्येष्ठ इति व्यवहारायोगान्न मनसि कालकृतपरत्वं नित्यज्येष्ठ इति व्यवहाराभावादिति न तत्र व्यभिचारावकाश इत्यतः प्रकारान्तरेण स्पर्शस्य परत्वहेतुत्वं निराकरोति **उष्णशीतेति** । एतच्च रूपादावपि दूषणमूह्यम् । ननु नायं दोषः रूपत्वादिनाऽनुगममङ्गीकृत्य व्यभिचारापरिहारोपपत्तेरिति चेदत्र ब्रूमः । रूपादीनां व्यभिचार इत्येतत् तात्पर्यचतुष्टयसाधारण्येन वर्णयता वर्धमानेन रूपादिपदस्य रूपत्वादिपरत्वमाश्रित्य व्यभिचारपदस्य चाभावार्थत्वमाश्रित्य प्राकरणिकपरत्वापरत्वयोश्च असङ्ग्रहमाश्रित्य रूपादीनामेव रूपाद्यसमवायिकारणकतया परत्वापरत्वयोश्च रूपत्वाद्यभावान्न रूपाद्यसमवायिकारणकत्वम् । तथात्वे रूपादित्वापत्तिरिति प्रतिपादनेन न तन्मतेन स्पर्शस्याकारणत्वे परत्वयोः स्पर्शात्मकत्वं स्यादिति दूषणस्यात्र तात्पर्य-





विषयत्वादिति । तथापि संयोगस्य समवायिकारणत्वं कुतः सिद्ध्यति । विभुगुणेषु संयोगस्यैव स्वविजातीयसामान्यगुणासमवायिकारणत्वादिति वर्धमानकृता संयोगातिरिक्तपरिमाणस्य परत्वासमवायिकारणत्वव्यावर्तनात् तदनुसारेणाह **परिमाणस्येति** । न चावयवगतबहुत्वसङ्ख्यायाः कार्यगतबहुत्वपरिमाणारम्भकतया सङ्ख्याया एव कारणत्वं किं न स्यादिति वाच्यम् । विभुगुणेष्वित्युक्तत्वेन विभुगुणेषु सङ्ख्याया अपि विजातीयानारम्भकत्वादित्यत्र तात्पर्यात् । अत एव एकत्वादेर्द्वित्वाद्यसमवायिकारणेऽपि गुणत्वसाक्षाद्व्याप्यजात्या विजातीयारम्भकत्वाभावात् । आकाशविभागस्य शब्दकारणत्वेऽपि सामान्यगुणं प्रति करणत्वाभावात् । प्रयत्नादृष्टादेस्तादृशगुणजनकत्वेऽपि असमवायिकारणत्वाभावान्न संयोगातिरिक्तस्य स्वविजातीयसामान्यगुणसमवायिकारणत्वं सम्भवतीत्यपि प्रमेयमत्र ज्ञेयम् । **तदवच्छिन्नेति** । परत्वाधिकरणद्रव्यावच्छिन्नं यद्द्रव्यं तत्संयोग इत्यर्थः ।

**विशेषणगुणवत्वादिति** । यद्यप्यनेन हेतुना संयोगानाश्रयत्वे साध्ये बाधः । परत्वासमवायिकारणसंयोगनाश्रयत्वे साध्ये तु युवस्थविरपिण्डेनानैकान्त्यपरत्वं प्रति निमित्तकारणत्वाभावे साध्ये तु परमात्मलक्षणभागे बाधः । जीवात्मनामेव पक्षीकारे चेश्वर एव व्यभिचारः । तथापि परत्वासमवायिकारणसंयोगासमानाधिकरणविभुत्वानाश्रय इति साध्यत्वेन दोषाभावात् । यद्वा आकाशपिण्डसंयोगः न परत्वासमवायिकारणं विशेषगुणवन्मात्रवृत्तित्वात् गन्धवत् इति प्रयोगस्य विवक्षितत्वेन दोषाभावः । **अपरत्वमपि पक्षीकृत्येति** । अपरत्वं असमवायिकारणवत् भावकार्यत्वादित्यपरत्वं पक्षीकृत्यापि प्रयोक्तव्यमित्यर्थः । उपलक्षणं चैतत् । रूपादीनामसमवायिकारणत्वानुपपत्तेः पिण्डावच्छिन्नद्रव्यसंयोगस्यैवासमवायिकारणत्वे वाच्ये अविभुद्रव्यसंयोगतदयोगात् विभुद्रव्यसंयोगस्यैव तत्त्वे वाच्ये विशेषगुणवन्निष्ठत्वेन आत्माकाशसंयोगस्य तथात्वानुपपत्तेरपरत्वासमवायिकारणसंयोगाश्रयभूतमतिरिक्तं द्रव्यमङ्गीकार्यमिति परिशेषप्रकारोऽपि प्रागुक्तरीत्या द्रष्टव्य इत्यस्य वक्तव्यत्वात् । विप्रकृष्टबुद्धिमपेक्ष्योत्पद्यमानविप्रकृष्टबुद्धिं निमित्तीकरोतीत्यादि किरणावलीं मनसि निधाय विप्रकृष्टसन्निकृष्टबुद्धिकारणसम्बन्धघटकतया साधयतीति विप्रतिकृष्टेति वाक्यावतारवर्धमानानुसारेणापेक्षाबुद्धीत्येतद्व्याकुर्वंस्तदुपपादयति **विप्रकृष्टसन्निकृष्टेत्यादिना** । बहुतरेत्यादि पूर्वमूलतात्पर्यं ज्ञेयम् । दूरदेशस्थत्वादिरूपविप्रकर्षसन्निकर्षौ व्यावर्तयितुमाह **बहुतरेति** । **नेतरदिति** । न पृथिव्यादिकमित्यर्थः । कुतो नेत्यत उक्तम् **उक्तरीत्येति** । पृथिव्यादीनां व्यभिचारादिनेत्याद्युक्तरीत्येत्यर्थः । तत्रात्माकाशपक्षे संयोगानाश्रयत्वसाधने बाधादिप्रसक्तेराकाश आत्मा च पिण्डनिष्ठसूर्यपरिस्पन्दविशिष्टज्ञानजनकपिण्डसूर्योभयवृत्तिसंयोगाश्रय इति साध्यम् । यद्वा आकाशात्मानौ परत्वापरत्वनिमित्तकारणतपनसंयोगानाश्रयौ तपनान्यविशेषगुणवत्वादिति साध्यमिति ज्ञेयम् । आकाशात्मनोरुपनायकत्वविशेषविचारः किरणावलीतद्वर्धमानयोः तदयं प्रमाणार्थ इति किरणावलीं मनसि निधाय प्रयोगानाह **तदमी इति** । यदा यदा विप्रकृष्टसन्निकृष्टबुद्धिप्रागभावः तदा तदा परत्वापरत्वप्रागभावः इति प्रागभावव्यापकप्रागभावप्रतियोगित्वं तदनुविधायित्वमत्र विवक्षितम् । अतो न जन्यत्वरूपमाश्रित्य साध्यविशेष इति बोध्यम् । कुलालानुविधायि घटो दृष्टान्तः । **स्थविरेति** । स्वभावा-





तिरिक्तस्थविरप्रत्यासत्तिमन्त इत्यर्थः । स्वभावतो अप्रत्यासन्नत्वे सतीति **विशेषणसामर्थ्यात्** । अन्यथा स्वरूपसम्बन्धेनावच्छेदत्वेऽपि प्रत्यासत्तिसद्भावेन तद्वैयर्थ्यापत्तेरिति ज्ञेयम् । **तदवच्छेदकत्वात्** तद्विशेषणत्वादित्यर्थः । न च स्वस्वरूपसम्बन्ध एव पिण्डसूर्यपरिस्पन्दयोरस्त्विति हेतुसाध्ययोर्विशेषणवैय्यर्थ्यप्रसङ्ग इति वाच्यम् । स्वभावसम्बन्धातिरिक्तसम्बन्धे बाधकाभावयुक्त्या स्वभावसम्बन्धाभावसाधनस्य प्रागुक्तरीत्या ज्ञेयत्वे तात्पर्यात् । **द्रव्यकृतेति** । सूर्यस्थविरादिपिण्डाभिन्नद्रव्यकृतेत्यर्थः । अन्यथा पिण्डादिद्रव्यकृतत्वेन सिद्धसाधनप्रसङ्ग इति ज्ञेयम् । **विशिष्टपरत्वापरत्वानुमेयत्वादितीति** । एतत्पिण्डातिरिक्तत्वे सति परत्वापरत्वविशेषासमवायिकारणसंयोगाधारत्वादित्यर्थः । अत्र पिण्डे व्यभिचारवारणाय सत्यन्तदिशि तन्निवृत्यै असमवायीति । अयं व्यतिरेकिप्रयोग इति स्पष्टमेव । इतिशब्द उपपादनपरिसमाप्तौ । इत्याशय इत्याशयपदं वा पूरणीयं तदुपपादनप्रकारोऽवधेय इति वा शेष इति ज्ञेयम् ।

**स०व्र०— उक्तन्यायेनेति** । आकाशादेरेव असमवायिकारणसंयोगाश्रयत्वनिमित्तकारणापेक्षाबुद्धिसम्पादकत्वयोरुक्तन्यायेन सम्भवादिति भावः ।

**विठ्ठल०— तावसमवायिकारणेति** । बहुतरतरणिपरिस्पन्दान्तरित जन्मनि स्थविरे युवानमधिकृत्य परत्वमुत्पद्यमानं असमवायिकारणवत् कार्यत्वादिति स्थिते नारूपादावपि परत्वोत्पत्त्या रूपादीनामसमवायिकारणत्वासम्भवेन तपनपरिस्पन्दानां च वैयधिकरण्येन तदयोगे तरणिपरिस्पन्दावच्छिन्नद्रव्यसंयोगो समवायिकारणमिति ज्ञायते । न चाविभुनो द्रव्यस्य संयोगस्तथा भवितुमर्हति व्यभिचारात् । अतस्तद्द्रव्यं विभु स्यात् । न चात्माकाशौ तथा भवितुमर्हतः विशेषगुणवत्त्वात् पृथिव्यादिवत् । नापि दिक् तस्या एतद्विपरीतपरत्वासमवायिकारणसंयोगाश्रयत्वात् । अतस्तदसमवायिकारणसंयोगाश्रयभूतमतिरिक्तं कालाख्यं एवं परत्वमपि पक्षीकृत्य प्रयोक्तव्यमित्यर्थः । **निमित्तकारणापेक्षाबुद्धीति** । अयमस्मात्पर इति स्थविरे परत्वोत्पत्तौ या निमित्तकारणभूता युवपुरुषापेक्षा बुद्धिः या च यून्यपरत्वोत्पत्तौ परापेक्षाबुद्धिः तत्सम्पादकतयेत्यर्थः । कालमन्तरेणास्मात्पूर्वजातादिति वक्तुमशक्यत्वादिति भावः । **तदपीति** । देशपिण्डसंयोगस्यासमवायिकारणत्वोपपत्तेः । दिगादेरेवापेक्षाबुद्धिजनकत्वोपपत्तेरित्याद्युक्तन्यायेनेत्यर्थः ।

**चषकः— असमवायिकारणेति** । परत्वाद्यसमवायिकारणीभूतो यो विभुद्रव्यसंयोगः तदाश्रयतयेत्यर्थः । **अपेक्षाबुद्धिसम्पादकतयेति** । सन्निकृष्टविप्रकृष्टबुद्धिहेतुभूतसम्बन्धघटकतयेत्यर्थः । युवावधिकं स्थविरे विप्रकृष्टबुद्धौ सत्यां जायमानपरत्वं तादृशबुद्धिं निमित्तीकरोति । स्थविरावधिकं सन्निकृष्टबुद्धौ सत्यां यून्युत्पद्यमपरत्वं तादृशबुद्धिं निमित्तीकुरुते । बहुतरणिपरिस्पन्दान्तरितजन्मत्वं विप्रकर्षः । अल्पतरतत्स्पन्दान्तरितजन्मत्वं सन्निकर्षः । तादृशौ च तौ तरणिसमवेतकर्मणा स्थविरादेः साक्षात्सम्बन्धाभावेन निसर्गतो न सम्भवत इति यद्द्रव्यं मध्येकृत्य स्वाश्रयसंयुक्तसमवायलक्षणप्रत्यासत्त्या तरणिपरिस्पन्दः स्थविरादिपिण्डेषु





वर्तते तद्द्रव्यं नेतरदित्युक्तदिशाऽपेक्षाबुद्धिकारणसम्बन्धघटकतया कालः सिद्ध्यतीत्यर्थः । प्रपञ्चितं चैतदन्यत्रेति नेह वितन्यते ।

**॥ इति परभाष्यव्याख्यानामसाधारणदोषेण दूषणे किरणावलीकारोदितकालसमर्थनरीतिदूषणम् ॥**
**॥ इति परभाष्यव्याख्यानामसाधारणदोषेण दूषणम् ॥**

* * *

**॥ अथ कालविषयानुमानानां विशेषतो निराकरणे परभाष्यव्याख्यानां साधारदोषेण दूषणम् ॥**
**॥ तत्रादौ लीलावत्युक्तप्रकारस्य दूषणम् ॥**

१६४ **सु०— किञ्च परापरादिप्रत्ययानां सूर्यगतयो वा, पर(त्व)ापरत्वे वा, यद्यालम्बनं तदा अस्तु कालानुमानम् । न चैतदस्ति, कालभेदानामेव विशेषणतया प्रतीतेः । तथा हि । परोऽयमित्यादि प्रयुक्तवन्तः, कोऽस्यार्थ इति पृष्टाः लौकिकाः परीक्षिकाश्च, बहुकालीन(नोयमित्यादि) इति व्याचक्षाणा दृश्यन्ते । तत्र कालस्वरूपं साक्षिसिद्धम् । तद्बहुत्वादि च क्वचित्साक्षिणा, क्वचिदनुमानादिना च ज्ञायत इति ॥ एतदप्युक्तम् तदेतदिति श्लोकाभ्याम् ॥ अनयैव दिशा दिशोऽपि परापरप्रत्ययादिलिङ्गत्वं निराकर्तव्यम् ।**

**परि०— क्वचित्साक्षिणेति** । सुषुप्त्यादावित्यर्थः । अन्यथा बहुकालं अहमस्वाप्समल्पकालमहं सुप्तिमानभूवमित्याद्यौत्तरीयकस्मृतिः न स्यादिति भावः । क्वचिज्जाग्रत्कालीनपदार्थेषु सूर्योदयास्तमयादिलिङ्गेन मोक्षभाक्त्वश्रुत्यन्यथानुपपत्त्यादिरूपजीवादिनित्यत्वसाधकयुक्त्या च बहुत्वादिज्ञानम् । 'ब्रह्मादौ नित्यं सर्वगतं सुसूक्ष्मं; इदमग्र आसीत् । अथ मर्त्योऽमृतो भवति' इत्यादिश्रुत्या । 'आकाशवत्सर्वगतश्च, नित्यः' इत्याद्यागमेन च कालनित्यत्वं ज्ञेयम् । 'क्षीयन्ते चास्य कर्माणी'त्यागमेन च कालाल्पत्वं ज्ञायत इत्यर्थः । किञ्चेत्यादिनोक्तमपि मूलारूढमित्याह **एतदपीति** । मूले साक्षिसिद्धेनेत्युपलक्षणम् । कालेनेत्यस्य बह्वल्पकालेनेत्यर्थः । तदेतच्छब्दयोः परापरेत्यर्थकत्वं च प्रागुक्तदिशा ध्येयमिति भावः ।

**यादु०— सूर्यगतय इति** । विशेषणीभूतगत्युपनायकतया कालानुमानमित्यर्थः । परत्वापरत्वे गुणरूपे ताभ्यां च असमवायिकारणसंयोगाश्रयतया कालानुमानमित्यर्थः । **क्वचित्साक्षिणेति** । स्वात्मसम्बन्धिनि काले बहुत्वं स्वसुखादिसम्बन्धिनि काले चाल्पत्वं साक्षिगम्यमित्यर्थः । **क्वचिदनुमानादिनेति** । परात्मादिसम्बन्धिनि काले बहुत्वादिकमानुमानिकं ब्रह्मादिसम्बन्धिनि त्वागमिकमित्यर्थः । **अनयैव दिशेति** । अत्र परत्वं द्रष्ट-





पुरुषापेक्षया पिण्डस्य दूरदेशस्थत्वम् । अपरत्वं तदपेक्षया समीपदेशस्थत्वम् । दूरदेशादिशब्दाश्च दिग्विशेषपराः । तथा च परापरादिप्रत्ययेषु स्वाभाविकदिग्विशेषाणामेव विशेषणतया प्रतीतिः । न तु प्रथमादित्यसंयोगसन्निहितत्वमपरत्वं चरमादित्यसंयोगसन्निहितत्वं परत्वं येनादित्यसंयोगोपनायकतयोक्तरीत्या दिगनुमानम् । तथाऽनुभवाभावात् । नापि परत्वापरत्वे गुणरूपे अस्माकं सम्मते इति भावः ।

**आनन्दः—— अनयैवेति** । संयोगोपनायकत्वेन दिशः सिद्धिरिति परे वदन्ति । तत्रानेकेषां मूर्तद्रव्याणां वा एकस्याकाशस्य वा तत्स्यादिति न दिक्सिद्धिरित्यर्थः ।

**शे०वा०——** एवं परभाष्यव्याख्यानान्यसाधारणदोषेण दूषयित्वा साधारणदोषेणापि दूषयति **किञ्चेति** । **कालानुमानमिति** । उक्तरीत्येति शेषः । **क्वचित्साक्षिणेति** । स्वात्मसम्बन्धिनि काले बहुत्वं स्वसुतादिसम्बन्धिनि च तस्मिन्नल्पत्वं साक्षिसिद्धमित्यर्थः । **क्वचिदनुमानादिनेति** । परात्मादिसम्बन्धिनि काले बहुत्वादिकमानुमानिकं ब्रह्मादिसम्बन्धिनि काले तु तदागमिकमित्यर्थः । **अनयैव दिशेति** । अयमाशयः । न प्रथमादित्यसंयोगसन्निहितत्वमपरत्वं चरमादित्यसंयोगसन्निहितत्वं च परत्वं येनादित्यसंयोगोपनायकतयोक्तरीत्या दिगनुमानं स्यात् । न चैतदस्ति तथाऽनुभवाभावात् । किन्तु द्रष्टृपुरुषापेक्षया पिण्डस्य समीपदेशस्थत्वपरमत्वं तदपेक्षया दूरप्रदेशस्थत्वं च परत्वम् । समीपदूरदेशादिशब्दाश्च दिग्विशेषवाचकाः । तथा च परापरादिप्रत्ययानां साक्षिसिद्धस्वाभाविकदिग्विशेषरूपविशेषणविशिष्टपिण्डविषयकत्वमेव, न तु तरणिसंयोगविशिष्टविषयकत्वमिति कथं संयोगोपनायकतया दिक्सिद्धिः । अस्तु वा त्वदुक्तरीत्या आदित्यसंयोगविशिष्टपिण्डविषयकत्वमुक्तप्रत्ययानां तथाऽपि तरणिपरिस्पन्दानामिव तरणिसंयोगानामपि स्वभावप्रत्यासत्त्यैव स्वविशिष्टप्रत्ययनिर्वाहकत्वसम्भवेन पिण्डसम्बन्धस्यैवानपेक्षितत्वान्नोपनायकतयाऽपि द्रव्यापेक्षेति न दिक्सिद्धिः । अस्तु वा तरणिसंयोगानां पिण्डं प्रत्युपनायकद्रव्यापेक्षा तथाऽपि पृथिव्यादिक्लृप्तद्रव्याणामेव तदुपनायकत्वसम्भवान्न दिग्रूपनवमद्रव्यसिद्धिः । न च तपनपिण्डाभ्यामसंसर्गान्न तेषामुपनायकत्वमिति वाच्यम् । प्रत्येकमव्यापकत्वेऽपि बहूनां संयुक्तसंयोगभूयस्त्वेन संयोगोपनायकतायाः सम्भवेन तद्व्यापकत्वस्यानपेक्षितत्वात् । अपेक्षायामप्युक्तरीत्या विशेषगुणरहितत्वस्याप्रयोजकत्वसिद्ध्या आत्माकाशयोर्व्यापकयोरुभयसंसर्गितयोपनायकत्वसम्भवात् । विशेषगुणरहितत्वस्यैवोपनायकतायां प्रयोजकत्वेऽपि कालस्य विशेषगुणरहिततया संयोगोपनायकत्वसम्भवात् सहकारिभेदेनैकस्यापि कालस्य व्यवस्थिताव्यवस्थितप्रतीतिजनकत्वसम्भवान्न दिक्सिद्धिः । परापरादिप्रत्ययानां स्वाभाविकदिग्विशेषविषयकत्वेन परत्वापरत्वाद्यनालम्बनत्वात् । तदालम्बनत्वेनोक्तरीत्या आकाशादेरेव वा कालस्यैव वा तदसमवायिकारणसंयोगाश्रयत्वतन्निमित्तकारणापेक्षाबुद्धिसम्पादकत्वयोरुपपत्तेः न कयाऽपि विधया परापरादिप्रत्ययानां दिगनुमापकत्वमिति ।

**वा०र०—— प्रथमादित्यसंयोगेति** । सूर्यसंयुक्तोदयाचलसंयुक्तभूतलावयवसंयुक्तः पिण्डः इति संयुक्तसंयोगाल्पीयस्त्वमित्यर्थः । प्रतिज्ञामात्रेण नेत्युक्तहेतुकथनेनोपपादयितुं पुनः प्रतिज्ञा न चैतदस्तीतीत्यतो न दोष





इति ज्ञेयम् । काले तत्र तत्र प्रतिपादितरीतिमनुसन्धायात्र तथैव व्याख्यानप्रकारानुपपत्तेरपेक्षितप्रकार-समर्पणेन दिशः परापरप्रत्ययलिङ्गत्वनिरासप्रकार उक्त इति ज्ञेयम् । एतच्च विशिष्यानुव्याख्यानारूढत्वादिना व्याकर्तव्यमस्ति ।

**स०व्र०— क्वचित्साक्षिणेति** । स्वात्मसम्बन्धिनि काले बहुत्वं स्वसुखादिसम्बन्धिनि च तस्मिन्नल्पत्वं इत्येतत्साक्षिगम्यमित्यर्थः । **क्वचिदनुमानादिनेति** । परात्मादौ काले बहुत्वादिकमानुमानिकं ब्रह्मादावागमिकमित्यर्थः ।

**विठ्ठल०—** सन्निहितपक्षद्वयं प्रकारान्तरेण दूषयति **किञ्चेति** । **क्वचित्साक्षिणेति** । स्वात्मसम्बन्धिनि काले बहुत्वं स्वसुखादिसम्बन्धिनि चाल्पत्वं साक्षिगम्यं पूर्वपरिचितपुरुषे कालबहुत्वमानुमानिकं ब्रह्मशिवादौ तु आगमिकमित्यर्थः । किञ्चेत्यादिनोक्तमपि मूलारूढं करोति **एतदपीति** । मूलसाक्षिसिद्धेनेत्युपलक्षणम् । **कालेनेत्यस्य** बह्वल्पकालेनेत्यर्थः । तदेतच्छब्दयोः परापरेत्यर्थकत्वं प्रागुक्तदिशा ध्येयमिति भावः । **अनयैव दिशेति** । परापरादिप्रत्यये दिक्सिद्धिप्रकारश्च तस्याः संयोगोपनायकत्वेन सिद्धत्वादित्येतद्व्याख्यानावसरे मया लेशतः प्रदर्शितो द्रष्टव्यः । तन्निराकरणं तु इत्थम् । दूरस्थे परत्वं समीपस्थे अपरत्वमिति खलूक्तम् । तत्र दूरादिशब्दानां कालव्यवहितार्थकत्वस्य दिगसाधकत्वाद्दूरदेशसंयोगान्तरितत्वेऽङ्गीक्रियमाणेऽनुमानप्रवृत्तेः प्रागेव दिशः साक्षिसिद्धत्वेनानुमानानवकाशात् । किञ्च संयोगोपनामकत्वं पृथिव्यादेः मूर्तस्य कालादेर्व्यापकस्य वा किं न स्यादित्येषा दिक् । **विवादपरमिति** । वक्ष्यमाणसाध्यवत्वतदभावाभ्यां विप्रतिपन्नं कार्यं पिण्डगतं परत्वादिरूपं कार्यं क्षित्यादिकं कार्यमिति वा ।

**॥ इति लीलावत्युक्तप्रकारस्य दूषणम् ॥**

* * *

**॥ तत्र नवीनोक्त(मानमनोहरोक्त)प्रकारस्य दूषणम् ॥**

**१६५ सु०— त(मे)देतं चिरन्तनं पन्थानमरोचयमाना नवीनास्तु दिक्कालयोरन्यथानुमानमाहुः, 'विवादाध्यासितं कार्यं, विशेषगुणरहितद्रव्याभ्यां जन्यते, कार्यत्वात्, अन्तःकरणद्वयसंयोगवदि'ति ।**

**(ए)तद(प्य)युक्तम्, साध्ये बहुवचनप्रयोगे(क्षेपे)ऽतिप्रसङ्गात् । न च दृष्टान्ताभावः, अन्तःकरणगतबहुत्वस्य सत्त्वात् । न चान्तःकरणद्वयसंयोगे प्रमाणमस्ति, 'मनो, मनसा संयुज्यते, मूर्तत्वाच्छरीरवदि'ति च आकालिके विद्युदादौ सन्दिग्धव्यभिचारम् ।**





**परि०— विवादेति** । वक्ष्यमाणसाध्यकत्वतदभावाभ्यां विमतं क्षित्यादिकार्यमित्यर्थः । **बहुवचनेति** । विशेषगुणरहितद्रव्येभ्य इति प्रक्षेपे दिक्कालयोरिव विशेषगुणरहितद्रव्यान्तरसिद्ध्या-पत्तेरित्यर्थः । ननु द्वयोरेव मनसोः संयोगो न बहूनामित्यत आह **न चेति** । **द्वयेति** । द्वयमात्रसंयोग इत्यर्थः । मनो मनसेत्येकवचनं विवक्षितं तेनेष्टसिद्धिरिति भावः । **आकालिक इति** । यस्यादिः अन्तश्चैककालीनौ तदाकालिकमुच्यते । तथा च पूर्वतन्त्रेऽर्थवादनये आकालिकेप्सेति गुणसूत्रे प्रयोगः । 'आकालिकडाद्यन्तवचन' इति पाणिनीयसूत्रे आकालशब्दस्य इकट्प्रत्ययान्तत्वनिपातनात् साधुत्वं ध्येयम् ।

**गु०दी०— विवादाध्यासितं कार्यम्** इत्यत्र दिक्कृतपरत्वापरत्वाख्यं तद्विपरीतं कालकृतं परत्वा-परत्वाख्यं च कार्यमित्यर्थः । **मनो मनसा संयुज्यते मूर्तत्वात्** इत्यत्र यन्मूर्तं तत्स्वसमानजातीय-द्रव्यान्तरसंयोगीति व्याप्तिर्वक्तव्या । अन्यथा मनस्यपि यत्किञ्चिद्द्रव्यसंयोगेनान्यथासिद्धिप्रसङ्गात् । **तच्चाका-लिकविद्युदादौ सन्दिग्धव्यभिचारीति** । दशदिक्षु दशविद्युतां सहैवोत्पत्तौ न व्यभिचारः । एकस्यां दिश्येकस्या एवोत्पत्तौ स्याद्व्यभिचारीत्यतः सन्दिग्धेत्युक्तम् । तत्सम्भावनायाऽऽकालिकेति चोक्तमिति भावः ।

**यादु०— आकालिक इति** । समानकालावाद्यन्तौ यस्य तदाकालिकमित्युच्यते । 'आकालिक-डाद्यन्तवचन' इति सूत्रात् । तथा चोत्पत्त्यनन्तरमेव विनष्ट इत्यर्थः । आदिपदेन स्तनयित्नुपरिग्रहः । **सन्दिग्धव्यभिचारादिति** । यद्यपि निश्चितहेतुमति साध्याभावसन्देहोऽनुमानमात्रोच्छेदकत्वान्न दोषः तथा-ऽप्याहितस्य दोषत्वेन प्रकृते च तस्मिन् प्रदेशे मनोऽसत्त्वसन्देहाहितस्तत्संयोगाभावसन्देहोऽतो दोष एवेति भावः । वस्तुतस्तूत्पत्त्यनन्तरमेव विनष्टे वस्तुनि तन्मते न संयोगोत्पत्तिः सम्भवति । कार्यसहभूता-समवायिकारणाभावादतो निश्चितव्यभिचार एवेति ध्येयम् ।

**वं०प०— विवादेति** । परत्वापरत्वरूपं कार्यमित्यर्थः । **सन्दिग्धव्यभिचारादिति** । नन्वत्र निश्चितसाध्याभाववति हेतुसन्देहरूपसन्दिग्धव्यभिचाराभावात् निश्चितहेतुमिति साध्यसन्देहरूपस्य च तस्य सर्वानुमानोच्छेदकत्वेनायोगात् कथमत्र सन्दिग्धानैकान्तिकतेति चेत् । उच्यते । पक्षातिरिक्ते निश्चित-हेतुमिति साध्यसन्देहेऽपि सन्दिग्धानैकान्तिकत्वेन प्रकृते तस्य सम्भवादित्याहुः । वस्तुतस्तु पक्षातिरिक्त इति न देयमेव । अनुकूलतर्काभावदशायां निश्चितहेतुमिति साध्यसन्देहरूपस्यापि सन्दिग्धानैकान्तिकत्वस्य दोषत्वमेवेति ।

**आनन्दः— साध्य इति** । तथा च विशेषगुणरहितानि द्रव्याणि बहूनि स्युरित्यर्थः । **आकालिके** तात्कालिके निश्चितहेतुमति साध्यसन्देहादिति भावः ।





**श्रीनिधि०— अन्तःकरणगतबहुत्वस्य सत्त्वादिति** । तद् बहुत्वस्य तत्समवायिकारणत्वादिति भावः ।

**शे०वा०— चिरन्तनं पन्थानमिति** । एष तावच्चिरन्तनः पन्था लीलावत्युक्तेरिति भावः । तत्र मानमनोहरीयमनुमानं दूषयितुमनुवदति **विवादाध्यासितं कार्यमिति** । अत्र घटादिकं पक्षः । मृद्दण्डादिद्वयजन्यत्वेनार्थान्तरतानिवृत्त्यर्थं विशेषगुणरहितग्रहणम् । अदृष्टेश्वरेच्छादिभिरर्थान्तरतानिवृत्त्यै द्रव्यग्रहणम् । अत्र कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति मनसो विशेषगुणवत्त्वश्रुतेर्दृष्टान्ते साध्यवैकल्यमिति स्पष्टत्वाद्दोषमुपेक्ष्यानयैव रीत्या विशेषगुणरहितं दशममपि द्रव्यं शक्यसाधनमित्याभाससमानयोगक्षेमत्वमित्याह **तदयुक्तमिति** । **बहुवचनप्रयोग इति** । विशेषगुणशून्यद्रव्यैर्जन्यमिति बहुवचनप्रयोग इत्यर्थः ।

ननु विशेषगुणरहितद्रव्यैर्जन्यत इत्यत्र नास्ति दृष्टान्तः । न हि बहुभिरन्तःकरणैरेकः संयोगो जन्यत इति वैषम्यान्नाभाससाम्यमित्याशङ्क्य दूषयति **न चेति** । उक्तरीत्या बहूनामन्तःकरणानां संयोगस्याप्रामाणिकत्वेन तस्योक्तानुमाने दृष्टान्तत्वासम्भवेऽप्यनेकान्तःकरणाधिकरणस्यापेक्षाबुद्धिजन्यस्य बहुत्वस्यैव दृष्टान्तत्वान्न दृष्टान्तभावाभावाभ्यां वैषम्यमित्याशयः । न च निमित्तकारणेति विशेषणेन निस्तारः । तथा सति परकीयानुमाने साध्यवैकल्यापातादित्यत्र तात्पर्यात् । उपलक्षणं चैतत् । विवादास्पदं विशेषगुणरहितद्रव्याभ्यां न जन्यते अन्तःकरणगुणव्यतिरिक्तत्वादाकाशवदिति सत्प्रतिपक्षत्वाच्चेत्यपि द्रष्टव्यम् । न च अकार्यत्वमुपाधिः । वेदान्तिभिराकाशस्यापि कार्यत्वाङ्गीकारेण साध्याव्यापकत्वादित्याशयात् । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु बहूनामन्तःकरणानां संयोग एव दृष्टान्त इति नोक्तानुमाने दृष्टान्ताभावः । न चैकस्य संयोगस्य अन्तःकरणत्रयजन्यत्वे प्रमाणाभावेन तदसिद्धेः न तस्य दृष्टान्तमिति वाच्यम् । तथा सत्यन्तःकरणद्वयसंयोगस्याप्यप्रामाणिकत्वेन तदसिद्ध्या परकीयानुमानेऽपि दृष्टान्तासिद्धिप्रसङ्गादित्याह **न चेति** । नापीत्यर्थः । अत्र तदीयमेव दृष्टान्तसिद्धिसमर्थनमनूद्य दूषयति **मन इति** । **आकालिकेति** । समानकालावाद्यन्तावुत्पत्तिविनाशावस्य तत् आकालिकमित्यर्थः । 'आकालिकडाद्यन्तवचने' इति सूत्रे समानकालशब्दस्याकालेत्यादेशस्य समानकालत्वस्याद्यन्तयोर्विशेषणत्वस्येकट्प्रत्ययस्य च निपातनात् । अत्र चोत्पादविनाशयोरेककालत्वासम्भवादव्यवहितकालत्वमेवैककालत्वं विवक्षितम् । निरन्तरे हि काले भेदाग्रहणात् स एव काल इति भवति प्रतीतिः । तथा च उत्पत्त्यव्यवहितक्षण एव विनष्टमाकालिकमिति पर्यवस्यतीति ध्येयम् । विद्युदादावित्यादिपदेन स्तनयित्नुपरिग्रहः । **सन्दिग्धव्यभिचारादिति** । निश्चितहेतुमति साध्यसन्देहात्सन्दिग्धव्यभिचार इति भावः । यद्यपि निश्चितहेतुमति साध्याभावसन्देहो न दोषः । तथा सत्यनुमानमात्रोच्छेदप्रसङ्गात् । तथाऽप्याहितस्य तस्य दोषत्वमेव । प्रकृते च तस्मिन्प्रदेशे मनसोऽसत्त्वसन्देहाहितस्तत्संयोगसन्देह इति भावेन अस्योद्भावनमिति ध्येयम् ।





**वा०र०— लीलावत्यामुक्तेरिति** । कालरूपाणां परिसमाप्त्यान्ते तथोक्तेरित्यर्थः । **मानमनोहरीयमिति** । एतेन मानमनोहरेति तत्त्वप्रदीपिकायामुक्तेः । षट्साहस्र्यामपि विमतः संयोगो विशेषगुणद्रव्याभ्यां जन्यत इत्याद्युक्त्वा इति मानमनोहर इत्युक्तेश्च अस्यानुमानस्य तदीयत्वेन व्याख्यानमिति बोध्यम् । उक्ततत्त्वप्रदीपिकानयनप्रसादिन्यनुसारेणानुमानविचारः । **अत्र घटादिकमिति** । विशेषगुणरहितग्रहणमिति पाठः । तत्त्वप्रदीपिकाकृता कामः सङ्कल्पो विचिकित्सेत्यादि श्रुत्या मनसो विशेषगुणवत्त्वप्रतिपादनात् अन्तःकरणद्वयसंयोगस्य विशेषगुणरहितद्रव्यजन्यता नास्तीति दृष्टान्ते साध्यवैकल्यमिति प्रतिपादनेऽपि तत्परित्यागेनैव ग्रन्थकारीयं दूषणान्तराभिधानं घटयन्नुत्तरग्रन्थतात्पर्यमाह **अत्र काम इति** । इति दोषं स्पष्टत्वादिति सम्बन्धः । **उक्तरीत्येति** । बहुभिरन्तःकरणैरेकस्य संयोगस्य जननाभावादित्युक्तरीत्येत्यर्थः । अनेकान्तःकरणाधिकरणापेक्षेति तत्त्वप्रदीपिकानुसारेणान्तःकरणगतेत्येतद्व्याख्यातम् **अनेकान्तःकरणेति** । निमित्तकारणविशेषगुणरहितेति विशेषणेत्यर्थः । **निस्तारः** दृष्टान्तानुपपत्तिः । बहुत्वस्य सङ्ख्यारूपगुणभूतस्य द्रव्यसमवायिकारणकतया निमित्तभूततादृशजन्यत्वाभावेन दृष्टान्तत्वानुपपत्तेरिति भावः ।

तत्त्वप्रदीपिकानुसारेण प्रतिपक्षं दर्शयति **विवादास्पदमिति** । तदनुसारेणैवोपाधिमाशङ्क्य परिहरति **न च अकार्यत्वमित्यादि** । **तदीयमेवेति** । यद्यपि षट्साहस्र्यां नित्यद्रव्यत्वादात्मवदित्येव तत्प्रयोग उक्तः । तथापि मूर्तत्वहेतुकः शरीरदृष्टान्तकोऽपि मानमनोहरोक्तः प्रयोगोऽस्ति । तदनुसारेण मूलं प्रवृत्तमित्याशयेन तदीयमेवेत्युक्तम् **अकालिकेति** । नञ्प्रयोगमिति भ्रान्तिवारणाय आङ्पूर्वकत्वपक्षमाश्रित्य तथात्वेऽपि विवक्षार्थसमर्पकत्वमाकालिकशब्दस्य कथमित्यतस्तदुपपादयति **समानकालेति** । समानकालावाद्यन्तावस्य आकालिकः स्तनयित्नुरिति काशिकानुसारेणार्थकथनमेतत् । उत्पन्नोऽनन्तरं विनाशीत्यर्थ इति तद्वाक्यतात्पर्यनिरूपणावसरे 'आदिर्जन्मान्तो विनाश' इति मञ्जर्यामुक्तं तन्मसि निधायाद्यन्तावित्यनूद्य उत्पत्तिविनाशाविति व्याख्यातम् **सूत्र इति** । पञ्चमस्य प्रथमस्थे सूत्र इत्यर्थः । **आकालेत्यादेशस्येति** । आकालशब्दरूपादेशस्येत्यर्थः । **इकट्प्रत्ययस्येति** । स च प्रत्ययः समयस्तदस्य प्राप्तमित्यतोऽस्येत्यधिकारात् षष्ठ्यर्थे । तदनुसन्धायैवास्येति प्रागुक्तमिति ज्ञेयम् । न चोत्पादविनाशयोरिति मञ्जरीमनुसृत्यैककालत्वमुपपादयति **अत्र चोत्पादेति** । 'उत्पन्नोऽनन्तरं विनाशीत्यर्थ' इति काशिकार्थफलतया विशदयति **तथा चोत्पत्तीति** । एतच्च आकालिकडाद्यन्तवचन इति सूत्रानुसारेणाव्युत्पादनम् । वार्तिककारेण तु आकालशब्दस्यासमानकालशब्दादेशस्य निपातनं क इट्प्रत्ययश्च नाङ्गीकृतः । किन्तु आकालाट्ठन् चेति ठन्प्रत्ययः । प्रकृतठञ्समुच्चयार्थश्चशब्द इति भावेनाकालीकनिपातनानर्थक्यं ठञ्प्रकरणादित्युक्तम् । तद्रीत्या च आवृत्तः कालोऽस्येत्याकालः । न च कालस्यावृत्तिः सम्भवतीत्यत उत्पत्तिकाल एव विनाशोऽप्यावृत्त इति प्रत्ययो भवति । उत्पत्तिकालेन समाननिरन्तरं नाशकाले तथाप्रत्ययोपपत्तेः । ततः स्वार्थे ठनि आकालिकशब्दो निष्पन्नः । उत्पत्तिकालसमाननिरन्तरविनाशकालीनतामाहेति उत्पत्त्यव्यवहितक्षण एव विनष्टमित्येषोऽर्थो लभ्यत इत्यपि ज्ञेयम् । एवं हरदत्तोक्तप्रकारान्तरमपि ज्ञेयम् । आकालिकः स्तनयित्नुः आकालिकी विद्युत् इत्युभयस्य





तत्रोदाहरणानुसारेणादिपदसङ्ग्राह्यमाह **आदिपदेनेति** । **तस्य दोषत्वमेवेति** । पर्वतादौ स्वारसिकवह्न्यादिसन्देहस्यादोषत्वेऽपि धूममेव वह्निव्यभिचारादि सन्देहाहितस्य तस्य दोषताया दृष्टत्वादित्यर्थः । अन्यथाऽनुमितिप्रतिबन्धायोगात् । अत एवादौ तथा दोषत्वं प्रतिपादितम् । पक्षादन्यत्र निश्चितहेतुमतीति न्यायामृतानुसारेण प्रतिज्ञाया अन्यत्र निश्चितहेतुमति साध्यसन्देहस्य दोषतया तत्सन्देहस्य चानुमानमात्रेऽभावेन तद्दोषत्वाङ्गीकारे अनुमानमात्रोच्छेदानापत्तिरित्यस्योपलक्षणं चैतत् ।

**स०व्र०— न च अन्तःकरणद्वयेति** । नापीत्यर्थः । **आकालिक इति** । समानकालौ आद्यन्तावस्य तदाकालिकमित्यर्थः । आदिपदेन स्तनयित्नुपरिग्रहः । 'आकालिकडाद्यन्तवचने' इत्यत्र समानकालशब्दस्य आकालिकेत्यादेशस्य समानकालत्वस्याद्यन्तयोर्विशेषणत्वस्य इकट्प्रत्ययान्तत्वस्य च निपातित्वादिति भावः । अत्राद्यन्तयोः समानकालत्वं चोत्पादविनाशयोरेककालत्वासम्भवादव्यवहितकालत्वमेककालत्वम् । निरन्तरे हि काले भेदाव्यवहारात् स एव काल इति भवति प्रतीतिरिति ध्येयम् ।

**विट्ठल०— अन्तःकरणद्वयेति** । जीवानां मुक्तौ सत्यां तदीयत्वेनाविद्यमानान्तःकरणद्वयजननवदित्यर्थः । मनसो विशेषगुणशून्यत्वादिति भावः । **बहुवचनेति** । विशेषगुणरहितद्रव्येभ्य इति बहुवचनप्रक्षेपे दिक्कालयोरिव क्षित्यादिनिमित्तकारणीभूतद्रव्यान्तरसिद्ध्यापत्तेरित्यर्थः । अनेकपरानुमानस्याभाससमानयोगक्षेमतोक्ता भवति । किञ्च पिण्डातःकरणद्वयसंयोगे मानाभावेन परानुमाने दृष्टान्तासिद्धिरित्याह **न चेति** । **आकालिक इति** । समानकालावाद्यन्तौ यस्य तदाकालिकमित्युच्यते । 'आकालिक आद्यन्तवचन' इति पाणिनिसूत्रात् उत्पत्त्युत्तरक्षणविनाशिनीत्यर्थः । **आदिपदेन** स्तनइत्नुर्गृह्यते ।

**चषकः— आकालिक इति** । आकालिकडाद्यन्तवचन इति योगादुत्पत्त्यव्यवहितोत्तरक्षणावच्छेदेन विनष्ट इत्यर्थः । **सन्दिग्धव्यभिचारमिति** । आहितसन्देहस्य प्रतिबन्धकत्वाशयेनेदम् । तेन स्वारसिकतथाविधसन्देहस्याविरोधित्वेऽपि न क्षतिः ।

**॥ इति नवीनोक्त(मानमनोहरोक्त)प्रकारस्य दूषणम् ॥**

* * *

**॥ तत्र अपरमतोक्तप्रकारस्य दूषणम् ॥**

१६६ **सु०—** अपर आह, 'परममहत्परिमाणं, द्रव्यचतुष्टयवृत्ति, परिमाणत्वादणुत्ववदिति । अत्र यदि आकाशात्म(गत)परिमाणपक्षीकारः तदा सिद्धसाधनम्, आत्मनां बहुत्वात् । आत्मत्वेनैक्यमुपादाय प्रयोगेऽपि बाधः, परिमाणद्वयस्य द्रव्यचतुष्टयवृत्ति-





त्वायोगात् । एकैकद्रव्यवृत्ति खलु परिमाणम् । अत एव न कालादिगतस्य पक्षीकारः । आश्रयासिद्धिश्चाधिका ।

'परममहत्परिमाणसामान्यं, विशेषगुणशून्यद्रव्याधिकरणानेकव्यक्तिवृत्ति परिमाणतारतम्यविश्रान्तिविषयजातित्वात्, अणुपरिमाणवृत्तिजातिवत्' इति चानुपपन्नम् । परममहत्परिमाणसामान्यं हि परिमाणत्वं वा, तदवान्तरजातिर्वा । आद्ये मनःसिद्ध्याऽप्यस्य सम्भवेनार्थान्तरता, सामान्यस्याप्यनेकवृत्तिताया निराकरिष्यमाणत्वेन बाधाश्रयासिद्धी च । न द्वितीयः, तस्याः (तस्य) निराकरिष्यमाणत्वात्, वर्णसिद्ध्या अर्थान्तरत्वाच्च, अनेकपदस्थाने बहुपदप्रक्षेपे अतिप्रसङ्गश्च ।

अस्तु कालस्य दिशश्च बहुत्वम्, आत्मवदुपसङ्ग्राहकैक्येन द्रव्याणां नवत्वोपपत्तिरिति चेत्तर्हि दिशा कालेन वा साध्यपर्यवसान(सम्भव)ादुभयसाधकत्वम् अस्य न स्यात् । मा भूदिति चेन्न, अनेकपदवैयर्थ्यात् । अन्यतरसाधनेऽन्यतरेणार्थान्तरताप्रसङ्गात् । हेतुदृष्टान्तयोश्चानुपपत्तिर्वक्ष्यत इत्यलं पल्लवेन ।

**परि०— द्रव्यचतुष्टयेति** । अनेनाकाशकालदिगात्मरूपद्रव्यचतुष्टयसिद्धिरिति भावः । **अणुत्ववदिति** । अणुत्वस्य पार्थिवपरमाण्वादिचतुष्टयवृत्तित्वादिति भावः । किमत्राविप्रतिपन्नात्माकाशयोः परिमाणं पक्षीक्रियते । अथ विप्रतिपन्नदिक्कालयोः । तत्राद्यं निराह **अत्र यदीति** । द्वितीयं निराह **अत एवेति** । बाधादेवेत्यर्थः । **परममहत्परिमाणसामान्यमिति** । परममहत्परिमाणनिष्ठजातिरित्यर्थः । **विशेषेति** । विशेषगुणशून्ये च ते द्रव्ये च विशेषणगुणशून्यद्रव्ये अधिकरणे ययोस्ते, ते च ते अनेकव्यक्ती च, तद्वृत्तीत्यर्थः । अनेनोक्तजात्यधिकरणपरिमाणद्वयाश्रयविशेषगुणहीनद्रव्यद्वयसिद्धौ दिक्कालयोः सिद्धिः । आत्माकाशयोर्विशेषगुणवत्त्वादिति भावः । क्वचिद्विशेषगुणशून्यद्रव्यत्वाधिकरणानेकव्यक्तिवृत्तीति पाठः । **परिमाणतारतम्येति** । विश्रान्तिविषयपरिमाणनिष्ठजातित्वादित्यर्थः । अणुपरिमाणपरममहत्परिमाणयोः पश्चात् परतो न्यूनाधिकपरिमाणान्तराभावादिति भावः । **मनःसिद्ध्यापीति** । मनसामनेकत्वेन तन्निष्ठपरिमाणस्याप्यनेकव्यक्तित्वात् मनसो विशेषगुणशून्यद्रव्यत्वाच्चेति भावः । **निराकरिष्यमाणत्वेनेति** । वैशेषिकनये 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयते । न सर्वधर्म एकोऽस्ति समुदायमृते क्वचिदि'त्यादिनेति भावः । **तस्या इति** । परिमाणत्वव्याप्यस्य परममहत्परिमाणत्वरूपसामान्यस्य वैशेषिकनये । 'महत्त्वं च





परमाणावणावपी'त्यादिनेति भावः । व्याप्यजातिमभ्युपेत्याह **वर्णसिद्धचेति** । वर्णानामनेकत्वाद्विशेषगुणशून्यद्रव्यत्वात् परममहत्परिमाणाश्रयत्वाच्चेति भावः । वर्णानां द्रव्यत्वे विप्रतिपन्नं प्रत्याह **अनेकेति** । दिक्कालयोर्बहुत्वस्य तादृशद्रव्यान्तरस्य वा सिद्धिप्रसङ्ग इत्यर्थः । ननु द्रव्यान्तरसिद्धौ बाधात् कल्पनागौरवाच्च दिक्कालयोरेवं बहुत्वेन साध्यपर्यवसानं भविष्यतीति तटस्थशङ्कामनूद्य निराह **अस्त्विति** । **आत्मवदिति** । आत्मत्वेन यथा सङ्ग्रहः पूर्वमुक्तः तथेहापि दिक्कालादीनां भविष्यतीत्यर्थः । **हेतुदृष्टान्तयोश्चानुपपत्तिरिति** । असिद्धिसाध्यसाधनवैकल्यरूपेत्यर्थः । 'न महत्त्वस्यापि विश्रमः । दृश्यतेऽनन्त इत्येव तथाऽऽनन्त्यमणावपि' इत्यादिना वैशेषिकनये परिमाणतारतम्यविश्रान्तेः जातेरनेकवृत्तित्वाभावस्य (च) वक्ष्यमाणत्वादिति भावः ।

**गु०दी०— अणुत्ववत्** इत्यत्र अणुत्वपरिमाणस्य पार्थिवपरमाण्वादिद्रव्यचतुष्टये वृत्तित्वादित्यर्थः । **अत एव न कालादिगतस्य** इत्यत्र आदिपदेन दिग्गृह्यते । अत एवैकैकगतपरिमाणद्वयस्य चतुष्टयवृत्तित्वायोगादेवेत्यर्थः । **परिमाणतारतम्यविश्रान्तिविषयजातित्वात्** इत्यत्र परिमाणगतजातित्वादित्येवोक्ते मध्यमपरिमाणत्वजातौ व्यभिचारः । तद्धि विशेषगुणसहितपृथिव्यादिगतपरिमाण एव तिष्ठति । न तु विशेषगुणशून्यद्रव्यगतपरिमाणे । अतः परिमाणतारतम्यविश्रान्तिविषयजातित्वादित्युक्तम् । मध्यमपरिमाणतारतम्ये च न विश्रान्तिः । ततोऽधिकस्य परिमाणतारतम्यविश्रान्तिविषयमहापरिमाणस्य विद्यमानत्वात् । गगनमहापरिमाणत्वाख्योपाधावुपाधित्वादेव गगनपरिमाणमात्रवर्तिनि व्यभिचारवारणाय जातित्वादित्युक्तम् । **अणुपरिणामवृत्तिजातिवत्** इत्यत्र पार्थिवपरमाण्वादिचतुष्टयगताणुपरिमाणवृत्तिजातौ साध्याभावेन मनोमात्रवृत्त्यणुपरिमाणगतजातिर्दृष्टान्तीकर्तव्या । एवं च मनस एकत्वात् कथं तत्र विशेषगुणरहितद्रव्याधिकरणानेकव्यक्तिवृत्तित्वमिति चेत्, सत्यम् । दिक्कालवन्मनसः एकत्वाभावात् । अनेकमनोगतानेकपरिमाणान्यादाय साध्यसिद्धेरभिमतत्वादिति परस्याशयः । तत्रेदं चिन्त्यम् । एवं सति दिशां प्राच्यादिभेदेनानेकत्वमादायैव साध्यस्यान्यथासिद्ध्या न त्वदभिमतकालसिद्धिरिति ।

**यादु०—** ननु द्रव्यचतुष्टयवृत्तित्वं संयोगद्वयवत्परिमाणद्वयस्य किं न स्यादित्यत आह **एकैकेति** । **अत एवेति** । यदि दिक्कालगतपरिमाणपक्षीकारः तदा सिद्धसाधनम् । दिक्कालयोर्बहुत्वात् । दिक्त्वेन कालत्वेन चैक्यमुपादाय प्रयोगेऽपि बाध इत्युक्तन्यायादेवेत्यर्थः । चतुष्टयसम्बन्धिपरिमाणस्य पक्षीकारान्न बाध इत्यत आह **आश्रयासिद्धिश्चेति** । सिद्धसाधनता तावदनिवार्येति भावः । **विशेषगुणशून्येति** । विशेषगुणशून्ये द्रव्येऽधिकरणे ययोः परिमाणयोः तल्लक्षणानेकव्यक्तिवृत्तीत्यर्थः । **विश्रान्तिविषयजातित्वादिति** । विश्रान्तिविषयभूतं यत्परिमाणं तन्निष्ठजातित्वादित्यर्थः । **मनःसिद्ध्याऽपीति** । मनसां विशेषगुणशून्यानामनेकत्वेन तत्परिमाणवृत्तितामादायापि साध्यपर्यवसानसम्भवादिति भावः । **निराकरिष्यमाणत्वेनेति** । वैशेषिकपरीक्षाया-





मिति शेषः । **तस्या इति** । परिमाणत्वावान्तरजातेर्वैशेषिकपरीक्षायां निराकरिष्यमाणत्वादित्यर्थः । तस्येति पाठे द्वितीयपक्षस्येत्यर्थः । परिमाणवृत्त्यणुत्वादेः परिमाणत्वावान्तरस्येति वाऽर्थः । **वर्णसिद्धचेति** । वर्णानामपि परममहत्परिमाणत्वाद्विशेषगुणशून्यत्वादेकत्वाच्चेति भावः । **अतिप्रसङ्गश्चेति** । परममहत्परिमाणानां विशेषगुणशून्यानां बहूनां द्रव्याणां सिद्धिप्रसङ्ग इत्यर्थः । ततश्च द्रव्याणां नवत्वानुपपत्तिरिति भावः । ननु बहुपदप्रक्षेपेऽपि न तादृशविजातीयबहुद्रव्यसिद्धिर्येनातिप्रसङ्गः किन्तु कालदिशोरेव बहुत्वं सिद्धचेदित्याशङ्कते **अस्तु कालस्येति** । **तर्हि दिशा कालेन वेति** । एकैकस्य बहुत्वाद्विशेषगुणशून्यत्वाच्चेति भावः । **हेतुदृष्टान्तयोश्चेति** । वैशेषिकपरीक्षायां परिमाणतारतम्यस्याविश्रान्तिरेवेति वक्ष्यमाणत्वेन हेतोरनुपपत्तिः । अनेकवृत्तिजात्यभावस्यापि तत्र वक्ष्यमाणत्वेन दृष्टान्तस्याप्यनुपपत्तेरित्यर्थः । दिक्कालयोर्बहुत्वमौपाधिकमिति परे वर्णयन्ति । तदपि न प्रामाणिकमित्याशयेनोक्तम् **इत्यलमिति** ।

**वं०प०— अपर आहेति** । दिक्कालयोरन्यथानुमानमाहेत्यर्थः । **परिमाणद्वयस्येति** । आत्माकाशगतपरिमाणद्वयस्यात्माकाशरूपद्रव्यद्वयवृत्तित्वेनेत्यर्थः । **अणुपरिमाणवृत्तीति** । अत्र दृष्टान्ते मनः समादाय साध्यमुपपादनीयम् । परममहत्परिमाणसामान्यमित्यस्य परममहत्परिमाणनिष्ठं यत्सामान्यं परिमाणत्वं भवति । सामान्यस्य विशेषवृत्तित्वात् । तथा परममहत्परिमाणनिष्ठं यत्सामान्यं परममहत्परिमाणत्वरूपं परिमाणत्वावान्तरजातिः साऽप्यर्थतया आयाति । अतः परिमाणत्वं तदवान्तरजातिर्वेति युक्तो विकल्पः । ननु कालस्य दिशश्च बहुत्वे द्रव्याणां नवत्वानुपपत्तिरिति चेत् तत्राह **आत्मवदिति** । यथा आत्मनां क्षेत्रज्ञपरमात्मभेदेन द्वित्वेऽपि क्षेत्रज्ञानामनन्तत्वेऽपि न द्रव्याणां नवत्वहानिः । आत्मत्वरूपोपसङ्ग्राह्यैक्येनात्मन एकत्वाद् द्रव्याणां नवत्वोपपत्तेः । तथा कालदिशोर्बहुत्वेऽपि कालत्वदित्त्वरूपोपसङ्ग्राह्यैक्येन कालादेरेकत्वाद् द्रव्याणां नवत्वमविरुद्धमित्यर्थः । **उभयसाधकत्वं** युगपदुभयसाधकत्वम् । **अस्य** अनुमानस्य । ननु न युगपदुभयं साध्यते । किन्तु क्रमेणैवेत्यत आह **अन्यतरेति** ।

**आनन्दः— अपर आहेति** । दिक्कालघटितचतुष्टयमिति कालसिद्धिरित्यर्थः । **सिद्धसाधनमिति** । अर्थान्तरमित्यर्थः । स्वेनात्मना तदङ्गीकारादिति ध्येयम् । ननु कालगतमेव वादिगतमेव वा पक्षीकृत्य इत्यत आह **अत एवेति** । परिमाणस्यैकैकद्रव्यवृत्तित्वादेवेत्यर्थः । **विशेषेति** । विशेषगुणशून्याः द्रव्यत्वाधिकरणाः या अनेका व्यक्तयस्तद्वृत्तिर्यत्परिमाणं तद्वृत्तीत्यर्थः । अत्र विशेषगुणेत्यादिविशेषणेन कालदिशोः सिद्धिः । **आद्य इति** । मनोरूपानेकव्यक्तिवृत्तिवृत्तित्वस्यैव सिद्धिः स्यादित्यर्थः । **वर्णसिद्धचेति** । वर्णात्मकशब्दसिद्धचेत्यर्थः । आभाससाम्यमाह **अनेकेति** । नन्वन्यतरव्यक्तिवृत्तीत्येव साध्यत इत्यत्राह **अन्यतरेति** । कालसाधने दिशमादाय अर्थान्तरं दिक्साधने तु कालमादाय तदित्याशयः । **हेत्विति** । तयोर्जातिगर्भत्वादिति भावः ।

**शे०वा०— अत एवेति** । कालदिग्गतस्य परिमाणस्य पक्षीकारे सिद्धसाधनम्, दिशां बहुत्वेन परममहत्परिमाणस्य द्रव्यचतुष्टयवृत्तित्वसिद्धेः । आत्मनामात्मत्वेनेव दिशामपि दित्त्वेनैक्यमुपादाय प्रयोगे





एकैकद्रव्यवृत्तित्वात् परिमाणस्य परिमाणद्वयस्य द्रव्यचतुष्टयवृत्तित्वस्य बाधितत्वादित्युक्तदोषादेवेत्यर्थः । न केवलं कालदिग्गतपरिमाणस्य पक्षत्वे उक्तरीत्या सिद्धसाधनत्वमेव दोषः । किन्नाम कालदिशोरेवासिद्ध्या तत्परिमाणस्य सुतरामसिद्धेराश्रयासिद्धिश्चेत्याह **आश्रयासिद्धिश्चेति** । चतुष्टयसम्बन्धिपरिमाणस्य पक्षीकारान्न बाध इत्यत आह आश्रयासिद्धिश्चेत्यप्याहुः । लीलावतीकारेण दिक्कालयोः साधनायोक्तमनुमानमनूद्य दूषयति **परममहत्परिमाणेति** । अणुत्वे सिद्धसाधनवारणाय परममहदिति विशेषणम् । **विशेषगुणेति** । विशेषगुणशून्यं यद्द्रव्यं तदधिकरणायाऽनेकव्यक्तिः परममहत्परिमाणरूपा तद्वृत्तीत्यर्थः । द्रव्याधिकरणानेकवृत्तीत्युक्ते गगनात्म-घटादिवृत्त्यनेकमहत्परिमाणनिष्ठतासाधनेनार्थान्तरता स्यात् । तदर्थं विशेषगुणशून्येत्युक्तम् । अनेकव्यक्तिग्रहणेन च तदधिकरणविशेषगुणशून्यद्रव्यानेकत्वसिद्धौ कालदिशोः सिद्धिः । परिमाणवृत्तित्वेन सिद्धसाधनताव्यावृत्त्यै द्रव्याधिकरणपदम् । घटत्वादिनिवृत्त्यै विश्रान्तीत्यादिविशेषणम् । ज्ञानत्वादिनिवृत्त्यै परिमाणेति विशेषणमिति भावः । अत्र हेतौ विश्रान्तिविषयजातित्वं विश्रान्तिविषयनिष्ठजातित्वमेव विवक्षितम् । क्वचित्तु तथैव पाठः । **अणुपरिमाणवृत्तिजातिवदिति** । विशेषगुणशून्यानेकमनोगताणुपरिमाणनिष्ठाणुत्वजातिवदित्यर्थः ।

अत्रानेकव्यक्तिवृत्तित्वं यद्येकत्वानधिकरणव्यक्तिवृत्तित्वं तदा सिद्धसाधनम् । अथ अनेकत्वसङ्ख्या-धिकरणमहत्त्वनिष्ठत्वं तदा बाध इति सत्येव दोषे दोषान्तरमाह **परममहदिति** । **मनःसिद्ध्याऽपीति** । विशेषगुणशून्यमनोव्यक्तीनामनेकत्वेन तत्परिमाणवृत्तितामादायापि साध्यपर्यवसानसम्भवादिति भावः । **निराकरिष्यमाणत्वेनेति** । 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयत' इत्यादिना वैशेषिकपरीक्षायामिति शेषः । **तस्या इति** । परिमाणत्वावान्तरजातेरित्यर्थः । तस्येत्यपि क्वचित्पाठः । तत्र परिमाणवृत्त्यणुत्वादेः परिमाणत्वा-वान्तरत्वस्येत्यर्थो बोध्यः । **निराकरिष्यमाणत्वादिति** । 'महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु कल्पितमि'त्यादिना वैशेषिकपरीक्षायामिति शेषः । ततश्चाश्रयासिद्धिरिति भावः । परिमाणत्वावान्तरजातिमभ्युपेत्याप्याह **वर्णसिद्ध्येति** । समधिगतमेतदपौरुषेयत्ववादे यद्वर्णानामनेकत्वं विभुत्वं च । न तेषां गुणाः सन्ति सन्ति नादानामन्यधर्मत्वादन्यस्य चाभावात् । अतस्तद्वृत्तित्वसाधनेनापि विश्रान्तेरर्थान्तरतेत्यर्थः । आभाससाम्येनापि दूषयति **अनेकपदस्थान इति** । विशेषगुणशून्यद्रव्याधिकरणबहुव्यक्तिवृत्तीत्येवमनेकपदस्थाने बहुपदप्रयोग इत्यर्थः । **अतिप्रसङ्गश्चेति** । अनेकव्यक्तिग्रहणेन तदधिकरणविशेषगुणशून्यद्रव्यानेकत्वसिद्धौ कालदिशोरिव बहुव्यक्तिग्रहणेन तदधिकरणविशेषगुणशून्यद्रव्यबहुत्वसिद्धौ विशेषगुणशून्यानां बहूनां द्रव्याणां सिद्धिः स्यादि-त्यतिप्रसङ्ग इत्यर्थः ।

तथा च नैकस्यापि सिद्धिरिति भावः । **हेतुदृष्टान्तयोरिति** । परिमाणोत्कर्षापकर्षयोरनवधिकत्वस्यैव 'न महत्त्वस्यापि विश्रमः । दृश्यतेऽनन्त इत्येव तथाऽऽनन्त्यमणावपी'त्यादिना वैशेषिकपरीक्षायां वक्ष्य-माणत्वेन परिमाणतारतम्यस्य अविश्रान्तिसिद्ध्या विश्रान्तिघटितहेतोः पक्षेऽसिद्ध्याऽसिद्धिः । दृष्टान्ते च साधनवैकल्यमित्यर्थः । ननु तथापि आधुनिकोन्नीतदिक्कालसाधकानुमानजातमनूद्य निराकुर्वता अनुमाना-न्तराणामिव तदुपन्यस्तं विवादाध्यासितानि मूर्तद्रव्याणि युगपद्विशेषगुणशून्यानेकद्रव्यसंसर्गीणि द्रव्यत्वा-





दात्मवदित्यनुमानमपि निराकर्तव्यमेव । अन्यथा तेनैव तत्सिद्ध्युपपत्त्या परिशेषानुमानासम्भवेन तेन साक्षिमात्रसिद्धत्वसमर्थनायोगात् । अत्र साध्ये द्रव्यसंसर्गीणीत्युक्ते गगनसंसर्गितयाऽर्थान्तरता तदर्थमनेकद्रव्येत्युक्तम् । तथापि घटसंसर्गितयाऽर्थान्तरता तदर्थं विशेषगुणशून्येत्युक्तम् । तथापि मुक्तात्मसंसर्गितया अर्थान्तरता तदर्थं युगपदित्युक्तम् । तेषां क्रमेणैव मुच्यमानानां युगपद्विशेषगुणशून्यत्वाभावात् युगपत्संसर्गीणीति वा साध्यं तदा लोकान्तरं प्रतिष्ठमानैर्मनोभिः क्रमेण सम्बध्यमानपृथिव्यादिना सिद्धसाधनतापरिहारार्थं युगपदिति पदम् । बाधपरिहारार्थं विशेषपदम् । मनोभिः संसर्गेण चात्मनि साध्यसिद्धिरित्यतः, परममहत्परिमाणसामान्यमिति लीलावतीकृता उन्नीतानुमाननिरासेन तदुन्नीतस्याप्यनुमानस्य निरस्तप्रायत्वाद्युक्तः पृथगनिरास इति भावेनाह **अलमिति** । तथा हि । उक्तरीत्या वर्णानामप्युक्तविशेषणविशिष्टत्वेन तत्संसर्गसाधनेनार्थान्तरताप्रसक्तेः । दृष्टान्तस्य साध्यवैकल्याच्च । मनसो विशेषगुणशून्यत्वे ह्यात्मनो युगपद्विशेषगुणशून्यद्रव्यसंसर्गित्वं भवेत् । तच्च वेदान्तिनं प्रत्यसिद्धम् । तेन मनसोऽपि विशेषगुणवत्त्वाभ्युपगमात् । न च तत्र प्रमाणाभावः । विप्रतिपन्नं विशेषगुणवत्, मूर्तत्वाद् घटवदित्यनुमानस्यैव तत्र मानत्वात् । न च द्रव्यारम्भकत्वमुपाधिः । विशेषगुणवत्स्वप्यन्त्यावयविषु द्रव्यारम्भकत्वाभावेन साध्याव्यापकत्वात् । न च द्रव्यारम्भकवृत्तिद्रव्यत्वावान्तरजातिमत्त्वमुपाधिः । अन्त्यावयविष्वप्युक्तरूपपृथिवीत्वजातिसद्भावेन साध्यव्यापकत्वात् । मनस्त्वस्य द्रव्यत्वावान्तरजातित्वेऽपि द्रव्यारम्भकावृत्तित्वेन साधनवति पक्षे उक्तोपाध्यभावेन साधनाव्यापकत्वाच्चेति वाच्यम् । आकाशे विशेषगुणवत्त्वेऽपि द्रव्यत्वावान्तरजातेस्तत्राभावेन, आत्मनि विशेषगुणवति च तत्सत्त्वेऽपि द्रव्यारम्भकवृत्तित्वाभावेन आकाशात्मनोः साध्याव्यापकत्वात् । न च बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वमेवोपाधिः । तच्चाकाशेऽप्यस्तीति न तत्र साध्याव्याप्तिरिति वाच्यम् । तथाऽप्यात्मनि साध्याव्याप्तेरपरिहारात् । कामः सङ्कल्प इति मनसो विशेषगुणवत्त्वश्रवणाच्चेति । एवमेवानुमानान्तरं निरसनीयमिति सङ्क्षेपः ।

**वा०र०**— परिमाणस्य प्रत्येकं मेलनेन वा द्रव्यचतुष्टयावृत्तित्वात् बाधितमित्येवोक्तेऽपि विकल्पभेदेन असिद्धसाधनत्वस्यापि प्रसङ्गमुपपादयितुमधिकमाह **अत्र यदीति** मूलम् । **दिक्कालयोरिति** । एकैकाङ्गीकारिणं प्रति तदुभयसाधनायेत्यर्थः । स्पष्टीभविष्यतीति चेदमुत्तरत्रेति ज्ञेयम् । तत्त्वप्रदीपिकोपन्यस्तैतदनुमानविचाररूपनयनप्रसादिन्यनुसारेणाह **अणुत्वे सिद्धसाधनेत्यादिना** । अणुत्व इत्यस्याणुत्वत्व इत्यर्थः । तस्य विशेषगुणशून्यमनोरूपद्रव्याधिकरणानेकव्यक्तिवृत्तित्वान्मनसोऽनेकतया तद्वृत्त्यणुत्वपरिमाणव्यक्तीनामनेकत्वादिति भावः । **अनेकवृत्तीत्युक्त इति** । अनेकव्यक्तीति योज्यम् । **गगनात्मेति** । अत्र गगनात्मवृत्त्यनेकेति पाठः । घटादिपदं तु लेखकायत्तम् । तथा परममहदिति पाठः । परमपदरहितोऽपि क्वचित्पाठः । न च तत्पाठे परममहत्परिमाणवृत्तित्वरूपसाध्यसमर्पकपरमपदस्याग्रहणायोग इति वाच्यम् । गगनादिगतपरिमाणस्य महत्परिमाणत्वेनैव पुरस्कारेण महत्परिमाणेत्येव वक्तुं शक्यत्वात् । परममहत्परिमाणेत्यर्थसिद्धिस्तु पर्यवसानगत्येत्यभिप्रेत्यैव परममहत्परिमाणरूपेति प्राग्व्याख्यातम् । अत एवात्र परमपदपरित्यागेन महदित्येवोक्तमिति ज्ञेयम् । अनेकपदकृत्यमाह **अनेकव्यक्तीति** । **कालदिशोरिति** । उभयसिद्धिरित्यर्थः । अन्यथैकैकाङ्गीकारिणं





प्रत्यन्यतरवृत्तिपरममहत्परिमाणवृत्तितामादाय अर्थान्तरतापत्तिः । यत्तु वर्धमानकृता दिक्कालानेकत्वसाधनपरतयैतदनुमानप्रवृत्तिवर्णनं तत्तदुभयसाधनतया पूर्वोत्तरानुसारासिद्धेरयुक्तमिति भावः । **परिमाणेति** । परममहत्परिमाणेत्यर्थः । **सिद्धसाधनतेति** । परममहत्परिमाणत्वस्य विशेषगुणशून्यानेकपरममहत्परिमाणरूपानेकव्यक्तिवृत्तितायाः सिद्ध्या विशेषगुणशून्यद्रव्ये परममहत्परिमाणमादाय साध्यपर्यवसानायोग इत्यतो द्रव्याधिकरणपदमित्यर्थः । **विश्रान्तीत्यादीति** । तारतम्यविश्रान्तविषयेत्येतदित्यर्थः । विश्रान्तिरादिर्यस्येत्यनेन विषयपदस्य विश्रान्तेरादीत्यनेन तारतम्येत्यस्य प्राप्तेरिति ज्ञेयम् । **ज्ञानत्वादीति** । आदिपदेनेच्छात्वादिपरिग्रहः । ज्ञानादीनां तारतम्यस्येश्वरज्ञानादौ विश्रान्तिसद्भावेन तारतम्याविश्रान्तिविषयज्ञानादिनिष्ठज्ञानत्वादिजातौ व्यभिचार इति तद्वारणाय परिमाणेति विशेषणमित्यर्थः । वर्धमानकृतविकल्पदूषणपूर्वकं विवक्षान्तरेण प्रयोगरचना कृता साऽनुपपन्ना । मूलोक्तसिद्धसाधनत्वानिस्तारात् । मनसोऽपि विशेषगुणवत्वाच्चेत्याशयेन तत्कृतविकल्पपूर्वकदूषणं स्वयमेवाह **अत्रानेकेति** । अन्यतराङ्गीकारिणं प्रति कालं वा दिशं त्वादाय तद्गतैकत्वानधिकरणपरममहत्परिमाणवृत्तित्वेन सिद्धसाधनमित्यर्थः । एवमन्यतरसिद्धिस्वीकारेण ग्रन्थप्रवृत्त्यभ्युपगमान्न सिद्धसाधनदुर्लभत्वम् । **लीलावतीकारीयमिति** । तेन हि चानन्त्यकल्पनमुक्तोत्तरत्वादित्यनेन तथा समाधानमभिहितम् । तत्र चोक्तोत्तरत्वादित्यनेन आत्मनामानन्तेऽप्यात्मत्वेनोपसङ्ग्रहवदविरोधादनेकत्वेऽपि क्रियोपाध्युपनायकः कालः संयोगोपाध्युपनायका दिगिति न नवैवेति व्याघात इति पूर्वोक्तसमाधेरभिधानादिति भावः । **नन्वेवमिति** । कालदिशोरपि बहुत्वादित्यर्थः । **आधुनिकोन्नीतेति** । मानमनोहरकाराद्युन्नीतेत्यर्थः । अनुमानान्तराणीवेति पाठः । **विवादाध्यासितानीति** । एतच्च तत्त्वप्रदीपिकायामुदाहृतम् । तन्नयनप्रसादादिन्यनुसारेण अनुमानविचारः । दूषणं मूलोक्तम् । अन्तरेणापि दिक्कालौ व्यापकपञ्चाशद्वर्णप्रधानेनार्थान्तरत्वादित्यादि तत्त्वप्रदीपिकोक्तं च । अवशिष्टं तत्त्वप्रदीपिकानुसार्येवेति ज्ञेयम् । द्वितीयपरिच्छेदे नयनप्रसादिनी मध्ये-मध्येऽवलोक्यास्ति । (तत्पुस्तकस्य समीपे अभावात् ।) वर्धमाने दिगन्यत्वेन साध्यविशेषणान्न सिद्धसाधनमित्युक्तम् । तत्तु तदनुमानस्य कालमात्रसाधनतया योजनानुसारेण ज्ञेयम् । अत्र तु दिक्कालोभयसाधनाय प्रयोगान्न दिगन्यत्वेन विशेषणमावश्यकमिति ज्ञेयम् । यद्यपि लीलावत्यां विवादाध्यासितान्यव्यापकद्रव्याणि युगपद्विशेषगुणशून्यैकद्रव्यसंसर्गीणीति प्रयोग उदाहृतः तथाप्यत्राव्यापकपदस्थाने मूर्तपदोपादानं विशेषगुणशून्यैकैकद्रव्यसंसर्गित्वे साध्ये सिद्धसाधनापत्तेरनेक इत्यनेकपदोपादानं चेति ज्ञेयम् । मूर्तद्रव्याणीत्येव पक्षीकारे मनःसंसर्गेण सिद्धसाधनतेति तत्परिहाराय मनसोऽपि सङ्ग्रहार्थविवादाध्यासितानीत्युक्तम् ।

**तदुन्नीतेति** । तेन लीलावतीकृता कालदिङ्निरूपणप्रकरणान्ते उदाहृतेत्यर्थः । अत्र विशेषगुणशून्यानेकद्रव्यसंसर्गित्वसाध्यमप्रसिद्धमिति अप्रसिद्धविशेषणता । मनसामनेकत्वेनात्मनि तत्प्रसिद्ध्यङ्गीकारे कालदिशोरनेकत्वमादाय साध्यपर्यवसाने नवैवेत्यस्य व्याघातः । आत्मत्वेनात्मनामिव कालत्वदिक्त्वाभ्यामेकीकारे मनसामपि नियामकाभावेन मनस्त्वेनैकीकारापत्त्याऽप्रसिद्धविशेषणत्वानुद्धारप्रसङ्ग इति सत्येव दोषे दूषणान्तरमाह **उक्तरीत्येत्यादि** । **तत्सत्त्वेऽपीति** । तस्याः द्रव्यत्वावान्तरजातेः सत्त्वेऽपीत्यर्थः । सत्त्वेऽपीत्यनन्तरं





तस्या इति बुद्ध्या विविच्य वर्तते तस्या इति शेष इत्यप्याहुः । **अनुमानान्तरमिति** । विवादाध्यासितानि कार्याणि निरवयवेन्द्रियग्राह्यविशेषगुणजातीयवर्जितसाधारणद्रव्याधिकरणजन्यानि कार्यत्वात् अभिन्नतन्तुहेतुकद्रव्यगुणकर्मवत् इति वेत्युक्तं दिक्साधकमनुमानम् । अत्र च दृष्टान्तेतरद्रव्यगुणकर्मसङ्ग्रहाय विवादाध्यासितानीत्युक्तम् । साधारणद्रव्यरूपाधिकरणजन्यानीत्येवोक्ते आकाशमादाय अर्थान्तरतेति निरवयवेन्द्रियग्राह्यविशेषणवर्जितेत्युक्तम् । शब्दलक्षणतादृशविशेषगुणवर्जित आत्मापीति तमादायार्थान्तरतानिवृत्त्यै विशेषगुणजातीयेति । सुखादिकं च निरवयवेन्द्रियग्राह्यमिति युक्तस्तत्परिहारः । न च शब्दसुखादिभिर्व्यभिचारः । एवंभूताधारजन्यत्वेन तेषामपि पक्षत्वात् । शब्दादिविशेषगुणाधारजन्यत्वेन सिद्धस्याप्येवंभूताधारजन्यता तु घटादावसर्वज्ञकर्तृके सर्वज्ञकर्तृकतावदविरोधात् युक्तैव । अत एवात्रात्मनि ज्ञानमिह नीलत्वमिह कर्मणि चलनत्वमिह नभसि खद्योत इत्यभिन्नाकारमाधारत्वमवभासते तच्च दिगाख्याधाररूपं समवायात्स्वरूपप्रत्यासत्तिबलेनात्माद्यवच्छेदकमिति दिक्सिद्धिरित्यनुमानमित्यर्थः । **निरसनीयमिति** । साधारण्यं किं सकलकार्यापेक्षयोत पक्षाक्षेपया । नोभयथापि दृष्टान्तसम्भवः । अभिन्नतन्तुहेतुकद्रव्यगुणकर्मणां सकलकार्यापेक्षया वा पक्षापेक्षया वा साधारणाधारजन्यत्वाभावात् । अभिन्नतन्तोस्तन्निष्ठद्रव्यगुणकर्मसाधारणत्वेऽप्युक्तविधसाधारणत्वाभावात् साधारणपदस्य समभिव्याहृतपदत्वमाश्रित्य दृष्टान्ते परत्वे, सम्भवमात्रस्य पक्षधर्मताबलाद्विवादाध्यासितकार्यप्रतियोगिकस्य कारणस्य सिद्धिरित्यङ्गीकारेऽपि तादृशकालमादाय सिद्धसाधनत्वमेव । न चेहात्मनि ज्ञानमितिवदिह काले संयोग इति प्रतीतिबलात् कालभिन्नतदवच्छेदकत्वसिद्धिरिति वर्धमानकृता तत्परिहारः कृत इति वाच्यम् । इह काले संयोग इति प्रत्ययबलेन कालावच्छेदेनापि दिग्रूपपदार्थान्तराङ्गीकारे इह देशसंयोग इति प्रतीतिबलेन दिगवच्छेदकवस्त्वन्तरसिद्ध्यापातात् । न च तत्र कालस्यावच्छेदकता तर्हि तत्र कालस्यैवावच्छेदकत्वसम्भवे दिक्कल्पनायां साधकाभावः । दिशः स्वावच्छेदकत्वं चेत्कालस्यापि स्वावच्छेदकतया प्रतीतिरन्यथासिद्धेति सिद्धसाधनानुद्धारप्रसङ्गः । किञ्च दिशः इहेति प्रत्ययविषयत्वे प्रत्यक्षत्वप्रसङ्गः । व्यवसायादि पारतन्त्र्येण परमाण्वादिषु मनआदिप्रवृत्तिवत् अनुमानपारतन्त्र्येणेहेति प्रत्ययोपपत्तिरिति तु दिक्सिद्धिमूलककल्पनेति दिक्सिद्धेः प्राक् तदनवकाशः । वर्गानादाय सिद्धसाधनत्वं विस्पष्टमेवेति निरसनीयमिति भावः ।

**स०व्र०— अत एवेति** । कालादिगतस्य परिमाणस्य पक्षीकारे सिद्धसाधनत्वात् परममहत्परिमाणस्य द्रव्यचतुष्टयवृत्तित्वसिद्धेः दित्त्वेनैक्यमुपादाय प्रयोगे परिमाणद्वयस्य द्रव्यचतुष्टयवृत्तित्वबाधादित्यर्थः । चतुष्टयसम्बन्धिपरिमाणस्य पक्षीकारान्नोक्तदोष इत्यत आह **आश्रयासिद्धिश्चेति** । **विशेषगुणशून्येति** । विशेषगुणशून्यद्रव्ययोरधिकरणयोः परममहत्परिमाणलक्षणा याऽनेकव्यक्तिस्तद्वृत्तीत्यर्थः । **विश्रान्तिविषयजातित्वादिति** । विश्रान्तिविषयीभूतपरिमाणं तन्निष्ठजातित्वादित्यर्थः । **मनःसिद्ध्याऽपीति** । मनसां विशेषगुणशून्यानामनेकत्वेन तत्परिमाणवृत्तितामादायापि साध्यपर्यवसानसम्भवादिति भावः । **निराकरिष्यमाणत्वेनेति** । समयपादे 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयत' इत्यादिनेति शेषः । **तस्य इति** । परिमाणत्वावान्तरजातिरिति द्वितीयपक्षस्य समयपादे निराकरिष्यमाणत्वादित्यर्थः । परिमाणत्वावान्तरसामान्यस्येति वा । **वर्णसिद्ध्येति** । वर्णानामपि





विशेषगुणशून्यत्वादनेकत्वाच्चेति भावः । **अतिप्रसङ्गश्चेति** । विशेषगुणशून्यं परममहत्परिमाणं तृतीयं द्रव्यं सिद्ध्येतेति भावः । ननु बहुपदप्रक्षेपेऽपि न तृतीयद्रव्यसिद्धिः येनातिप्रसङ्गः स्यात् किं तु कालदिशोरेव बहुत्वं सिद्ध्येदित्याशङ्कते **अस्तु कालस्येति** । **तर्हि दिशा कालेन वेति** । एकैकस्य बहुत्वात् विशेषगुणशून्यत्वाच्चेति भावः । **हेतुदृष्टान्तयोश्चेति** । समयपादे परिमाणतारतम्यस्याविश्रान्तिरेव वक्ष्यत इति हेतुदृष्टान्तयोरनुपपत्तिरिति । अनेकवृत्तिजातेरपि तत्रैव निराकरिष्यमाणत्वेन दृष्टान्तानुपपत्तिश्चेत्यर्थः ।

**विठ्ठल०—— द्रव्यचतुष्टयवृत्ती**त्यनेनाकाशकालदिगात्मरूपद्रव्यचतुष्टयसिद्धिरिति भवतीति परस्याशयः । **अणुत्ववदिति** । अणुत्वस्य पार्थिवपरमाण्वादिचतुष्टयवृत्तित्वादिति भावः । किमत्राकाशात्मगतपरिमाणपक्षीकारेण तस्य द्रव्यचतुष्टयवृत्तित्वं साध्यते उत दिक्कालगतपरिमाणपक्षीकारेणेति विकल्पं मनसि निधायाद्यं निराह **अत एवेति** । **एकैकेति** । तत्कथमाकाशात्मगतपरिमाणयोर्द्रव्यचतुष्टयवृत्तित्वमिति भावः । द्वितीयं निराह **अत एवेति** । बाधादेवेत्यर्थः । **आश्रयासिद्धिरिति** । दिक्कालयोरद्याप्यसिद्धेरिति भावः । परममहत्परिमाणसामान्यपक्षीकारेणानेनैव हेतुना द्रव्यचतुष्टयवृत्तित्वं साध्यत इति चेन्न । वक्ष्यमाणन्यायेनास्यापि दोषसम्भवादिति भावः । **विशेषगुणशून्यतेति** । विशेषगुणशून्ये द्रव्ये अधिकरणे ययोः परिमाणयोः ते च एकव्यक्ती च तद्वृत्तीत्यर्थः । अनेनोक्तजात्यधिकरणपरिमाणद्वयाश्रयविशेषगुणहीनद्रव्यसिद्धौ आत्माकाशयोर्विशेषगुणवत्त्वेन तदयोगात् दिक्कालयोः सिद्धिरिति भावः । **परिमाणेति** । परिमाणतारतम्यविश्रान्तिपर्यवसानस्य विषयभूतं यत्परिमाणं तन्निष्ठजातित्वादित्यर्थः । **अणुपरिमाणेति** । अणुपरिमाणापेक्षया न्यूनपरिमाणाभावेन तन्निष्ठजातेरपि परिमाणतारतम्यविश्रान्तिविषयजातित्वमस्ति । तथा विशेषगुणशून्यानेकमनोगतानेकपरिमाणव्यक्तिवृत्तित्वमस्तीति द्रष्टव्यम् । **मनःसिद्ध्यापीति** । मनसां विशेषगुणशून्यानां अनेकत्वेन तत्परिमाणवृत्तिसामान्यमादायापि साध्यपर्यवसाने सम्भवेनार्थान्तरत्वादिति भावः । **निराकरिष्यमाणत्वेनेति** । न सर्वधर्म एकोऽस्तीत्यादिना वैशेषिकाधिकरण इत्यर्थः । सतोऽनेकव्यक्तिवृत्तिसाधने बाधः । अनेकानुगतसामान्यस्यैव परेण पक्षत्वाभ्युपगमादाश्रयासिद्धिश्चेति भावः । **तस्येति** । परिमाणत्वावान्तरजातिरिति द्वितीयपक्षस्य वैशेषिकनयेन महत्वमणावपीत्यादिना निराकरिष्यमाणत्वादिति भावः । **वर्णेति** । वर्णानामपि परममहत्परिमाणवत्त्वाद्विशेषगुणशून्यत्वादनेकत्वाच्चेति भावः । **अतिप्रसङ्गश्चेति** । विशेषगुणशून्यपरममहत्परिमाणाश्रयबहुद्रव्यसिद्धिप्रसङ्गेत्यर्थः । ननु बहुद्रव्यसिद्धिर्नानिष्टादिकालबहुत्वस्याङ्गीकृतत्वादिति शङ्कते **अस्तु कालस्येति** । दिशाकाले एकैकस्यापि बहुत्वाद्विशेषगुणशून्यत्वाच्चेति भावः । तर्ह्येनेकेति पदमपि मास्त्वित्यत आह **अन्यतरसाधनेति** । कालसाधने दिक्साध्यादिकसाधने कालसिद्ध्या चार्थान्तरताप्रसङ्गादित्यर्थः । **हेतुदृष्टान्तयोरिति** । महत्त्वस्यापि विभ्रमः दृश्यते अनन्त इत्येव तथा अनन्त्यमणावपि अणुत्वं च महत्वं चेत्यादिना परिमाणविश्रान्त्यभावस्य प्रतिपादनेन हेत्वसिद्धिः । अनेकवृत्तिजातेरपि निराकरिष्यमाणत्वेन तद्दृष्टान्तानुपपत्तिश्च वक्ष्यत इत्यर्थः । किञ्चास्यानुमानस्य परीत्या पार्थिवादिपरमाणु-





गतपरिमाणवृत्तिजातौ व्यभिचारः । तत्रोक्तहेतोः सत्त्वेऽपि साध्याभावात् परमाणूनां विशेषगुणयुक्तत्वात् विपक्षे बाधकाभावेनाप्रयोजकत्वाच्चेत्यभिप्रेत्याह **अलं प्रपञ्चेनेति** ।

चषकः— **निराकरिष्यमाणत्वेनेति** । वैशेषिकपरीक्षायामिति पूरणीयम् । **तस्या इति** । परिमाणत्वावान्तरजातेर्वैशेषिकपरीक्षायां प्रत्याख्यास्यमानत्वादित्यर्थः । तस्येत्यपि पाठमुपेत्य द्वितीयपक्षस्येत्यर्थः । परिमाणवृत्त्यणुत्वादेः परिमाणत्वावान्तरस्येति वार्थ इत्यप्यर्थापयन्ति **वर्णसिद्धश्चेति** । वर्णानामपि परममहत्परिमाणविशेषगुणशून्यत्वानेकत्वाश्रयत्वादिति भावः । **अतिप्रसङ्गेति** । परममहत्परिमाणविशेषगुणवैधुर्यबहुत्वविशेषितानां द्रव्याणां सिद्धिप्रसङ्ग इत्यर्थः । तथा च द्रव्याणि नवैवेति नियमो नोपपद्यत इति भावः । **वक्ष्यत इति** । अविरोधलक्षणे वैशेषिकपरीक्षायां 'न महत्त्वस्यापि विश्रमः । दृश्यतेऽनन्त इत्येव तथानन्त्यमणावपि' इत्यादिना परिमाणोत्कर्षापकर्षयोर्निरवधिकत्वस्यैवाभिधास्यमानत्वेन परिमाणतारतम्यस्य विश्रान्तिराहित्यसिद्ध्या विश्रान्तिघटितहेतुताऽवच्छेदकावच्छिन्नस्य पक्षवृत्तिताराहित्येनासिद्धिर्निदर्शने च साधनवैकल्यमित्यर्थः । अलमित्यस्याभिप्रेतार्थप्रपञ्चनं निबन्धान्तरदिशाऽवसेयम् ।

**॥ इति अपरमतोक्तप्रकारस्य दूषणम् ॥**
**॥ इति कालविषयानुमानानां विशेषतो निराकरणे परभाष्यव्याख्यानां साधारणदोषेण दूषणम् ॥**
**॥ इति कालविषयानुमानानां साधारणदोषेण दूषणम् ॥**
**॥ इति कालस्य नानुमानवेद्यत्वम् ॥**
**॥ इति साक्षिणस्त्रैकालिकाबाध्यार्थगोचरत्वे आदौ कालसिद्धिः ॥**

* * *

**॥ अथ साक्षिणस्त्रैकालिकाबाध्यार्थगोचरत्वे 'गगनादेः सकलप्रपञ्चस्य त्रैकालिकाबाध्यत्वं साक्षिसिद्धं' इत्यर्थस्य उपसंहारपूर्वकं विवरणम् ॥**

१६७ **सु०—** गगनादेस्सकलप्रपञ्चस्य त्रैकालिकाबाध्यत्वं साक्षिसिद्धमित्युक्तमर्थमुपसंहरन्विवृणोति **अत इति ।**

## अनु०— अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम् ।

न विद्यते दोषः कारणं यस्य ज्ञानस्य, तेन **प्रतीतस्य** विषयीकृतस्य अदोषेण प्रत्यक्षादिना वा **प्रतीतस्य** गगनादेः प्रपञ्चस्य, **सत्यत्वं** त्रैकालिकाबाध्यत्वं **साक्षिणा मतं** सिद्धम् । प्रामाण्यग्रहणादिनेति शेषः ।





१७४ **परि०—— प्रामाण्यग्रहणादिनेति** । स्वविषये साक्षात् इति आदिपदम् ।

**यादु०—— प्रामाण्यग्रहणादिना** इत्यत्र आदिपदेन क्वचित्साक्षादपीत्यस्य सङ्ग्रहः ।

**आनन्दः——** नन्वत इत्येतत्पुनरुक्तं सत्यत्वमित्यनेनैवास्यार्थस्योक्तत्वात् । न चायमुपसंहार इति वाच्यम् । तथा सति सत्यत्वं सिद्धमेवेति वाच्यं स्यात् । सत्यत्वमात्रस्य परेणाङ्गीकृतत्वाच्चेत्यत आह **गगनादेरिति** । अदोषेत्यत्र ज्ञानस्य विशेष्यत्वे प्रतीतस्येत्यनुपपन्नमित्यत्राह **न विद्यत इति** । नन्वेवमपि बाह्यप्रपञ्चस्य सत्यत्वं न सिद्ध्यतीत्यत आह **अदोषेणेति** । **प्रामाण्येति** । अत्रादिपदेन साक्षात्सत्यत्वं ग्राह्यम् ।

**शे०वा०——** ननु सर्वकालेष्वबाध्यत्वं साक्षिणैव प्रतीयत इत्युक्तस्यैव साक्षिणः प्रामाण्यग्रहणादिना सकलप्रपञ्चसत्यत्वग्राहकत्वस्याभिधानात् 'अतोऽदोषप्रतीतस्ये'त्युत्तरानुव्याख्यानवैयर्थ्यमित्यतः तदुपसंहारार्थत्वान्नानर्थक्यमित्यभिप्रेत्य तत्परतयोत्तरवाक्यं सङ्गमयति **गगनादेः प्रपञ्चस्येति** । अदोषप्रतीतस्येत्यस्य सार्थक्यमाह **विवृणोतीति** । उक्तमिति वर्तते । विवरणनिमित्तं चोत्तरत्र आकर एव स्पष्टम् । अदोषशब्देनान्यपदार्थतया ज्ञानलाभात् ज्ञानविषयत्वार्थकप्रतीतपदास्वारस्यमित्यतो विशिष्टवाचकानां पदानां विशेषणवाचकपदसन्निधाने विशेष्यमात्रपरत्वव्युत्पत्तेः तत्र प्रतीतशब्देन विषयीकृतत्वमात्रमेव ग्राह्यमित्याशयेनाह **प्रतीतस्य विषयीकृतस्येति** । प्रतीतपदस्वारस्यार्थं पक्षान्तरमाह **अदोषेण प्रत्यक्षादिना वेति** । 'सत्यत्वं गगनादेश्चे'त्यतो गगनादेरित्यस्यानुवृत्तिमाश्रित्योक्तं **गगनादेरिति** । गगनादेरित्युक्त्या साक्षात्साक्षिसिद्धानां गगनादीनामेव ग्रहणे सकलप्रपञ्चसत्यत्वस्य साक्षिसिद्धतायाः सर्वकालेष्वित्युक्ताया अनुपसंहारप्रसङ्गात् गगनादेरित्यस्य तात्पर्यमाह **प्रपञ्चस्येति** । पूर्वं सर्वकालेष्वबाध्यत्वस्यैव साक्षिसिद्धत्वोक्तेस्तदुपसंहारत्वसिद्धये उपक्रमानुसारेण सत्यत्वशब्दं व्याचष्टे **सत्यत्वं त्रिकालाबाध्यत्वमिति** । अतोऽदोषप्रतीतस्येत्यस्योक्तोपसंहारत्वद्योतकतया मतशब्दार्थमाह **मतं सिद्धमिति** । ननु साक्षात्साक्षिविषयगगनादेः त्रिकालाबाध्यत्वग्राहकत्वसम्भवेऽपि कथं स्वाविषयस्य कुम्भादेस्त्रिकालाबाध्यत्वग्राहकत्वं साक्षिण इत्यत आह **प्रामाण्यग्रहणादिनेति शेष इति** । साक्षादपि इति आदिपदार्थः ।

**वा०र०—— आकर एवेति** । यदि तर्हि ज्ञानस्वरूपग्राहक इत्यादिनोक्तातिप्रसङ्गवारणाय प्रामाण्यग्रहणप्रकारविवरणपरतया अतो दोषप्रतीतस्येतद्योजनाद्विवरणनिमित्तमिति प्रसङ्गरूपमुत्तरत्र स्पष्टमित्यर्थः । **ज्ञानलाभादिति** । न विद्यत इत्युक्तरीत्या तल्लाभाङ्गीकार इत्यर्थः । **व्युत्पत्तेरिति** । 'सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरि'त्यादौ तथात्वावगतेरिति भावः । अत एव 'येनैव ज्ञानं गृह्यत' इत्यादौ गृह्यत इत्यस्य विषयीक्रियत इत्यर्थे मणिटीकादावुक्तम् इति ज्ञेयम् । व्युत्पत्तेरत्र प्रतीते इति पाठः । मूलकोशे सत्त्वाद्युक्तत्वाच्च । तत्रेति तु लेखकप्रयुक्तम् । **सम्भवेऽपीति** । साक्षिण इति वक्ष्यमाणमत्रापि सम्बध्यते । **कुम्भादेरिति** । तस्य साक्षात्साक्षिविषयत्वाभावादिति भावः ।





**विट्ठल०—** **प्रामाण्याग्रहणादिनेत्यादि**पदेन क्वचित्साक्षादित्यस्य सङ्ग्रहः । यथा चैतत्तथोपपादितं सर्वकालेष्वबाध्यत्वं साक्षिणैव प्रतीयत इत्यत्रेति ।

**चषकः—** **प्रामाण्यग्रहणादिनेति** । आदिपदं साक्षादपीत्यस्य सङ्ग्राहकम् । घटादीनां त्रिकालाबाध्यत्वं प्रामाण्यग्रहणद्वारा साक्षी गृह्णाति गगनादीनां तु साक्षादिति विवेकः ।

**१६८ सु०— अयम(त्रा)भिप्रायः । आकाशकालदिगात्ममनांसि सुखादयश्च साक्षात्साक्षिसिद्धाः । तदितरे तु पदार्था यथास्वम्(यथायथम्) इन्द्रियलिङ्गशब्दगम्याः । ज्ञानं च भावाभावलक्षणं स्वविषयं सत्त्वेनैवावगाहते, नासत्त्वेन, नाप्युदासीनेन रूपेण । न चैवं घटोऽस्ति घटो नास्तीतिप्रत्ययानुपपत्तिः पौनरुक्त्याद्व्याघाताच्चेति युक्तम्, घटोऽस्तीति देशकालविशेषसम्बन्धिसत्ताविषयत्वात्, क्वचिद्विपरीताकाङ्क्षाव्यवच्छेदार्थत्वात्, क्वापि व्याख्यानव्याख्येयभावात् । नास्तीत्यस्य च देशकालविशेषसम्बन्धिसत्ताप्रतिषेधपरत्वात् । न हि सता सकलदेशकालसता भवितव्यमिति नियामकमस्ति ॥ ज्ञानगतं च याथार्थ्यलक्षणं प्रामाण्यं ज्ञानग्राहकेणैव गृह्यते । ज्ञानग्राहकश्च साक्षीत्यविवादं वादिप्रतिवादिनोः । तथा च साक्षिणा ज्ञानप्रामाण्यं गृह्णता तद्विषयस्य सकलप्रपञ्चस्य त्रैकालिकाबाध्यत्वलक्षणं सत्यत्वमेव गृहीतं भवति । यदि हि ज्ञानगोचरस्य नित्यस्य वा अनित्यस्य वा सर्वगतस्य वा असर्वगतस्य वा अर्थस्य स्वदेशकालप्रकारोपाधावसत्त्वाऽऽवेदनलक्षणो बाधः स्यात्, कोऽर्थस्तदा ज्ञानप्रामाण्यं साक्षिणा प्रमितमित्यस्येति ।**

**परि०—** ननु स्वस्वविषयमात्रग्राहिभिः प्रमाणैः कथं विषयसत्यत्वसिद्धिः । प्रामाण्यग्राहकेण वा कथं तत्सिद्धिरित्यत आह **अयमत्राभिप्राय इति** । **पौनरुक्त्याद्व्याघाताच्चेति** । घट इत्यनेनैव घटसत्त्वप्राप्तेः पुनरस्तीति पौनरुक्त्यं नास्तीति च व्याहतमित्यर्थः । घट इत्यनेन त्रैकालिकनिषेधाप्रतियोगित्वरूपसत्त्वलाभेऽपि देशकालविशेषसम्बन्धित्वालाभात् तदर्थमस्त्यासीदित्यादिप्रयोग इत्यादिभावेन परिहरति **घटोऽस्तीति** । **विपरीतेति** । घट इत्युक्तौ नास्तीति विपरीताकाङ्क्षापि भवतीति तन्निरासार्थमस्तीत्याद्युक्तिरित्यर्थः । ननु यदुक्तं घटोऽस्तीत्यत्र घटपदेन सत्त्वमात्रप्राप्तावपि गृहादिदेशविशेषे वर्तमानादिकालविशेषे सत्त्वमसत्त्वं वा वक्तुमस्तीत्याद्युक्तिरतो न पौनरुक्त्यादीति । तन्न । सत्त्वे सर्वत्र सत्त्वस्यैव प्राप्तेः । उक्तं हि वाचस्पत्ये । यत् सत् तत् सदा सर्वत्र सदेव । न हि रूपं कदाचित् कुत्रचित् गन्धो भवतीत्यत आह **न हीति** । एवं साक्ष्यादेः





स्वविषये साक्षात्सत्त्वावगाहित्वमुक्त्वा साक्षिणः प्रत्यक्षादिप्रामाण्यग्रहणद्वाराऽपि सर्वसत्त्वावगाहित्वमाह **ज्ञानगतं चेति** । अर्थसत्त्वलाभायोक्तं **याथार्थ्यलक्षणमिति** । **स्वदेशेत्यादि** । भूतलादिस्वदेशे वर्तमानादिस्वकाले घटत्वादिस्वधर्मेण कपालादि(रूप)स्वसमवायिलक्षणोपाधावित्यर्थः । यद्वा स्वयं यद्देशे यत्कालेऽस्ति तादृशदेशकाललक्षणे उपाधौ आश्रय इत्यर्थः । इत्यस्येतीतिशब्दस्य अयमत्राभिप्राय इति पूर्वेणान्वयः ।

**गु०दी०—** **सत्त्वेनैव** इत्यत्र अबाध्यत्वरूपपारमार्थिकसत्त्वेनैवेत्यर्थः ।

**यादु०—** **आकाशकालदिगिति** । यद्यपि नाव्याकृताकाशव्यतिरिक्ता दिक् सिद्धान्तेऽस्ति तथापि आकाशभागानां दिक्त्वेनाभिमतत्वात् तेषामेवात्र दिक्शब्देन ग्रहणमिति मन्तव्यम् । **पौनरुक्त्यादित्यादि** । घटोऽस्तीत्यत्र घट इत्यनेनैव तदस्तित्वस्याप्यभिधानात् पुनरस्तीति प्रयोगे पौनरुक्त्यम् । घटो नास्तीत्यत्र तु घटपदेन तदस्तिताऽभिधानान्नास्तीति तन्निषेधे व्याघात इत्यर्थः । प्रयोजनसद्भावान्न पौनरुक्त्यमित्याशयेन प्रयोजनान्याह **घटोऽस्तीत्यादिना** । घटपदेनैव प्राप्तां सत्तामस्तीत्यत्र प्रकृत्याऽनूद्य प्रत्ययेन तस्य देशकालविशेषसम्बन्धो बोध्यते । अतो न पौनरुक्त्यमित्यर्थः । **क्वचिद्विपरीतेति** । घट इत्येवोक्ते नास्ति किमिति विपरीताकाङ्क्षाया अपि कदाचित्सम्भवात् तद्व्यवच्छेदार्थमस्तीति वचनमित्यर्थः । ननु यदाऽत्र भूतले किमस्तीति प्रश्ने सत्युच्यते घटोऽस्तीति, तदा प्रकरणवशादेव घटसत्ताया देशकालविशेषसम्बन्धित्वस्यापि घटपदेनैव बोधसम्भवादस्तीति व्यर्थमित्यत आह **क्वापीति** । **नास्तीत्यस्य चेति** । घटो नास्तीत्यत्र घटपदेन तत्सत्त्वमात्रलाभेऽपि नास्तीत्यनेन तस्य देशकालविशेषसम्बन्धितैव प्रतिषिध्यते । तथा चान्यत्र देशे काले च सन् घटोऽत्रेदानीं नास्तीत्यर्थो लभ्यत इति को विरोध इत्यर्थः । ननु यस्मिन्देशे काले च घटसत्ता नास्तीत्यनेन प्रतिषिध्यते, तस्मिन्नपि देशे काले च सत्ता घट इत्यनेन सामान्यतोऽभिधीयते अतो विरोधतादवस्थ्यमित्यत आह **न हि सतेति** । तथा च निषेधाधिकरणदेशकालभिन्नदेशकालाधिकरणतयाऽपि सामान्यतः सत्त्वाभिधानस्य पर्यवसानसम्भवान्न विरोध इति भावः । **स्वदेशकालेति** । स्वस्य देशकालप्रकारलक्षणाधिकरण इत्यर्थः । यद्यपि प्रकारोऽनेन प्रकारेण नास्तीति प्रतीत्या निषेध्यतावच्छेदकरूप एव नाधिकरणम् । तथाऽपि तस्याप्यधिकरणत्वविवक्षयेत्थमुक्तमित्यवगन्तव्यम् ।

**वं०प०—** **यथा स्वमिति** । स्वस्वरूपानुसारेणेत्यर्थः । **एवमिति** । यदि स्वविषयं सत्त्वेनैवावगाहत इत्युच्यत इत्यर्थः । **याथार्थ्यलक्षणमिति** । यथावस्थितभावाभावलक्षणज्ञेयविषयीकारित्वरूपं प्रामाण्यमित्यर्थः ।

**आनन्दः—** ननु साक्षिसिद्धमित्यस्य प्रामाण्यग्रहणादिनेत्यस्याव्यवस्थितत्वादेक एव प्रकारोऽस्तु किं द्वयोराश्रयणेनेतरप्रमाणानां वैयर्थ्यं चेत्यत आह **अयमभिप्राय इति** । ननु साक्षिण इन्द्रियादीनां च स्वरूपेण





पदार्थग्राहकानां कथं तत्सत्यताग्राहकतेत्यत आह **ज्ञानं चेति** । ननु विशेषे भासमाने सामान्यं भासत इत्यस्ति नियमः । तथा च घटादीनां सद्विशेषत्वात्तेषु भासमानेषु सत्त्वसामान्यं भासत एव । तथा च घट इत्यनेन सत्ताया उक्तत्वात् पुनरस्तीत्येतत्पुनरुक्तम् । एवं घट इत्यनेन सत्त्वरूपस्यार्थस्योक्तत्वान्नास्तीत्येतत् व्याहतमित्याशङ्क्य निषेधति **न चैवमिति** । घटोऽस्तीति सत्त्वस्य घट इत्यतो नोक्तावपि विशेषबाधाद्यर्थं तत्प्रयोग इति भावः । ननु यत्सत् तत्सर्वस्मिन्नपि देशे काले सदेवेति निषेधो युज्यत इत्यत आह **न हीति** । नन्वस्त्वेवं ज्ञानस्वभावः । तथापि प्रामाण्यस्य परस्त्वात् कथं साक्षिणस्तद्ग्राहकत्वेन सत्त्वसाधकतेत्यत आह **ज्ञानगतं चेति** । साक्षिणा प्रामाण्यग्रहणेऽपि सत्त्वं कुत इत्यत आह **यदि हीति** ।

**शे०वा०**— अत्र सर्वस्मिन्प्रपञ्चे साक्षात्प्रामाण्यग्रहणद्वारा च अबाध्यत्वं साक्षी गृह्णातीत्युच्यते । तदयुक्तम् । गगनादेः साक्षिविषयतया तदबाध्यत्वग्राहकत्वोपपत्तावपि घटादेः साक्ष्यविषयतया तदंशे प्रामाण्यग्रहणमद्वारीकृत्य साक्षिणस्तदबाध्यत्वग्राहकत्वासम्भवात् । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु न प्रामाण्यग्राहकत्वेन विषयसत्यत्वग्राहकत्वं सम्भवति । ज्ञानस्यासत्त्वेन वा सत्त्वासत्त्वौदासीन्येन वा स्वविषयग्राहकत्वेन, सत्त्वेन तद्ग्राहकत्वाभावेन, प्रामाण्यग्रहणद्वारा ज्ञानविषयासत्त्वस्य स्वरूपमात्रस्य वा सिद्धावपि तत्सत्यत्वसिद्धेरयोगात् । न च ज्ञानं स्वविषयं सत्त्वेनैव गृह्णाति न तूक्तरीत्या इति प्रामाण्यग्रहणद्वारा सत्त्वस्यैव सिद्धिरिति वाच्यम् । तथा सति पौनरुक्त्यादिप्रसङ्गेन घटोऽस्तीत्यादिप्रत्ययानामनुपपन्नत्वप्रसङ्गात् । अस्तु वा ज्ञानस्य सत्त्वेनैव स्वविषयग्राहकतया प्रामाण्यग्राहकस्य स्वविषयाबाध्यत्वग्राहकत्वम् । तथाऽपि न साक्षिणो विषयाबाध्यत्वसाधकत्वप्राप्तिः । तेन प्रामाण्यग्राहकस्यानुमानस्य विषयाबाध्यत्वसाधकत्वप्राप्तेः । न च साक्षिण एव प्रामाण्यग्राहकत्वात् तत्प्राप्तिरिति वाच्यम् । नियामकप्रमाणाभावेन साक्षिणः प्रामाण्यग्राहकत्वासिद्धेः । न च प्रामाण्यस्य स्वतस्त्वेन ज्ञानग्राहकग्राह्यत्वात् तत्सिद्धिः । ज्ञानग्राहकमात्रग्राह्यत्वेन स्वतस्त्वोपपत्त्या तेन साक्षिग्राह्यत्वासिद्धेः । न च साक्षिण एव ज्ञानग्राहकत्वात् तस्यैव प्रामाण्यग्राहकत्वमिति वाच्यम् । साक्षिणो ज्ञानग्राहकत्वस्यैवासिद्ध्या मूलशैथिल्यात् । अस्तु वा साक्षिण एव ज्ञानग्राहकत्वेन प्रामाण्यग्राहकत्वम् । तथाऽपि न तेन तज्ज्ञानविषयघटादिसत्त्वसिद्धिः । साक्षिणा घटादिज्ञानप्रामाण्ये गृहीतेऽपि तज्ज्ञानविषयस्य घटादेरसत्त्वावेदनलक्षणबाधाभ्युपगमे दोषाभावादित्यतोऽभिप्रायमाह **अयमभिप्राय इति** । **पौनरुक्त्यादिति** । घटपदेन प्रतिपादितायाः सत्ताया अस्तीत्यनेनापि प्रतिपादनादिति भावः । घटो नास्तीत्यत्र घटपदेन प्रतिपादितयाऽस्तितया तन्नास्तितया व्याहतत्वादित्याह **व्याघाताच्चेति** । प्रयोजनसद्भावान्न पौनरुक्त्यमित्याशयेन प्रयोजनमाह **घटोऽस्तीत्यादिना** । घटपदेन प्राप्तायाः सत्ताया अस्तीत्यत्र प्रकृत्याऽनूद्य प्रत्ययेन तस्या देशकालविशेषसम्बन्धबोधनान्न पौनरुक्त्यमित्याशयः । **क्वचिदिति** । घट इत्येवोक्ते नास्ति किमिति विपरीताकाङ्क्षाया अपि कदाचित्सम्भवात् तद्व्यवच्छेदार्थमस्तीति वचनमित्यर्थः । ननु यदाऽत्र भूतले किमस्तीति प्रश्ने सत्युच्यते घटोऽस्तीति तदा प्रकरणवशादेव घटसत्ताया देशकालविशेषसम्बन्धस्यापि घटपदेनैव सिद्धेरस्तीत्यस्य वैयर्थ्यमेवेत्यत आह **क्वापीति** । व्याघातं परिहरति **नास्तीत्यस्य चेति** । घटो नास्तीत्यत्र





घटपदेन तत्सत्त्वमात्रलाभेऽपि नास्तीत्यनेन तस्य देशकालविशेषसम्बन्धः प्रतिषिध्यते । तथा चान्यत्र देशे काले च सन् घटः अत्र इदानीं नास्तीत्यर्थलाभान्न विरोध इत्यर्थः । ननु च यस्मिन्देशे काले च घटसत्ता नास्तीत्यनेन प्रतिषिध्यते तस्मिन्नपि देशे काले च घटसत्तायाः सामान्यतो घटपदेनाभिधानात् विरोध-तादवस्थ्यमित्यतो निषेधाधिकरणदेशकालभिन्नदेशकालाधिकरणतयाऽपि सामान्यतः सत्त्वाभिधानस्य पर्यव-सानसम्भवान्न विरोध इति भावेनाह **न हीति** । **ज्ञानग्राहकेणैव गृह्यत इति** । प्रामाण्यस्य स्वतस्त्वादिति भावः । **अविवादमिति** । अतो न तत्साधकयुक्तिरुपन्यसनीयेति भावः । **गृहीतं भवतीति** । विषया-बाधमनन्तर्भाव्य प्रामाण्यग्रहणाभावादिति भावः । तदेवाह **यदि हीति** । **स्वदेशकालप्रकारोपाधाविति** । स्वदेशकालप्रकारावच्छेदेनेत्यर्थः । यद्देशकालप्रकारावच्छेदेन यस्य येन सत्ता गृह्यते तस्य तदवच्छेदेन तस्याबाध्यतायाः प्रामाण्यप्रयुक्तत्वात् तदभावे प्रामाण्यग्रहणमिति रिक्तं वच इति भावः ।

**वा०र०**— अयमभिप्राय इत्येतद्व्यावर्त्यशङ्कां दर्शयति **अत्र सर्वस्मिन्निति** । गगनादिरूपे घटादिरूपे च प्रपञ्च इत्यर्थः । **पौनरुक्त्यादीति** । एतच्चोत्तरत्रोपपादयिष्यते । **इत्यतोऽभिप्रायमिति** । इत्येताः शङ्काः परिहृताः यथा भवेयुस्तथाभिप्रायमाहेत्यर्थः । **न चैवं घटो नास्तीति** मूलम् । अत्र घटोऽस्ति घटो नास्तीति च वाक्यद्वयोपादानम् । तद्वाक्याभ्यां जायमानाभ्यां तदाकारप्रत्ययानुपपत्तिरित्यर्थः । न तु केवलप्रतीकार-प्रदर्शनमेतत् । येन पौनरुक्त्यादेः शब्दगतस्य प्रत्यये प्रतिपादनायोग इत्यादि शङ्कावकाशः । तथा चायमर्थः । यदि ज्ञानं सत्त्वेनैव स्वविषयमवगाहत इत्युच्यते तर्हि तादृशकार्यजनकशब्दे घट इत्यंशेनैव सत्तावगाहि-ज्ञानादस्तीत्यंशेनापि सत्तावगाहिज्ञानजननाङ्गीकारे एकार्थप्रतिपादकत्वापत्त्या पौनरुक्त्यप्राप्तेर्वक्ष्यमाणटीकोक्तरीत्या व्याघातस्यापि घटो नास्तीत्यत्र प्राप्तेः तथा प्रतिपादकत्वायोगेन घटोऽस्ति घटो नास्तीति वाक्यद्वयजन्यो यस्तत्तदाकारः प्रत्ययः तदनुपपत्तिरिति । **घटपदेन प्रतिपादिताया इति** । यद्यपि स्तम्भोऽयमित्यादि प्रतीतिः न सदित्येवमाकारा तथापि स्तम्भादीनां सद्विशेषत्वान्न सत्तां व्यभिचरति । अतः 'सर्वथा प्रत्यक्षेण प्रतीयमानं वस्तु सदित्येव प्रतीयत' इत्यादि तत्त्वोद्योतटीकायां तदभावे सत्यत्वं तु 'दृष्टैव तु सिद्ध्यती'त्येतत् तत्त्वनिर्णयव्याख्यानरूपायामित्यर्थः । प्रत्यक्षदृष्टिर्हि विधिरूपा घटं घटतया सुखं सुखतया गोचरयति घटादयश्चार्थक्रियावत् सत्प्रभेदा इति घटादिसत्यता गोचरैवेति तट्टीकायां 'य एनं वेत्ति पुरुषमि'ति त्रयोदशगीतासम्बन्धिप्रमाणं हि प्रवर्तमानं विधिरूपं निषेधरूपं वेत्यादि प्रमेयदीपिकायां वस्तुविषयमेव ज्ञानं तत्सत्यत्वे प्रमाणं न पुनस्तत्र प्रमाणान्तरापेक्षा, प्रामाण्यस्वतस्त्वस्य सिद्धत्वात् । अतो 'यः सर्वज्ञ' इत्यादिश्रुतिरेव तत्सत्यतां प्रतिपादयतीति सत्यः सोऽस्य महिमेत्यादि इत्युपाधिखण्डनटीकायां 'प्रत्यक्षं खलु बन्धं गोचरयेदि'त्यादीति आद्यपक्षेऽस्तित्वं मिथ्यात्वाभावश्चेत्यर्थान्तरमिति 'मिथ्यात्वमपि बन्धस्ये'त्येत-त्सुधायामन्यत्र च मूलकृता प्रतिपादनाद्घट इत्याद्याकारप्रतीतिजनक घट इत्यादिपदस्य सत्ताविशिष्टघट-प्रतिपादकत्वमित्याशयेनैतदुक्तम् । तेन घटपदस्य सत्ताप्रतिपादकत्वाभावेन पौनरुक्त्याद्यनवकाश इति शङ्का-नवकाशः । ननु तथापि पौनरुक्त्यादिहेतुना प्रत्ययानुपपत्त्युपपादनायोगः । पौनरुक्त्यादेः शाब्दस्य प्रत्ययगत-





त्वायोगेन प्रत्ययानुपपत्तौ कारणोपन्यासाभावेनासङ्गतत्वादिति चेन्न । उक्तं हि मूलव्याख्यावसरे । एतद्वाक्ययोः पौनरुक्त्यव्याघातप्रसङ्गेन सत्तादिप्रतिपादकत्वायोगात् तदाकारज्ञानद्वयस्य ताभ्यामयोग इत्यर्थ इति । तथा च मूलकृतैव वाक्यदोषे तदुभयज्ञानस्य ताभ्यां जननानुपपत्तिरिति विवक्षितत्वात् पौनरुक्त्यादिहेतुप्रतिपादनस्य साङ्गत्येनासङ्गतिशङ्कानुदयात् । अथ मन्येत । वाक्ये पौनरुक्त्यादिप्रसङ्गेऽपि प्रत्ययजननं तु भवत्येवेति न प्रत्ययानुपपत्तिरुपपादितेति । इदं वाक्यद्वयं हि यदि दुष्टमेव भवेत्, तर्हि पौनरुक्त्यादिप्रसङ्गोऽपि स्वजन्य-प्रतीतिं सम्पादयेदेव । न चैवम् । तस्मादस्याबाधितप्रमाणसिद्धविषयपरत्वमाश्रित्य सत्ताप्रतिपादकत्वं घटादिपदानामित्येतत् त्याज्यमिति हि शङ्काकृदाशयः । तथा चास्य वाक्यद्वयस्य यादृशप्रतीतिजनकत्वे पौनरुक्त्यादिप्रसङ्गः तत्प्रतीतिजननाय न प्रवृत्तिरिति नास्माद्वाक्यद्वयात् घटोऽस्ति घटो नास्तीति च प्रतीतजननाप्रसङ्ग इत्यस्य स्पष्टं प्रतीतेः । ननु प्रत्ययानुपपत्तिं प्रतिज्ञायोपन्यस्तपौनरुक्त्यादेः प्रत्यय एवोपपादने हेतुसाध्यसामानाधिकरण्यलाभात् कथञ्चिदुक्तिपदमात्रगौणतया प्रत्यय एव विषयीकृतार्थविषयकत्वायोगः, गृहीतग्राहित्वस्य प्रामाण्यविरोधित्वात् । परस्परविपरीतार्थविषयकज्ञानयोर्विरुद्धार्थविषयकत्वरूपव्याघातस्यापि योजयितुं शक्यत्वाच्चेति चेन्न । पौनरुक्त्यव्याघातयोरिव विपरीतता तावत् व्यवच्छेदकव्याख्यानव्याख्येय-भावप्रतिषेधमात्रपरत्वानां शब्दनिष्ठानामेव वक्ष्यमाणतया तावतां गौणत्वेन व्याख्यानस्यात्यश्लिष्टस्य कर्तव्यत्व-प्रसङ्गेन सामानाधिकरण्यमप्रयोजकीकृत्यैव व्याख्येयत्वादिति द्रष्टव्यम् । मूले **देशकालविशेषेति** । नन्वस्तीति लटो वर्तमाने विहिततया वर्तमानकालसम्बन्धिसत्ताप्रतिपादकत्वमस्तीत्यस्य युक्तिमङ्गीक्रियताम् । देशसम्बन्धि-सत्ताप्रतिपादकत्वं तु कथम् । प्रत्ययस्य कालसम्बन्धबोधकत्वेऽपि देशबोधकत्वाभावादिति चेन्न । घटपदेन सत्तायां लब्धायां पुनः प्रयुज्यमानस्यास्यास्तीति सत्ताप्रतिपादकपदस्य वैय्यर्थ्यशङ्कायां घटपटात्प्राप्तदेश-कालविशेषसम्बन्धिसत्ताप्रतिपादकत्वेन सार्थकत्वं हि इहोच्यते । तथा च निरधिकरणसत्ताप्रतिपादनस्य व्यवहारानुपयोगेन देशविशेषसंसृष्टसत्ताप्रतिपादकत्वेऽङ्गीकार्ये देशसम्बन्धबोधकत्वस्य सामर्थ्यलब्धत्वाशयेन दोषाभावात् । वस्तुतोऽत्र तत्रेत्याद्यधिकरणस्य सर्वत्र बुद्धिस्थतयोपनीतभानस्थल इव प्रत्ययेन तदधिकरण-विशिष्टकालसम्बन्धप्रतिपादकेन विशेषणतया देशोऽपि विषयीकृत एवेति युक्तं देशबोधकत्वम् ।

किञ्च घटपदं सत्तां हि प्रतिपादयद्देशकालसामान्यसम्बन्धिनीमेव सत्तां प्रतिपादयतीति सामान्यतः प्रतिपादितदेशकालयोर्विशेषरूपजिज्ञासानिवृत्तये प्रयुक्तत्वसामर्थ्यात् तद्भूतस्याप्यस्तीत्यस्य युक्तं तदुभय-बोधकत्वम् । अत एवोक्तं **देशकालविशेषेति** । एवं देशकालविशेषसम्बन्धबोधकत्वपक्ष एव इहेदानीं घटो-ऽस्तीत्यत्र प्रत्येकं देशकालसम्बन्धप्रतिपादकपदद्वयमपि सार्थकम् । अस्तीत्यस्य देशकालविशेषोभयसाधारण-सत्ताप्रतिपादकत्वमङ्गीकृत्य देशान्तरादिव्यावृत्त्यर्थमिहेतिपदस्य देशविशेषमात्रप्रतिपादकताया इदानीमितिपदस्य च कालविशेषमात्रप्रतिपादकतायाश्चोपपत्तेः । किञ्च घटोऽस्ति घटो नास्तीत्यत्र घटसत्तामात्रस्य तन्निषेधमात्रस्य च प्रतीतिरित्यविवादम् । भावो हि प्रथमतोऽस्तीत्युपलभ्यते पश्चान्नास्तीति प्रतीयते । अभावस्तद्विपरीत इति हि सिद्धान्तश्च प्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वं भावाभावत्वमिति युक्तिपादीयभाष्ये । तथापि प्रथमं बुद्धेर्यो





निषेधस्य गोचर इति **समयपादीयभाष्ये** च प्रथमतः परप्रतिक्षेपकतां विना विधिरूपेण प्रतीतिः भावस्य । अभावस्य तु परप्रतिक्षेपकतयैव प्रथमप्रतीतिः । द्वितीयप्रतिपत्तिस्तु तयोरुक्तवैपरीत्येनेत्यादेः प्रतिपादनस्य मूलाल्लाभात् । तथा च भावाभावयोर्वर्तमानतादशायामेव वर्तमानकालसम्बन्धतदभावावस्तिनास्तीत्याभ्यामुच्येते इति नाङ्गीकर्तुमुचितं, व्याघातात् । अतो भावेऽस्तीत्यस्य विधिरूपतासमर्पकत्वं नास्तीत्यस्य घटः पटो नेत्येवं परप्रतिक्षेपकतारूपत्वसमर्पकत्वमकामेनापि वाच्यमेव । प्रागुदाहृततत्त्वोद्योतटीकादिग्रन्थेष्वपि विधित्वं मिथ्यात्वाभावश्चेत्यादेरुक्तेः । स घटोऽत्र नास्ति । अत्रेदानीं विद्यमानो घटस्तत्र तदानीं नास्तीत्यादौ न कालसम्बन्धबोधकताप्रसक्तिमात्रमप्यस्तीत्यस्य अव्यवस्थया कालसम्बन्धबोधकत्वमिति पुनः प्रयोगसामर्थ्येनोक्तरीत्या कालसम्बन्धमिव देशसम्बन्धमपि प्रकरणावगतं बोधयेदेव । वस्तुतस्तु सोमयाज्यस्य पुत्रो भवितेत्यादौ न कालसम्बन्धमात्रे प्रत्ययवदस्तीत्यस्य धात्वर्थसम्बन्धमात्रबोधकत्वे देशकालोभयोदासीनत्वप्राप्तौ प्रकरणादिवशेन देशकालोभयसम्बन्धेन धात्वर्थप्रतिपादकत्वमित्यस्य सर्वैरङ्गीकार्यत्वम् । तथाङ्गीकार एवेहेदानीं घटोऽस्ति तत्र तदानीं नास्तीत्यादाविदानीं इत्यादेः सार्थक्यसम्भवेऽप्यन्यथा तत्सार्थक्याप्रतीतेः । वक्ष्यति च टीकाकारः । प्रकरणवशादेव घटसत्तायां देशकालविशेषसम्बन्धस्यापि घटपदेनैव बोधनादिति । अत एव च तदानीं सन्नपि घटोऽत्र नास्तीति लडादेशशत्रा प्रयोगोऽप्युपपन्नः । तस्माद्युक्तं प्रत्ययस्य देशकालोभयबोधकत्वम्, एवमेवंजातीयके बोध्यम् । अधिकमप्यत्र लेख्यमस्ति ।

घटपदेन प्राप्ता सत्तास्तीत्यत्रेति पाठः । प्राप्तायाः सत्ताया इति पाठेऽपि कर्मणि षष्ठीति प्राप्तां सत्यतामित्येवार्थः । **देशे कालविशेषेति** । उक्तरीत्या मूलानुवादरूपा टीका मूलवदेवोपपाद्या । अत एव देशकालसम्बन्धविशेषस्यापि घटपदेनेति वक्ष्यति । तथा च युक्तमस्तीत्यस्य प्रयोगवैय्यर्थ्याद्यासादितदेशकालोभयबोधकत्वमिति न कश्चिद्दोषः । **विपरीताकाङ्क्षाया इति** । देशकालसामान्यसम्बन्धिसत्ताप्रतिपादने तत्सत्ताया विशेषव्यभिचारेण विशेषाकाङ्क्षाया इव विशेषविपरीताकाङ्क्षाया अप्युदयसम्भवेन तन्निवर्तकत्वोपपत्तेरित्यर्थः । अस्तीतिपदस्य विशेषसम्बन्धबोधकत्वे सिद्धे नास्ति किमित्यनेन विशेषसम्बन्धविपरीताकाङ्क्षाया एवोदयप्राप्त्या सत्तासामान्यविपरीताकाङ्क्षानङ्गीकारेण दोषाभावादिति ज्ञेयम् । **देशकालविशेषसम्बन्धस्यापीति** । देशकालसामान्यसम्बन्धिसत्ताप्रतिपादकेन घटपदेन प्रकरणादिसहकारिलाभे देशकालविशेषस्यापि प्रतिपादनं युक्तमित्याशयः । **सन् घट इति** । देशविवक्षया सन्निति शतृप्रत्ययो यथास्थितार्थ एव । कालविवक्षायां तु धातुसम्बन्धे प्रत्ययाश्रयणेनान्यत्र काले सत्तावान् घट इदानीं नास्तीत्यर्थः । अत एवान्यथा व्याख्याति मूलग्रन्थे कालान्तरेऽस्तीति चेदित्युक्तं इत्याभाति ।

**स०व्र०**— आकाशकालदिगित्यादौ दिक्शब्देन अव्याकृताकाशभागानां, आकाशशब्देन चाव्याकृताकाशस्य ग्रहणान्न पौनरुक्त्यम् । **पौनरुक्त्याद्व्याघाताच्चेति** । घट इत्यनेनास्तित्वस्याभिधानात् पुनरस्तीतिप्रयोगे पौनरुक्त्यमेव । घटो नास्तीत्यत्र घट इत्यंशेन अस्तिताभिधाने पुनर्नास्तीतिवचने व्याघात इत्यर्थः । **घटोऽस्तीति** । घट इत्यनेन तत्सत्तामात्रलाभेऽपि देशकालविशेषसम्बन्धिसत्ताऽभिधानार्थमस्तीत्युच्यत





इत्यर्थः । **क्वचिद्विपरीतेति** । घट इत्येवोक्ते नास्ति किमिति विपरीताकाङ्क्षाव्यवच्छेदार्थमस्तीति वचनमित्यर्थः । **नास्तीत्यस्य चेति** । घटो नास्तीत्यत्र घट इत्यनेन तत्सत्त्वमात्रलाभेऽपि नास्तीत्यनेन देशविशेषे कालविशेषे च तत्प्रतिषिद्ध्यते तथा च अन्यत्र देशे काले च सन् घटोऽत्रेदानीं नास्तीत्यर्थो लभ्यत इति को विरोध इत्यर्थः । ननु यस्मिन्देशे काले च घटसत्ता नास्तीत्यनेनैव प्रतिषिध्यते तस्मिन्नपि देशे काले च सत्ता घट इत्यनेनाभिधीयते अतो विरोधतादवस्थ्यमित्यत आह **न हि सत्तेति** । तथा च निषेधाधिकरणदेशकालभिन्नदेशकालाधिकरणतयापि सत्त्वाभिधानसम्भवान्न विरोध इति भावः । **स्वदेशकालप्रकारोपाधाविति** । स्वस्वदेशकालप्रकारलक्षणाधिकरण इत्यर्थः । यद्यपि प्रकारोऽनेन प्रकारेण नास्तीति प्रतीत्या निषेध्यतावच्छेदकरूप एव नाधिकरणम्, तथाप्यधिकरणत्वविवक्षया इत्थमुक्तमित्यवगन्तव्यम् ।

**स०ना०— अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतमिति** मूले **न चैवं घटोऽस्ति घटो नास्तीति प्रत्ययानुपपत्तिरिति** । घटोऽस्ति घटो नास्तीति वाक्यप्रत्ययानुपपत्तिः । विश्वासानुपपत्तिप्रामाण्यबुद्धिः न स्यादिति यावत् । कुत इत्यत आह **पौनरुक्त्याद्व्याघाताच्चेति** । घटोऽस्तीति वाक्यं हि नाविदितस्य घटस्य बोधकं सङ्गतिग्रहाभावादिति ज्ञातघटस्यैव तत् वाक्यं बोधकमिति वाच्यम् । घटज्ञानं हि तत्सत्तामपि विषयीकरोत्येवेत्यज्ञातांशाभावात् घटोऽस्तीति वाक्यं पुनरुक्तवत् ज्ञातज्ञापकत्वादप्रमाणम् । घटो नास्तीति वाक्यं तु प्रतियोगिज्ञानेनैव सत्तायाः विषयीकृतत्वात् पुनस्तामेव निषेधयतीति माता वन्ध्येतिवत् व्याहतत्वादयुक्त इत्यर्थः । घटोऽस्तीति देशकालसम्बन्धिविषयत्वादिति । प्रत्यये न घटः तदीयसत्वं च गृह्यते वाक्येन तु तदविषयीकृतः देशकालसम्बन्धविशेषश्च गृह्यते । अतो न ज्ञातमात्रज्ञापकत्वमिति भावः । ज्ञातमात्रविषयकमपि वाक्यं क्वचित् प्रमाणं भवति किमु देशादिसम्बन्धविशेषज्ञापकस्य घटोऽस्तीति वाक्यस्य प्रामाण्यमिति भावेनाह **क्वचित् विपरीताकाङ्क्षेति** । पर्वते वह्न्यनुमानानन्तरं तस्यासिद्ध्यादिना विपरीताकाङ्क्षायां प्रवृत्तपर्वतोऽग्निमानित्याप्तवाक्यं ज्ञातज्ञापकमपि विपरीताकाङ्क्षाव्यवच्छेदार्थत्वात् प्रमाणं भवतीत्यर्थः । **अपि व्याख्यानव्याख्येयेति** । ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतभव्यभविष्यदित्यादौ वाक्ये भूतभवद्भविष्यदित्यस्य ज्ञातज्ञापकत्वेऽपि व्याख्यानरूपत्वेन प्रामाण्यं दृष्टमित्यर्थः । व्याहतिं परिहरति **नास्तीत्यस्य चेति** । भवेत् व्याहतिः यदि प्रतियोगिज्ञानं सर्वदेशकालसम्बन्धित्वं गृह्णीयात् न च तदस्ति किं तु सत्त्वमात्रम् । अनेन वाक्येन तु देशकालसम्बन्धिसत्त्वं निषिध्यत इति न विरोध इत्यर्थः ।

**विट्ठल०—** ननु स्वस्वविषयमात्रग्राहिभिः कथं विषयसत्त्वसिद्धिः । प्रामाण्यग्राहकेण वा कथं तत्सिद्धिरित्यत आह **अयमत्राभिप्राय इति** । **ज्ञानं चेति** साक्षिरूपं प्रत्यक्षादिजन्यं च ज्ञानमित्यर्थः । ननु सर्वस्यापि ज्ञानस्य सत्त्वेनैव विषयग्राहकत्वं घटोऽस्तीत्यत्र घट इत्यनेनैव सत्त्वस्य लब्धत्वेन अस्तीत्यस्य पुनरुक्तिवद्व्यर्थत्वापत्त्या घटो नास्तीत्यत्र घट इत्यनेन तत्सत्त्वस्य लब्धत्वेन पुनर्नास्तीत्यस्य व्याहतिप्राप्त्या च घटोऽस्ति घटो नास्तीतिप्रत्यययोरनुपपत्तिप्रसङ्गः स्यादिति शङ्कां प्रतिषेधति **न चेति** । **घटो नास्तीति** ।





घट इत्यनेन तत्सत्तामात्रलाभेऽपि देशकालविशेषिसम्बन्धितया तत्सत्ताभिधानार्थं पुनरस्तीत्युच्यत इत्यर्थः । **क्वचिद्विपरीतेति** । घट इत्येवोक्तेर्नास्ति किमिति आसीदिति वा भविष्यतीति वा विपरीताकाङ्क्षा तद्व्यवच्छेदार्थमित्यर्थः । यत्र तु घट इत्युक्ते प्रकरणादिना देशकालसम्बन्धविशेष्ये ज्ञातः नापि विपरीताकाङ्क्षा । तत्र कथमित्यत आह **क्वापीति** । **नास्तीत्यस्येति** । घटो नास्तीत्यत्र घटपदेन तत्सत्त्वमात्रलाभेऽपि नास्तीत्यनेन तस्य देशकालविशेषसम्बन्धितैव प्रतिषिध्यते । तथा चान्यत्र देशकाले च सन् घटोऽत्रेदानीं नास्तीत्यर्थो लभ्यत इति न विरोध इत्यर्थः । ननु सतो वस्तुनः सकलदेशकालसम्बन्धित्वावश्यंभावेन घट इत्यनेन सकलदेशकालसम्बन्धित्वस्यैव प्राप्त्या नास्तीति पुनर्निषेधायोग इत्यत आह **न हि सतेति** । एवं साक्ष्यादेः स्वविषये साक्षात्सत्त्वावगाहित्वमुक्त्वा साक्षिणः प्रत्यक्षादिप्रामाण्यग्रहणद्वारा सत्यत्वावगाहित्वमाह **ज्ञानगतं चेति** । अर्थसत्त्वलाभायोक्तं **याथार्थ्यलक्षणमिति** । प्रामाण्यग्राहकत्वेऽपि साक्षिणस्तद्विषयाबाध्यत्वग्राहकत्वं कुत इत्यतो बाध्यविषयत्वानतिरेकात् प्रामाण्यशब्दार्थस्येत्याह **यदीति** । येन प्रकारेण यद्वस्तुप्रतिपन्नं तद्देशकालप्रकारोपाधावित्यर्थः । **इत्यस्येतीति** । शब्दस्यायमत्राभिप्राय इति पूर्वेणान्वयः ।

**चषकः— पौनरुक्त्यापातादिति** । घटपदाभिहितास्तित्वस्य अस्तिना प्रतिपादनात् घटोऽस्तीत्यत्र पौनरुक्त्यस्य, स नास्तीत्यत्र च तत्पदाभिहितास्तित्वस्यैव नास्तीत्यनेन पुनर्निषेधनात् व्याघातस्य चापत्तिरित्यर्थः । फलसद्भावान्नोक्तापत्त्यवकाश इत्याह **घटोऽस्तीत्यादिना** । समभिव्याहृतपदाभिहितसत्तां प्रकृत्यंशेनानूद्य तत्प्रकृतिकलडादिप्रत्ययेन कालविशेषसम्बन्धः प्रत्याप्यते, अतो पौनरुक्त्यम्, एवं तादृशप्रकृत्यंशानूदिता लकारप्रत्यापितकालविशेषसम्बन्धावच्छिन्ना या सत्ता तन्निषेधो निपातेन प्रत्याप्यत इति न व्याघातश्चेत्यर्थः । **अविवादः** = विवादाभावः । 'अर्थाभावे यदव्ययमि'त्यव्ययीभावत्वादव्ययमेतत् ।

**१६९ सु०— यदि तर्हि ज्ञानस्वरूपग्राहकः साक्षी तत्प्रामाण्यमपि गृह्णन्प्रपञ्चसत्यतां निश्चिनुयात्, शुक्तिरजतादिज्ञानस्वरूपग्राहकोऽपि स एवेति तत्प्रामाण्यमपि गृह्णन् शुक्तिरजतादिकमपि सत्यं व्यवस्थापयेत् । न च शुक्तिरजतादिज्ञानानां प्रामाण्यमेव नास्ति, किं साक्षिणा गृह्यताम् इति युक्तम्, प्रपञ्चगोचराणामपि ज्ञानानां प्रामाण्याभावात् किं साक्षिणा गृह्यत इत्यपि वक्तुं शक्यत्वात् । तस्मात्साक्षिणा प्रपञ्चसत्यतासिद्धिमभिलषता ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्राहकत्वं स्वभाव इति वक्तव्यम् । तथा चोक्तोऽतिप्रसङ्ग इत्यत उक्तम् अदोषेति ।**

**अयमर्थः । न साक्षी ज्ञानं गृह्णन् प्रमाणमेवैतदिति गृह्णाति, किन्तर्हि(तु) 'अदोषं चेत्प्रमाणं, सदोषमप्रमाणमि'ति व्यवस्थया । यदा त्वर्थित्वेन प्रामाण्यं निर्दिधारयिषितं तदा सजातीयविजातीयसंवादविसंवादभावाभावलक्षणया परीक्षया दोषाभावं निश्चित्य प्रामाण्य-**





**तस्यामेवेति** । अविद्यायामेवेत्यर्थः । **व्यभिचार इति** । यदितःपूर्वं बाधरहितं तन्नोत्तरत्रापि बाध्यमिति व्याप्तेरिति शेषः ।

**वा०र०— पार्थक्यवादीति** । मायावादिना व्यवहारे भट्टनयाङ्गीकारादिति भावः । **मूलाविद्याना-मिति** । शुक्तिरजताद्युपादानभूतानां मूलस्थानामवस्थाविशेषाणां नेदं रजतमित्यादि ज्ञानेन निवृत्तिसद्भावा-दित्यर्थः । **सैवेति** । अथ मतम् । साक्षीप्रत्यक्षादीनामित्यादिनोक्तैवेत्यर्थः । व्यभिचारचोदनं युक्तमिति नञ्रहितः पाठः । **निवृत्त्यभ्युपगम इत्यर्थ इति** । न च निवृत्तिः परेणाङ्गीकृता चेत् तदा तदभावापादनायोगात् परेण निवृत्तिरभ्युपगता प्रागेवेति कथं पुनरभ्युपगम इत्युक्तिः । न हि प्राचीनाभ्युपगमप्रकारवैपरीत्येनाभ्युपगमस्यात्र प्रतिपादनमस्ति येन पुनस्तदुक्त्युपपत्तिरिति वाच्यम् । प्राक् परकीयनिवृत्त्यभ्युपगमं पुरस्कृत्य निवृत्त्यभावे आपादिते यदि उक्तापादके विद्यमानेऽपि आपाद्याभावोऽङ्गीकार्यः तदा आपाद्यापादकयोः तत्रैव व्याप्तिभङ्गात् त्वदीयापादनानुपपत्तिः स्यात् इति परो बोध्यते । न चैतावता प्रागपि परेणोक्तापादके सत्यपि तत्रापाद्याभाव इत्यङ्गीकृतमस्तीति शक्यते वक्तुम् । प्रागेव तेन तथाङ्गीकारे परस्तथा नोपपादयेदेव । न हि व्याप्तिभङ्गं स्वयं निश्चित्यापि परवञ्चनायैवमुपपादितवानिति कल्पनात्र युक्ता । आत्मनो निवृत्त्यभावसाधनस्य प्रकारान्तरेणा-नङ्गीकारात् वञ्चनप्रकरणेऽपि वा तदीयाभ्युपगमोक्तिरावश्यकीति तदर्थतयाऽभ्युपगम इत्यस्योपपत्तेः । आपादनात् प्राग् उक्त्यभावेऽपि प्रामाणिकहानादित्वमात्रेणापादनवत् तदुत्तरमपि तथोक्त्यभावेऽपि व्यभिचारचोदनं युज्यते । परेणापाद्यापादकभूतस्वकीयसाध्यसाधनयोः व्याप्तेः स्वीकारेणानुमानप्रयोगे आश्रिते सति इतःपूर्वमनिवृत्तत्व-रूपापादकत्वेत्यप्यापाद्याभावात् त्वदीयव्याप्तेर्व्यभिचार इति निर्मितं वक्तुमशक्यत्वात् । ततोऽस्तु आपादनात्प्रागेव परस्य निवृत्त्यङ्गीकारः न वा भूद्वा, परन्तु प्रामाणिकहानत्वादिमात्रेण परकीयव्याप्तिमाश्रित्यैवापादने कृते परेण चापाद्यानिष्टभयात् तत्र साधने सत्यपि साध्यं मास्त्वित्युक्ते सति तर्हि तत्रैव त्वदीयव्याप्तेर्व्यभिचार इति व्यभिचारचोदनमेतदिति वाच्यम् । तथा च परकीयः उक्तसाधने सत्यपि साध्याभावाङ्गीकाररूपोऽभ्युपगमः आगन्तुकः । ननु प्राचीन एव विशिष्टाङ्गीकारस्य प्रागभावात् । व्याप्तिमाश्रयता तस्याः सर्वथा अबाध्यत्व-मभिमानतः स्वीकृतमित्येतावता व्याप्तिभङ्गस्थले दर्शितेऽपि व्याप्तेः सङ्कोचं कथं न स्वीकुर्यात् । तथा च विशिष्टाङ्गीकारस्य पूर्वाङ्गीकारवैपरीत्यात् युक्तं निवृत्त्यभ्युपगम इति व्याख्यानम् । किञ्चात्र निवृत्त्यभ्युपगम इत्येवार्थकथने उक्तकुसृष्ट्यवकाशोऽपि इतःपूर्वमनिवृत्ताया अपि निवृत्त्यभ्युपगमे इत्यर्थकथनान्न कुसृष्ट्यवकाशः । परेण प्रागेव तथाङ्गीकारे आत्मनो निवृत्त्यभावसाधनाय इतःपूर्वं निवृत्त्यभावं हेतुं न कुर्यादिवेति स्पष्टाशयेनैवात्र विशिष्टाङ्गीकारव्याख्यानात् । नाप्यविद्यायां व्याप्तिभङ्गस्य परेण ज्ञातता नियन्तुं शक्या । अज्ञातस्यापि व्याप्ति-भङ्गस्य प्रतिवादिप्रतिपादनात् प्रत्ययोपपत्तेः । अन्यथा सर्वत्र स्वपक्षे बाधकं ज्ञात्वैव सर्वैः परवञ्चनाय व्यवह्रियेत इति कल्पनापातः । अत एव पर्वतस्य वह्निमत्त्वे प्रमाणे पृष्टे यद्यपरो द्रव्यत्वं प्रमाणं ब्रूयात् तर्हि प्रष्टापि यदि द्रव्यत्वात् पर्वतस्याग्निमत्वं तर्हि तत एव ह्रदादेरपि तत्स्यादित्यापादयेदेव । यदि चानिष्टापत्तितो भीतो ह्रदादावुक्तसाधनमङ्गीकृत्यापि साध्यं नाङ्गीकुर्यात् तदा तं प्रति पर्वतपक्षकानुमानाङ्गव्याप्तिभङ्गमपि प्रतिपादये-





देवेत्यादि सर्वं सङ्गतम् । अपि चापादनमात्रेण नापाद्याभावस्य पराङ्गीकृतत्वसिद्धिः अनिष्टत्वापत्त्याऽपि आपादनदर्शनात् । अत एवेष्टापत्त्या निग्रहस्तत्रेति प्रसिद्धम् । तत्कुतो आपादनमात्रात् परकीयाभ्युपगमसिद्धिः । अत एव न हि इतः प्रागिति मूले उपपादनम् । एतेनैतदपि परास्तम् । अविद्याया निवृत्त्यभावापादनमात्रेणैव व्यभिचारस्योक्तत्वात् पुनः न व्यभिचारप्रतिपादकतया योजितस्य अन्यथेतिवाक्यस्य वैय्यर्थ्यमापाद्यत इति । न हि आपादनं व्यभिचारकथनरूपम् । तथात्वे वा व्यभिचारमात्रमेवानुक्त्वा किमित्यापादनायासे प्रवर्तेत । तथा च प्रागापादनमात्रेण प्रतिकूलतर्के प्रतिघाते प्रतिपादिते तत्परिहाराय यदि स्वयमेव तत्र साधनमङ्गीकृत्यापि साध्यं नास्तीति मयोच्यत इति वदति तर्हि तं प्रति व्यभिचारोद्भावनस्य सङ्गततया कर्तव्यत्वमिति व्यभिचारप्रतिपादनस्य प्रागभावेन पुनस्तदुक्तिरिति शङ्कानवकाशे अन्यथेतिवाक्यसार्थक्योपपत्तेः । अन्यथा वह्निमत्वसाधनाय द्रव्यत्वप्रयोगतद्दूषणादिस्थलेऽप्युक्तपर्यनुयोगप्रसङ्गः । तथा च कथायां स्वपक्षसाधनादिप्रनाडिकैव लुप्येतेति सर्वमवदातम् । शोध्यमस्ति । कथञ्चित्प्रमेयं तु लभ्यत एव । न विरुध्यते च । किन्त्वेकवाक्यतया आकाङ्क्षाक्रमेण योजनीयमस्ति ।

**स०व्र०**— उक्तोत्तरत्वादित्युक्तमेव विवृणोति **अस्या अपीति** ।

**स०ना०**— **इतःपूर्वं तथाभावादिति** मूलसुधायाम् । **अन्यथा तस्यामेव व्यभिचारः स्यादिति** । प्रागनिवृत्तायाः अविद्यायाः अनिवृत्त्यङ्गीकारे तस्यामेवाविद्यायां विमतं मिथ्या दृश्यत्वादित्यनुमानस्य व्यभिचार इत्यर्थः । एतेन अविद्यायाः निवृत्त्यभावप्रसङ्गादिति आपादयतो यदिहानिवृत्तं तदुत्तरत्रापि न निवर्तते इति व्याप्तेर्व्यभिचारस्योक्तत्वात् पुनः परेण व्यभिचारापरिहाराय स्वसिद्धान्तमपहाय अविद्यायाः निवृत्त्यभावाङ्गीकारे तत्र व्यभिचारचोदनमयुक्तमिति परास्तम् ।

**विट्ठल०**— ननु साक्षिणः प्रत्यक्षादिप्रामाण्यग्रहणद्वारा तद्विषयसत्यताग्राहित्वेऽपि न तस्य त्रैकालिकाबाध्यत्वरूपात्यन्तिकसत्यताग्राहकत्वं सम्भवति । तस्य वर्तमानमात्रग्रहणस्वभावत्वादित्याशङ्क्य तत्परिहारपरतयोत्तरमूलमवतारयति **अथ मतमिति** । **सर्वथेति** । कालत्रयेऽपि सर्वपुरुषसम्बन्धितयापीत्यर्थः । **इत्याद्यनुमानेने**त्यत्र अपिपदेन अदृश्यत्वादपरिच्छिन्नत्वान्निर्बलत्वादित्याद्यनुमानग्रहणम् । प्रपञ्चारोपाद्यनुपपत्त्येत्यादिपदेन प्रपञ्चे बाधसङ्ग्रहः । कुतस्तयोरनुपपत्तिरित्यत उक्तं **निरधिष्ठानस्येत्यादि** । एतच्च मूलगतादिपदार्थकथनम् । ननु साक्षिणः तत्कालिकप्रत्यक्षादिप्रामाण्यग्राहकत्वे साक्षिणोऽपि बाधः स्यादित्यनुपपन्नम् । तस्य ब्रह्मबाध्यतानुपपादकत्वात् । अकस्माद्विनिवृत्तिः स्यादिति चानुपपन्नमिवाभाति । न हि कस्यचिदपि कार्यस्याकस्मिकत्वं सम्भवति । ब्रह्मणो बाध्यताया आपाद्यतयोक्तायाः कथं चानिष्टम् । अपि च साक्षिंणः प्रत्यक्षादीनामात्यन्तिकप्रामाण्यस्याग्राहकत्वे आगमेऽपि तदग्राहकत्वं कुतः । न ह्येकत्रैकस्याशक्तिरस्तीत्येतावता सर्वत्राप्यशक्तिर्भवतीति युज्यत इत्येवमादि परिहरति **एतदुक्तं भवतीति** । साधकबाधकप्रमाणाभावादेवेत्येतदकस्मादित्यस्याभिप्रायकथनपरमिति ज्ञेयम् । ब्रह्मणोऽपि बाधकशङ्का स्यादित्यनुप-





पन्नम् । निश्चायकतर्कसद्भावेन शङ्कानुपपत्तेरित्याशयेन शङ्कते **नन्विति** । **उक्तोत्तरत्वादिति** । प्रमाणैश्च सहैव त्वित्युक्तोत्तरत्वादित्यर्थः । उक्तोत्तरत्वमेव विशदयति **अस्यापीति** । **अन्यथेति** । साक्षिग्राह्यप्रमाणताया उपपत्तेरप्यात्यन्तिकप्रामाण्यानङ्गीकार इत्यर्थः । **व्यवस्थापकाभावादिति** । साक्षिग्राह्यप्रमाणत्वाविशेषेऽपि उक्ततर्कस्यात्यन्तिकप्रामाण्यम् । न तु प्रपञ्चग्राहकप्रत्यक्षादीनामित्यत्र नियामकाभावादित्यर्थः । इतःपूर्व-मेतावत्कालपर्यन्तं ब्रह्मणस्तथाभावानिवृत्त्यभावाद्यनिवृत्तिः न शङ्क्यते तर्हि संसृतेरविद्याया अपि इतःपूर्वं तथाभावादेव इतःपरमपि निवृत्तिः न स्यादिति मूलार्थः । ननु यदि ब्रह्मबाधार्हं स्यात् तर्हि इयता कालेन कुतो न निवृत्तिरित्यनेन ब्रह्मणो निवृत्त्यभावे सम्भावनैवोक्ता । न तु निवृत्त्यभाव आपादितः । तत्कथमेतत्प्रतिबन्द्या संसृतेर्निवृत्त्यापादनं छलप्रसङ्गादित्यत उत्थानात् नैषदोष इत्याशयेनाह **अयमाशय इति** । ननु शुक्तितत्त्वज्ञानेन रजतोपादानभूतशुक्तिकावच्छिन्नात्माश्रिताविद्यारूपाज्ञानस्य निवृत्तत्वात् कथमितःपूर्वमविद्याया अनिवृत्तत्व-मित्यत आह **न हीतः प्रागिति** । नात्राविद्याशब्देन तूलाविद्या विवक्षिता अपि तु मूलाविद्यैवेति भावः । **अन्यथेति** । इतःपूर्वमनिवृत्ताया अप्यविद्याया निवृत्त्यभ्युपगम इत्यर्थः ।

**चषकः**— उक्तोत्तरत्वादित्युक्तमेव विशदयति **अस्या अपीति** । प्राक्प्रपञ्चेति भ्रमत्वे त्वियमुक्तिश्चेत्यादावित्यर्थः ।

**१७४ सु०— अन्यथेत्याद्यन्यथा व्याख्यायते । अन्यथा साक्षिणः प्रपञ्चग्राहकप्रत्यक्षा-द्यात्यन्तिकप्रामाण्याग्राहकत्वे, विश्वस्य वियदादेरुत्तरक्षण एव निवृत्तिर्विनाशः किं न शङ्क्यते । तथा च सर्वप्रवृत्तिविलयः स्यात्, परमेश्वरसञ्जिहीर्षाद्यभावात्; इत्यत उक्तम् अकस्मादिति ।**

**नन्वीश्वरेच्छयैव श्रुतिस्मृतीतिहासपुराणानि प्रपञ्चप्रलयं प्रतिपादयन्ति; 'विश्व-विनाशो न निर्हेतुको विनाशत्वात् पटनाशवदि'त्यनुमानमपि, तत्कथमेवं शङ्क्यत इत्यत उक्तम् श्रुतीति । प्रमाणानां निवृत्तिर्नामात्यन्तिकप्रामाण्याभावः । तात्पर्यं पूर्ववत् ।**

**ननु प्रागितो न प्रपञ्च(वि)लयोऽकस्मादभूत्, तत्कथमुत्तरत्रापि शङ्क्येत इत्यत (उक्तम्) आह इतःपूर्वमिति । किमत्र यत्पूर्वं नाभूत्तदुत्तरत्रापि न भविष्यतीति व्याप्तिः, किंवा यत्पूर्वं न निर्हेतुकं विनष्टं न तदुत्तरत्रापि तथा विनाशवदिति, यद्वा यन्निर्हेतुकं न तद्भविष्यतीति व्याप्तिः, पूर्वोक्तिस्तु तदुपपादनायेति । नाद्यः, संसृतेरविद्याया निवृत्त्य-भावप्रसङ्गात् । न द्वितीयः, संसारानिवृत्तिप्रसङ्गात् । तथा हि । विद्या संसारनिवृत्तिहेतुः, साऽप्यविद्यात्मकत्वात् संसृतिरेव, न च तस्या निवर्तकान्तरमस्ति । तथा च अकस्मात्**





**किमपि न निवर्तत इत्यङ्गीकारे नो संसृतेर्गतिः । 'विद्या स्वयमेव स्वनिवृत्तिहेतुरविद्यामात्रविरोधित्वादि'ति चेन्न, एवं तर्हि प्रपञ्चोऽप्युत्तरक्षणे (स्वयमेव) निवर्तिष्यत इति शङ्का स्यात् । अत एव न तृतीयोऽपीति ।**

**परि०**— शिष्यमनस्समाधानाय प्रतिजानीते **अन्यथेत्यादीति** । **श्रुतिस्मृतीति** । 'यत्प्रयन्त्यभिसंविशन्ति', 'यमप्येति भुवनं साम्पराये', 'तस्याभिध्यानाद्योजनादि'त्यादिश्रुतिः । 'यतो जगत्स्थाननिरोधसम्भवः', 'प्रकृतिस्तूदरूपेण सर्वमावृत्य तिष्ठति । प्रलयेऽतो लयं प्राहुः सर्वतः संप्लुतोदकमि'ति स्मृतिः । 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे'त्यादीतिहासः । 'स्रष्टा पाता च संहर्ता स एको हरिरीश्वर' इत्यादिपुराणमिति भावः । **तात्पर्यं पूर्ववदिति** । एतदुक्तं भवतीत्यादिना पूर्वमुक्तं यत्तात्पर्यं तद्वदेवेत्यर्थः । तथा हि । किमात्यन्तिकप्रामाण्यग्रहणे साक्षिणः शक्तिरस्त्युत नास्ति । आद्ये कथं प्रपञ्चविषयाणां प्रत्यक्षादीनां प्रामाण्यमात्यन्तिकं न गृह्णीयात् । द्वितीये ईश्वरेच्छया विश्वलय इति बोधकश्रुत्यादीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । अथ क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात् तदा नियामकं वाच्यमित्येवं ध्येयमिति । **इत्यत (उक्तं) आहेति** । इतःपूर्वं तथाऽभावात् यद्यकस्माद्विनिवृत्तिर्विश्वस्य न शङ्क्यते तर्हि न संसृतेर्गतिः स्यादित्येवं पूर्ववाक्यान्वयादिना इत इत्यादिमूलस्य पूर्वव्याख्याऽवसरोक्तदिशा समग्रत्वे सत्युक्तशङ्का तन्निरासश्च लभ्यत इति भावः । तर्हि नो संसृतेर्गतिः स्यादिति परिहारोक्तिपरांशं पक्षत्रयनिरासपरतया योजयितुं त्रेधा विकल्पयति **किमत्रेति** । ननु कथमत्र तृतीयकल्पस्योत्थितिः । मूले निर्हेतुकस्याभावात् यदीत्यापादकानुवादाभावात् । 'इतःपूर्वं तथाभावाद्यदी'त्यनुवादेन तु पूर्वकल्पद्वयस्योत्थानप्रतीतेरित्यत आह **पूर्वोक्तिस्त्विति** । इतःपूर्वमिति पूर्वपदोक्तिस्तु निर्हेतुकं न भविष्यतीत्येतदुपपादनायेत्यर्थः । यदि निर्हेतुकं भविष्यति तर्हि पूर्वमपि तथा स्यात् । न चासीत् तथा । अतो नोत्तरत्रापीत्येवमुपपादनायेति भावः । (यद्वा इतःपूर्वं निवृत्त्यभावाभावादुत्तरत्रापि विश्वस्य ब्रह्मणो न निवृत्तिः न शङ्क्यत इति इतःपूर्वं निर्हेतुकविनाशस्योत्तरस्मादिति ब्रूषे इति कल्पत्रयोपपादनाय पूर्वोक्तिरित्यर्थः । यद्वा इतःपूर्वं तथाऽभावाद्विश्वस्य ब्रह्मणो न निवृत्तिरिति पूर्वोक्तदृष्टान्तव्याप्त्युपपादनायेत्यर्थः ।) संसारानिवृत्तिप्रसङ्गादित्यत्र संसारशब्देन तत्त्वज्ञानरूपसंसार उच्यते । संसारनिवृत्तिहेतुरित्यत्र सुखदुःखादिबन्धः । **अविद्यात्मकत्वात्** अविद्यापरिणामात्मकत्वात् । मूलं योजयति **तथा चेति** । **अविद्यामात्रेति** । अविद्या(तत्कार्यरू)मात्रारोपसर्वविरोधित्वादित्यर्थः । **अत एवेति** । विद्याख्यसंसृतेरिव विश्वस्यापि स्वेनैव निवृत्तिरिति शङ्कोदयसम्भवादेवेत्यर्थः ।





**यादु०— तात्पर्यं पूर्ववदिति** । एवं वदन् प्रष्टव्यः । साक्षिणः किमात्यन्तिकप्रामाण्यग्रहणे शक्तिरस्त्युत नास्तीति । आद्ये कथं प्रपञ्चविषयप्रत्यक्षादीनां प्रामाण्यमात्यन्तिकं न गृह्णीयात् । द्वितीये ईश्वरेच्छयैव प्रपञ्चलयो भवतीत्येवं प्रतिपादकानां श्रुत्यादीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । अथ क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात्, तदा नियामकं वाच्यमिति तात्पर्यं पूर्वयोजनायामिव द्रष्टव्यमित्यर्थः । नन्वेवं व्याप्तौ विवक्षितायां तथाभावादित्येतावता पूर्तावितःपूर्वमिति पूर्वोक्तिर्व्यर्थेत्यत आह **पूर्वोक्तिस्त्विति** । निर्हेतुकं नोत्पद्यत इत्याशङ्कायामितःपूर्वं तथाऽदृष्टत्वादिति तदुपपादनाय इतःपूर्वमिति पूर्वोक्तिरित्यर्थः । **संसृतिरेवेति** । तथा च अत्राविद्या संसृतिपदेन ग्राह्या इति भावः । **अविद्यामात्रेति** । अत्र अविद्याकार्यमप्यविद्यात्मक-मित्यभिप्रेत्य अविद्यामात्रेत्युक्तम् । तथा च अविद्यातत्कार्ययोरन्यतरत्वस्य निवर्त्यतावच्छेदकस्य विद्यायामपि सत्त्वेन तस्याः स्वनिवर्त्यतोपपद्यत इति भावः ।

**वं०प०— इत्यादि** मूलवाक्यम् । अस्मिन्पक्षेऽपि 'अन्यथे'ति वाक्यस्य 'अथ मतमि'त्याद्येव अवतारिका ज्ञेया । **तथा** = निर्हेतुकम् । **भवति** = उत्पद्यते । नन्वियं व्याप्तिः तथाभावान्निर्हेतुकस्याभावात् अनुत्पद्यमानत्वादिति मूलेनैवावगता । इतःपूर्वमित्युक्तिस्तु किमर्थेत्यत आह **पूर्वोक्तिस्त्विति** । **संसारेति** । विद्येत्यर्थः । ननु कथं विद्याया अविद्यापरपर्यायसंसृतित्वमित्यत आह **साऽपीति** । विद्येत्यर्थः । विद्याया अविद्यात्मकत्वं तु सर्वप्रपञ्चस्याप्यविद्याकार्यत्वेन तदन्तर्गतविद्याया अप्यविद्याकार्यत्वाद् द्रष्टव्यम् । **तस्याः** = विद्यायाः । सर्वस्याप्यविद्यादेः स्वयमेव विद्या निवर्तिका न तस्याः किञ्चिन्निवर्तकान्तरमस्तीत्यर्थः । यत्पूर्वं न निर्हेतुकं विनष्टं तदुत्तरत्रापि तथा न विनाशवदित्युक्तव्याप्तेरनुवादः अकस्मात्किमपि न निवर्तत इत्यङ्गीकार इति । **संसृतेः** = विद्यायाः । **गतिः** = निवृत्तिः । तथा च विद्यानाशे व्यभिचार इति भावः । शङ्कते **विद्येति** । कुत इत्यत आह **अविद्यामात्रविरोधित्वादिति** । अत्र अविद्याशब्देनाविद्याकार्यं ग्राह्यम् । कार्यकारणयोरभेदेनाविद्याकार्यस्याप्यविद्यात्मकत्वात् । मात्रशब्दः कात्स्न्यार्थः । तथा च विद्यायाः समस्त-विद्याकार्यविरोधित्वेन तन्निवर्तकत्वात् विद्याया अपि जगदन्तःपातित्वेन अविद्याकार्यत्वात् विद्या स्वयमेव स्वनिवृत्तिहेतुरित्यर्थः । **शङ्का स्यादिति** । आकस्मिकोत्तरक्षण एव प्रलयशङ्का स्यादित्यर्थः । तथा च अप्र-योजकतेति भावः । **अत एवेति** । निर्हेतुकस्यापि विद्यानाशस्य जायमानत्वात् विद्याविनाशे व्यभिचारादेवे-त्यर्थः । यद्येतदुपरि विद्याविनाशे निर्हेतुकत्वमसिद्धं विद्या स्वयमेव स्वनिवृत्तिहेतुरिति व्यभिचारशङ्कां कुर्यात् तर्हि प्रपञ्चोऽप्युत्तरक्षणे स्वयमेव निवर्तिष्यत इत्यप्रयोजकताशङ्का स्यादिति पूर्वोक्तमुत्तरं वाच्यमिति हृदयम् ।

**आनन्दः**— ननु तृतीये मूलस्थः पूर्वशब्दोऽनर्थक इत्यत आह **पूर्वोक्तिरिति** । **तदुपपादनायेति** । यं निर्हेतुकं न तद्भवतीति पूर्वोक्तव्याप्त्युपपादनायेत्यर्थः । पूर्वमित्यनेन पुरातनत्वोक्त्या व्याप्तिरुपपादिता भवतीति भावः । **विद्या स्वयमेवेति** । तस्या अप्यविद्यात्वादिति भावः । नन्वस्तु संसारनिवृत्तिः श्रुत्यादिसिद्धा तथापि तत्र इतःपूर्वमनिवृत्तत्वस्य हेतावव्यभिचारः स्यादेवेत्यत आह **तदसिद्ध्या चेति** । श्रुत्याद्यसिद्धनिवृत्तित्वे स इतःपूर्वमनिवृत्तत्वादित्यर्थः । तथा च न कश्चिद्दोष इति भावः ।





**श्रीनिधि०— पूर्वोक्तिस्त्विति** । पूर्वमित्युक्तिरित्यर्थः । यन्निर्हेतुकं न तद् भवतीति व्याप्तिः कुतः इति शङ्कायां क्वचिदपि काले हेतोस्साध्याभावसहचारो न दृष्ट इति प्रदर्शनार्थत्वमिति भावः । **अविद्यामात्रविरोधित्वादिति** । सर्वस्याप्यविद्यातत्कार्यान्यतरत्वेन स्वोत्पत्त्युत्तरकाल एव सर्वनाशात् निमित्तात् ।

**शे०वा०— अन्यथेत्याद्यन्यथा व्याख्यायत इति** । अनेनावतारिका सैव व्याख्यानमेवान्यथा क्रियत इत्युक्तं भवति । श्रुतियुक्त्यादीत्यादिपदेन स्मृत्यादीनां परिग्रह इत्याशयेनोक्तम् **श्रुतिस्मृतीतिहासपुराणानीति** । **तात्पर्यं पूर्ववदिति** । साक्षिण आत्यन्तिकप्रामाण्यग्रहणे शक्तिसद्भावे जगत्सत्यत्वग्राहकप्रत्यक्षादेरप्यात्यन्तिकप्रामाण्यग्राहकत्वस्य प्रसक्तिः । अशक्तत्वे च सञ्जिहीर्षायाः प्रलयनिमित्तत्वप्रतिपादकश्रुत्यादेरप्यात्यन्तिकप्रामाण्यग्राहकत्वानुपपत्तिप्रसक्तेः व्यवस्थापकाभावेन क्वचिच्छक्ति क्वचिन्नेत्यपि कल्पयितुमशक्यत्वादिति तात्पर्यमन्यथेत्यादेः पूर्वयोजनायामिव द्रष्टव्यमित्यर्थः । ननु यत्पूर्वं नाभूत् तदुत्तरत्रापि न भविष्यतीति वा, यत्पूर्वं न निर्हेतुकं विनष्टं, न तदुत्तरत्रापि तथा विनाशवदिति वा, व्याप्तिविवक्षायाम् 'इतःपूर्वं तथाऽभावादि'ति मूले पूर्वमित्येवंरूपायाः पूर्वोक्तेरर्थवत्त्वसम्भवेऽपि यन्निर्हेतुकं न तद्भवतीत्येव व्याप्तिविवक्षायां तस्याः 'तथाऽभावात्' इत्येतावतैव समर्पणात् पूर्वोक्तिवैयर्थ्यमित्यत आह **पूर्वोक्तिस्त्विति** । **तदुपपादनायेति** । यन्निर्हेतुकं न तदुत्पद्यत इति पूर्वोक्तव्याप्त्युपपादनायेत्यर्थः । निर्हेतुकं नोत्पद्यत इत्येतत्कुत इत्याशङ्कायामितःपूर्वं निर्हेतुकस्योत्पत्तेरदृष्टत्वादिति पूर्वोक्तेस्तदुपपादकत्वमिति भावः । **निवृत्त्यभावप्रसङ्गादिति** । अविद्यानिवृत्तेः पूर्वमसत्त्वाद्यत्पूर्वं नाभूत्तन्नोत्तरत्रापि भविष्यतीति नियमादिति भावः । **संसारेति** । संसारस्य निर्हेतुकं पूर्वमविनष्टत्वेनोत्तरत्रापि निर्हेतुकं विनाशायोगात्; उक्तव्याप्तेरिति भावः । ननु चोत्तरत्र न संसारस्य निर्हेतुकं विनाशं ब्रूमो येनोक्तरीत्या तदनुपपत्तिरापद्येत । किन्तु सहेतुकमेव । तत्कथं तदनिवृत्त्यापादनमित्यत आह **तथा हीति** । अत्रेयं योजना । विद्याऽप्यविद्यात्मकत्वात् संसृतिशब्देनोच्यते । तस्याश्च न निवर्तकान्तरमस्ति । ननु च संसारनिवर्तकमेव तन्निवर्तकं भविष्यतीति कथं विद्यायां निवर्तकान्तरभाव इत्यतः स्यादेतदेवं यदि विद्यातिरिक्तं संसारनिवर्तकं स्यात् । न च तदस्तीत्युक्तम् **विद्या हि संसारनिवृत्तिहेतुरितीति** । **अविद्यामात्रेति** । विद्याया अप्यविद्याकार्यत्वादविद्यात्वमिति युक्तम् अविद्यानिवर्तकविद्याया विद्यानिवर्तकमिति भावः । **एवं तर्हीति** । तथा च स्वस्य स्वनिवर्तकत्वायोगेन विद्याया निर्हेतुकस्येव विनाशस्य वक्तव्यत्वादुक्तं युक्तमिति भावः । **अत एवेति** । उक्तरीत्या संसारानिवृत्तिप्रसङ्गादेवेत्यर्थः ।

**वा०र०—** पूर्वोक्तिरित्यस्य पूर्वग्रन्थे उक्तिरित्यर्थप्रतीतिवारणाय व्याख्यानं पूर्वमित्येवंरूपाया इति पूर्वमित्येतत्पदप्रयोगस्येत्यर्थः । तस्याः प्राप्तेः पूर्वोक्तिः पूर्वपदप्रयोगः पूर्वमित्येतत्सामर्थ्येन लब्धार्थकथनमुत्पत्तेरदृष्टत्वादिति अविद्याया निवृत्त्यभावप्रसङ्गादिति यत्पूर्वमिति पूर्वोक्तप्राप्तेः कुत्र व्यभिचार इति स्पष्टं न प्रतीयत इत्यतस्तदभिप्रेतं स्थलं व्यक्तीकुर्वंस्तत्र व्याप्तिं दर्शयति **अविद्येति** । अनेन विद्यानिवृत्तेः पूर्वमसत्त्वादुत्तरत्र सत्त्वं न स्यादिति मूलार्थ उक्तो भवति । अत्र प्रसङ्गमुखेन व्यभिचारप्रतिपादनान्नाभूत्





इत्यनन्तरं तथा सतीति पूरणीयमित्याशयेन तल्लब्धकथनं **यत्पूर्वमित्यादि** । एवं संसारेत्युत्तरमूलव्याख्यानमपि स्पष्टीकरणाय अयोगादित्यस्यायोगप्रसङ्गादित्यर्थः । अत्रापि तथात्वे इति पूरणीयमित्याशयेनाह **उक्तेति** । संसारनिवृत्तिप्रसङ्गादेवेत्यर्थ इति नञ् (?) वार्थपाठः ।

**स०व्र०— तात्पर्यं पूर्ववदिति** । एवं वदन् प्रष्टव्यः । साक्षिणः किमात्यन्तिकप्रामाण्यग्रहणे शक्तिरस्ति उत नास्तीति । आद्ये कथं प्रपञ्चविषयप्रत्यक्षादीनां प्रामाण्यमात्यन्तिकं न गृह्णीयात् । द्वितीये ईश्वरेच्छयैव प्रपञ्चलयो भवतीत्येवं प्रतिपादकानां श्रुत्यादीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । अथ क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात् तदा विनिगमकं वाच्यमिति तात्पर्यं पूर्वयोजनायामिव द्रष्टव्यमित्यर्थः । **यद्वा यन्निर्हेतुकं न तद्भविष्यतीति** । अनेन तथाऽभावादित्येतत् तथाऽहेतुकस्याभावादनुत्पत्तेरिति योजितं भवतीति भावः । **पूर्वोक्तिस्त्विति** । इतःपूर्वं तथाऽभावादिति पूर्वोक्तिरित्यर्थः । निर्हेतुकं नोत्पद्यत इत्येतत् कुत इत्याशङ्कायां इतःपूर्वं निर्हेतुकस्योत्पत्तेरदृष्टत्वादिति तदुपपादनायेति भावः । **संसृतिरेवेति** । अत्र विद्या संसृतिपदेन ग्राह्येति भावः । **अविद्यामात्रविरोधित्वादिति** । अत्राविद्याकार्यस्याप्यविद्यात्मकत्वविवक्षया अविद्यामात्रेत्युक्तम् । तथा च अविद्यातत्कार्ययोरन्यतरत्वस्य निवर्त्यतावच्छेदकस्य विद्यायामपि सत्त्वेन स्वनिवर्त्यतोपपद्यत इति भावः । **अत एवेति** । विद्यायां व्यभिचारादेवेत्यर्थः ।

**विट्ठल०— श्रुतिस्मृतीति** । 'यत्प्रयन्त्यभिसंविशन्ती'त्यादि श्रुतिः । 'प्रकृतिस्तूदरूपेण सर्वमावृत्य तिष्ठति । प्रलयेऽतो लयं प्राहुरि'ति श्रुतिः । 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे'त्यादीतिहासः । स्रष्टा पाता च संहर्त्ता स एको हरिरीश्वर इत्यादि पुराणमित्यर्थः । स्मृत्यादिग्रहणं मूलगतादिशब्दार्थप्रदर्शनाय । **तात्पर्यं पूर्ववदिति** । एवं वदन् प्रष्टव्यः किमात्यन्तिकप्रामाण्यग्रहणे शक्तिरस्त्युत नास्तीति । आद्ये प्रपञ्चविषय-प्रत्यक्षादीनामप्यात्यन्तिकप्रामाण्यं गृह्णीयात् । द्वितीये ईश्वरेच्छयैव प्रपञ्चलयो भवतीत्येवं प्रतिपादनात् श्रुतीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । यदि क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात्तदा नियामकं वाच्यमिति तात्पर्यं पूर्वयोजनायां द्रष्टव्यमित्यर्थः । इतःपूर्वमकस्माद्विश्वप्रलयस्याभावाद्युत्तरत्रापि निवृत्तिं न शङ्क्यते । तर्हि नो संसृतेर्गतिः स्यादित्यत्र नो संसृतेर्गतिरित्याद्यापाद्यांशं त्रेधा योजयितुं परोक्तत्रेधा विकल्प्य पृच्छति **किमत्रेति** । यत्पूर्वं हेतुं विना न विनष्टं तदुत्तरत्रापि हेतुं विना नश्यतीति व्याप्तिरिति द्वितीयविकल्पार्थः । ननु यन्न निर्हेतुकं न तद्भवतीति व्याप्तिविवक्षायां तथा अभावादित्यनेनैव चरितार्थतया इतःपूर्वमित्युक्तिर्व्यर्था स्यादित्यतः आह **पूर्वोक्तिस्त्विति** । निर्हेतुकं नोत्पद्यत इत्येतत्कुत इति शङ्कायां इतःपूर्वं तथा दृष्टत्वा-दित्युपपादनाय इतःपूर्वमित्युक्तिरित्यर्थः । **संसारानिवृत्तिप्रसङ्गादित्यत्र** तत्त्वज्ञानरूपसंसारोऽभिधीयन्ते कुतो-ऽस्यानिवृत्तिप्रसङ्ग इत्यतो यत्पूर्वं न निर्हेतुकं विनष्टं तदुत्तरत्रापि निर्हेतुकं न विनश्यतीति व्याप्तेरभिमतत्वात् प्रकृते च विनाशकस्यासम्भवादित्याशयेन विनाशकाभावमुपपादयतिं **तथा हीति** । अविद्यातत्कार्ययोरन्य-तरत्वस्य निवर्त्यतावच्छेदकत्वादविद्याया अपि निवर्त्यतोपपद्यत इति भावः । **अत एवेति** । विद्यारूपसंसारे व्यभिचारादेरेवेत्यर्थः ।





१७५ **सु०— उक्तमेवार्थं विवृणोति वाक्येति ।**

**अनु०— वाक्यानुमादितश्चेत्स्यात्तत्प्रामाण्यं च साक्षितः ॥**

**अथवा 'नो संसृतेर्गतिरि'त्ययुक्तम् । संसारगतेः श्रुत्यादिसिद्धत्वात्; तदसिद्ध्या च हेतोर्विशेषणादित्यत आह वाक्येति । ब्रह्मणोऽपि निवृत्त्याशङ्कायामापादितायां यदि परो वाक्यानुमादितो निवृत्त्यभावनिश्चयः स्यादिति ब्रूयात्, यदि वा आकस्मिकोत्तरक्षणे प्रलय-शङ्कापादने वाक्यानुमादितः परमेश्वरेच्छादिनैव स्यादिति मन्येत, यदि च वाक्यानुमादितः संसारनिवृत्तिः स्यादिति वदेत्; तदा तस्य वाक्यादेः प्रामाण्यं केन निश्चितमिति वक्त-व्यम् । साक्षीतरेणेत्यङ्गीकारे ज्ञानस्य साक्षिवेद्यत्वेन परतः प्रामाण्यग्रहापत्तेः, साक्षिणैवेति वक्तव्यम् ।**

**परि०—** व्याख्यानमेकमेलनया(हेलया) करिष्यन् गमनिकान्तरमाह **अथवेति** । **तद-सिद्ध्या चेति** । यत्पूर्वं नाभूदित्यादिप्रागुक्तपक्षप्रविष्टो यो हेतुः तस्य श्रुत्यादिसिद्धिरहितं तदिति विशेषणादिति वा तदनुवादतया प्राप्तस्य इतःपूर्वं तथाऽभावादिति हेतो(र्वे)रित्यर्थः । उक्तव्यभिचार-स्थले अविद्यानिवृत्त्यादौ च विशेषणाभावप्रयुक्तस्य विशिष्टहेत्वभावस्यैव सत्त्वेनाव्यभिचारादिति भावः ।

**यादु०— तदसिद्ध्या चेति** । श्रुत्याद्यसिद्धनिवृत्तिमत्त्वे सति प्रागनिवृत्तत्वादिति हेतोर्विवक्षितत्वा-दित्यर्थः ।

**वं०प०—** उक्तमेवार्थमित्युक्तं स्वयमेव दर्शयति **ब्रह्मणोऽपीत्यारभ्य मन्येतेत्यन्तेन** । विश्वस्य पूर्णस्य ब्रह्मण इति व्याख्यानोपरि जातशङ्कानुवादो **ब्रह्मण इति** । तथा विश्वस्य **प्रपञ्चस्येति** व्याख्यानोपरि जातशङ्कानुवादो यदि वेति च । विवरणरूपत्वं च श्रुतियुक्त्यादिप्रमाणैश्चेत्यादिमूलोपरिजातशङ्कानिवर्तकत्वेनेति ज्ञेयम् । **प्रलयेति** । प्रपञ्चप्रलयेत्यर्थः । अथवा नो संसृतेर्गतिरित्युक्तशङ्कामनुवदति **यदि चेति** । मूले चशब्द एवार्थे । तेन **साक्षिणैव** इत्याह ।

**शे०वा०— विवृणोतीति** । तथा च नोक्तरवाक्यवैयर्थ्यमिति भावः । प्रयोजनाभावान्न विवरणेनापि कृत्यमित्यतः प्रकारान्तरेण तत्सार्थक्यमाह **अथवेति** । अस्तु संसारगतेः श्रुत्यादिसिद्धत्वं तथापि इतःपूर्व-मनिवृत्तत्वेन निवृत्त्यभावानुमानस्य नोक्तव्यभिचारशङ्कापरिहार इत्यतः स्यादेतदेवं यद्यत्रेतःपूर्वमनिवृत्तत्वमात्र





हेतुः स्यात् । न चैतदस्तीत्याह **तदसिद्धया चेति** । श्रुत्याद्यसिद्धनिवृत्तिमत्त्वे सति इतःपूर्वमनिवृत्तत्वादिति हेतोस्तदसिद्धया विशेषणादित्यर्थः । तथा च हेतोरेवागमनान्न तत्र व्यभिचार इति भावः । नन्वत्र सत्यन्त-मात्रस्यैवोत्तरत्र निवृत्त्यभावगमकत्वोपपत्तेर्विशेष्यवैयर्थ्यम् । न चासतः सदा निवृत्तिमत उत्तरत्रापि निवृत्तिमत्त्वेन तत्र व्यभिचारपरिहारार्थं तदिति वाच्यम् । तस्य प्रत्यक्षसिद्धनिवृत्तिमत्त्वेन श्रुत्याद्यसिद्धनिवृत्तिमत्त्वेनैव तद्व्यव-च्छेदसिद्धेरिति चेन्न । आदिपदेन स्मृत्यादेरिव प्रत्यक्षस्यासङ्ग्रहात् । अत एव शङ्काग्रन्थे निवृत्तिसाधकतया श्रुतिस्मृतिसाधनपुराणयुक्तीनामेवोपन्यासः । श्रुत्याद्यसिद्धनिवृत्तिमत्त्वमात्रं चासतोऽपीति तद्व्यावृत्त्यर्थमेव विशेष्योपादानमित्यत्र तात्पर्यात् । वाक्यानुमादितश्चेत्स्यादित्यादेरुक्तार्थविवरणरूपत्वं संसारगतेः श्रुत्यादि-सिद्धत्वादिति शङ्कापरिहाररूपत्वं च प्रतिपादयति **ब्रह्मणोऽपीत्यादिना** । अत एव ब्रह्मणोऽपीति यदि वा आकस्मिकेतिं च वाक्यद्वयमत्रार्थवत् । अन्यथा यदि वाक्यानुमादितः संसारविनिवृत्तिः स्यादिति चेदित्ये-वावक्ष्यदिति ध्येयम् ।

**वा०र०— हेतुः स्यादिति** । हेतुरभिमतः स्यादित्यर्थः । **तद्व्यवच्छेदेति** । आदिशब्देन प्रत्यक्ष-स्यापि सङ्ग्रहादिति भावः । सत्यं मात्रस्यैवेति शङ्कापरिहारं स्पष्टयति **श्रुत्याद्यसिद्धेति** । वाक्यानुमादित इत्यस्य द्वेधा मूलेऽवतारः कृतः ततस्तदनुसारेणोभयपरतयापि योजना ब्रह्मणोऽपीत्यादिना दर्शितेत्युपपादयति **वाक्यद्वयमिति** । तस्योक्तार्थविषयानुवादत्वादिति भावः ।

**स०व्र०— तदसिद्धया चेति** । श्रुत्याद्यसिद्धनिवृत्तिमत्त्वे सति प्रागनिवृत्तत्वादित्यर्थः ।

**विट्ठल०— तदसिद्धया चेति** । श्रुत्याद्यसिद्धनिवृत्तिवत्वे सति इतःपूर्वमनिवृत्तत्वादिति हेतो-र्विशेषणादित्यर्थः । विवृणोतीत्यत्र(?)वतानुसारेण अन्यथेत्यादि पूर्वग्रन्थं प्रथमव्याख्यानानुगुणतया योजयति । इति द्वितीयव्याख्यानानुगुणतया योजयति **यदि चेति** (?) । अथवेत्युक्तद्वितीयावतारिकानुसारेण योजयति **यदि वेति** । **इति वक्तव्यमिति** । एतेन तत्प्रामाण्यं च साक्षित इत्यत्र इति वक्तव्यमित्यध्याहार इत्युक्तं भवति ।

**१७६ सु०— ततः किमिति चेत् । साक्षी किं ब्रह्मसत्यत्वादिप्रतिपादकानां वाक्यादीनां प्रामाण्यं तात्कालिकमेव गृह्णाति किंवाऽऽत्यन्तिकम् ।**

**आद्ये, न तेन ब्रह्माबाध्यत्वादिसिद्धिरिति नोक्तशङ्कानिवृत्तिः ।**

**द्वितीये त्वाह तत्प्रामाण्यमिति ।**

**अनु०— तत्प्रामाण्यं यथा साक्षी स्थापयत्येवमेव हि ।**
**सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य च ॥**





**एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् ।**
**किमिति स्थापयेन्नायं**

**यथा**शब्दस्यात्रोत्तरत्र च सम्बन्धः । तस्य ब्रह्मसत्यत्वादिप्रतिपादकवाक्यादेः प्रामाण्यं **यथा साक्षी** वर्तमानकालीनं **स्थापयति** गृह्णाति, **एवमेव सर्वकालेष्वपि** स्थैर्येण गृह्णाति । **हि**शब्दः परप्रसिद्धिद्योतकः । स्थैर्यमेव विवृणोति **व्यभिचारं** बाधम् **अपोह्य** निराकृत्यैवेति । न केवलं ब्रह्मसत्यत्वादिवाक्यादिप्रामाण्यं साक्षी तात्कालिकं गृह्णाति किन्त्वात्यन्तिकमेवेत्यर्थः ।

**परि०— यथाशब्दस्यात्रोत्तरत्र चेति** । एवमेव हीत्येतत्प्रतियोगितया अत्र श्लोके । एवमक्षजमानत्वेत्युत्तरश्लोकस्थैवंशब्दप्रतिद्वन्द्वितया उत्तरश्लोके चेत्यर्थः । तत्प्रामाण्यमित्यत्र तच्छ-ब्दार्थमाह **तस्येत्यादि** । चशब्दो निराकृत्यैवेत्येवकारार्थः । अपिशब्दार्थो **न केवलमित्यादि** ।

**गु०दी०— स्थैर्येण गृह्णाति** इत्यत्र यथेति योज्यम् । अन्यथेत्यादिश्लोकचतुष्टयस्य मन्दानामपि बोधाय काचिद्योजना क्रियते । **अन्यथा** साक्षिणः प्रमाणानामात्यन्तिकप्रामाण्यग्रहणद्वारा तद्विषयस्य प्रमाण-प्रमेयात्मकजगतः सर्वथाऽबाध्यत्वरूपसत्यत्वास्थापकत्वे **श्रुतियुक्त्यादिप्रमाणैः** सहैव **विश्वस्य** प्रपञ्चस्य **अकस्मात्** मूलीभूतसाधकप्रमाणाभावात् **विनिवृत्तिः** विशेषेण निवृत्तिरत्यन्तासत्त्वं शशविषाणादिवत्कुतो न शङ्क्यते । शशशृङ्गाद्वैलक्षण्यमाशङ्कते **इतःपूर्वम्** इति । **वाक्यानुमादितः** 'विश्वं सत्यमि'त्यादि वाक्या-दर्थक्रियाकारित्वाद्यनुमानादादिपदोक्तघटादिग्राहकप्रत्यक्षाच्च । **इतःपूर्वं तथाभावात्** यथा प्रतीयते तथैव भावादपवादकाभावादिति यावत् । **संसृतेः** संसारहेतोर्जगतः **गतिः** गमनमभावः यदि न स्यात् । आगमस्य सकलविषयकत्वेनातिप्राबल्यादनुमानस्याप्यतीन्द्रियगोचरत्वेनेषत्प्राबल्यात्प्रत्यक्षस्य कतिपयार्थग्राहित्वेन दुर्बल-त्वात्क्रमोल्लङ्घनम् । **चेत्** तर्हि **तत् प्रामाण्यं** च तेषां असद्वैलक्षण्याय त्वयोदितवाक्यादीनां च प्रामाण्यं साक्षित एव वक्तव्यम् । तथा च तत्प्रामाण्यं साक्षी । **एवमेव** तूष्णीमेवास्मदभिमतप्रमाणप्रमेयसाधकसाक्षितो विशेषा-भावेऽपीत्यर्थः । व्यभिचारमपोह्य सर्वकालेष्वपि **स्थैर्यात्** स्थैर्यं सम्पाद्य यथा स्थापयति न त्वापाततः प्रामाण्यम् । अन्यथा त्वदभिलषितासद्वैलक्षण्यस्य सम्यगसिद्धेरिति भावः । 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम्' अयमस्मदुक्तः साक्षी । **निर्दोषज्ञानशक्तितः** निर्दोषं दोषादनुत्पन्नं यत् घटपटादिज्ञानं तस्य शक्तितः दोषाजन्यत्वलक्षणशक्तितः व्यभिचारमपोह्य स्थैर्यं सम्पाद्य किमिति न स्थापयेत् । अविद्यावद्विषयत्वेन दूषयत-स्तवोक्तविधयाऽसद्वैलक्षण्यसाधनायोपकारित्वेनाङ्गीकृतस्साक्षी निर्दोषत्वेन निर्दोषाज्ञानग्राहकत्वेन च दूषयता-मस्माकं कथं नोपकारि । सकलसम्मतसाक्षिसिद्धं जगत्सत्यत्वमपहाय सद्वैलक्षण्यमङ्गीकुर्वतस्तव 'एकं सन्धि-





त्सतोऽपरं प्रच्यवत' इति न्यायेनावश्यकमपेक्षितमसद्वैलक्षण्यमप्युक्तविधया त्यक्तमभूत् । कथञ्चित्तस्य रक्षणे तेनैव न्यायेन जगत्सत्यत्वस्यापि सिद्धेः पुनस्सद्वैलक्षण्यमेव त्यक्तमभूदिति समुदायार्थ इति ।

**यादु०— अत्रोत्तरत्र च सम्बन्ध इति** । एवंशब्दयोर्द्वयोः सत्त्वात् यथाशब्दस्य उभयत्र सम्बन्ध उक्त इति ध्येयम् ।

**वं०प०— तेन** = साक्षिणा । अबाध्यत्वादीत्यादिपदेन प्रलयाभावसंसारनिवृत्त्योर्ग्रहणम् । **उक्त-शङ्केति** । ब्रह्मप्रपञ्चयोर्निवृत्तिः संसृतेरनिवृत्तिरिति शङ्कात्रयमित्यर्थः । उत्तरत्र समग्रश्लोकोक्तप्रमेयस्य एवमक्ष-जेत्यत्र दृष्टान्तत्वकथनायेत्यर्थः । अत्र सम्बन्ध इत्युक्तं दर्शयति **यथा वर्तमानेति** ।

**आनन्दः— अत्रेति** । उदाहृते तत्प्रामाण्यमिति वाक्य इत्यर्थः । **उत्तरत्रेति** । एवमक्षजमानत्वं इत्यु-त्तरत्रेत्यर्थः । समुच्चयं दर्शयति **साक्षीति** ।

**शे०वा०—** ननु ब्रह्मसत्यत्वादिप्रतिपादकश्रुत्यादीनामपि तात्कालिकप्रामाण्यग्राहकत्वस्यैवाङ्गीकारेण तत्र त्रिकालाबाध्यत्वग्राहकत्वानभ्युपगमात् तत्प्रामाण्यमित्युत्तरग्रन्थासङ्गतिरित्यतः अत्र सम्भावितत्वेन पक्षद्वयं विकल्प्य आद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणतया मूलप्रवृत्तेर्नासङ्गतिरिति भावेन तद्वाक्यं तथा योजयितुं शङ्कते **ततः किमिति चेदिति** । **उक्तशङ्केति** । ब्रह्मनिवृत्त्यादिशङ्केत्यर्थः । **यथाशब्दस्येति** । तत्प्रामाण्यं यथा साक्षीत्यादिमूले आद्येनैवंशब्देनावान्तरदार्ष्टान्तिकस्य द्वितीयेन तेन परमप्रकृतदार्ष्टान्तिकस्य चोक्तत्वात् तदनुसारेण साक्षी तत्सत्यमित्यादेः यथा तात्कालिकं प्रामाण्यं गृह्णाति तथा सर्वकालेष्वपीति पूर्वत्र, यथा च तत्सत्य-मित्यादेरात्यन्तिकं प्रामाण्यं गृह्णाति तथा विश्वसत्यत्वग्राह्यक्षजादेरप्यात्यन्तिकं गृह्णातीत्युत्तरत्र च यथाशब्दस्य सम्बन्ध इत्यर्थः । अवान्तरदृष्टान्तदार्ष्टान्तिकभावप्रदर्शनपूर्वकं यथाशब्दस्यात्र सम्बन्धं स्पष्टयति **तस्ये-त्यादिना** । **निराकृत्यैवेति** । अनेनापोह्य चेत्यत्र चशब्द एवार्थ इत्युक्तं भवति । अवान्तरवाक्यतात्पर्योपदर्शनं **न केवलमिति** ।

**वा०र०— आद्येनेति** । एवमेवेत्यत्रत्येनेत्यर्थः । **द्वितीयेनेति** । एवमक्षजेत्यत्रत्येनेत्यर्थः । **तथेति** । स्थलद्वयेऽप्येवमिति पाठः ।

**स०व्र०— यथाशब्दस्यात्रोत्तरत्र च सम्बन्ध इति** । यथा स्थापयति एवमेव हीत्यत्र सम्बन्धः । तथा 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यतामि'त्युत्तरत्र च सम्बन्ध इत्यर्थः ।

**विट्ठल०— उभयत्र च सम्बन्ध इति** । एवमक्षजमानत्वसिद्धामित्यत्रापि दार्ष्टान्तिकोक्त्युपयोगितया सम्बध्यत इत्यर्थः । अपिशब्दार्थो **न केवलमिति** । इतिशब्दार्थे लब्धयोजनामाह **सर्वेति** । एतेन साक्षी तस्य वाक्यादेः प्रामाण्यं सर्वकालेष्वपीदमेवेति व्यभिचारमपोह्य स्थैर्यात्स्थापयतीति योजनोक्ता भवति ।





१७७ **सु०— अथवा यथा**शब्दस्योत्तरेणैव सम्बन्धः । **स्थापयति** आत्यन्तिकमेव गृह्णातीत्यर्थः । अस्यैव विवरणम् **एवमेवेति** । **इति**शब्दोऽध्याहार्यः । **सर्वकालेष्वपि** इदम् **एवमेव** न कदाऽपि विषयापहारलक्षणं बाधमाप्नोतीति **व्यभिचारमपोह्य** तत एव स्थैर्येण गृह्णातीति । यद्वा **एवं**शब्दः समुच्चये । **साक्षी** ब्रह्मादिविषयवाक्यादि**प्रामाण्यं** स्थापयति आत्यन्तिकं गृह्णाति । अत एव तद्विषयमपि ब्रह्मादिकं **सर्वकालेष्वपि स्थैर्यात्** अतिशयेन **व्यभिचारमपोह्यैव स्थापयति** इति । प्रामाण्या(त्यन्तिकत्वा)न्तर्गतत्वाद्विषयाबाध्यतया इति **हि**शब्दार्थः । **एवमिति** दार्ष्टान्तिकोक्तिः । **अयं साक्षी यदि** तत्सत्यमित्यादिप्रमाण-**प्रामाण्यम्** आत्यन्तिकं गृह्णन् तद्विषयस्य ब्रह्मादेस्त्रैकालिकाबाध्यत्वं व्यवस्थापयेत्तर्हि तथैव विश्वविषयस्याक्षजादिज्ञानस्यात्यन्तिकं प्रामाण्यं गृह्णन् तदन्तर्गतां विश्वस्या-बाध्यतामपि स्थापये(देव)त् अविशेषादिति समुदायार्थः ।

**परि०—** इतिशब्दाध्याहारेण लब्धयोजनामाह **सर्वेति** । **एवमिति दार्ष्टान्तिकोक्तिरिति** । यद्यपि पूर्वश्लोकस्य प्रागुक्तयोजनात्रयमध्ये प्रथमयोजनायां यथाशब्दान्वितदृष्टान्तस्य दार्ष्टान्तिकोक्ति-रेवमेव हीत्यादौ पूर्वत्रैवास्ति । तथापि द्वितीयतृतीययोजनयोः पूर्वोत्तरार्धोक्तार्थस्य दृष्टान्तत्वमस्तीति तदपेक्षया 'एवमक्षज...' इत्यादौ दार्ष्टान्तिकोक्तिरित्यर्थः । आद्यकल्पेऽपि दृष्टान्तदार्ष्टान्तिकभावेन पूर्वोत्तरार्धयोजने कृतेऽपि तदर्थस्य दृष्टान्तत्वसम्भवाच्च दृष्टान्ततया पूर्वश्लोकोक्तं सर्वमनुवदति **यदीति** । तर्हीत्यनन्तरं यथेतिपदं यदीत्यादिव्यवस्थापयेदित्यन्तं वाक्यं च यदिशब्दं हित्वा योज्यम् । तेन यथाशब्दस्योत्तरेणान्वय इति प्रागुक्तं स्पष्टीकृतं ध्येयम् । **समुदायेति** । पादन्यून-पूर्वोत्तरश्लोकद्वयार्थ इत्यर्थः ।

**वं०प०— समुच्चये** = विषयाबाध्यत्वसमुच्चय इत्यर्थः । अस्मिन्नपि पक्षे यथाशब्दस्योत्तरत्रैव सम्बन्धो ज्ञेयः । समुच्चेयं दर्शयति **अत एवेति** । आत्यन्तिकप्रामाण्यग्राहकत्वादेवेत्यर्थः । **दार्ष्टान्तिकेति** । योजनात्रयेऽपीत्यर्थः । ततश्चेत्थं योजना । साक्षी तेषां श्रुत्यादीनां प्रामाण्यं यथा वर्तमानकाले स्थापयति । एवमेव सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य स्थापयति । कालत्रये गृह्णातीति यावदिति यथा । एवमक्षजे-त्यादि । तथा, तेषां श्रुत्यादीनां प्रामाण्यं साक्षी सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य एवमेवेति गृह्णाति यथा । एवमक्षजेत्यादि । तथा, तेषा श्रुत्यादीनां प्रामाण्यं साक्षी स्थापयति, एवं प्रामाण्यस्थापकत्वादेव सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य विषयाबाध्यत्वमपि स्थापयति यथा । एवमक्षजमानत्वं स्थापयेत् । **तत्सिद्धां** = प्रामाण्यग्रहणेन सिद्धां विश्वस्य सत्यतां च स्थापयेदिति । **अविशेषादिति** । त्रिकाला-बाध्यताग्राहकत्वाविशेषादित्यर्थः ।





**आनन्दः**— ननु ब्रह्मविषयवाक्यस्यात्यन्तिकप्रामाण्ये गृहीतेऽपि तद्विषयाबाध्यत्वं कुत इत्यत आह **प्रामाण्येति । यदि तत्सत्यमिति** । अत्र दार्ष्टान्तिकप्रदर्शनवेलायां तथेत्युक्तां दृष्टान्तेऽपि यथेत्यस्य सम्बन्धोऽभिप्रेत इति भावः । तस्य तथात्वमिति तद्विषयस्य त्रिकालाबाध्यत्वं तु कुत इत्यर्थः ।

**शे०वा०**— साक्षिणः तत्सत्यमित्यादि ब्रह्मसत्यत्वप्रतिपादकश्रुत्यादेः आन्त्यन्तिकप्रामाण्यग्राहित्वस्य परेणैवोक्तत्वात् तदनुवादे, यथा तात्कालिकं तथा सार्वकालिकमपीति दृष्टान्तप्रदर्शनपूर्वकं तद्विधानपरग्रन्थास्वारस्यम् । स्थापयतीत्यस्य गृह्णातीति व्याख्यानं च न स्वरसम् । आत्यन्तिकग्राहकत्वार्थकत्वेन तस्य प्रसिद्ध्या ग्राहकत्वमात्रस्य स्वरसप्रतिपन्नार्थत्वाभावादिति पूर्वत्रारुच्या पक्षान्तरमाह **अथवेति** । अत एव तथैव व्याचष्टे **स्थापयत्यात्यन्तिकमेव गृह्णातीत्यर्थ इति** । ननु न यथाशब्दस्योत्तरेणैव सम्बन्धोऽङ्गीकर्तुं युक्तः । एवमेव हीत्येवंशब्दोक्तदार्ष्टान्तिके दृष्टान्तोक्त्यर्थं तस्य पूर्वत्रापि सम्बन्धस्यावश्यकत्वादित्यतोऽस्यैवंशब्दस्य दार्ष्टान्तिकपरत्वाभावान्नानुपपत्तिरित्यभिप्रेत्य तत्प्रयोजनमाह **अस्यैव विवरणमेवमेवेतीति** । अत्रापीतिशब्दाध्याहारो भवतीत्यरुच्या प्रकारान्तरमाह **यद्वेति** । समुच्चेयमेव दर्शयति **तद्विषयमपीति** । तदन्तर्गतां प्रामाण्यात्यन्तिकत्वान्तर्गताम् । दृष्टान्ताभावेन तर्कमूलभूतव्याप्तेर्विशिष्यासम्भवेऽप्यविशेषलक्षणव्याप्तेरविकलत्वान्न तस्याभासत्वमित्याशयेन तामाह **अविशेषादितीति** ।

**वा०र०**— **परेणैवेति** । हिशब्दः परप्रसिद्धीत्युक्तत्वादस्य द्वितीयपक्षनिरासकत्वाच्चेति भावः । **तद्विधानपरेति** । सार्वकालिकत्वविधानपरो यो ग्रन्थ इति योज्यम् । **इतिशब्द इति** मूले एवमेवेति व्यभिचारमिति सम्बन्ध इति भावः । अत एव तथैव मूलयोजना दर्शिता । **अत एवेति** । साक्षिणोऽक्षजादि ज्ञानप्रामाण्यग्रहणद्वारा तद्विषयात्यबाध्यत्वग्राहकत्वस्येति ग्राहकत्वपदगर्भः पाठः सुगम एव । **अबाध्यत्वस्येति** । ग्राहकत्वपदशून्यपाठेऽपि करणे कर्तृत्वोपचारेण वा मामहं जानामीति प्रतीतिबलेन करणस्य सतो मुख्यकर्तृत्वस्यापि सत्त्वेन साक्षिण इत्यनेन साक्षिरूपकर्त्रा जायमानं यदक्षजादिप्रामाण्यग्रहणं तद्वारा प्राप्तं यद्विषयात्यबाध्यत्वं तस्येत्यर्थप्रतिपादनप्रतीतेः ।

**विट्ठल०**— **एवमिति दार्ष्टान्तिकोक्तिरिति** । एवमक्षजमानत्व इति श्लोकः । दृष्टान्ततयोक्तपूर्वश्लोकार्थे दार्ष्टान्तिकत्वोक्तिरित्यर्थः । अत एव दृष्टान्ततया पूर्वश्लोकोक्तं प्रमेयमनुवदति **यदीति** । **समुदायार्थ इति** । पूर्वोत्तरश्लोकद्वयार्थ इत्यर्थः ।

**१७८ सु०— ननु गृह्णात्वात्यन्तिकं प्रामाण्यमक्षजादीनां साक्षी, तस्य तथात्वं तु कुतः; ततश्च न विश्वसत्यतासिद्धिरित्यत आह निर्दोषेति ।**

**अनु०— निर्दोषज्ञानशक्तितः ॥**





**साक्षिणो निर्दोषज्ञानरूपत्वशक्त्या तथात्वमपि सिद्ध्यति । अन्यथा ब्रह्मसत्यत्वाद्यपि न सिद्ध्येत् ।**

**यद्वा तत्सत्यमित्यादेरात्यन्तिकं प्रामाण्यं गृह्णाति साक्षी, विश्वविषयस्याक्षजादेस्तु तात्कालिकमेवेति किं न स्यादित्यत आह निर्दोषेति । अयमर्थः । तत्सत्यमित्यादिज्ञानस्यात्यन्तिकं प्रामाण्यं गृह्णाति साक्षीत्यत्र किं निमित्तम् । ज्ञानं गृह्णन् तस्य निर्दोषतायां प्रामाण्यमपि गृह्णातीति साक्षिणः स्वभावोऽयमिति चेत्, कथं तर्ह्यक्षजादेरपि आत्यन्तिकं प्रामाण्यं न गृह्णीयात्, तस्यापि निर्दोषज्ञानरूप(त्व)शक्तिसद्भावादिति ।**

**परि०—** **तस्य तथात्वमिति** । साक्षिण आत्यन्तिकप्रामाण्यमित्यर्थः । यद्वा अक्षजादिज्ञानप्रामाण्यस्येत्यर्थः ।

**वं०प०—** **तस्य** = साक्षिणः । **तथात्वं** = विषयाबाध्यताव्यवस्थापकत्वात् । एवमुत्तरत्रापि । **अन्यथेति** । यदि साक्षी विषयाबाध्यताव्यवस्थापको न स्यादित्यर्थः । शङ्कते **ज्ञानमिति** । **तस्य** = ज्ञानस्य । आत्यन्तिकं प्रामाण्यमिति वर्तते । कुत इत्यत आह **तस्यापीति** । अक्षजादिज्ञानस्यापीत्यर्थः ।

**आनन्दः—** **निर्दोषज्ञानरूपत्वशक्त्येति** । निर्दोषत्वरूपशक्त्येति निर्दोषत्वविशिष्टज्ञानशक्त्येत्यर्थः । **तथात्वमिति** । त्रिकालाबाध्यत्वमित्यर्थः । **अन्यथेति** । साक्षिणो निर्दोषज्ञानरूपत्वशक्तिसद्भावेऽपि तद्विषयस्य तथात्वाभासश्चेदित्यर्थः ।

**श्रीनिधि०—** स्वस्य स्वयमेव निवर्तकमिति मात्रशब्देनाह **तस्य तथात्वं त्विति** । तस्याक्षजादेस्तथात्वं आत्यन्तिकप्रामाण्यम् ।

**शे०वा०—** **तथात्वम्** = आत्यन्तिकप्रामाण्यम् । **अन्यथेति** । साक्षिणाऽक्षजादेरात्यन्तिकप्रामाण्यग्रहेऽपि तस्यातथात्वेन विश्वसत्यत्वासिद्धावित्यर्थः । साक्षिणा तत्सत्यमित्यादेरात्यन्तिकप्रामाण्यग्रहणेऽपि तस्य तथात्वासिद्धेरविशिष्टत्वादिति भावः ।

**विट्ठल०—** **तस्य तथात्वमिति** । साक्षिणः आत्यन्तिकप्रामाण्यमित्यर्थः । यद्वा साक्षिगृहीतत्वमात्रेण तस्याक्षजादेः प्रामाण्यस्यात्यन्तिकत्वं कुत इत्यर्थः । प्रागुक्ततर्कस्याप्रयोजकत्वे शङ्किते निर्दोषज्ञानशक्तित इत्यस्य किमुत्तरं लब्धमित्यतः साक्षिणः निर्दोषज्ञानस्यात्यन्तिकप्रामाण्यग्रहणस्वभावत्वं न स्यादिति विपक्षे बाधकतर्कमभिप्रेत्याह **अयमर्थ इति** ।





१७९ **सु०— अथवा किं साक्षी कुत्रापि प्रामाण्यमात्यन्तिकं ग्रहीतुं न शक्नोति, किंवा क्वचिच्छक्तः क्वचिदशक्तः । आद्यस्योत्तरम् अन्यथेत्यादि । द्वितीयस्योत्तरम् वाक्येति ।**

**परिं०—** अन्यथा श्रुतियुक्त्यादीत्यादिश्लोकचतुष्टयस्य तात्पर्यान्तरमाह **अथवा किं साक्षीत्यादिना** । अर्थो योजना च प्रागुक्तदिशैवेति भावः । (एतावान्भेदः पूर्वत्र निर्दोषज्ञानेत्यनेन साक्षिग्रहः उत्तरपक्षद्वये तद्ग्राह्यजन्यज्ञानग्रह इति ।)

**वं०प०—** अथवेति पक्षे मूलेऽन्यथेत्यस्य यदि साक्षी कुत्राप्यात्यन्तिकं प्रामाण्यं न गृह्णातीत्युच्यत इत्यर्थः । श्रुतियुक्त्यादिसंसृतेर्गतिरित्येतत्पर्यन्तं पूर्ववदेव योज्यम् । क्वचिच्छक्तः क्वचिदशक्त इति द्वितीय-शङ्कानिरासकं वाक्यानुमादित इत्यादिवाक्यम् । तत्प्रकारस्तु वाक्यानुमादितश्चेत्स्याद्भ्रान्तिनिवृत्त्यादिकं तर्हि तेषां प्रामाण्यं च साक्ष्येव गृह्णाति इति वाच्यम् । ततः किम् । क्वचित्तेषां वाक्यादीनामात्यन्तिकप्रामाण्यग्रहणे साक्षी शक्तः क्वचित्प्रत्यक्षादेरात्यन्तिकतद्ग्रहणेऽशक्त इति यदि अङ्गीक्रियते तर्हि क्वचिच्छक्तिः क्वचिन्नेति वैषम्यं कुतः । वाक्यादिवत्प्रत्यक्षादीनामप्यात्यन्तिकमेव प्रामाण्यं गृह्णीयादित्यभिप्रायकं 'तत्प्रामाण्यं यथे'त्यादिमूलं पूर्ववद्योज्यमिति ।

**शे०वा०—** उक्तरीत्याऽन्यथेत्यादिग्रन्थयोजनायां 'वाक्यानुमादितश्चेत्स्यादि'त्यादेरुक्तार्थविवरणत्वादि-कुसृष्टेराश्रयणीयत्वात् वक्ष्यमाणरीत्या विकल्पितपक्षद्वयोत्तरत्वेन तद्योजनायां तदप्रसक्तेर्विकल्पोत्तरत्वेनैव ग्रन्थं सङ्गमयितुमाह **अथवेति** । सङ्गतिमात्रमत्र पूर्वपक्षाद्विशेषः । योजना तु पूर्वोक्तैवेति द्रष्टव्यम् ।

**विठ्ठल०— अन्यथेत्यादि** श्लोकचतुष्टयस्य प्रकारान्तरेण तात्पर्यमाह **अथवा किं साक्षीति** ।

१८० **सु०— स्यादेतदेवं यद्यक्षजादिज्ञानं निर्दोषं स्यात् । न चैवम्, अविद्याकृतप्रपञ्च-विषयत्वात्, शुक्तिकारजतादिज्ञानवत् । नन्वविद्या किमाश्रितेति चेत्, जीवाश्रितेति ब्रूमः । नन्वत्रापि दूषणमुक्तं 'स्वतोऽन्यते'ति । नैतदस्ति, तद्भेदस्याप्याविद्यकत्वात् । न च चक्रकादिदोषः, प्रपञ्च(विश्व)स्य जीवाज्ञानकृतत्वेन श्रुत्यादिसिद्धत्वात्, प्रमिते चार्थे तर्काणामवकाशाभावात् । न च कल्प्याभावदोषः, विश्वस्यैकाज्ञानकृतत्वाङ्गीकारात्, तदतिरिक्तजीवजडप्रपञ्चस्य कल्प्यत्वोपपत्तेः । एकजीववादो हि मायावादिनां परं हृदयम्, बहुजीववादस्तु मन्दानामाभिमुख्यायावतारित; इत्यत आह एकेति ।**





**अनु०— एकाज्ञानकृतं विश्वमिति यच्चोच्यते मृषा ।
बहुज्ञानकृतं विश्वमिति तस्योत्तरं भवेत् ॥**

**उच्यते** ब्रह्मविवर्तवादिभिः; **मृषा** प्रमाणेन विना ।

एतदुक्तं भवति । स्यादपीदं कथञ्चित्, यदि विश्वस्यैकजीवाज्ञानकल्पितत्वं स्यात् । न चैतदस्ति, प्रमाणाभावात् । श्रुत्यादेरनुपदमेव सम्यग्व्याख्यास्यमानत्वात्, बहूनामीश्वरस्य तत्प्रेरितानां ब्रह्मादीनां च ज्ञानेच्छाप्रयत्नैर्निर्मितत्वे श्रुत्यादिप्रमाणंसद्भावेन तद्विरुद्धत्वाच्चेति ।

**परि०—** उत्तरवाक्यमवतारयति **स्यादेतदिति** । **शुक्तिरजतादिज्ञानवदिति** । तन्मते शुक्तिकारूपाधिष्ठानावच्छिन्नचैतन्यगताज्ञानमेव दुष्टचक्षुरादिसंप्रयोगजन्यशुक्तिकाद्याकारान्तःकरणवृत्तिक्षुभितं सत् रजतादिरूपेण भ्रान्तिज्ञानरूपेण च द्वेधा परिणमत इत्यङ्गीकाराच्छुक्तिरजतादावविद्याकृतत्वमस्तीति भावः । नन्वविद्यायाः 'निर्विशेषे स्वयं भाते' इत्यादिना आद्यसूत्रे चिन्मात्राश्रितत्वपक्षस्य 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा' इत्यादिना अत्रैव पूर्वत्र सर्वज्ञब्रह्माश्रितत्वपक्षस्य जीवाश्रितत्वपक्षस्यापि च अयोगेन निरस्तत्वात् पुनः कथमियमाशङ्केति भावेन सिद्धान्ती शङ्कते **नन्वविद्येति** । **स्वतोऽन्यते(ती)ति** । अन्यगा चेत्स्वतोऽन्यता' इति ग्रन्थे जीवगतेतिपक्षे जीवब्रह्मभेदः स्वाभाविकः स्यात् तथा च अपसिद्धान्त इत्युक्तमित्यर्थः । नन्वस्मिन्नपि पक्षे 'नाज्ञानकल्पकं किञ्चिदन्योन्याश्रयता यत' इत्यनेनैव दोष उक्तः तमाशङ्क्य निराह **न चेति** । भेदेऽविद्यापेक्षा, अविद्यायां च जीवापेक्षा, जीवश्च भेदापेक्ष इति चक्रकेत्यर्थः । भिन्नजीवापेक्षमज्ञानमज्ञानाधीनो बह्मभिन्नो जीव इति विवक्षयाऽन्योन्याश्रय आदिपदेन ग्राह्यः । **श्रुत्यादीति** । 'अनादिमायया सुप्तो यदा जीव' इत्यादिसिद्धत्वादित्यर्थः । यद्यप्येषा अभ्यधिकाशङ्का न मूले भाति । तथापि 'वाक्याऽनुमादितश्चेत्स्यादि'ति प्रकरणबलाद्वा 'प्रपञ्चो यदी'ति श्रुतेरग्रे प्रथमव्याख्यानबलाद्वा लभ्यत इति भावः । यद्वा मृषापदव्यावर्त्योक्तिरियमिति ध्येयम् । ननु 'नादेहयोगिनो दृष्टिरि'त्यादिना 'किं भ्रान्तिकल्पितं तत्रे'ति ग्रन्थेन पूर्वत्रैव कल्प्याभावस्योक्तत्वात् जीवाश्रिताज्ञानवादोक्तिरयुक्तेति भावेनाशङ्क्य निराह **न चेति** । आत्माश्रयनिरासायोक्तम् **तदतिरिक्तेति** । कल्पकजीवातिरिक्तेत्यर्थः । अभ्यधिकाशङ्कया प्रातिस्विकरूपेणैतत्पक्ष(स्यात्रो)स्योत्तरत्रोत्थानमुपेत्य





दूषणोक्तौ किं बीजमित्यत आह **एकजीवेति** । यच्चेति चशब्दः यच्चाविकृतमेवैकमित्युक्तेन समुच्चयार्थ इति भावेनाह **ब्रह्मविवर्तवादिभिरिति** । ज्ञानेत्युपलक्षणं मत्वोक्तं **ज्ञानेच्छाप्रयत्नैरिति** ।

**गु०दी०— प्रपञ्चस्य कल्प्यत्वोपपत्तेः** इत्यत्र जीवभेदस्यानादित्वात् स्वाश्रितानाद्यविद्यावशादेव स एको जीवो निष्पन्न इति मायावादिनां हृदयमिति ज्ञेयम् ।

**यादु०—** 'देहिनः कारणयुता देहाश्च यदि न भ्रमात् । किं भ्रान्तिकल्पितं तत्रे'त्युक्तदोषमाशङ्क्य परिहरति **न च कल्प्याभावेत्यादिना** । तथाऽपि 'नादेह्ययोगिनो दृष्टिरिति तत्कारणं स्वतः' इत्युक्तदोषो नात्र परिहर्तुं शक्य इत्याशयेन कथञ्चिदित्युक्तम् । **श्रुत्यादेरिति** । अनादिमायया सुप्त इत्यादिश्रुतेरित्यर्थः । आदिपदेनैकविज्ञानेन सर्वविज्ञानप्रतिपादकस्य प्रपञ्चमिथ्यात्वाक्षेपकवाक्यस्य वाचारम्भणमित्यादिदृष्टान्तोपपादकवाक्यस्य च सङ्ग्रहः ।

**वं०प०— तद्भेदस्य** = जीवब्रह्मभेदस्य । **आविद्यकत्वात्** = भ्रान्तिकल्पितत्वात् । **चक्रकेति** । जीवेशभेदसिद्धौ भिन्ने जीवेऽज्ञानसिद्धिः तत्सिद्धौ भ्रमसिद्धिः तत्सिद्धौ च तत्कल्पितभेदसिद्धिरिति पूर्वोक्तं चक्रकमित्यर्थः । **सिद्धत्वादिति** । तथा च न विपर्यये पर्यवसानमिति भावः । **दोष इति** । 'देहिनः कारणयुता देहाश्चे'त्याद्युक्तरीत्येत्यर्थः । **एकाज्ञानेति** । एकजीवाज्ञानेत्यर्थः । **तदतिरिक्तेति** । कल्पकैकजीवव्यतिरिक्तेत्यर्थः । यद्यपि कल्प्याभावदोषो नास्ति । तथापि नादेह्ययोगिनो दृष्टिरित्युक्तदूषणं तु अपरिहार्यमेवेति द्रष्टव्यम् । अत एवोत्तरत्र कथञ्चिदिति वदिष्यति ।

**आनन्दः—** एकाज्ञानकृतमिति मूलस्य पूर्वोक्तार्थासङ्गतत्त्वपरिहाराय सङ्गतिं दर्शयति **स्यादेतदिति** । नन्वविद्या हि कल्पनार्थं स्वीकृता । तच्च कल्प्यस्यैवाभावात् कस्य कल्पना तया क्रियत इत्याह **न च कल्प्याभाव इति** । नन्वेकजीववादस्य प्रामाणिकत्वात् तत्स्वीकार इत्यत आह **एकजीवेति** । न केवलं प्रमाणाभावः किं तु प्रमाणविरोधश्चास्तीत्यत आह **निमित्तत्व इति** ।

**श्रीनिधि०— जीवाज्ञानकृतत्वेन श्रुत्यादिसिद्धत्वादिति** । 'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते' इत्यादि श्रुतिः अहमज्ञ इत्यक्षजं च तत्सिद्धत्वादित्यर्थः ।

**शे०वा०—** ननु विश्वस्यैकाज्ञानकृतत्ववादिमतनिराकरणं प्रकृतासङ्गतत्वान्न कार्यमिति तत्परोत्तरवाक्यवैयर्थ्यमित्यतः प्रागभिहितस्य साक्षिणोऽक्षजादिज्ञानप्रामाण्यग्रहणद्वारा तद्विषयाबाध्यत्वस्योपपादकं यदक्षजादिज्ञाननिर्दोषत्वं तत्सिद्ध्यर्थत्वान्न तदिति भावेनाक्षजादिज्ञानस्य सदोषत्वाशङ्कामुत्थापयति **स्यादेतदेवमिति** । ननु 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगे'त्याश्रयविकल्पेन अविद्याया एव परमतेऽनुपपत्त्या नाक्षजादिज्ञानस्याविद्याकृतप्रपञ्चविषयकत्वमिति कथं न निर्दोषत्वमिति भावेन गूढाभिसन्धिः शङ्कते **नन्विति** ।





द्वितीयपक्षोक्तदूषणस्याभासत्वान्नाश्रयानुपपत्त्या तन्निरासो युक्त इति गूढाभिसन्धिरेव तं पक्षं तावत्परिगृह्णाति **जीवेति** । पूर्ववादी स्वाभिसन्धिमुद्घाटयति **नन्वत्रेति** । अविद्याश्रयस्याविद्याकल्पितत्वायोगात् जीवब्रह्मणोरन्यता स्वाभाविकीत्यापत्त्या अपसिद्धान्त इति दूषणं 'स्वतोऽन्यता' इत्यनेनोक्तमित्यर्थः । इदानीमुत्तरवाद्यपि स्वाशयमुद्घाटयति **नैतदस्तीति** । तत्कथमित्यतो 'भेदो विभ्रमजो यदी'ति पूर्वानुव्याख्यानं मनसि निधाय अपसिद्धान्तं परिहरति **तद्भेदस्येति** । **न च चक्रकादीति** । 'भ्रान्तेरज्ञानमूलत्वात् तस्य भेदव्यपक्षये'त्यादि-पूर्वोक्तरीत्येति शेषः । **तर्काणामिति** । अन्योन्याश्रयादितर्काणामित्यर्थः । **अवकाशेति** । विपर्ययपर्यवसान-हीनतया आभासत्वादिति भावः । 'नादेहयोगिनो दृष्टिरि'त्यादिपूर्वोक्तरीत्या अनन्तजीवानां सकारणकानां तदीयदेहेन्द्रियाणां च अनाविद्यकत्वात् विषयाणामपि देहेन्द्रियादिनिर्वाहार्थत्वेन अभ्रान्तिकल्पितत्वात् तदतिरिक्तस्य च प्रपञ्चस्यैवाभावान्न किञ्चिदपि परपक्षेऽविद्याकल्पितमस्तीत्यपसिद्धान्त एवेत्याशङ्कते **न च कल्प्येति** । भवेदेवं कथञ्चिद्यदि सर्वेषां जीवानां कल्पकत्वं स्यात् । न चैतदस्ति । किन्त्वेकस्यैव तस्य । तथा च सर्वेषां कल्पकत्वे तद्देहेन्द्रियादिरूपस्य सकारणकस्य प्रपञ्चस्याकल्पितत्वप्राप्त्या कल्प्याभावप्राप्ता-वप्येकस्यैव कल्पकत्वपक्षे तद्देहेन्द्रियाणां सकारणकानामकल्पितत्वप्राप्त्या तदतिरिक्तस्य जीवजडात्मकसकल-प्रपञ्चस्य कल्पितत्वोपपत्तेः न कल्प्याभावो दोष इत्याशयेनाह **विश्वस्येति** ।

ननु शङ्कितायाः अक्षजादिज्ञानस्याविद्याकृतप्रपञ्चविषयत्वेन सदोषताया एव निरसनीयत्वात् न एका-ज्ञानकृतत्वनिरसनं सङ्गतम् । तादर्थ्येन निरासात् कथञ्चित्सङ्गतिसम्भवेऽपि तन्निरासकन्यायानुक्तेर्न्यूनत्वमेव । मृषेत्यनेन प्रमाणाभावकथनं चानुपपन्नमेव । प्रपञ्चो यदीत्यादिश्रुत्याद्यवलम्बनेनैकजीवाज्ञानकल्पिततायाः परेण शङ्कितत्वात् । श्रुत्यादेरन्यथासिद्धिमनुपपाद्य तदभाववचनस्याकिञ्चित्करत्वात् । किञ्च एवं मृषेत्यनेनैव प्रमाणा-भावसूचनद्वारा एकजीवाज्ञानकृतत्वपक्षदूषणसिद्धेः 'बह्वज्ञानकृतं विश्वमि'त्युत्तरार्धस्य आनर्थक्यप्रसक्तिरेवेत्यतो-ऽभिप्रायमाह **एतदुक्तं भवतीति** । **स्यादपीदमिति** । अक्षजादिज्ञानस्य अविद्याकृतप्रपञ्चविषयत्वेन अनिर्दोष-त्वमित्यर्थः । न अविद्याकल्पितविश्वविषयत्वेन अक्षजादिज्ञानस्य निर्दोषत्वाभावसिद्धिः । तथा सति विश्वस्य कल्पितत्वप्रतिपादकप्रमाणानामपि प्रपञ्चान्तर्गतत्वेन अविद्याकल्पितत्वात् तत्प्रामाण्यग्राहकस्य साक्षिणोऽपि निर्दोषत्वाभावप्रसङ्गात् तथा च तेन तत्प्रामाण्यनिश्चयान्न विश्वस्य कल्पितत्वं सिद्ध्यतीति भावेन कथञ्चि-दित्युक्तम् । ननु प्रपञ्चो यदीत्यादिवाक्यमेव तत्र मानम् । तत्र 'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यत' इत्येकवचनेनैकस्यैव जीवस्य प्रपञ्चकल्पकाज्ञानाश्रयतया प्रतीयमानत्वादित्यत आह **श्रुत्यादेरिति** । आदिपदेन एकविज्ञानेन सर्वविज्ञानप्रतिपादकस्य प्रपञ्चमिथ्यात्वाक्षेपकवाक्यस्य, वाचारम्भणमित्यादिदृष्टान्तोपपादकवाक्यस्य च परिग्रहः । **अनुपदमेवेति** । प्रपञ्चो यदि विद्येतेत्यादिनेत्यर्थः ।

**वा०र०— ततोऽन्यगेतीति** । इति पूर्वानुव्याख्यानोक्तरीत्येत्यर्थः । भेदोऽपि भ्रमज इत्यपि पदयुक्तः पाठः । **नादेहयोगिनो दृष्टिरित्यादीति** । ननु तत्र जीवब्रह्मभेदस्य वास्तवत्वमभ्युपगन्तारं प्रति जीवानामदेहानां ज्ञानानुपपत्तेर्ज्ञानकरणत्वेनेन्द्रियादेस्तदाश्रयदेहादेश्च सत्यत्वापादनेनापसिद्धान्तोऽभिहितः । न चात्र तथास्ति





तद्भेदस्याप्याविद्यकत्वादिना सर्वस्यापि मिथ्यात्वाङ्गीकारेण कल्प्यसद्भावाप्राप्त्या तदभावलक्षणदोषानवकाशादिति चेन्न । प्राग्जीवानां जीवत्वरूपेण सत्यतामङ्गीकृत्यापसिद्धान्तप्रतिपादनमत्र तु जीवब्रह्मभेदस्याविद्यकतया जीवत्वेन रूपेण जीवानां सत्यतानापत्तावपि ब्रह्मस्वरूपत्वेन तेषां सत्यत्वमङ्गीकृतमेवेति । तदनुसृत्याप-सिद्धान्तप्रतिपादनम् । ब्रह्मस्वरूपभूतानामनन्तानां जीवानां सत्यत्वाङ्गीकारेऽप्यपसिद्धान्ततादवस्थ्यं ब्रह्मणो अनन्तरूपत्वस्य प्राप्तेः । ततो यावत्पर्यन्तमेक एव जीवः सत्यः तदतिरिक्तजीवा एकजीवाज्ञानेन कल्पिता इत्येतन्न प्रतिपाद्यते तावदयमपसिद्धान्तोऽवतरिष्यत्येव । तथा चेह जीवब्रह्मभेदस्याविद्यकत्वोक्त्या भेदस्यान्यगा चेदित्युक्तस्वाभाविकत्वमात्रपरिहारेऽपि जीवानां सत्यत्वात् तदिन्द्रियादेरपि सत्यत्वात् सर्वप्रपञ्चसत्यत्वापत्तौ कल्प्याभाव इति दोषः सुलभ एव । न हि भेदस्यावास्तवत्वोक्त्या जीवत्वेन रूपेण जीवानामज्ञानाश्रयत्व-मयुक्तमिति शङ्काया अपि परिहारः । देहादीनां भ्रान्तिकल्पितत्वं तु न भेदमिथ्यात्वबललभ्यं न वा वाचनिकं प्रागिति तत्सत्यत्वाङ्गीकारमाश्रित्यापसिद्धान्तः पामरस्यापि वा सुप्रतिभासः । देहादीनां भ्रान्तिकल्पित-त्वाशङ्काभेदोऽपि भ्रमज इत्यनेन व्यावर्त्यतयोक्ता देहादेरपि भ्रान्तिकल्पितत्वाशङ्का तु भ्रमत्वे त्वियमुक्तिश्चे-त्येतदनुव्याख्यानव्यावर्त्यशङ्कात्वेनोक्ता । ततो जीवानां मिथ्यात्वप्रतिपादनातिरिक्तमेव देहेन्द्रियादिमिथ्यात्व-प्रतिपादनं पूर्वग्रन्थानुसारेणेति स्पष्टमिति देहेन्द्रियादिसत्यत्वाश्रयणेनापसिद्धान्तो दुर्वार इति स्पष्टमेव । तस्माद्ब्रह्मरूपानन्तजीवाश्रिताज्ञानकल्पितत्वपक्षे जीवानां ब्रह्मरूपेणानन्ततया सत्यानंतब्रह्माङ्गीकारप्रसङ्गेनाप-सिद्धान्तो देहेन्द्रियादेरपि सत्यत्वप्रतिषेधकोपायानुक्त्या प्रागुक्तरीत्या च सत्यत्वप्रसङ्गोऽवर्जनीय एवेति तदंशो-ऽप्यपसिद्धान्त इति युक्तमुक्तमनन्तजीवानां सकारणकानामित्यलं प्रपञ्चेन ॥

**किन्त्वेकस्यैव तस्येति** । ननु बहुजीवाज्ञानकृतत्वपक्षे अनन्तजीवतदीयदेहेन्द्रियादिप्रपञ्चस्य सत्यत्व-प्रसङ्गेन अपसिद्धान्तवत् एकजीवाज्ञानकल्पितत्वपक्षेऽपि एकस्य जीवस्य सकारणकतदीयदेहेन्द्रियाणां स्वाकल्पि-तत्वस्योक्तरीत्यैव प्राप्तत्वेन तदङ्गीकारे चापसिद्धान्ततादवस्थ्येन कथं विश्वस्यैकजीवाज्ञानकृतत्वपक्षोऽप्यङ्गी-कारार्ह इति चेन्न । तदेतत् तथाङ्गीकारिणं प्रत्येव प्रष्टव्यम् । न ग्रन्थकृतमपि । ग्रन्थकृता परकीयाङ्गीकारानुसारेण तत्तत्पक्षाणां आशङ्कापूर्वकं निराकरणमात्रस्य क्रियमाणत्वात् । परेण त्वनन्तजीवानां तदीयदेहादेश्च सत्यत्वपक्षे प्राप्तापसिद्धान्तोद्धरणाय प्रवृत्तेन देहादिप्रपञ्चांशे अपसिद्धान्तमलक्षीकृत्य जीवसत्यत्वांशे प्रसञ्जितापसिद्धान्तमेव लक्षीकृत्य तदुद्धरणाय यत्नस्य क्रियमाणत्वात् । न चैतावता प्राचीनसर्वदोषोद्धारः कुत इति कस्यापि मनोगतं भवति । अत एव प्रथमपक्षे प्राप्त बहुदोषोद्धरणाय पक्षान्तरानुसरणेऽपि न तत्पक्षान्तरे तावद्दोषोद्धारो दृश्यते । दृश्यते च प्राचीनपक्षोक्तदोषेषु केषाचिद्दोषाणां पक्षान्तरेऽपि प्रवृत्तिवर्णनं सर्वगन्थेषु बहुस्थले तदत्रापि व्याख्यात्रा यद्यपि तथापीत्यादिरूपेण एतदसिद्धान्तवक्तव्यतामाशङ्क्य स्पष्टत्वेन शिष्यैरूह्यत्वेन समाधानं सुखेन कर्तव्यम् । परकीयाशङ्कानुदयवर्णनं तु न कर्तव्यमेव । तथा सति सर्वत्र सिद्धान्त्युक्तरीत्या दोषावतारसम्भवेन शङ्कामात्रो-च्छेदप्रसङ्गात् । इत्यलं बहुना ।





**स०व्र०— न च कल्प्याभाव इति ।** 'अन्यथा चेत्स्वतोऽन्यता । नादेह्योगिनो दृष्टिरिति तत्कारणं स्वतः' इत्यादिप्रागुक्तप्रकारेण सर्वेषां कल्पकत्वे तद्देहेन्द्रियादिरूपस्य सर्वस्यापि प्रपञ्चस्य अकल्पितत्वात् कल्प्याभाव इति न वाच्यमित्यर्थः । सर्वेषां कल्पकत्वे उक्तरीत्या कल्प्याभावप्राप्तावपि एकस्यैव कल्पकत्वाङ्गीकारेण तद्देहेन्द्रियादेरकल्पितत्वेऽपि तदतिरिक्तसर्वस्य कल्प्यत्वोपपत्तेः नायं दोष इत्यर्थः । **अनुपदमेवेति** । 'प्रपञ्चो यदि विद्येते'त्यादिनेति शेषः ।

**स०ना०— निर्दोषज्ञानशक्तित इति** मूलसुधायाम् । ननु जीवब्रह्मभेदोऽप्यविद्याकल्पित इत्युक्ततयैव देहेन्द्रियाणां तत्कारणानां सर्वेषां कल्पितत्वाङ्गीकारात् जीवाश्रिताविद्ययोः कल्प्याभाव इत्याशङ्क्य परिहरति **न च कल्प्याभाव इति** । **विश्वस्यैकेति** । पूर्वाविद्यया कस्यचित् देहादेः कल्पितत्वं तदतिरिक्तजीवजडप्रपञ्चस्यैकजीवाश्रिताज्ञानकल्पितत्वमित्यङ्गीकारादित्यर्थः ।

**विठ्ठल०—** जीववादिनिराकरणपरोत्तरमूलं प्रकृते सङ्गमयितुं तन्निवर्तनीयां शङ्कां दर्शयति **स्यादेतदित्यादिना** । आश्रयानुपपत्त्या अविद्यायामेवानुपपत्तेरिति शङ्कते **नन्विति** । नन्वज्ञानस्य जीवाश्रयत्वोपपत्त्यार्थमङ्गीकृतस्य जीवब्रह्मभेदस्यापि भ्रान्तिसिद्धत्वे भ्रान्तेरज्ञानमूलत्वात् तस्य भेदव्यपेक्षयेत्युक्तन्यायेन भेदाविद्याजीवानां परस्परापेक्षया चक्रकमितरेतराश्रयो वा स्यादित्यत आह **न च चक्रकादीति** । ....... (?) ...................................................... सर्वस्यापि कल्पनोपयुक्ततया कल्प्याभावस्योक्तत्वाज्जीवाश्रिताज्ञानवादो न युक्त इत्यत आह **कल्प्याभाव इति** । ननु तर्ह्यपसिद्धान्तः मायिभिः बहुविवादस्यैव स्वशास्त्रे प्रतिपादितत्वादित्यत आह **एकजीववादो हीति** । यच्चाविकृतमेवैकमित्यनेन सह समुच्चयार्थश्चशब्द इति भावेनाह उच्यते **ब्रह्मविवर्तवादिभिरिति** । ननु कथमस्य मृषात्वं प्रपञ्चो यदीत्यादिप्रमाणानां विद्यमानत्वात् कथं च विरोधिप्रमेयोक्तिमात्रपुत्रं(?) भविष्यतीत्यत आह **एतदुक्तं भवतीति** । नादेह्योगिनो वृष्टिरित्यादिनोक्तकल्प्याभावरूपदोषस्यात्र अपरिहार्यत्वमभिप्रेत्य कथञ्चिदित्युक्तम् ।

**१८१ सु०— किञ्चैकजीवाज्ञानपरिकल्पितं जीवजडात्मकं समस्तमिति वदन् प्रष्टव्यः किमसावेको जीवस्त्वम् उतान्य इति ।**

**अन्यश्चेत्तदज्ञानकल्पितस्य तव बन्धमोक्षाभावाद्व्यर्थं पारिव्राज्यादिकम(मित्य)पद्येत ।**

**आद्येऽपि प्रतिवादिप्रमुखान् जीवान् पश्यसि न वा । प्रथमेऽपि (किं) सन्तीत्युत, न सन्तीति । आद्यं दूषयति परस्येति ।**





अनु०— परस्य सत्यतां जानन्नपि यः स्वात्मतस्करः ।
परो नास्तीति वदति

**यः परस्य** प्रतिवाद्यादेः **सत्यतां जानन्नपि परो नास्तीति वदति** । स **स्वात्मतस्कर** इति योजना । स्वात्मानमिव परमपि सत्यतया पश्यतः 'अहमेक एव सत्यो मदज्ञान-कल्पिताः सर्वे जीवा जडाश्चे'ति वचनं स्वानुभवविरुद्धमित्यर्थः । न हि त्वदज्ञान-(परि)कल्पितं समस्तमित्यत्र बलवत्प्रमाणमस्ति, येन दर्शनमपि बाध्येत । न हि सत्त्वेन प्रतीयमानस्यापि गन्धर्वनगरादेरसत्त्वम् एवमेवाङ्गीक्रियते, किन्तु बलवत्प्रमाणबाधात् । अन्यथा प्रतिवाद्यज्ञानकल्पितस्त्वमिति कथं न स्याः, तथा चानिश्चयेन न मोक्षार्था प्रवृत्तिः स्यादिति ।

**परि०**— सत्यत्वदृष्टेर्बाध्यत्वाददोष इत्यत आह **न हि त्वदज्ञानेति** । **बलवत्प्रमाणेति** । श्रुत्यादि तु न दृष्टितो बलवत् निरसिष्यते चेति भावः । तदभावेऽप्यस्तीत्यत आह **न हीति** ।

**वं०प०**— **त्वमिति** सङ्करं प्रति । अतः पारिव्राज्यादिकमित्युक्तम् । **आद्यं** एको जीवस्त्वं प्रतिवादिमुखान् जीवान् सन्तीति पश्यसीत्याद्यं पक्षमित्यर्थः । **दर्शनं** = प्रतिवादिमुखजीवदर्शनम् । प्रतिवादिमुखजीवसत्त्वज्ञानं यन्मम तत्सत्त्वेन प्रतीतगन्धर्वनगरमिव बाध्यमिति चेत् तत्राह **न हीति** । तर्हि दृष्टान्ते कथमत आह **न हीति** । प्रकृते च असत्त्वावेदकं बलवत्प्रमाणं नास्तीति भावः । **अन्यथा** = बलवत्प्रमाणाभावेऽपि यदि कल्पितत्वमित्यर्थः । इष्टापत्तिरिति चेत् तत्राह **तथा चेति** । **अनिश्चयेनेति** । अकल्पितत्वनिश्चयाभावेनेत्यर्थः ।

**आनन्दः**— ननु मद्दर्शनं बाध्यमित्यत आह **न हि त्वदिति** । सत्त्वेन प्रतीयमानत्वेऽपि गन्धर्वनगरवदसत्त्वमस्त्वित्यत आह **न हीति** । **अन्यथेति** । बलवत्प्रमाणबाधाभावेऽपि असत्त्वाङ्गीकार इत्यर्थः ।

**शे०वा०**— कल्पको जीवोऽमुक इत्यनिश्चितो निश्चितो वेति विकल्पद्वयं मनसि निधाय बह्वायाससाध्यमोक्षसाधनाननुष्ठानप्रसक्त्याऽनिश्चयपक्षं बहिरेव प्रदूष्य निश्चयपक्षं दूषयितुं तं विकल्पयति **किमसावित्यादि** । यथास्थितोद्देश्यविधेयभावविवक्षायामसिद्धस्यानुवादः सिद्धस्य विधानमित्यापत्तेः तं दर्शयति **य इति** । स्वात्मतस्करोक्तिः बाधितेत्यतः तदभिप्रायमाह **स्वात्मानमिवेति** । ननु प्रतिवादिप्रमुखानां सत्यत्व-





दर्शनस्य शुक्तिरजतादिसत्त्वदर्शनवद् भ्रमत्वात् तद्विरोधोऽकिञ्चित्कर इत्यतो भ्रमत्वस्य बाधकैकसमधिगम्यत्वेन प्रकृते च तदभावात् न तस्य भ्रमत्वमित्याह **न हीति** । **दर्शनमपीति** । प्रतिवादिमुखानां सत्त्वेन दर्शनमपीत्यर्थः । कुतो भ्रमत्वस्य बाधकैकसमधिगम्यत्वमित्यतो विपक्षे बाधकसहकृतान्निरुपाधिकसहचारदर्शनादित्याह **न हीति** । **एवमेवेति** । बलवत्प्रमाणबाधं विनैवेत्यर्थः । **अन्यथेति** । त्वदज्ञानकल्पितं सर्वमित्यत्र बलवत्प्रमाणाभावेऽपि प्रतिवाद्यादिसत्त्वविषयकत्वदीयदर्शनस्य भ्रमत्वाङ्गीकार इत्यर्थः ।

**वा०र०**— तं दर्शयतीत्यत्र तमित्यनेनोद्देश्यविधेयभावस्य बुद्ध्या विवेकेन परामर्शः ।

**विट्ठल०**— ननु सत्यत्वदर्शनस्य बाध्यत्वात् मदज्ञानपरिकल्पिताः सर्वेऽपीति वचनमुपपद्यत एवेत्यत आह न हि त्वदज्ञानेति ।

१८२ **सु०— द्वितीयतृतीयौ निराचष्टे किमिति ।**

**अनु०—**　　　　**किमित्युन्मत्तवद्वदेत् ।।**

**यदि परः प्रतिवाद्यादिजीवान्न पश्यति, पश्यन्वा न सन्तीति पश्यति; तदा किमित्युन्मत्तवद्वदेत् । न कथायां प्रविशेत्, न शास्त्रं विरचयेत् व्याकुर्याद्वा । अन्यथोन्मत्तवत् नायं लौकिको नापि परीक्षक इत्युपेक्षणीयः स्यात् ।**

**कुतो न वदेत्, येन वदन्नुन्मत्तपदवीमासादयेदित्यत आह पराभाव इति ।**

**पराभावेऽपि वाग्व्यर्था**

**वाचः परबोधनार्थत्वात् । पराभावे च तद्वैयर्थ्याद्व्यर्थ्यां वाचं न प्रयुञ्जीत । प्रयुञ्जानश्च कथमुन्मत्तो न स्यादिति ।**

**सत्यं पराभावे वचनमनर्थकम् । मयाऽपि किमपि नोच्यत इत्यत आह यदीति ।**

**यदि नैवोच्यते तदा ।**
**कशावेत्रादिकं तस्य तस्करस्योत्तरं वदेत् ।।**





**मया किमपि कदापि नैवोच्यत** इति **यदि** उच्यते **तदा** स्वक्रियाविरोधिनः सकललोकावगतार्थापलापिनः **तस्य तस्करस्य** एव दण्ड एव उचितः न प्रत्युत्तरम् । परमार्थतो नोच्यत इत्युच्यत इति चेत्, तत्किं प्रतियोग्यभावे निश्चिते व्यवहारतोऽपि वदन्तः प्रेक्षावन्तो भवन्ति, येनेदमुच्येतेति ।

**परि०**— द्वितीयतृतीयावित्युक्तकल्पद्वयं व्यञ्जयन्नेव व्याचष्टे **यदि पर** इत्यादिना । **अन्यथेति** । अपश्यन्नास्तीति पश्यन्वा यदि वदेत् तदा इत्यर्थः । **प्रतियोग्यभाव इति** । प्रतिभटस्याभाव इत्यर्थः ।

**गु०दी०**— **दण्ड एव उचितो न प्रत्युत्तरम्** इति वदतोऽयमभिप्रायः । सर्वकल्पकः स एको जीवस्तावद्व्यावहारिको वाच्यः । न तु कल्प्यजीववत् सोऽपि सर्वथाऽविद्यमानः । एवं च तदीयान्तःकरणव्यवहारादिकमपि व्यावहारिकमेवेति कथं न ब्रूयात् । तथा सति श्रवणमननाभावेन अनिर्मोक्षप्रसङ्गात् । अतो यत्किञ्चिदेतदिति दूषणमपि द्रष्टव्यम् ।

**यादु०**— **द्वितीयतृतीयाविति** । न सन्ति न पश्यसीति द्वितीयतृतीयावित्यर्थः । अत्र प्रथमपक्षस्य द्वेधा विकल्पितत्वात् न पश्यसीत्यस्य द्वितीयस्यापि तृतीयत्वमिति ज्ञातव्यम् । **प्रतियोग्यभाव इति** । प्रतिवाद्यभाव इत्यर्थः ।

**वं०प०**— **द्वितीयतृतीयाविति** । प्रतिवादिमुखान् न सन्तीति पश्यसीति द्वितीयः पक्षः प्रतिवादिमुखान् जीवान् न पश्यसीति तृतीयः पक्षः । प्रथमपक्षस्य द्वेधा विकल्पितत्वात् न पश्यसीति द्वितीयत्वेनोक्तस्यापि तृतीयत्वं मन्तव्यम् । **अन्यथा** = यदि वदेदित्यर्थः । **कुत इति** । निमित्तादित्यर्थः । **येन वदन्निति** । येन अवचने निमित्तसद्भावेनेत्यर्थः । **स्वक्रियेति** । मया कदाऽपि किमपि नोच्यत इत्यस्या एव वचनक्रियायाः प्राप्तत्वादित्यर्थः । कशावेत्रादिकमित्यस्य तात्पर्यं **दण्ड एवेत्यादि** । **प्रतियोगी** = प्रतिवादी । **व्यवहारत इति** । भ्रान्तिसिद्धसत्त्वरूपव्यावहारिकसत्त्वमङ्गीकृत्यापीत्यर्थः । **येन** यदि प्रेक्षावन्तो भवन्तीत्यर्थः ।

**आनन्दः**— **अन्यथेति** । परमपश्यन्नपि यदि वदेदित्यर्थः ।

**श्रीनिधि०**— **सकललोकावसितार्थापलापिन इति** । स्वशास्त्रं च व्याख्यानादेरित्यर्थः ।

**शे०वा०**— **द्वितीयतृतीयाविति** । न सन्तीति, न पश्यसीति द्वितीयतृतीयावित्यर्थः । यद्यपि न पश्यसीति द्वितीयः पक्षः तथापि पश्यसीति प्रथमस्य द्वेधा विकल्पितत्वात् तदभिप्रायेण न पश्यसीत्यस्य तृतीयत्वमित्यवधेयम् ।





स०व्र०— **प्रतियोग्यभावे निश्चित इति ।** प्रतिवाद्यभावे निश्चित इत्यर्थः ।

विट्ठल०— **द्वितीयतृतीयाविति ।** प्रथमपक्षस्य द्वेधा विकल्पितत्वात् द्वितीयपक्षस्य तृतीयत्वमिति ज्ञातव्यम् । **अन्यथेति ।** एवमपि यदि कथाप्रवेशादिकं कुर्यात् तदेत्यर्थः । **प्रतियोग्यभाव इति ।** प्रतिवादिपुरुषाभाव इत्यर्थः ।

**॥ इति साक्षिणस्त्रैकालिकाबाध्यार्थगोचरत्वे 'गगनादेः सकलप्रपञ्चस्य त्रैकालिकाबाध्यत्वं साक्षिसिद्धं' इत्यर्थस्य उपसंहारपूर्वकं विवरणम् ॥**

**॥ इति साक्षिणस्त्रैकालिकाबाध्यार्थगोचरत्वम् ॥**

**॥ इति 'गगनादिविश्वसत्यतायाः साक्षिप्रत्यक्षसाधितत्वे' किरणावलीकारीयमतनिरासः ॥**

**॥ इति गगनादिविश्वसत्यतायाः साक्षिप्रत्यक्षसाधितत्वम् ॥**

**॥ इति 'प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां बाह्योपपत्तिविरोधस्य व्युत्पादने' विश्वसत्यत्वे प्रत्यक्षप्रमाणम् ॥**

**॥ इति तत्र विश्वसत्यतायां प्रमाणम् ॥**

**॥ इति प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां बाह्योपपत्तिविरोधस्य व्युत्पादनम् (सर्वसाधारणानुपपत्तिप्रपञ्चनम्) ॥**

* * *

**॥ अथ 'नादेहयोगिनो दृष्टिः' इत्यनुव्याख्यानोक्तविषयस्योपपादने, प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां आन्तरानुपपत्तिप्रदर्शनपूर्वकं अविरुद्धार्थकथनम् (असाधारणानुपपत्तिव्युत्पादनम्) ॥**

**॥ तत्रादौ 'प्रपञ्चो यदि वियेत' इत्यादि वाक्यद्वयस्य व्याख्यानम् ॥**

**॥ तत्राप्यादौ एतद्वाक्यद्वयस्य पराभिमतेऽर्थेऽनुपपत्तिः ॥**

**१८३ सु०—** प्राक् प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां बाह्योपपत्तिविरोधः (प्रतिपा)व्युत्पादितः, इदानीमान्तरानुपपत्तिप्रदर्शनपूर्वकं तासामविरुद्धार्थव्याख्यानार्थमुत्तरो ग्रन्थः ।

अथवा सर्वश्रुतिसाधारणानुपपत्तिः प्राक् प्रपञ्चिता, इदानीमसाधारणानुपपत्तिर्व्युत्पाद्यते ।

तत्र तावत्प्रपञ्चो यदि वियेतेत्यादिवाक्यद्वयं पठित्वा पराभिमतेऽर्थेऽनुपपत्तिमाह **प्रपञ्च इति ।**





**अनु०— प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥**

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥**

**इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयम् ।**
**विश्वस्य सत्यतामाहुः**

नन्वत्र सूत्रगृहीततया परेणोपात्तानां श्रुतीनामनुपपत्त्यादिकं प्रथमतो वक्तव्यम् । सत्यम् । तथाऽप्येकजीवाज्ञानपरिकल्पितत्वे समस्तस्य, न प्रमाणमस्तीत्यनन्तरमेवोक्तम् । अस्यां च तदापाततः प्रतीयते, 'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यत' इत्युक्तत्वात् । अत उभयानुगुण्यादस्याः प्रथमप्राप्तिः ।

**इत्यत्र** श्लोकद्वये **यदि**शब्दद्वयं **निवर्तेत** इति लिङ्प्रयोगद्वयं च । उपलक्षणं चैतत् । **विद्येत** इत्यपि ग्राह्यम् । तथा **केनचित्** इति । **सत्यताम्** इत्युपलक्षणम्, अनादितां चेति ग्राह्यम् । **आहुः** इत्यवगमयन्तीत्यर्थः । तथा च विश्वमिथ्यात्वपरतया व्याख्याने तदनुपपत्तिरिति शेषः ।

यद्यत्र प्रपञ्चमिथ्यात्वमभि(सं)धित्सितं स्यात् तदा योऽयं प्रपञ्चो विद्यत इव दृश्यते स निवर्तिष्यते अज्ञानेन कल्पितो विकल्पो विनिवर्तिष्यत इति वक्तव्यम् ।

यद्याद्यास्तुशब्दा विगतार्था विरुद्धार्थाश्च । तत्प्रयोगे हि प्रसङ्गद्वयपरमेतद्वाक्य-द्वयमिति विज्ञायते । यदि पर्वतो निरग्निको भवेत् तर्हि निर्धूमोऽपि स्यादिति यथा ।

**परि०—** 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेदि'त्यादिजिज्ञासासूत्रानुभाष्येण 'भ्रमत्वे त्वियमुक्तिश्च तदन्तःपतनान्न ही'त्यादिना अत्रत्यपूर्वानुभाष्येण च पौनरुक्त्यनिरासायाह **प्राक् प्रपञ्चेति** । बाह्याभ्यन्तरप्रपञ्चेत्यर्थः । **सर्वश्रुतीति** । सर्वासां मिथ्यात्वश्रुतीनामित्यर्थः ।





**वाक्यद्वयमिति** । अनेन प्रपञ्चो यदीत्यादिवाक्यद्वयं नास्त्येव माण्डके गौडपादेन कल्पितमिति केषाञ्चिद्वचनमसाम्प्रदायिकत्वादुपेक्ष्यमिति सूचितम् । **श्रुतीनामिति** । वाचारम्भणमित्यादीना-मित्यर्थः । **अनन्तरमेवोक्तमिति** । अव्यवहितपूर्वग्रन्थ एवोक्तमित्यर्थः । **अस्यां चेति** । व्याक्रिय-माणप्रपञ्च इत्यादि श्रुतावित्यर्थः । **उक्तत्वादिति** । पूर्वतनमन्त्रे एकवचनेनैकजीववादस्योक्त-त्वादित्यर्थः । **उभयानुगुण्यादिति** । प्राक्प्रकृतप्रपञ्चमिथ्यात्वानन्तरप्रकृतैकाज्ञानकल्पितत्वरूपोभया-नुगुण्यादित्यर्थः । चशब्दस्यान्वयोक्तिः **लिङ्प्रयोगद्वयं चेति** । **यद्याद्यास्त्विति** । यदिशब्द-प्रभृतिशब्दास्त्वित्यर्थः ।

**गु०दी०— अनन्तरमेवोक्तम्** इत्यत्र अन्तरं व्यवधानं यथा न भवति तथा अनन्तरमव्यवधाने-नोक्तमित्यर्थः ।

**यादु०— प्राक्प्रपञ्चेति** । 'भ्रमत्वे त्वियमुक्तिश्चे'त्यादावित्यर्थः । **उभयानुगुण्यादिति** । यत्सूत्रार्थतया पूर्वं प्रकृतं प्रपञ्चमिथ्यात्वं यच्चानन्तरप्रकृतमेकजीवाज्ञानकल्पितत्वं तदुभयानुगुण्यादित्यर्थः । विरुद्धार्थत्वमुप-पादयति **तत्प्रयोगे हीत्यादिना** ।

**वं०प०— सूत्रेति** । प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रखण्डेत्यर्थः । **अनन्तरं** = अन्तरमवकाशं विनेत्यनन्तरम् । **अव्यवधानेन** = पूर्वमित्यर्थः । **अस्यां** = प्रपञ्चो यदीति श्रुतौ । **तत्** = एकजीवाज्ञान-कल्पितत्वम् । तदुपपादयति **अनादीति** । यदिशब्दद्वयवन्निवर्तेतेतिशब्दद्वयं व्यर्थमिति प्रतीयते अत आह **लिङिति** । विद्येतेत्यत्रापि लिङेव व्यर्थ इत्यर्थः । वचनस्य पुरुषधर्मत्वादाहुरिति कथमत आह **आहुरितीति** । केनचिदित्यस्य वैयर्थ्यमुक्तम् । तद्दर्शयति **अज्ञानेनेति** । लभ्यत इति तात्पर्यं सूचितमित्यन्वयः ।

**आनन्दः—** ननु परोदाहृतश्रुतीनामुपपत्तिविरोधस्य पूर्वमेव व्युत्पादितत्वादुत्तरग्रन्थसन्दर्भोऽनर्थक एवेत्यत आह **प्राक्प्रपञ्चेति** । **तत्र तावदिति** । अत्र तावच्छब्दश्श्रुत्यन्तरव्याख्यानमप्यग्रे करिष्यत इति सूचयति । आदौ स्वाभिप्रेतार्थः कथनीयः अनन्तरं पराभिप्रेतार्थो दूषणीयस्तत्किमित्येवं कृतमिति वाच्यम् । यावत्पर्यन्तं पराभिप्रेतोऽर्थो न दूष्यते न तावत्स्वाभिप्रेतार्थो बुद्ध्यारूढो भवति । अतस्तस्य बुद्ध्यारूढत्व-सिद्ध्यर्थं आदौ परोक्तदूषणमिति भावः । **उभयानुगुण्यादिति** । एकजीवमतनिरासः विश्वस्य ब्रह्मविवर्तत्व-निरासश्चेत्युभयानुगुण्यादित्यर्थः । यद्वा सर्वस्य मिथ्यात्वं एकजीवाज्ञानकल्पितत्वं चेत्युभयं ग्राह्यम् । आहु-रित्यनेनोक्तवस्तुत्वस्य जडेषु लिङ्गादिष्वसम्भवात् व्याख्याति । **आहुरितीति** । विगतार्थत्वस्य स्पष्टत्वादुपेक्ष्य विरुद्धार्थत्वमुपपादयति **तत्प्रयोगे हीति** ।





**श्रीनिधि०— बाह्योपपत्तिविरोध इति** । बहिरेव प्राप्ता उपपत्तिविरोधः । न तु श्रुतिस्थपूर्वोत्तरपदपर्यालोचनया प्राप्त इत्यर्थः । आन्तरश्रुतिश्रुतिपदपर्यालोचनया प्राप्त इत्यर्थः । समस्तस्य एकजीवाज्ञानकल्पितत्व इति सम्बन्धः । **उभयानुगुण्यादिति** । एकजीववादबहुजीववादयोरनुगुणत्वादित्यर्थः । यथा सौम्ये केनेत्यस्य तु नैकं जीववादानुगुण्यमस्ति तत्र जीवज्ञानकल्पितत्वस्याप्रतीतेः । **घञर्थे कविधानमिति** । यदि घ...वत्स्यात् तदा आदेश उपदेशेऽस्तीति इत्यात्वेऽपि आतो लोप इटि चेति आकारलोपो न प्राप्तेति । क्ङिति चेत्युक्तः । अत एवमुक्तम् ।

**शे०वा०—** भ्रमत्वे त्वियमुक्तिश्चेत्यादिनैव प्रपञ्चमिथ्यात्वसाधकत्वेनोदाहृतश्रुत्यादेर्निरस्तत्वात् किमुत्तरेण ग्रन्थेनेत्यतोऽसङ्कीर्णतासिद्धये पूर्वोत्तरप्रकरणयोरर्थभेदं दर्शयति **प्रागिति** । ननु प्रत्येकं बाह्योपपत्तिविरोधाप्रतिपादनात् कथमेतत् । न च साधारणबाह्यानुपपत्तिः प्रागभिहितेत्यभिप्रायः । तर्ह्यावश्यकत्वात् तावत एव वक्तव्यतया बाह्यत्वविशेषणवैयर्थ्यादित्यरुच्या पक्षान्तरमाह **अथवेति** । **सूत्रगृहीततयेति** । प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रखण्डगृहीततयेत्यर्थः । **श्रुतीनामिति** । 'उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवती'त्यादीनामित्यर्थः । अनुपपत्त्यादिकमित्यादिपदेन अविरुद्धार्थसङ्ग्रहः । **तदिति** । एकजीवाज्ञानकल्पितत्वमित्यर्थः । उपलक्षणं चैतत् । प्रपञ्चमिथात्वमपीति द्रष्टव्यम् । **प्रथमत इति** । उपात्तश्रुतिपरित्यागेनानुपात्तश्रुत्यादेरेवानुपपत्त्यादिप्रदर्शनि कारणविशेषाभावादिति भावः । **उभयानुगुण्यादिति** । यत्प्रकृतिश्चेत्यादिसूत्रार्थतया प्रकृतं प्रपञ्चमिथ्यात्वं यच्चानन्तरप्रकृतं सर्वस्यैकजीवाज्ञानकल्पितत्वं तदुभयप्रतिपादकत्वादित्यर्थः । **प्रथमप्राप्तिरिति** । प्रथमं निराकर्तव्यतया प्रसक्तिरित्यर्थः । मूले यदिशब्दौ चेत्यत्र यदिशब्दस्यैकत्वेऽपि स्थानद्वयपठितत्वात् यदिशब्दावित्युक्तमित्यवधेयम् । अपेक्षिताध्याहारं प्रदर्शयन्नेव चशब्दस्य भिन्नक्रमत्वं चाश्रित्य निवर्तेतेति च द्वयमित्येतद्व्याचष्टे **निवर्तेतेति** । यद्यपि लिङ एकत्वाद् द्वयशब्देनोक्तद्वित्वान्वयो बाधितो धातोरप्येकत्वेन धातुभेदेन समुदाययोर्भेद इति तत्त्वनिर्णयटीकोक्तरीत्या न तदन्वय उचितः । तथाऽपि निवर्तेतेत्यस्य स्थानभेदेन द्विप्रयोगात् तत्प्रयोगस्य द्वित्वान्वयो न बाधित इति भावेन लिङ्द्वयमित्यनुक्त्वा तत्प्रयोगद्वयमित्युक्तमित्यवधेयम् । विद्येतेति प्रसङ्गरूपेण कथनमिति तत्त्वनिर्णये सत्यत्वावगमकत्वेन विश्वमिथ्यात्वपरतया तदनुपपत्तेरुक्तत्वात् तदनुसारेण निवर्तेतेति च द्वयमित्येतदुपलक्षणमित्याह **उपलक्षणमेतदिति** । **तथा केनचिदितीति** । केनचित्कल्पित इत्यपि ग्राह्यमित्यर्थः । इदं च केनचित्कल्पित इत्यस्य केनचित्कल्प्येतेत्यर्थकत्वमभिप्रेत्योक्तम् । अत एवान्यत्र लिङ्प्रत्ययचतुष्टयमित्युक्तिः सङ्गच्छत इति ध्येयम् । अतः प्रपञ्चस्यानादिसत्यत्वपरमिति तत्त्वनिर्णयानुसारेण सादिश्चेन्नाशमाप्नुयादित्युत्तरग्रन्थानुसारेण चाह **सत्यतामित्युपलक्षणमिति** । वक्ष्यमाणरीत्या सत्यत्वादेः वाक्यसामर्थ्यलभ्यत्वेन शाब्दत्वाभावादाहुरित्युक्त्यनुपपत्तिरित्यत आह **आहुरितीति** । ननु विश्वस्य सत्यतामाहुरित्यनेन प्रपञ्चो यदीत्यस्य मिथ्यात्वपरत्वे किं दूषणमुक्तं भवति । पराभिमतार्थेऽनुपपत्तिप्रदर्शनपूर्वमविरुद्धकथनार्थमेवास्य ग्रन्थस्य प्रवृत्तत्वादित्यत आह **तथा चेति** । कासौ यद्यादिशब्दानामनुपपत्तिरित्यतो विगतप्रयोजनत्वं विरुद्धार्थत्वं चेति मनसि निधाय विगत-





प्रयोजनत्वं तावदुपपादयति **यद्यत्रेत्यादि** । विरुद्धार्थत्वमेवोपपादयति **तत्प्रयोगेति** । यद्यादिशब्दप्रयोग इत्यर्थः । कुतो यद्यादिशब्दप्रयोगमात्रेणास्य वाक्यद्वयस्य प्रसङ्गद्वयपरत्वविज्ञापकत्वमित्यतो **यदिशब्दसहितस्य** लिङो, यदि पर्वतो निरग्निकः स्यात् तर्हि निर्धूमोऽपि स्यादित्यादौ प्रसङ्ग एव दृष्टत्वादित्याशयेनाह **यदीति** ।

**वा०र०— तावत एवेति** । साधारणानुपपत्तिरित्येतावतावत एवेत्यर्थः । कल्पितताया: परेणेति पाठः । **तत्त्वनिर्णयटीकोक्तरीत्येति** । रीत्यापीत्यर्थः । तत्र हि यदिशब्दश्चेति मूलपाठपक्षे युज्यन्त इति बहुवचनमुपपादयितुं प्रसङ्गरूपेण कथनद्वयमङ्गीकृत्य द्वित्वोपपादनाय लिङ एकत्वेऽपि धातुभेदेन समुदाययोर्भेदादित्युक्तमित्यर्थः । **न तदन्वय इति** । निवर्ततेत्यस्य द्विरूपात्ततया धातोरेकत्वादित्याशयः । **स्थानभेदेनेति** । तत्त्वनिर्णयटीकायां यदिशब्दावित्यस्य तथैवोपपादनादिति भावः । **तदनुपपत्तेरिति** । विद्यते यस्येत्यनुपपत्तेरित्यर्थः । विद्येतेत्यस्य विश्वमिथ्यात्वपरत्वानुपपत्तेरिति यावत् । तत्र हेतुः **सत्यत्वेति** । सत्यत्वावगमकत्वोपपादनत्वेनेत्यर्थः । **अन्यत्रेति** । श्रुत्यर्थन्यायामृत इत्यर्थः । किं दूषणमुक्तं भवतीति पाठः । मूलकोशे तथैव सत्त्वात् । इत्युक्तमिति तु लेखकप्रयुक्तः । कुतो **दूषणवचनमावश्यकं** येन तद्विशेषप्रश्नावकाश इत्यत आवश्यकत्वमुपपादयति **पराभिमतेति** । इत्यतो विगतप्रयोजनत्वमित्यादिविरुद्धार्थत्वमेवेत्यन्तम् । अनेन यद्यत्रेत्यारभ्य विगतार्था इत्यन्तेन सोपपादनं विगतार्थत्वमुक्तम् । **विरुद्धार्थाश्चेति** प्रतिज्ञान्तरम् । तदुपपादनं तत्प्रयोगे हीत्यादिकमिति मूलयोजना सूचिता भवति । **यदिशब्दसहितस्य लिङ इति** । ननु 'यद्युद्गाता जघन्यः स्यात्तर्ही'त्यादौ वेदे 'यद्यतिथिरागच्छेत् तर्हि भोजयितव्यः' स्यात्, 'यदि वृष्टिर्भवेत् तर्हि सुभिक्षं भवेदि'त्यादि लोके च व्यभिचार इति चेत् । अत्र ब्रूमः । तत्र 'हेतुहेतुमतोर्लिङि'ति सूत्रेण 'नमश्चेत्सुखं यायादित्यादाविव हेतुहेतुमतोर्लिङ् अधिकं स्यादि'ति प्रतिज्ञावाक्यशेष इत्येतन्मायावादखण्डनटीकाव्याख्यावसरे एतत्समाधानं कृतमस्ति तत्प्रकारेण द्रष्टव्यम् ।

**स०व्र०— प्रपञ्चमिथ्यात्वसिद्धय इति** । 'भ्रमत्वे त्वियमुक्तिश्च' इत्यादिनेत्यर्थः । **अत उभयानुगुण्यादिति** । यत्सूत्रार्थतया पूर्वप्रकृतं प्रपञ्चमिथ्यात्वं यच्चानन्तरप्रकृतमेकजीवाज्ञानकल्पितत्वं तदुभयानुगुण्यादित्यर्थः ।

**विट्ठल०— प्राक्प्रपञ्चितमिति** । मिथ्यात्वं यदि दुःखादेरित्यादिना जिज्ञासाधिकरणे, भ्रमत्वे त्वियमुक्तिश्चेत्यादिना अत्रापीत्यर्थः । **सर्वश्रुतीति** । मिथ्यात्वप्रतिपादकसर्वश्रुतीत्यर्थः । **सूत्रगृहीततयेति** । प्रकृतिश्च प्रतिज्ञेत्यादिसूत्रगृहीतयेत्यर्थः । श्रुतीनां वाचारम्भणमित्यादीनामित्यर्थः । **अनन्तरमेवेति** । अव्यवहितपूर्वमेवेत्यर्थः । **आपाततः प्रतीयत इति** । जीव इत्येकवचनादिति भावः । **अत उभयेति** । यत्सूत्रार्थतया प्रकृतं प्रपञ्चमिथ्यात्वं यच्चानन्तरप्रकृतमेकजीवाज्ञानकल्पितत्वं तदुभयानुगुण्यादित्यर्थः । चशब्दान्वयोक्तिः **लिङ्प्रयोगद्वयं चेति** । **तथा केनचिदिति** । विद्येतेति पूर्वश्लोकगतपदवदुत्तरश्लोकस्थं केनचिदिति पदं च





उपलक्षणतया ग्राह्यमित्यर्थः । विश्वमिथ्यात्वपरतया व्याख्याने यदीत्यादिशब्दानुपपत्तिश्चेत् कियद्वक्तव्यमित्यत आह **यद्यत्रेति** । विगतार्थत्वस्योक्तत्वाद्विरुद्धार्थत्वमुपपादयति **तत्प्रयोगे हीत्यादिना** ।

**चषकः— उभयानुगुण्यादिति** । सूत्रार्थतया प्राक् प्रकृतप्रपञ्चमिथ्यात्वं तदानन्तर्येण प्रकृतमेक-जीवाज्ञानकल्पितत्वं चेत्येतदुभयानुगुण्यादित्यर्थः । विरुद्धार्थमुपपादयति **तत्प्रयोगे हीत्यादिना** । यद्याद्यशब्द-प्रयोगे इत्यर्थः ।

**॥ इति एतद्वाक्यद्वयस्य पराभिमतेऽर्थेऽनुपपत्तिः ॥**

* * *

**॥ तत्र च उक्तार्थस्पष्टीकरणपूर्वकं एतद्वाक्यद्वयोक्तशब्दार्थकथनम् ॥**
**॥ तत्राप्यादौ 'वियेत' इत्यस्यार्थकथनम् ॥**

१८४ **सु०— प्रसङ्गस्य च विपर्यये पर्यवसानादनिवृत्त्यादिकमेव वाक्यसामर्थ्याल्लभ्यत इति परकीयमर्थमपाकुर्वतैव श्रुतितात्पर्यं सूचितम्, तत्स्पष्टीकुर्वन् वियेतेत्यस्यार्थं तावदाह वियेतेति ।**

**अनु०— वियेतोत्पत्तिमेव च ॥**

इत्येतच्छब्दरूपम् '**उत्पत्तिमेव** आह, न तु सत्तामि'ति प्रकृत्यर्थकथनम् । चशब्देन 'निवर्तेतेति विनाशमाह, न तु बाधमि'ति समुच्चिनोति ।

विद्यतेरुत्पत्त्यर्थत्वं कुत इत्यत आह **विदेति** ।

**विदोत्पत्ताविति ह्यस्माद्धातोः**

**विदोत्पत्ताविति ह्यस्माद्धातोः** । **धातोः** धातुव्याख्यानादित्यर्थः । 'विद्यतेरुत्प-त्त्यर्थत्वं प्रत्येतव्यमि'ति पूर्वेण सम्बन्धः । **धातोः** इति षष्ठ्यन्तं वा । तस्य व्याख्यानादिति शेषः । मन्दानामप्रसिद्धमपीदं धातुव्याख्यानं बहुज्ञानां प्रसिद्धमेवेति हि शब्द(ार्थ): । तथाऽपि उत्पत्तिरेवेति कुतः, सत्ताऽत्र कुतो नेत्यत आह **उत्पत्तिरेवेति** ।





**उत्पत्तिरेव हि ।**

**निवृत्तिव्याप्तियुक् प्रायः**

अत्र हि प्रपञ्चो यदि विद्येत तर्हि निवर्ततेति यदिशब्दादिबलात् प्रसङ्गोऽयमिति ज्ञायते । प्रसङ्गश्च व्याप्तिमूलः । व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इति तल्लक्षणात् । तथा च विद्येतेत्यापादकतयोक्तस्यार्थस्य निवर्ततेत्यापाद्यतयोक्तया निवृत्त्या व्याप्तिरवश्यम्भाविनी । उत्पत्तिरेव निवृत्तिव्याप्तियुक्(क्ता), न सत्ता, अस्माकं व्यभिचारित्वात्, परस्य विरुद्धत्वात् । अतः प्रतीयमानान्वययोग्यताऽभावान्न सत्ता विद्यतेरर्थः, किन्तु उत्पत्तिरेव, तद्योग्यत्वादिति । प्रध्वंसव्युदासाय **प्राय** इत्युक्तम्, उत्पत्तिर्निवृत्तियुगित्ययं **प्रायो** बाहुल्यमित्यर्थः । तथा च भावत्वे सतीत्यापादकविशेषणं विवक्षितमित्युक्तं भवति । एतेन अल्पज्ञानां धातुव्याख्याने विप्रतिपत्तिरपि निरस्ता वेदितव्या ।

ननूत्पत्तिर्नाम करणायत्तसत्तालाभः, न चाभावे सत्ताऽस्ति; इत्यभावस्य प्रसक्त्यभावात्प्राय इति व्यर्थम् । मैवम् । केयं सत्ता नामानुगतरूपा वा स्वरूपमेव वा । नाद्यः, तस्या घटादावप्यभावस्य वक्ष्यमाणत्वात् । न द्वितीयः, अभावे तद्भावस्यास्त्यभावोऽस्ति च ध्वंस इत्यादौ वक्ष्यमाणत्वादिति ।

**परि०**— असाङ्गत्यनिरासायाह **परकीयमिति** । विद्येतेत्यन्तरं पूर्वस्मात् इति पदमनुषज्यमिति भावेन व्याचष्टे **इत्येतच्छब्दरूपमिति** । विद्येतेत्यनुवादात् प्रकृतिप्रत्यययोर्द्वयोरप्युत्पत्तिरर्थ इति भ्रमं निराह **प्रकृत्यर्थेति** । धातोरित्यस्य विशेषणतया तस्येति पदं अस्मादित्यस्य विशेष्यतया व्याख्यानादिति पदं च अध्याहार्यमिति भावेनाह **तस्य व्याख्यानादिति शेष इति** । **अस्माकं व्यभिचारित्वादिति** । यदि सत् स्यान्निवर्ततेत्युक्तौ नित्यपदार्थे व्यभिचारित्वात् सत्त्वहेतोरित्यर्थः । **विरुद्धत्वादिति** । सत्त्वहेतोः ब्रह्मणि निवर्त्यत्वाभावेनैव सम्बन्धाद्विरुद्धहेत्वाभासादित्यर्थः । उत्पत्तिरेव निवृत्तिव्याप्तियुक् सत्ता तु प्राय इति प्रतीतेः कथमेवं व्याख्येत्यत आह **उत्पत्तिरिति** । **बाहुल्यं** बहुल इति स्वार्थे ष्यञ् । **एतेनेति** । सत्तार्थत्वेऽनुपपत्तिकथनेन वा उत्पत्त्यर्थत्वेन वा उपपत्तिकथनेनेत्यर्थः । **वक्ष्यमाणत्वादिति** । वैशेषिकनये 'न सर्वधर्म एकोऽस्ती'त्यादिनेति भावः । **इत्यादाविति** । वैशेषिकाधिकरणे ।





**यादु०—— प्रकृत्यर्थकथनमिति** । प्रत्ययार्थस्य विध्यादेरुत्पत्तिरूपत्वाभावादिति भावः । **अस्माक-मिति** । अनेकसत्यवादिनां गगनादौ व्यभिचारित्वादित्यर्थः । **परस्येति** । परमते ब्रह्मण एकस्यैव सत्यत्वेन सत्त्वस्य निवृत्त्यभावव्याप्ततया विरुद्धत्वादित्यर्थः । ननु व्याप्तियुक् प्राय इत्यनयोर्विरोधात् प्राय इत्यस्य केनान्वय इत्यतो व्याप्तिपदाविवक्षया पूर्ववाक्येनैवास्यान्वय इत्याह **उत्पत्तिरिति** । प्रायःशब्दस्य पुल्लिङ्ग-त्वाद्विधेयलिङ्गतामाश्रित्यायमित्युक्तम् । तथा च अयमुत्पत्तिषु विधीयमानो निवृत्तियुक्तत्वरूपोऽर्थो बाहुल्यं बहुलानां धर्मो न तु सर्वोत्पत्तिनियत इत्यर्थः । **एतेनेति** । योग्यताऽभावप्रसक्त्या श्रुत्यर्थस्यान्यथाऽसम्भवेन श्रुत्यभिप्रेतत्वेनेत्यर्थः । **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षायामिति शेषः ।

**वं०प०——** पूर्वधातोरिति पञ्चम्यन्तं कृत्वा अस्माद्धातोरिति सामानाधिकरण्येनान्वयं कृत्वा धातोरित्यस्य धातुव्याख्यानादित्यर्थः कृतः । इदानीं तु धातोरिति षष्ठीमङ्गीकृत्य तस्य धातोः विद्धातोः विदोत्पत्तावित्यस्माद्व्याख्यानात् विद्यतेरुत्पत्त्यर्थत्वं ज्ञेयमित्यभिप्रेत्याह **षष्ठ्यन्तं वेति** । **मूलः** मूलकः । **परस्येति** । सत्त्वस्यास्मन्मते निवृत्तिरूपासाध्यसम्बन्धस्य घटादावपि सत्त्वेन साध्यसम्बन्धाभावे सति तदभावेनैव सम्बन्धरूपविरुद्धताया अभावादित्यर्थः । **एतेनेति** । सत्त्वनिवृत्त्योः प्रतीयमानस्य सम्बन्धस्य बाधितत्वादेवेत्यर्थः । **अत्र** = धातौ । अल्पज्ञैर्विप्रतिपत्तिः न कार्या सत्त्वनिवृत्तिसम्बन्धस्य व्यभिचारित्वात् अतः अकामैरप्ययं धातुः स्वीकार्यः । उत्पत्तिनिवृत्तिसम्बन्धस्य भावपदार्थेऽव्यभिचारादित्युक्तं भवति ।

**आनन्दः——** कथं प्रसङ्गपरतया विरुद्धार्थत्वं लक्ष्यं तत्राह **प्रसङ्गस्येति** । सत्ताया निवृत्त्य-भावाद्व्याप्तस्य परेण स्वीकृतत्वादित्याशयः । **तथा चेति** । न चात्र सत्तैवार्थोऽस्तु व्यभिचारवारणाय उत्पत्त्यनन्तरेति विशेषणं दीयत इति वाच्यम् । परेण यत्सत् तत्सर्वदा सदेवेत्यङ्गीकारादिति भावः । **एतेनेति** । प्रतीतान्वययोग्यताभावेनेत्यर्थः । वक्ष्यमाणत्वादिति वैशेषिकपरीक्षायामिति शेषः ।

**शे०वा०——** अस्तु वाक्यद्वयस्य प्रसङ्गद्वयपरत्वसिद्धिः तावताऽपि कथं पराभिमतमिथ्यात्व-विरुद्धार्थत्वमित्यत आह **प्रसङ्गस्य चेति** । विपर्यये पर्यवसानात् तन्नियमादित्यर्थः । तद्धीनस्य प्रसङ्गा-भासत्वादिति भावः । नन्वेवं पराभिप्रेतार्थेऽनुपपत्तिप्रदर्शन एवास्य ग्रन्थस्य तात्पर्ये विद्येतेत्यादिना स्वाभिप्रेत-श्रुत्यर्थोपपादनं क्रियमाणमनुपपन्नं प्रसज्यते । श्रुत्यभिप्रायस्य पूर्वमनुक्तत्वेनोपपादनानपेक्षत्वादित्यत उक्तं **परकीयमर्थमपाकुर्वतैवेति** । विद्येतेत्यस्येत्युपलक्षणम् । निवर्तेतेत्यस्येत्यपि द्रष्टव्यम् । अत एव वक्ष्यति चशब्देनेत्यादीति ध्येयम् । प्रपञ्चादिशब्दानामप्युत्तरत्र व्याख्यानात् तावदित्युक्तम् । निर्देशक्रमभङ्गस्तु आकाङ्क्षाक्रमस्य बलवत्त्वादनुसृत इत्यवधेयम् । उक्तार्थोपपादनस्योत्तरत्र करिष्यमाणत्वात् तावदित्युक्तमित्य-प्याहुः । **प्रकृत्यर्थेति** । धात्वर्थेत्यर्थः । लिङ्प्रत्ययान्तस्य विद्येतेत्यस्योत्पत्त्यर्थकत्वाभावादिति भावः । **कुत इति** । सत्त्वाद्यर्थकत्वप्रसिद्धेरिति भावः । विदोत्पत्तावित्यस्य अधातुत्वात् कथं सामानाधिकरण्यमित्यतो





धातुशब्देन धातुव्याख्यानलक्षणामभिप्रेत्य तदुपपादयति **धातोर्धातुव्याख्यानादित्यर्थ इति** । तथा च विदोत्पत्तावित्यस्याधातुत्वेऽपि धातुव्याख्यानत्वान्नानुपपत्तिरिति भावः । अस्मिन्पक्षे धातुशब्दे लक्षणा भवतीत्यरुच्या पक्षान्तरमाह **धातोरिति षष्ठ्यन्तं वेति** । तर्हि धातोरिति षष्ठ्याः कथं विदोत्पत्तावित्यस्मादिति पञ्चम्या सम्बन्ध, इत्यतोऽपेक्षितशेषपूरणेन तमाह **तस्येति** । **कुत इति** । व्याख्यानेन विद्यतेरुत्पत्त्यर्थकत्वमात्रप्राप्तावपि विद्येतेत्यत्रोत्पत्तिमात्रवाचित्वाप्राप्तेरिति भावः । नन्वतिप्रसङ्गेन वाक्यस्थैकपदार्थस्य तत्स्थापरपदार्थं प्रति व्याप्यताया विवक्षितपदार्थतायामनुपयोगित्वात् सत्ताया निवृत्तिव्याप्तियुक्तत्वाभावेऽपि विद्यतेः सत्तार्थकत्वोपपत्तेः कथं निवृत्तिव्याप्तिराहित्येन सत्ताया विद्यर्थत्वनिराकरणम्, कथं च सत्ताया निवृत्तिव्याप्तिराहित्यमित्यतो वाक्यमात्रे पदार्थमात्रस्य तन्नियमाभावेऽपि प्रसङ्गपरवाक्ये लक्षणव्याघातेन अव्याप्येन अव्यापकस्यापादनासम्भवादापादकतयोक्तार्थस्यापाद्यतयोक्तार्थव्याप्यताया आवश्यकत्वाद्युक्तं व्याप्तिराहित्येन सत्तार्थत्वनिराकरणमिति भावेन कुतोऽस्य प्रसङ्गपरत्वमिति शङ्कां तावत्परिहरति **अत्र हीति** । **यदि शब्दादिबलादिति** । यद्यादिशब्दबलादित्यर्थः । अस्तु प्रसङ्गपरत्वं तथाऽपि कुतो व्याप्त्यपेक्षत्वमित्यतः अन्यथा लक्षणव्याघातप्रसक्तेरिति भावेनाह **प्रसङ्गश्चेति** । ननु चिरन्तनरीत्या कस्यचिदर्थस्यारोपेण अर्थान्तरापादनस्यैव वा मणिकण्ठादिरीत्या कस्यचिदर्थस्याङ्गीकारेऽर्थान्तरप्रसञ्जनस्यैव वा तर्कलक्षणत्वान्न लक्षणव्याघात इत्यतो धूलीपटले धूमभ्रमानन्तरं वह्न्यनुमितिस्थले यद्यग्निः न स्यात् तर्हि धूमोऽपि न स्यादिति तर्के तत्र निरग्निकत्वस्य सत्त्वेनारोपाभावादव्याप्तिप्रसक्तेः, प्रसङ्गस्यैव निरुच्यमानत्वेन व्यर्थविशेषणत्वेन च प्रसङ्गशब्देन प्रसङ्गग्रहणायोगादुक्तरीत्या भ्रमानुमितावव्याप्त्या आरोपविवक्षाया अप्यनुपपत्त्या द्वितीयस्याप्यनुपपत्तेर्नेदं लक्षणमिति भावेन तल्लक्षणमाह **व्याप्याङ्गीकार इति** । न च अत्राप्युक्तदोषः प्रसङ्ग आपादनमिति तृतीये वक्ष्यमाणत्वात् । न चैवमप्यनिस्तारः । तत्रैवापादनमङ्गीकर्तव्यतया ज्ञापनमिति वक्ष्यमाणत्वात् ।

ननु व्याप्त्यादिपदव्यावर्त्यमस्ति न वा । अस्ति चेदन्यत्रापि तस्य ग्राह्यत्वेन कस्यचिदर्थस्याङ्गीकारेऽर्थान्तरस्यापादनमित्येव तल्लक्षणप्रणयनानुपपत्तिः । अन्त्ये त्वत्रापि तदकर्तव्यत्वप्रसक्तिरिति चेत् । मैवम् । भावानवबोधात् । सेतिकर्तव्यताकं हि करणम् । तत्र प्रसङ्गः करणं धर्मी तस्य च व्याप्त्यादीन्यङ्गानि । तत्र करणधर्मिणः प्राधान्यविवक्षयाऽङ्गेभ्यः पृथक्कृत्य अन्यत्र प्रसङ्गतयोक्तिः । अत्र तु सेतिकर्तव्यताकस्येति को दोषः । न च एवमत्रोक्तलक्षणस्याभावेऽप्यन्यत्रोक्तलक्षणसत्त्वेनाव्यापकेष्टापादनानामपि प्रसङ्गत्वं स्यादिति वाच्यम् । इष्टापत्तेः । न चैवं ततोऽप्यनुमितिप्रसक्तिरिति वाच्यम् । अङ्गरहितस्य करणस्य क्रियाजनकत्वादर्शनेन तत्सचिवस्यैव तज्जनकत्वनियमेनाङ्गसाचिव्याभावेनानुमित्यभावोपपत्तेरित्यन्यत्र विस्तरः । किमतो यद्येवमित्यत आह **तथा चेति** । अस्तु व्याप्तिसापेक्षत्वं प्रसङ्गस्य तथाऽपि कथं सत्ताया निवृत्तिव्याप्तिराहित्यं येन विद्यतेः सत्तार्थत्वाभाव इत्यत आह **उत्पत्तिरेवेति** । **अस्माकमिति** । अनेकसत्यवादिनामित्यर्थः । **व्यभिचारित्वादिति** । घटादीनां सतां निवृत्तावपि गगनादीनां सत्यपि सत्त्वे निवृत्त्यभावाद्यत्सत्तन्निवर्तत





इति न व्याप्तिरित्यर्थः । परमते तु गगनादीनां सत्त्वस्यैवाभावान्न तत्र व्यभिचार इति भावेन अस्माकमित्युक्तमिति । एवं स्वमतेन साध्यसम्बन्धे सति तदभावेन सम्बन्धरूपामव्याप्तिमभिधाय मायिपक्षे साध्यसम्बन्धाभावे सति तदभावेनैव सम्बन्धरूपां तामाह **परस्येति** । तन्मते ब्रह्मण एकस्यैव सत्यत्वेन सत्त्वस्य निवृत्त्यभावव्याप्यतया विरुद्धत्वादित्यर्थः । **अत इति** । उक्तरीत्याऽव्याप्तेरित्यर्थः । **प्रतीयमानेति** । आपाद्यापादकयोः प्रतीयमानो यो व्याप्यव्यापकभावेनान्वयः तस्यायोग्यत्वादित्यर्थः । **तद्योग्यत्वादिति** । प्रतीयमानान्वययोग्यत्वादित्यर्थः । ननु नियतसम्बन्धस्यैव व्याप्तित्वाद्व्याप्तियुक्प्राय इत्येतयोः विरोधात् कथमन्वय इत्यतो व्याप्तिपदाविवक्षयाऽन्वयमाह **उत्पत्तिरिति** । तथा च उत्पत्तिमत्सु विधीयमानो निवृत्तियुक्तत्वरूपोऽर्थो बाहुल्यं बहुलानामेव धर्मो न तु सर्वोत्पत्तिमन्नियत इत्यन्वय इत्यर्थः । अस्त्वेवमन्वयस्तथाऽपि कथं प्राय इत्यनेन ध्वंसव्युदासः । तद्व्यवच्छेदकधर्मविशेषानुक्तेरित्यत आह **तथा चेति** । **एतेनेति** । उत्पत्तेरेव निवृत्तिव्याप्तिप्रतिपादनेनेत्यर्थः । **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षायामिति शेषः ।

**वा०र०— लिङ्प्रत्ययान्तस्येति** । तथाभूतस्योत्पत्तिकर्तृवाचित्वादिति भावः । यद्वा लिङ्बलेन विपर्ययपर्यवसाने कार्ये नोत्पद्यत इति उत्पत्त्यभावप्रतिपादकत्वादिति भावः । **विवक्षितपदार्थतायामिति** । एकस्य पदस्य विवक्षितो योऽर्थः तत्त्व इत्यर्थः । **पदार्थमात्रस्येति** । विवक्षितपदार्थमात्रस्येत्यर्थः । **तन्नियमेति** । अपरपदार्थव्याप्यत्वनियमाभावेऽपीत्यर्थः । यत्रैकपदीयविवक्षितार्थत्वं तत्रापरपंदार्थव्याप्यत्वमिति नियमाभावेऽपीति यावत् । **प्रसङ्गपरेति** । एवं च प्रसङ्गपरवाक्यस्थैकपदार्थत्वं यत्र तत्रापरपदार्थत्वमिति नियमः सूचितो भवति । आवश्यकत्वादित्यनन्तरं च तन्नियमादिति शेषः । **तदुपपादनमापादकतयेति** । तस्याप्युपपादनमव्याप्येनेति तदप्युपपादयितुं **लक्षणव्याघातेनेति** । **इति तर्के इति** । अव्याप्तिप्रसक्तेरिति वक्ष्यमाणेन सम्बन्धः । **तदुपपादनतयेत्यादि** । तत्र धूलीपटले तर्कलक्षणविचारः तर्कताण्डवानुसारेण बोध्यः । अत्र पद्धतिमनुसृत्याह **उक्तदोष इति** । प्रसङ्गस्यैव निरुध्यमानत्वेनेत्यादिरूप इत्यर्थः । **तृतीय इति** । प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्येति तृतीयाध्यायद्वितीयानुव्याख्याव्याख्यावसर इत्यर्थः । **अनिस्तार इति** । आपादनस्यैव निरुच्यमानत्वादित्यादेः समानत्वादिति भावः । **अन्यत्रापीति** । पद्धतावपीत्यर्थः । **अन्यत्र विस्तर इति** । कथं सत्ताया इति उपलक्षणं चेदम् । कथं चोत्पत्तेर्निवृत्तिव्याप्तिसाहित्यमित्यपि ज्ञेयम् । सत्त्वार्थत्वार्थत्वाभाव इत्युपलक्षणम् उत्पत्त्यर्थत्वमित्यपि ज्ञेयम् । **एवं स्वमतेनेति** । एवं विवेककथनेनैव हेतुविरोधभेदाव्याप्तिरूपमेकमेवेदं दूषणद्वयतया कथितम् । न तु नैयायिकोक्तरीत्या हेत्वाभासान्तरतया दूषणद्वयकथने तात्पर्यस्य येन व्यभिचारिविरुद्धादिप्रक्रियायाः स्वमतेऽभावात् तदाश्रयणायोगः स्यादिति सूचितम् । **इत्यनयोरिति** । व्याप्तियुक्तपदेन प्रतिपादितव्यभिचाराभावस्य प्राय इत्यनेनाभावप्रतिपादनादिति भावः । कथमन्वय इति व्याप्तियुक्तप्राय इतीत्यन्तमनुवर्तते **व्याप्तिपदेति** । उपलक्षणं चेदम् । इत्ययमित्यध्याहारेण चेत्यपि ज्ञेयम् । **(इतीदं) बाहुल्यमिति** । सामानाधिकरण्येनार्थं गमयति **तथा चेति** । विधीयमान





इत्याद्युक्तोपपत्तिर्निवृत्तियुगित्यनेन ये उत्पत्तिमन्तस्ते निवृत्त्या युक्ता इति फलिताश्रयणेन मूलं प्रवृत्तमिति सूचयति अयमित्यस्यार्थोऽर्थ इत्यन्तम् । **बहुलानां धर्म इति** । बहुलानां भावो बाहुल्यमिति उत्पत्तेरिति भावः । अत्र प्रायपदं बाहुल्यार्थकं प्रायो भूम्यन्तगमन इत्युक्तेः प्राय इत्यव्ययमपि तदर्थमस्तीत्यादिकं प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते इत्येतत् तत्त्वनिर्णयटीकादौ व्यक्तम् । अनेनोत्पत्तिर्निवृत्तिर्व्याप्तियुक् तद्वतीति व्याप्तिप्रतिपादनानन्तरं तस्यां क्वचिद्व्यभिचारशङ्कायां तत्परिहाराय व्याप्तिरौत्सर्गिकीति दर्शयितुं व्याप्तिपदपरित्यागेनोत्पत्तिर्निवृत्तियुक् तद्युक्तेति सम्बन्धं चाश्रित्य प्राय इत्यस्य तत्सम्बन्धघटनायेत्ययमित्यस्याध्याहारं चाश्रित्य उत्पत्तिर्निवृत्तियुगित्ययं प्राय इति द्वितीयं वाक्यं उत्पत्तिनिवृत्तिर्व्याप्तियुगिति प्रथमवाक्यव्याख्यानरूपमिति योजितं मूल इति सूचयति **उत्पत्तेरेव निवृत्तीति** । ततश्च निवृत्तिव्याप्यस्यैव श्रुत्यर्थतया वाच्यत्वादुक्तवैदिकप्रयोगबलेन अनेकार्थत्वं धातोः सिद्धं प्रयोगतोऽनुगन्तव्या इत्युक्तेः इति भावः इत्येतावानत्र शेषो बोध्यः । मूले वोक्तभावोऽनुसन्धेयः ।

**स०व्र०— प्रकृत्यर्थकथनमिति** । विद्येतेत्येतदन्तर्गतप्रकृत्यर्थमात्रकथनमिदम् । प्रत्ययार्थस्य विध्यादेरुत्पत्तिरूपत्वाभावादिति भावः । **अस्माकं व्यभिचारित्वादिति** । जगत्सत्यत्ववादिनामस्माकं घटादौ सत्ये सत्यत्वनिवृत्त्योः सामानाधिकरण्येऽपि नित्ये गगनादौ व्यभिचारित्वादित्यर्थः । **परस्य विरुद्धत्वादिति** । परमते नित्यस्य ब्रह्मण एकस्यैव सत्त्वेन सत्त्वस्य निवृत्त्यभावव्याप्यतया विरुद्धत्वादित्यर्थः । **वक्ष्यमाणत्वादिति** । समयपाद इति शेषः ।

**विट्ठल०**— ननु विद्येतोत्पत्तिमेव चेति कथमुच्यते । उत्पत्तिविशिष्टस्य वस्तुत एव प्रकृतिप्रत्ययसमुदायार्थरूपपदार्थत्वेन उत्पत्तेस्तदर्थत्वाभावादित्यत आह **प्रकृत्यर्थकथनमिति** । **तस्य व्याख्यानादिति शेष इति** । तथा च विदिधातोः विदोत्पत्ताविस्यस्माद्व्याख्यानादुत्पत्त्यर्थत्वं प्रत्येतव्यमिति मूलयोजना । **यदिशब्दादिबलादिति** । लिङ्प्रयोगबलादित्यादिशब्दार्थः । **अस्माकं व्यभिचारित्वादिति** । व्याप्तिग्रहणदशायामिति शेषः । प्रवृत्त्युत्तरं तु पक्षे व्यभिचारायोगादिति ज्ञेयम् । जगत्सत्यत्ववादिनामस्माकं घटादौ सत्ये सत्यत्वनिवृत्तेस्सामानाधिकरण्येऽपि सत्ये गगनादौ व्यभिचारित्वादित्यर्थः । **परस्य विरुद्धत्वादिति** । परमते ब्रह्मण एकस्यैव सत्त्वेन सत्त्वस्य निवृत्त्यभावव्याप्ततया विरुद्धत्वादित्यर्थः । ननु व्याप्तियुक्प्राय इत्यनयोर्विरोधात्प्राय इत्यस्य केनान्वय इत्यतो व्याप्तिपदस्य सम्बन्धमात्रपरत्वविवक्षया पूर्ववाक्येनैव सम्बन्ध इत्याह **उत्पत्तिर्निवृत्तियुगितीति** । **एतेनेति** । योग्यत्वाभावप्रसक्त्या श्रुत्यर्थस्यान्यथासम्भवेन श्रुत्यभिप्रेतत्वेनेत्यर्थः । **विप्रतिपत्तिरपीति** । धातुव्याख्यानस्यानाश्वसनीयत्वरूपविप्रतिपत्तिरित्यर्थः । **अनुगतरूपा वेति** । सर्वानुगसत्तासामान्यं वा स्वरूपसत्त्वं वेत्यर्थः । **वक्ष्यमाणत्वादिति** । न सर्वधर्म एकोऽस्तीत्यादिना वैशेषिकपरीक्षायामिति भावः ।





चषकः— **प्रकृत्यर्थेति** । प्रातिपदिकस्येव धातोरपि प्रकृतित्वात् धात्वर्थेत्यर्थः । **विद्यतेरिति** । स्तिपा निर्देशोऽयम् विदधातोरित्यर्थः । **अस्माकमिति** । जगत्सत्यमुपगच्छतां मते गगनादावनैकान्त्यादित्यर्थः । **परस्येति** । विश्वमिथ्यात्वमूरीकुर्वतः परस्य मते ब्रह्मण एकस्यैव सत्यत्वेन सत्त्वस्य निवृत्त्यभावव्याप्ततया विरुद्धत्वादित्यर्थः । **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षायामित्यादिः ।

**॥ इति 'विद्येत' इत्यस्यार्थकथनम् ॥**

* * *

**॥ तत्र च 'प्रपञ्च'शब्दार्थविशेषकथनम् ॥**
**॥ तत्रादौ अर्थविशेषकथनम् ॥**

१८९ **सु०— "नन्वस्मिन्नपि व्याख्याने नान्वययोग्यताऽस्ति । तर्कस्य व्याप्तिरिव विपर्यये पर्यवसानमवश्यम्भावि । तथा च 'प्रपञ्चो यद्युत्पद्येत तर्हि विनश्येत, न च विनश्यति, तस्मान्नोत्पद्यत' इति वक्तव्यम्, न चैतद्युक्तम्, क्षित्यादेः प्रपञ्चस्योत्पत्तिविनाशयोः प्रमाणदृष्टत्वात् । अत एव तर्काङ्गभूतमापाद्यस्यानिष्टत्वं च नोपपद्यत" इत्यतः प्रपञ्चशब्दमन्यथा व्याचष्टे प्रपञ्च इति ।**

**अनु०— प्रपञ्चो भेदपञ्चकः ।**

नायं प्रपञ्चशब्दो विश्वविस्तारवाची, येनोक्तदोषः स्यात् । किन्तु पञ्चानां वर्गः पञ्चः, 'पञ्चद्दशतौ वर्गे वे'ति वाशब्देन पञ्चशब्दस्यापि निपातनाङ्गीकारात् । प्रकृष्टः पञ्चः **प्रपञ्चः** । प्रकृष्टता च मोक्षाङ्गज्ञानतया भवति । सा च भेदसम्बन्धिन एव पञ्चकस्योपपन्ना, 'वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बद्धयतेऽन्यथे'त्यादेः । अतः **प्रपञ्चो भेदपञ्चकः** । स च जीवेश्वरप्रकृत्यादिनित्यस्वरूपभूतोऽनादिनित्य एवेति नोक्तदोषः ।

टीकाकारास्तु मन्यते "भेदो नाम अन्योन्याभावः, स च अन्योन्यतादात्म्यापत्त्यैव निवर्तनीयः, प्रतियोग्याप(ग्युत्प)त्तेरेवाभावविपत्तित्वस्य प्रागभावे दृष्टत्वात् । न च कदाऽपि पदार्थानामन्योन्यं तादात्म्यमस्तीत्यनित्यानामपि भेदो नित्य एवे"ति ।

अन्येऽप्याहुः, 'नित्ये च त्रयाणां सिद्धिरि'ति ।





**परि०— वाशब्देनेति** । यद्यपि वृत्तौ पञ्चशब्दो दशशब्दश्च (डत्)डतिप्रत्ययान्तो निपात्यते वर्गेऽभिधेये । 'तदस्य परिमाणमि'त्येतस्मिन्विषये वाशब्दात् 'सङ्ख्याया अतिशदन्तायाः कन्' इत्यतोऽनुवर्तमानकन्प्रत्ययश्च भवति । पञ्चपरिमाणमस्य वर्गस्य पञ्चद्वर्गः पञ्चको वर्गः दशद्वर्गः दशको वर्ग इत्येवोक्तं पञ्चमाद्यपादे । न तु डप्रत्ययान्तोऽपि निपात इति । तथापि श्रौतप्रयोगानुसारात् सोऽप्यङ्गीकार्य इति भावेन वाशब्देनेत्याद्युक्तम् । **नित्यस्वरूपभूतोऽनादिनित्य एवेति** । 'यस्माद्वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचित्' इत्यादि तैत्तिरीयभाष्योक्तेरिति भावः । विनाशेऽपि घटादेर्धर्मरूपो भेदः परवाद्यभ्युपगतघटत्वादिजातिवन्नित्योऽभ्युपगन्तव्यः । वस्त्वन्तरताऽऽपत्त्यभावात् कालत्रयेऽपीति सन्न्यायरत्नावल्युक्तं विवृण्वन्नेतदभिप्रायमाह **टीकाकारास्त्विति** । **अन्येऽपीति** । तार्किका इत्यर्थः । नित्ये च त्रयाणामन्योन्याभाववैधर्म्यभेदस्वरूपभेदानां सिद्धिरित्यर्थ इत्येके । अन्येऽपि सिद्धान्त्येकदेशिनो नित्यवर्गे जीवभेदेश्वरभेदजडभेदानां त्रयाणां नित्यतासिद्धिरित्याहुरित्यन्ये व्याचक्षते ।

**गु०दी०— पञ्चदशतौ वर्गे वा** इत्यत्र यद्यपि 'पञ्चद्दशत्' इत्येतौ शब्दौ वर्गेऽभिधेये डति प्रत्ययान्तत्वेन निपात्येते वाशब्देन कन्प्रत्ययोऽपि भवतीति सूत्रार्थः । तथा वृत्तिकारेण व्याख्यातत्वात् । तथापि कन्प्रत्ययान्तत्वविधिवत्प्रयोगबलात् वाशब्देन पञ्चशब्दस्यापि निपातनाङ्गीकार उचित इति भावेनोक्तं **वाशब्देन पञ्चशब्दस्य निपातनाङ्गीकारात्** इति । **नित्ये च त्रयाणां सिद्धिः इत्यत्र** नित्ये ईश्वरजीवप्रकृत्यादिनित्यजडेषु त्रयाणां तद्धर्मिकभेदानां सिद्धिरित्यर्थः ।

**यादु०— पञ्चानां वर्ग इति** । इदं च तात्पर्यकथनम् । व्युत्पत्तिस्तु पञ्च परिमाणमस्य वर्गस्येति पञ्च इति द्रष्टव्या । ननु वर्गेऽभिधेये पञ्चत् इत्येवंरूपं स्यात् । पञ्चद्दशतौ वर्गे इति निपातनादित्यत आह **पञ्चद्दशताविति** । यद्यपि वाशब्दः पक्षे सङ्ख्याया इति कनि पञ्चको दशक इति पूर्वप्राप्तरूपस्यैवाभ्यनुज्ञापको न पञ्च इत्यस्य अप्राप्तत्वात् । तथाऽप्यप्राप्तेऽपि बहुलमुपलम्भात् पक्षे पञ्च इत्यस्यापि रूपस्य वर्गार्थे निपातनमत्राभिप्रेतम् । अभियुक्तप्रयोगबलादिति भावः । **स च जीवेश्वरप्रकृत्यादीति** । तथा च जीवेश्वरभेदो जीवानां परस्परं भेदः प्रकृत्यादिनित्यजडेश्वरभेदः प्रकृत्यादिरूपनित्यजडजीवभेदः प्रकृतिवर्णादीनां नित्यजडादीनां परस्परं भेद इति भेदपञ्चकस्याप्यनादिनित्यत्वमनेनोक्तमिति ज्ञातव्यम् । **भेदो नामेत्यादि** । इदं च विनाशिनोऽपि घटादेर्धर्मरूपो भेदः परवाद्यभ्युपगतघटादिजातिवन्नित्योऽवगन्तव्यः । वस्त्वन्तरताऽऽपत्त्यभावात् कालत्रयेऽपीति टीकावाक्योपपादनमेव न टीकावाक्यमित्यवधेयम् । **अनित्यानामपीति** । इदं च 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति तैत्तिरीयभाष्योक्तं मतमवलम्ब्योक्तम् । नन्वेवं चेत् सुधाकारैः प्रकृत्यादिनित्यजडस्वरूपभेदमादाय समाधानं कस्मात्कृतमिति चेत् । उच्यते । अनित्यानां हि न सर्वथाऽस्मन्मते





नाशः । किन्तु कार्याकारेणैव । कारणात्मना त्ववस्थानमेव तेषाम् । अतोऽनित्यस्वरूपभूतभेदोऽपि कारणात्मनाऽवतिष्ठत इति टीकाकाराणामभिप्रायः । इममेवाभिप्रायं सूचयितुं सुधायां प्रकृतिरूपमूलकारणस्वरूपभेदस्य नित्यतोक्ता । सुधायामनित्यप्रपञ्चस्वरूपभेदस्यानित्यताङ्गीकारस्तु उपादानरूपेण सतो घटस्येव तद्रूपेण सतो भेदस्यापि व्यवहारानुपयोगित्वमभिप्रेत्यैवातो न कोऽपि विरोध इति मन्तव्यम् । **नित्ये च त्रयाणामिति** । नित्ये जडे प्रकृत्यादौ धर्मिणि त्रयाणामीश्वरभेदस्य जीवभेदस्य जडान्तरभेदस्य चेति त्रयाणां भेदानां नित्यतासिद्धिः । जीवेश्वरयोः परस्परं जीवानां च भेदो नित्य इति प्रसिद्धमेवेत्येतन्मताभिप्रायः । तथा च मतत्रयमप्येकाभिप्रायकमेवेति ज्ञातव्यम् । केचित्तु नित्ये नित्यवर्गे त्रयाणां प्रध्वंसान्योन्यात्यन्ताभावानां सिद्धिः प्रसिद्धिः त्रयोऽभावा नित्यत्वेन प्रसिद्धा इति यावत् । तथा च अन्योन्याभावनित्यत्वस्य नैयायिकैरप्यङ्गीकृतत्वात् अन्योन्याभावभेदयोश्च अनतिरेकात् भेदस्य नित्यत्वे एतत्सम्मतिकथनं युक्तमित्याहुः ।

**आनन्दः— अत एवेति** । उत्पत्तिविनाशयोः प्रमाणदृष्टत्वादेवेत्यर्थः । नक्षत्रपञ्चकशब्दस्य निरुक्तिः । कथं न च पञ्चप्रकारः पञ्चक इत्येवं रूपेति वाच्यम् । तथा सति पञ्चक इति । पञ्चत् शतो वर्गे वेति । **वाशब्देनेति** । अयमर्थः । पञ्चतदशतौ वर्गे वा पञ्चत् शब्दस्य विशेषणत्वेन पूर्वनिपातः स्यात् कप्रत्ययवैय्यर्थ्यं चेत्यत आह भेदपञ्च इत्येतौ शब्दौ निपात्येते वर्गेऽभिधेयैतदस्य परिणाममिति विषये । अत्र सङ्ख्यायाः अभिशदन्तायाःकनूत्यतशदन्तवर्जितायाः कन्प्रत्ययो भवतीत्यनेन कनि प्राप्तेऽतिविधीयते वा वचनात्पक्षे कन् भवति । तथा च पञ्चपरिमाणमस्य वर्गस्येति पञ्चद्वर्गः यस्मिन्पक्षे कन्भवति तदापि पञ्चपरिमाणमस्य वर्गस्येति वर्गेऽभिधेये पञ्चच्छब्दात् कनि समागते पञ्चनिति नकारस्य नलोपेति सूत्रेण लोपे सति पञ्चक इति भवति । **सा चेति** । मोक्षाङ्गज्ञानत्वेन या प्रकृष्टता सेत्यर्थः । अनित्यस्वरूपभेदस्यानित्यत्वात्तद्व्यावृत्त्यर्थमाह **प्रकृत्यादि नित्यस्वरूप इति** । **अनित्यानामपि भेद इति** । न चैवं तर्हि भेदस्य नित्यत्वाद्धर्मिस्वरूपस्य चान्यत्वेन विरुद्धधर्मवत्वात्तयोर्भेदो न स्यात् । तथा च स्वस्वरूपातिरिक्तत्वं स्यात् । न चैवमस्त्विति वाच्यम् । तथा सत्याचार्योक्ताभावत्रित्वव्याघातापत्त्यापसिद्धान्त इति वाच्यम् । भेदकार्यस्य विरुद्धधमदिर्विशेषबलेनोपपत्तौ अभेदस्वीकारे बाधकाभावेनापसिद्धान्ताभावादिति भावः । **अन्येऽप्याहुरिति** । मास्त्वनित्यनिष्ठभेदस्य नित्यत्वं तथापि नित्ये च धर्मिणि त्रयाणां जीवेश्वरजडप्रतियोगिकानां भेदानां सिद्धिरस्तीति अस्ति भेदपञ्चकस्य नित्यत्वमित्यर्थः ।

**शे०वा०—** ननु प्रपञ्चशब्दस्य प्रसिद्धार्थपरित्यागेन अप्रसिद्धार्थवर्णनमयुक्तमिति तत्परोत्तरवाक्यमनर्थकमित्यतः असति बाधके तदुभयाश्रयणस्य अयुक्तत्वेऽपि प्रकृते बाधकवशात् प्रसिद्धार्थपरित्यागाप्रसिद्धार्थस्वीकारयोः उपपत्तिरेवेत्याशयेन प्रसिद्धार्थत्वे प्रपञ्चशब्दस्यानुपपत्तिशङ्कामुत्थापयति **नन्विति** । **अत एवेति** । विनाशस्य प्रमाणदृष्टत्वादेवेत्यर्थः । **अनिष्टत्वं चेति** । तस्य प्रामाणिकहानाप्रामाणिककल्पनारूपत्वादिति भावः । **पञ्चानां वर्ग इति** । इदं च तात्पर्यकथनमात्रम् । व्युत्पत्तिस्तु पञ्च परिमाणमस्य वर्गस्येति





पञ्च इत्येव द्रष्टव्या । ननु वर्गेऽभिधेये पञ्चदित्येव रूपं स्यात् । पञ्चद्दशतौ वर्गे वेति निपातनात् तत्कथं पञ्चेति रूपमित्यत आह **पञ्चद्दशताविति** । न च पञ्चद्दशतौ वर्गे वेत्यत्र वर्गेऽभिधेये तदस्य परिमाणमित्येतस्मिन्विषये पञ्चन् दशन् शब्दाभ्यां 'सङ्ख्याया अतिशदन्तायाः कन्' इति कनि पञ्चको दशक इति नित्यं प्राप्तौ डतिप्रत्ययविधानेन डित्वाट्टिलोपे पञ्चद्दशादित्येव निपातनात् वाशब्देन च पक्षे कन्प्रत्ययविधानेन पञ्चको दशक इति पूर्वप्राप्तरूपस्याभ्यनुज्ञानात् । डप्रत्ययस्यानभ्यनुज्ञानेन पञ्च इति न रूपनिष्पत्त्युपपत्तिरिति वाच्यम् । पञ्चक इत्याद्यभियुक्तप्रयोगानुसारेण पक्षे वाशब्देन कन्प्रत्ययस्येव पञ्च इत्याद्यभियुक्तप्रयोगानुसारेण पक्षेऽप्राप्तडप्रत्ययस्यापि वाशब्दार्थत्वेनाभ्यनुज्ञातव्यत्वाविशेषादित्यत्र तात्पर्यात् । सम्मतश्चायमर्थः टीकाकृतः । अत एवेह टीकायां क्वचित्पञ्चशब्दस्यापीत्यपिशब्दः । अन्यथा वाशब्देन पञ्चशब्दस्य निपातनादित्येवावक्ष्यदित्यवधेयम् । ननु भेदपञ्चकस्यापि प्रपञ्चशब्देन ग्रहणे नोक्तदोषपरिहारः । घटपटादिनाशेन तत्स्वरूपस्य भेदस्य नाशावश्यम्भावादित्यत आह **स चेति** । तथा च न भेदमात्रस्यानादिनित्यत्वपरमिदं वाक्यं किं नाम जीवेश्वरयोर्भेदो जीवानामन्योन्यं भेदः प्रकृत्यादिरूपनित्यजडजीवयोर्भेदस्तद्रूपजडेश्वरयोर्भेदः प्रकृतिवर्णादीनां नित्यजडानां परस्परं भेद इति पञ्चकस्यैवानादिनित्यत्वपरम्, उक्तभेदपञ्चकं च अनादिनित्यमिति नानुपपत्तिरिति ध्येयम् । **उक्तेति** । विपर्यये पर्यवसाने बाध आपाद्यस्य विनाशस्येष्टत्वमित्युक्तेत्यर्थः ।

एवं नित्यधर्मिको नित्यः अनित्यधर्मिकस्तु अनित्य इति स्वमतमुक्त्वा दृष्टान्तोपदर्शनादिना तत्पक्षमुपपादयन्नेव विनाशिनोऽपि घटादेर्धर्मरूपो भेदः परवाद्यभ्युपगतघटत्वादिजातिवन्नित्योऽवगन्तव्यः । वस्त्वन्तरताऽऽपत्त्यभावात् कालत्रयेऽपीति सन्न्यायरत्नावलीकृतां मतमुपन्यस्यति **टीकाकारास्त्वित्यादिना** । **अनित्यानामपीति** । अत्र च 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति तैत्तिरीयभाष्योदाहृतप्रमाणं मूलमिति ज्ञेयम् । न च 'इत्याहुः केचिदज्ञानादि'त्यस्य पक्षस्य अज्ञानिपक्षत्वोक्तेः कथं टीकाकाराणां तत्पक्षाश्रयणमिति वाच्यम् । 'तत्राहुः सूक्ष्मदर्शिनः' इत्युत्तरग्रन्थानुसारेणोपादानरूपेण सतो घटस्येव तद्रूपेण सतो भेदस्यापि व्यवहारानुपयोगित्वेन स्थूलां दृष्टिमाश्रित्येत्येवाभिप्रेततया अस्य पक्षस्याज्ञानिपक्षत्वासम्मतेः । न ह्यज्ञानिनः केऽपि भेदस्य धर्मिस्वरूपत्वमभ्युपेत्य तन्नित्यत्वमभ्युपयन्ति येन तन्मतानुवादोऽयं स्यादिति द्रष्टव्यम् । ननु ग्रन्थकृन्मते कथमनित्यधर्मिकस्य भेदस्यानित्यत्वं घटनाशेन घटभेदनाशे घटस्य पटतादात्म्यप्रसङ्गात् । तादात्म्यस्यान्योन्याभावप्रतियोगित्वात् प्रतियोगिन एवाभावध्वंसरूपत्वस्य प्रागभावे दृष्टत्वादिति चेन्न । घटधर्मिकपटप्रतियोगिकभेदवत् पटधर्मिकघटप्रतियोगिकभेदस्यापि घटपटतादात्म्यविरोधितया घटनाशेन तद्धर्मिकभेदनाशेऽपि पटस्यानष्टतया तद्धर्मिकभेदसत्त्वेन नष्टघटस्य पटतादात्म्याभावोपपत्तेः । न चैवं घटपटयोरुभयोरपि विनाशे तदात्मकभेदद्वयस्यापि विनाशात् घटपटतादात्म्यं स्यादिति वाच्यम् । घटवत् घटध्वंसस्यापि घटप्रागभावविरोधित्ववद्भेदध्वंसस्यापि तादात्म्यविरोधित्वोपपत्तेः । अन्यथा घटप्रागभावध्वंसरूपघटविनाशे घटप्रागभावोन्मज्जनप्रसक्तेः । न च प्रतियोगिन एव अभावनाशत्वस्य प्रागभावे दृष्टत्वात् अत्रापि तथैव कल्पनीयमिति वाच्यम् । धर्मिभिन्नप्रागभावनाशस्य प्रतियोगिरूपत्वेऽपि धर्म्यात्मकान्योन्याभावनाशस्य





धर्मिनाशवत्प्रतियोगिभिन्नत्वस्यापि सम्भवात् । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु यत्र घटनाशेन तद्धर्मिक-भेदनाशो यत्र घटपटयोरुभयोरपि नाशेन तद्धर्मिकभेदद्वयस्यापि नाशः तत्र न भेदनाशेन तत्तादात्म्यमापादयितुं शक्यते । धर्मिण एव असत्त्वात् । अत एव वक्ष्यति 'विनष्टस्य भेदाभेदचिन्ताऽनवसरादिती'ति न किञ्चि-देतत् । विस्तरस्तु समयपरीक्षायां द्रष्टव्यः । अत्र ग्रन्थकृट्टीकाकारमतयोरविरोधो मृग्यः ।

**नित्ये च त्रयाणामिति** । नित्ये जडे प्रकृत्यादौ त्रयाणामीश्वरभेदस्य जीवभेदस्य जडान्तरभेदस्य चेति त्रयाणां भेदानां नित्यत्वसिद्धिः । जीवेश्वरभेदस्य मिथो जीवभेदस्य नित्यत्वे न विवाद इति पञ्चविधभेदस्य च नित्यत्वसिद्धिरिति भावः । यद्वा नित्ये नित्यवर्गे त्रयाणां प्रध्वंसान्योन्याभावात्यन्ताभावानां सिद्धिरन्तर्भाव इत्यर्थः । तथा च अन्योन्याभावनित्यत्वस्य नैयायिकैरङ्गीकृतत्वात् अन्योन्याभावभेदयोश्च अनतिरेकाद्भेदस्य नित्यत्वं तत्सम्मतमेवेति भेदनित्यत्वरूपे स्वोक्तार्थे तार्किकसम्मतिपरमिदं वाक्यमिति ध्येयम् ।

**वा०र०— तदुभयेति** । प्रसिद्धार्थपरित्यागाप्रसिद्धार्थवर्णनयोरित्यर्थः । पञ्चद्दशतौ वर्गे वेति सूत्रे तदस्य परिमाणमित्येतस्मिन्विषये इति काशिकोक्तेः पञ्चपरिमाणमस्येति विग्रहस्य काशिकाकारादिभिर्दर्शितत्वाच्च । पञ्चानां वर्ग इति विग्रहप्रदर्शनायोग इत्यतः काशिकाद्यनुसारेणाह **इदं चेति** । पञ्चदित्येवेति सङ्ख्यायाः कन्निति सूत्रेण प्राप्त कनोऽपवादेन पञ्चद्दशताविति सूत्रेण डतिप्रत्यये डित्वात् टिलोपे च पञ्चदित्येव रूपं स्यादि-त्यर्थः । **निपातनादिति** । डतिप्रत्यये निपातनादित्यर्थः । पञ्चकः दशक इति नित्यं प्राप्ताविति । यद्यपि वर्गेऽभिधेय इत्युक्तेः पञ्चद्वर्गः पञ्चको वर्ग इत्युदाहरणाच्च वर्गस्य विशेष्यतया सत्त्वमावश्यकमिति प्रतीयते । अत एव पञ्चपरिमाणमस्य वर्गस्येति विगृह्य पञ्च इत्येवं रूपप्रदर्शनं प्राचीनमयुक्तम् । पञ्चवर्ग इत्येवोदाहर्तव्यत्वात् । न च तत्प्रकृते उदाहर्तुं शक्यं वर्गशब्दस्य श्रुत्यादावभावात् । तत्कथं पञ्चद्दशताविति सूत्रेणात्र पञ्चद्दशादित्येव प्रसङ्ग इति चेत् । न । वर्गस्याभिधेयत्वख्यापनायैव वर्ग इत्यस्य काशिकादावुक्तत्वेऽपि वर्गस्य विशेष्य-त्वाभिप्रायेण तथाप्रयोगाभावात् । अत एव पञ्चपरिमाणमस्येति इत्यपि कस्यचिद्विग्रहपक्षे पञ्चकः दशक इत्येवोदाहरणं दृश्यते । तथा पञ्च गावः परिमाणमस्य पञ्चको गोसङ्घ इति सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति सूत्रे सङ्घोदाहरणे मञ्जर्यामुक्तावपि पञ्चपरिमाणमस्य पञ्चकः सङ्घ इति काशिकायां गोपदपरित्यागेनैव विग्रहादिप्रदर्शनम् । अत एव प्रकृत्यादिभ्यस्तृतीयेत्येतदुदाहरणे पञ्चकेन पशून् क्रीणातीत्यत्र पञ्चपरिमाणमस्य पञ्चकः सङ्घ इति शेष्यादावुक्तम् । तस्मादभिधेयस्पष्टनायैव वर्ग इत्यादेरुक्तावपि पञ्चपरिमाणमस्येत्येव विग्रहोऽभिप्रेत इति पञ्चत् पञ्चक इत्युदाहरणं युक्तमेवेति । पञ्चभेदक इति वाच्यमित्याद्याशङ्क्य समाधानादिकं तत्र तत्र तत्त्वनिर्णयटीकाव्याख्यानादौ ज्ञेयम् । **डप्रत्ययस्यापि वाशब्दार्थत्वेनेति** । एतत्प्रकरणे यथाविहित-प्रत्ययविधानेन डस्यापि सङ्ख्यायाः संज्ञासङ्घेति सूत्रे स्तोमे डविधिः पञ्चदशाद्यर्थकाशिकोक्तेरत्र प्रकरणे आश्रितत्वस्य दृष्टतया वाशब्दार्थत्वेन डप्रत्ययस्याभ्यनुज्ञानोपपत्तेरित्याशयः । **अविशेषादिति** । अभियुक्त-प्रयोगसंरक्षणनिमित्तस्योभयत्राविशेषादित्यर्थः । **अयमर्थ इति** । अभियुक्तप्रयोगसंरक्षणाय कन इव डप्रत्यय-स्यापि वाशब्दार्थत्वेनाभ्यनुज्ञानेन पञ्च इत्यस्योपपत्तिरित्येतावानर्थ इत्यर्थः । **अपिशब्द इति** । तेन कनो





दृष्टान्तताप्रतिपादनद्वाराऽभियुक्तप्रयोगसंरक्षणनिमित्तत्वरूपन्यायसूचनादिति भावः । **अन्यथेति** । उक्तार्थस्य तात्पर्यविषयत्वाभाव इत्यर्थः । तावतैवाधिकसिद्धेरिति भावः । अत्र पञ्चशब्दस्येति पाठः । ककारो लेखकप्रयुक्तः । भेदस्य कारणरूपेणापि सत्त्वे भेदसत्त्वप्रयुक्तान्योन्यतादात्म्याद्यनापत्त्योपयोगे सति तादृशभेदसद्भावप्रतिपादनं कुतः स्थले दृष्टचेत्याश्रयणीयमित्यतः तादृशभेदस्यानुपयोगं दृष्टान्तमुखेन वदन्ननुपयोगप्रयुक्तस्थूलदृष्टित्वमित्येतदपि दर्शयति **उपादानरूपेणेति** । **तादात्म्यस्यान्योन्याभावेति** । प्रतियोगितावच्छेदकस्यान्योन्याभावविरोधित्वमिति तत्रत्यटीकोक्तिस्तु प्रतियोगितावच्छेदकधर्मस्तादात्म्यमिति न्यायमतानुसारेणेति न दोषः । इहान्योन्याभेदस्यैव तादात्म्यपदेन ग्रहणात् । न्यायमतेऽपि तादात्म्यारोपसत्त्वेन तादात्म्यमन्यदपि तत्सम्मतमित्यादि ज्ञेयम् ।

**यत्र घटपटयोरिति** । यत्र वा घटपटयोरित्यर्थः । तथैव पाठस्तु स्वरस एव । तत्र न भेदनाशेनेति पाठः । **वक्ष्यतीति** । सामस्त्योच्छेदिनोऽन्यत्र धर्मा उभयरूपकाः । 'भावे त एवे'ति अनुव्याख्यानव्याख्यावसरे भावपदार्थनिरूपणे तथा वक्ष्यतीत्यर्थः । यद्यपि विनष्टस्यासत्त्वेन भेदचिन्तानवकाशादित्येवोत्तरत्र वाक्यम् । तथाप्ययमर्थानुवादः । स्वसद्भाववेलायामुभयरूपका इत्युक्त्यनुसारेण भेदस्याप्युपलक्षणात् तत्रेत्याशयेन भेदाभेदोभयग्रहणमिति दोष इति ज्ञेयम् । **न किञ्चिदेतदिति** । एतत्किञ्चित्फल्गुभूतमपि दूषणतया न प्रवर्तत इत्यर्थः । 'भेदो नाशे भवेत्तथे'त्याद्यनुव्याख्यानव्याख्यानरूपमूलानुसारेण सत्स्वेव अवयव्यादिषु भेदे इत्यादि प्रमेयं बोध्यमित्याह **विस्तरस्त्विति** । **अविरोधो मृग्य इति** । ननु 'एवं धर्मिणः प्रागभावादिः धर्मिविनाशेऽपी'त्येतददृश्यत्वाधिकरणीयमूलव्याख्यावसरे धर्मिविनाशेऽप्यविनाशो यथा प्रागभावादावेवमन्योन्याभावेऽपीति तस्यापि धर्मिभेदप्रसङ्ग इत्याशङ्क्य अनित्यधर्मिकस्य भेदस्याप्यनित्यतया धर्मिनाशे तन्नाशस्यैव सत्त्वादित्युपपाद्य तथा सति तस्मात्प्रध्वस्तभेदादि सदित्येवेति वैशेषिकपरीक्षास्थानुव्याख्यानव्याख्यानरूपे मूले नष्टानामपि वस्तूनां भेदो नैव विनश्यतीत्येतद्वाक्यं प्रमाणीकृत्य यन्नष्टधर्मिकभेदसत्त्वाभिधानं तद्विरुद्धेतेत्याशङ्क्य समाहितम् । घटादेर्धर्मिणो विनाशे भेदस्यापि विनाश एव । भेदस्य वा विनाशे धर्मिणोऽप्यविनाश एव । उपादानरूपेणोभयोरपि सत्त्वात् कार्यरूपेणोभयोरपि नष्टत्वादित्यादिरूपेण । तथा च टीकाकारमतं कारणान्तरेणापि भेदो न नश्यतीत्येतत्परम् ।

ग्रन्थकृन्मतं तु कार्याकारेण नश्यतीत्येतत्परमिति मतयोर्भिन्नविषयत्वादविरोध इत्युक्तप्रायमेव । अन्यथा अस्य ग्रन्थस्य तस्मात् प्रध्वस्तेत्युत्तरग्रन्थविरोधो दुर्वारः स्यात् ।

तत्र टीकाकृत्पक्षमूलभूतनष्टानामपीति वाक्यं प्रमाणीकृत्य प्रध्वस्तस्यापि घटादेर्यो भेदस्तस्य सत्यत्वाभिधानादिति चेत् । अत्र वदन्ति । भेदे विनाशपक्षेऽपि अन्योन्यात्मता प्राप्नोतीति तत्परिहारः टीकाकारैः तद्विनाशाभाव एव वाङ्गीकृतः । ग्रन्थकृता तु सत्यपि भेदनाशे विरोधिसद्भावादिना तत्परिहाराशयेनेत्यादिषु भेदनाशः स्वीकृतः । तदुभयाङ्गीकारयोर्विरोध एव तद्ग्रन्थस्य तस्मात्प्रध्वस्तभेदादीत्युत्तरानुव्याख्यानव्याख्यान-





रूपमूलविरोधतुल्य इति अदृश्यत्वाधिकरणीय तदुभयविरोधपरिहारप्रकारेणास्यापि परिहारः सिद्ध एवेत्येव टीकाशयः । तदर्थमविरोधो मृग्यः विचार्यः प्रागुक्तरीत्या कथञ्चिद्योज्यत इति व्याख्येयमिति । वस्तुतस्तु ........एवं नित्ये चेति वाक्यस्य नित्यजडप्रकृत्यादौ भेदनित्यत्वपरत्वेन योजनेऽस्य पक्षस्य मूलोक्तपक्ष-विशेषणान्यन्येऽप्याहुरित्यस्य पक्षस्यान्यपक्षत्वेनाभिधानानुपपत्तिप्रसङ्ग इत्यतोऽस्य तार्किकवाक्यत्वमाश्रित्य तद्वाक्यार्थान् तद्रीत्या प्रकृतानुसारेण प्रतिपादयति **यद्वा नित्य इति** । **तार्किकसम्मतीति** । ......... नन्दिभट्टीये एतद्विवृतमस्ति ततो बोध्यम् ।

**स०व्र०— पञ्चानां वर्गः पञ्च इति** । इदं च तात्पर्यकथनम् । व्युत्पत्तिस्तु पञ्चपरिमाणमस्येति पञ्च इत्येव द्रष्टव्यम् । ननु वर्गे अभिधेये पञ्चत् इत्येव स्यात् पञ्च इत्यनुपपन्नमित्यत आह **पञ्चद्दशतौ वर्गे वेतीति** । वर्गे अभिधेये तदस्य परिमाणमित्यस्मिन्विषये पञ्चत्-दशत्-शब्दाभ्यां सङ्ख्याया इति कनि पञ्चको दशक इति नित्यं प्राप्ते डति प्रत्ययविधानेन डित्त्वाट्टिलोपे सति पञ्चत्-दशत्-शब्दयोर्निपातनात् । वाशब्देन पक्षे कत्प्रत्ययोऽपि भवतीत्युक्तत्वेन पञ्चकशब्दस्य निष्पत्त्युपपत्तावपि वाशब्देन डप्रत्ययस्यानभ्यनुज्ञानेन कथं पञ्चशब्दनिष्पत्तिरिति चेत् न । पञ्च इत्यभियुक्तप्रयोगानुसारेण डप्रत्ययस्यापि वाशब्दार्थत्वेन अभ्यनुज्ञात-त्वादित्याशयात् । अत एवाङ्गीकारादित्युक्तम् । अन्यथा निपातनादित्येव ब्रूयादिति भावः । **स च जीवेश्वर-प्रकृत्यादीति** । जीवेश्वरभेदः । जीवानां परस्परभेदः । नित्यप्रकृत्यादिजडेशभेदः । प्रकृत्यादिरूपनित्य-जडजीवभेदः । प्रकृतेरव्याकृताकाशवणदिर्नित्यजडस्य परस्परं भेद इति भेदपञ्चकस्यानादिनित्यतोपपद्यत इति भावः । **अनित्यानामपि भेदो नित्य एवेति** । 'नष्टानामपि वस्तूनां भेदो नैव विनश्यति' इति तैत्तिरीय-भाष्येऽभिहितत्वादिति भावः । नन्वेवं चेत् सुधाकारैः प्रकृत्यादिनित्यजडस्वरूपभेदमादाय कथं समाधानं कृतमिति चेत् उच्यते । अनित्यानां हि न सर्वथाऽऽस्मन्मते नाशः । किन्तु कार्याकारेणैव । कारणात्मना त्ववस्थानमेव । तेषां मते अनित्यस्वरूपभेदोऽपि कारणस्वरूपेणावतिष्ठत इति टीकाकाराणाम् अभिप्रायः । इममभिप्रायं सूचयितुं सुधाकारैः प्रकृतिमूलकारणस्वरूपभेदस्य नित्यतोक्तेति मन्तव्यम् । **नित्ये च त्रयाणा-मिति** । नित्ये जडप्रकृत्यादौ धर्मिणि त्रयाणां ईश्वरभेदस्य जीवभेदस्य जडान्तरभेदस्य चेति त्रयाणां भेदानां नित्यतासिद्धिः । जीवेश्वरस्वरूपभेदयोर्द्वयोस्तु नित्यता प्रसिद्धैवेति तन्मताभिप्रायः । यद्वा नित्ये नित्यवर्गे त्रयाणां प्रध्वंसान्योन्याभावात्यन्ताभावानां सिद्धिः प्रसिद्धिः । त्रयोऽभावाः नित्यत्वेन प्रसिद्धा इत्यर्थः । तथा च अन्योन्याभावनित्यत्वस्य नैयायिकैरप्यङ्गीकृतत्वात् । अन्योन्याभावभेदयोश्च अनतिरिक्तत्वात् । भेदस्य नित्यत्वे एतत्सम्मतिकथनं युक्तमिति भावः ।

**विट्ठल०— ननु प्रपञ्चदित्येव** रूपं स्यात् । पञ्चद्दशतौ वर्ग इति निपातनादित्यत आह **पञ्च-द्दशताविति** । पञ्चद्दशतौ वर्गे वेति सूत्रे वाशब्देन वर्गार्थेऽपि पञ्चशब्दस्य निपातनाङ्गीकारादित्यर्थः । **स च जीवेश्वरप्रकृत्यादीति** । जीवेश्वरप्रकृत्यादीनां परस्परभेदः नित्यप्रकृत्यादि जडेभ्यो जीवेश्वरानुयोगिभेदौ





नित्यप्रकृत्यादितो अव्याकृताकाशादेर्भेद इति भेदपञ्चकस्यानादिनित्यतोपपद्यत इति भावः । 'यस्माद्वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचिदिति' तैत्तरीयभाष्योक्तेरित्यवगन्तव्यम् । टीकाकाराभिप्रायं विवृण्वन्नेव विनाशिनोऽपि घटादेर्धर्मिरूपो भेदः परवाद्यभ्युपगतघटत्वादिजातिवन्नित्योऽभ्युपगन्तव्यः । वस्त्वन्तरतापत्त्यभावात् कालत्रयेऽपीति सन्न्यायरत्नावलीवाक्यमर्थतः पठति **भेदो नाम अन्योन्याभाव इत्यादिना** । नन्वेवं चेत् सुधाकारैः प्रकृत्यादिनित्यजडस्वरूपमादाय समाधानं कस्मादभिहितमिति चेत् । अनित्यानां हि न सर्वथा विनाशः किन्तु कार्याकारेणैव कारणात्मना तु अवस्थानमेव । तेषां मत अनित्यस्वरूपभूतभेदोऽपि कारणस्वरूपेण वर्तमानभेदनित्यत्वमात्रे न तु धर्मिनाशेऽपि धर्मावस्थाने तस्य तैत्तरीयभाष्ये निरस्तत्वेन टीकाकाराभिप्रेतत्वानुपपत्तेः टीकाकारास्त्विति पृथग्ग्रहणं तु नित्यगतभेदस्य नित्यत्वं स्वयमभिधाय अनित्यगतस्य कार्यसंस्थानापन्नस्य अनित्यत्वमिति सिद्धत्वात् कारणत्वावस्थायां भेदनित्यत्वं टीकाकारैरेवोक्तमित्यभिप्रायेणेति नरहरितीर्थपादानां पक्षमप्याह **अन्येऽप्याहुरिति** । **नित्यैवेति** । त्रयाणामीश्वरजीवजडानां परस्परं पञ्चविधो भेदः तस्य सिद्धिर्नित्यैव । भेदो नित्य एवेति भावः । नित्ये चेति क्वचित्पाठः । नित्ये जडे प्रकृत्यादौ धर्मिणि त्रयाणां जीवेश्वरभेदस्य जीवभेदस्य जडान्तरभेदस्य चेति त्रयाणां भेदानां नित्यतासिद्धिरित्यर्थः । सर्वत्रापि टीकाकारपक्ष एवाभ्युपगत इति ज्ञायते । अथ भेदसिद्धिर्नित्यैव । चशब्दानित्ये चान्तर्भवतीत्यर्थः । अत्र तु सुधाकाराभ्युपगत इति ज्ञायते । यद्वा सङ्ग्रह (?) विद्याधीशतीर्थीये नित्ये चेति नित्ये नित्यवर्गे त्रयाणां प्रध्वंसान्योन्यात्यन्ताभावानां प्रसिद्धिः । तथा च अन्योन्याभावनित्यत्वस्य नैयायकैरङ्गीकृतत्वादन्योन्याभावस्य भेदानतिरेकात् भेदनित्यसम्मतिकथनं युक्तमिति भाव इति व्याख्यातम् ।

**चषकः— विपर्यये पर्यवसानमवश्यम्भावीति** । विपर्यये तत्कोटिमात्रपर्यवसायिन एव तर्कस्य तदभावकोटिकशङ्कानिवर्तकत्वादिति तर्कग्रन्थे दीधितिकारोक्तेः तत्कोटितावच्छेदकावच्छिन्नसाधकविपर्ययप्रतियोगितावच्छेदकावच्छिन्नापाद्यकस्तर्कः तत्कोटितावच्छेदकावच्छिन्नकोटिकशङ्कानिवर्तक इति तदुक्तिं व्याचचक्षिरे व्याकर्तार इत्यवसेयम् । **पञ्चानां वर्ग इति** । फलिताशयप्रदर्शकमेतत् । पञ्चपरिमाणस्य वर्गस्येत्येव तद्धितवृत्त्यर्थप्रदर्शकं वाक्यमिति ध्येयम् । अत्र 'पञ्चद्दशतौ वर्गे' इति निपातनेन वर्गे अभिधेये पञ्चदित्येव स्यात् वाशब्दः पक्षे सङ्ख्याया अतिशदन्तायाः कनिति कनि पञ्चक इत्यस्याभ्यनुज्ञापक इति पञ्चक इति वा स्यात् न तु पञ्च इतीत्याशङ्क्याभियुक्तप्रयोगानुरोधेन अप्राप्तस्यापि पञ्च इत्यस्याभ्यनुज्ञापकः वाशब्द इति हृदयं टीकाकृतामिति व्याचक्षाणाः समादधति **स च जीवेश्वरप्रकृत्यादीति** । जीवप्रतियोगिकेश्वरानुयोगिकत्वेश्वरप्रतियोगिकजीवानुयोगिकत्वान्यतरविशेषितो भेदो जीवेश्वरभेदपदेन, कतिपयजीवप्रतियोगिकजीवान्तरानुयोगिकत्वजीवान्तरप्रतियोगिककतिपयजीवानुयोगिकत्वान्यतरविशेषितो भेदो जीवानामन्योन्यभेद, इत्यनेनैवमेव प्रकृत्यादिनित्यजडेश्वरभेदः प्रकृत्यादिरूपनित्यजडजीवभेदः प्रकृतिवर्णादिरूपनित्यजडानां परस्परभेदो ग्राह्य इति तादृशभेदपञ्चकस्यानादिनित्यत्वमनेनाभिहितमित्यवधेयम् । सन्न्यायरत्नावलीकृतां मतमुपन्यस्यति **टीकाकारास्त्विति** । **अनित्यानामपीति** । 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति तैत्तिरीयभाष्यप्रति-





सन्धानिबन्धनमिदम् । तथा सति प्रकृत्यादिनित्यजडस्वरूपभेदपर्यन्तानुधावनं ग्रन्थकारीयं निर्बीजमिति तु न शङ्कनीयम् । अनित्यानामपि घटादीनां न सर्वात्मना विनाशः किन्तु कार्यात्मनैव, कारणात्मना त्ववस्थितिरेवेत्यनित्यस्वरूपभेदोऽपि (तदात्मना त्ववस्थितिरेवेत्यनित्यस्वरूपभेदोऽपि) तदात्मनाऽवतिष्ठत एवेति चिरन्तनटीकाकारीयं पन्थानमनुरुन्धानाः प्रत्यग्रटीकाकृत्पादाः तादृगाशयं ध्वनयितुं नित्यप्रकृत्यादिजडभेदपर्यन्तमन्वधावन् । अत एव समयचरणे 'तस्मात् प्रध्वस्तभेदादि सदित्येवावगम्यते' इति मौलप्रतीकं सन्न्यायरत्नावलीकृदभिहितदिशैव व्याख्यास्यति । प्रकृते अनित्यप्रपञ्चस्वरूपभेदस्यानित्यतोपगतिस्तु उपादानरूपेण सतो घटादेर्व्यवहारानौपयिकत्वात् ताद्रूप्येण सतो भेदस्यापि तदनौपयिकत्वाशयेनेति न प्रत्नव्यटीकयोर्विरोध इति स्थितम् । अत्र ग्रन्थकृट्टीकाकारमतयोरविरोधो मृग्य इति च निबन्धान्तरीयो विन्यासः । **नित्ये च त्रयाणामिति** । नित्ये जडप्रकृत्यादौ त्रयाणामीश्वरभेदजीवभेदजडान्तरभेदानां नित्यत्वसिद्धिः । जीवेश्वरभेदस्य जीवधर्मिकजीवान्तरभेदस्य च नित्यत्वे अविवादात् पञ्चविधभेदानां नित्यत्वं सिद्ध्यतीति भावः । एवं च मतत्रयमप्येकाशयमिति मन्तव्यम् । निबन्धान्तरे **नित्ये** नित्ये वर्गे **त्रयाणां** प्रध्वंसान्योन्याभावात्यन्ताभावानां **सिद्धिः** अन्तर्भाव इत्यर्थः । तथा च अभावनित्यत्वस्य नैयायिकैरङ्गीकृतत्वात् अन्योन्याभावभेदयोश्च अनतिरेकाद्भेदस्य नित्यत्वं तत्सम्मतमेवेति भेदनित्यत्वरूपस्योक्तार्थे तार्किकसम्मतिपरमिदं वाक्यमित्यपि विन्यस्तम् ।

**॥ इति अर्थविशेषकथनम् ॥**

* * *

**॥ तत्र च अर्थविशेषे कारणद्वयम् ॥**

१८६ **सु०— प्रपञ्चशब्दो भेदपञ्चकवाचीत्येतत्कुत इति चेत्, परोक्तानुपपत्तेरेवेति ब्रूमः । समानार्थायाः श्रुतेश्चेत्याह जीवेति ।**

**अनु०— ''जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥
मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्यो ह्यनादिश्च**

अत्र **'च'**शब्दाः **'तथा'**शब्दौ च अन्योन्यसमुच्चये । **एव**शब्दौ अभेदसाहित्यव्यवच्छेदार्थौ । एष **भेदपञ्चकः प्रपञ्च** उक्तः । 'प्रपञ्चो यदि विद्येते'त्यादावित्यर्थः ।





'सोऽयं सत्यो ह्यनादिश्च' इत्यनेन अत्रापि प्रतिज्ञाद्वयं बहिरेव कर्तव्यमिति ज्ञायते, तत्रानादित्वानङ्गीकारं बाधकम् **सादिश्चेदिति** ।

**सादिश्चेन्नाशमाप्नुयात् ॥**

अनेन प्रथमश्लोकस्य पूर्वार्धो व्याख्यातो भवति । सत्यत्वाभावे बाधकं स्वयमूहनीयमित्यभिप्रेत्य तदुपसंहृतम् **द्वैतमिति** ।

**द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।"**
**इति श्रुतेः**

तेनाज्ञात इत्युक्तार्थं भवति । श्रुत्यन्तरेणाव्याख्यातत्वान्मायामात्रमित्येतद्व्याचष्टे **मितमिति** ।

**मितं त्रातं मायाख्यहरिविद्यया ॥**

माङ् माने, त्रैङ् पालन, इत्याभ्यां 'घञर्थे कविधानमि'ति कर्मणि कप्रत्यये मात्रमिति भवति । धातुद्वयादप्येकः प्रत्ययः 'अदिभूभ्यां डुतच्, अद्भुतमि'त्यादौ दृष्टः । 'विष्णोः प्रज्ञप्तिरेवैका शब्दैरेवाभिधीयते' इत्यतो मायाख्यहरिविद्ययेत्युपपन्नम् ।

**परि०— परोक्तेति** । अस्मिन्नपि व्याख्यान इत्यादिना परोक्तेत्यर्थः । **चशब्दा इति** । त्रय इत्यर्थः । यच्छब्दश्रवणादाकाङ्क्षा पूरयन् योजयति **एष भेदपञ्चक इति** । **अत्रापीति** । प्रागुदाहृताद्यमन्त्रेऽपि प्रपञ्चशब्दितो भेदपञ्चकोऽनादिर्भवितुमर्हतीति । सत्यो भवितुमर्हतीति प्रतिज्ञाद्वयं मन्त्राद्बहिरेव कर्तव्यमित्यर्थः । मायामात्रमित्युत्तरार्धे तत्सत्यत्वस्यापि साधनादिति भावः । **प्रथमश्लोकस्य** = प्रथममन्त्रस्य । **ऊहनीयमिति** । भेदप्रपञ्चोऽसत्यश्चेद्बाध्येतेत्याद्यप्यूहनीयमित्यर्थः । **तेनेति** । उपसंहारपरार्धेन 'अज्ञाते द्वैतं न विद्यत' इत्येतद्व्याख्यातमित्यर्थः । **श्रुत्यन्तरेणेति** । इतिश्रुतेरित्युदाहृतश्रुत्यन्तरेणेत्यर्थः । **कप्रत्यय इति** । 'लशक्वतद्धिते' इति ककारव्यञ्जनस्यापगमे 'आदेच उपदेशेऽशिती'त्यैकारस्यात्वे 'आतो लोप इटि च' इत्याकारलोपे रूपमिति भावः । ननु





धातोरित्यधिकारसूत्रे एकवचनेन धातोर्निर्देशात् धातुद्वयात् कथं प्रत्ययोत्पत्तिरित्यत आह **धातुद्वयादिति** ।

**गु०दी०— एष भेदपञ्चक** इत्यत्र 'मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः' इति वाक्येऽयं भेदपञ्चक इत्येतावतैव पूर्णत्वेऽपि प्रपञ्च इति पृथगभिधानादुद्देश्यविधेयभावाभिप्रायेणैष भेदपञ्चकः प्रपञ्चो यदि विद्येतेत्यादौ **प्रपञ्च उक्त** इत्युक्तमिति ज्ञेयम् । 'त्रैङ् पालन' इति धातोः 'आदेच उपदेशेऽशिती'ति एकारस्याकारे सति तस्य च 'आतो लोप इटि चे'ति लोपे च कृते त्रमिति शब्दनिष्पत्तिर्भवतीति भावेनाह **माङ् माने त्रैङ् पालने इत्याभ्याम्** इति ।

**यादु०**— ननु कर्मणि कप्रत्ययस्याविधानात् कथमत्र कर्मणि कप्रत्यय इत्यत आह **घञर्थ इति** । घञर्थे कविधानमिति वार्तिकादित्यर्थः । घञ् चाकर्तरि च कारक इति कर्तृव्यतिरिक्ते कारके विहित इति भावः । कप्रत्यय इत्यस्यानन्तरं 'आदेच उपदेशेऽशिती'त्यात्वे 'आतो लोप इटि चे'त्याकारलोपे च सतीति शेषः । ननु धातुद्वयादेकः प्रत्ययो न कुत्रापि दृष्ट इत्यत आह **अदिभूभ्यामिति** । अदभक्षणे भूसत्तायामिति धातुद्वयात् डुतच्प्रत्यये टिलोपे च सति अद्भुतमिति रूपमुणादिसूत्रेण साधितं दृष्टमित्यर्थः । नन्वदिभुवो डुतजित्येवोणादिसूत्रपाठः । तस्य च अद्युपपदे भुवो डुतच्प्रत्ययो भवतीति व्याख्यानात् कथमेतन्निदर्शनं प्रकृत इति चेन्न । धातुसमुदायादेकस्य प्रत्ययस्य प्रायशो दर्शनेनाधुनिकैरेवं सूत्रपाठस्य साम्प्रतं कल्पितत्वात् । पूर्वतनस्तु पाठः अदिभूभ्यामित्येव । मूलकोशे वृत्त्यन्तरे च तथा दर्शनात् । अत एव निघण्टुभाष्ये धातुसमुदायात् प्रत्ययो बहुलस्थलेषु व्याख्यातः । तदेव च सुधायामादिपदेन विवक्षितमिति ध्येयम् ।

**वं०प०— अत्रापि** प्रपञ्चो यदीति वाक्येऽपि । 'सोऽयं सत्यो ह्यनादिश्चे'ति प्रतिज्ञाद्वयं कृत्वा तत्रानादित्वमेवोपपादिता सत्यता तु नोपपादिता, अत आह **सत्यत्वेति** । **बाधकं** = मायामात्रत्वानुपपत्तिरूपम् । **मात्रमिति** । मा त्रै आभ्यां धातुभ्यां कप्रत्यये ऐकारस्यात्वे तस्यापि लोपे प्रत्ययाकारे च मिलिते च सति मात्रेति प्रातिपदिकम् । ननु कर्मणि कप्रत्ययाविधानात् कथं कर्मणि कप्रत्यय इत्यतो घञर्थ इति वार्तिकमुदाहृतम् । घञर्थस्तु कर्मापि भवतीत्यर्थः ।

**आनन्दः— बाधकमिति** । सत्यत्वाभावे शशविषाणवदर्थक्रियाकारित्वं न स्यादित्यर्थः । **कर्मणीति** । मीयते त्रायते इति मात्रम् । अतो लोप इटि चेयते तलोपे सति इति भावः । ननु मायाशब्दस्य ज्ञानवाचित्वात् कथं हरिविद्ययेति व्याख्यायत इत्यत आह **विष्णोरिति** ।

**शे०वा०— अनेनेति** । समानार्थायां श्रुतावुक्तप्रतिज्ञाद्वयकरणेनेत्यर्थः । **अत्रापीति** । प्रपञ्चो यदीत्यादिश्रुतावित्यर्थः । **बाधकमिति** । कल्पितश्चेन्निवर्तेतेत्येवंरूपमित्यर्थः । **तेनेति** । द्वैतमित्याद्युपसंहारेणे-





त्यर्थः । नन्वातोऽनुपसर्गे क इति कर्तरि कप्रत्ययविधानेऽपि कर्मणि तदविधानात् कथमत्र कर्मणि कप्रत्यय इत्यत आह **घञर्थ इति** । 'गृहवृदृनिश्चिगमश्चे'त्येतत्सूत्रीयाद्घञर्थे कविधानं 'स्थास्नापाव्यधिहनियुध्यर्थमि'ति वार्तिकात् मीयते त्रायत इति कर्मणि कप्रत्यये आदेच उपदेशे अशितीत्यात्वे आतो लोप इटि चेत्याकारलोपे मात्रशब्दनिष्पत्तिरिति भावः । न च स्थास्नादिष्वभावात् अस्मात् कथं कप्रत्यय इति वाच्यम् । अभियुक्त-प्रयोगानुसारेण अस्यापि तत्रोपसङ्ख्येयत्वादित्यत्र तात्पर्यात् । ननु कथं धातुद्वयादेकः प्रत्ययः । परश्चेति सूत्राद्धातोरिति पञ्चम्या च प्रत्ययस्य धातोरव्यवहितपरत्वस्यैव प्राप्तत्वात् तस्मादित्युत्तरस्येत्यत्र नैरन्तर्येणो-च्चारणार्थकनिर्दिष्टग्रहणानुवृत्त्या पञ्चमीनिर्दिष्टादव्यवहितोत्तरमेव कार्यं भवतीति विज्ञानात् । न हि धातुद्वयात् प्रत्ययोपपत्तावव्यवहितपरत्वं सम्भवति, मध्ये धात्वन्तरेण व्यवधानात् । धातोरित्येकवचनादपि न धातु-द्वयादेकप्रत्ययोत्पत्तिरिति लाभाच्च । विधायकोदाहरणयोरभावाच्चेत्यत आह **धातुद्वयादपीति** । अदभक्षणे भूसत्तायामिति धातुद्वयात् डुतच्प्रत्यये टिलोपे च सत्यद्भुतमिति रूपसिद्धिरिति भावः । न च 'अदिभुवो डुतच्' इति सूत्रं पठित्वा अद्युपपदे भूधातोर्डुतच्प्रत्ययो भवतीत्येव प्रसिद्धोणादिसूत्रवृत्तौ व्याख्यानात् कथमदिभूभ्यां डुतजित्यस्य धातुद्वयादेकप्रत्ययविधायकतयोपन्यासः । कथं च अद्युपपदे भूधातोः डुतचि निष्पन्नस्या-द्भुतशब्दस्य धातुद्वयादेकः प्रत्यय इत्यत्र दृष्टान्तीकरणमिति वाच्यम् । अदिभूभ्यामित्येव मूलकोशेषु पाठ-दर्शनात् । वृत्त्यन्तरेऽप्यदिभूभ्यामित्येव पठितत्वात् तथैव व्याख्यातत्वात् । धातुव्यतिरिक्तस्यादीत्युपपदस्या-भावेन चादिभुवो डुतजिति पाठस्य कल्पितत्वात् । अत एव निघण्टुभाष्ये धातुसमुदायादेकः प्रत्ययो बहुषु स्थलेषु व्याख्यातः तत्सङ्ग्रहायैवं चेह टीकायामद्भुतमित्यादावित्यादिपदमित्यवधेयम् ।

**वा०र०**— मूले **चशब्दास्तथाशब्दौ चेति** । एतच्च 'ऋगाद्या भारते चैवे'त्येतत् तत्त्वनिर्णय-टीकाव्याख्यानप्रपञ्चे व्युत्पादितरीत्या व्युत्पाद्यम् । **कर्तरि क्तेति** । गोदः कम्बलद इत्यादौ तेन कर्तर्येव तद्विधानादिति भावः । कर्मणि तदविधानादिति गोद इत्याद्युदाहरणादेवेति भावः । **इत्यत आहेति** । मायामात्रं त्विति सूत्रव्याख्यावसरे तु सौत्रत्वान्निर्देशस्य कर्मणि कप्रत्यय इत्येकं समाधानमभिधाय तत्र पक्षे सौत्रत्वमाश्रयणीयं भवति इत्यपरितोषात् घञर्थ इति वाक्येनेदमपि समाधानं वक्ष्यत इत्यतोऽत्र द्वितीयमेव समाधानमाहेत्यर्थः । गृहवृदृ इति पाठः । **घञर्थ इति** । भावकर्मवर्जिते कारक इत्यर्थः । तथैव मञ्जर्या-मुक्तेः । वार्तिकान्मीयते त्रायत इति । ननु मात्रा इत्येताभ्यां कर्मणीति वक्तव्यतया वार्तिकादित्युक्त्ययोग इति चेन्न । तत्किं वार्तिकादित्येतदेव प्रकृतिसमर्पकतयोक्तमित्यारोप्य दूषयसि । तथा सति एवंजातीयके सर्वत्र विधायकोदाहरणस्थले विधायकस्य प्रत्ययाश्रयणत्वानुपपत्तिरुद्भावयितुं शक्येति सकलतान्त्रिकीयतादृश-व्युत्पादनं विरुध्येत । न च तत्र प्रकृत्यन्तरकथनमस्तीति वाच्यम् । तथा सति तदुभयतोऽपि प्रत्यय-सम्भावनया शङ्कातादवस्थ्यम् । यदि च तत्र विधायकभागस्य विधायकत्वेनोपयोगः प्रकृतिभागस्य तत्समर्पकतयोपयोगः । पञ्चम्या अविशेषेऽपि विधायकसमर्पके विश्लेषावधौ पञ्चमी । प्रकृतिसमर्पके तु यस्मात्प्रत्ययविधिरित्यादि सूत्रोक्त्यनुसारेण आतोनुपसर्ग इत्यादि निर्देशेषु वैवक्षिकावधित्वादिनिमित्तका





पञ्चमीति सर्वसम्मतेः न दोष इत्युच्यते । तर्हि प्रकृतपञ्चम्यपि विश्लेषावधाविति सिद्धमेवेति नात्र विशेषविचारावकाशः ।

अथ मन्यसे प्रकृतिसमर्पकभागाकीर्तनान्न्यूनतेति तात्पर्यं शङ्कितुं ममेति तर्हि तथैव कुतो नोक्तम् । न चैतदपि दूषणं प्रसज्यते । माङ्मान इत्यादि मूलोत्तरघञर्थ इत्येतत्प्रतीकतयोपादाय व्याकुर्वता तावन्मूलं सिद्धवत्कृत्य उत्तरार्थकथनपूर्वकं आदेच इत्यादिना तदभिप्रायस्यापि कथनेन तदनुक्तिदोषानवकाशात् । अन्यथोपयुक्तार्थकथनं कस्यापि व्याख्यातुः न घटेत । अत एव कथमत्र कर्मणीत्यवतारे उक्तम् । तथा च मूलोक्तधातुद्वयस्य प्रत्ययाश्रयतया सिद्धत्वान्नोक्तिरिति न कश्चिद्दोषः ।

**आतो लोप इटि चेति** । किति इटि च परस्तेनाकारलोपविधानात् कित्वात्परादाकारलोप इत्यर्थः । **न च स्थास्नादिष्वित्यादि** । ननु घञर्थ इति वार्तिके स्थास्नादीनामुदाहरणतयोपादानादत्र परिगणनाभावेन शङ्कानुदयः । अन्यथा वार्तिके हनियुधिभ्य इत्येव वक्तव्यं स्यात् । युध्यर्थमिति वदंस्तु वार्तिककृत्परिगणनाभावमभ्युपैति । अत एव काशिकायां .........सूत्रे कृञः क्विदेश्च घञर्थे कविधानमिति कप्रत्यय इत्येवोक्तम् । भाष्येऽपि घञर्थे को विधेयः किं प्रयोजनम् । स्थास्नापाव्यधिहनियुध्यर्थमित्येवोक्तमिति चेन्न । वार्तिके हि स्पष्टं स्थास्नादीनां ग्रहणं न तु स्थास्नादिभ्य इति आदिशब्दः । तेनैवं विज्ञायते एतेभ्य एव कप्रत्यय इति ततोऽस्य परिगणनत्वस्यैव वक्तव्यत्वे सत्ताशङ्कोपपत्तेः । अन्यथा कृञ्क्विदेश्च कप्रत्यये अनुपपत्त्यभावेन द्विर्वचनप्रकरणे कृञादीनां के उपसङ्ख्यानं कर्तव्यमिति दाश्वान् साह्वान् मीढ्वांश्चेत्येतत्सूत्रीयभाष्ये उपसङ्ख्यानोक्तिरयुक्ता स्यात् । यत्रापि स्वपरग्रन्थयोः घञर्थेन विधानमिति कप्रत्यय इत्येवोक्तिः । तत्र सर्वत्रापि उपसङ्ख्यान एव तात्पर्यम् । उक्तरीत्या विशिष्य सङ्ग्रहेऽपि परिगणनानङ्गीकारे सूत्रेऽपि सर्वत्र एतेभ्य एवेति नियमसमर्पकाभावेनोपसङ्ख्यानमात्रोच्छेदापत्तेः । युध्यर्थमित्युक्तिस्तु परिगणनत्वाभावेन साधिका । ......... इत्यादौ परिगणनत्वदर्शनात् । अत एवोदाहरणत्वमात्रं स्थास्नादीनामिति न कल्प्यम् । यत्र पुनः याजकादिभिश्च (?)किन्नादिभ्यश्चेत्यादावादिशब्दः तत्र क्वचिदाकृतिगणत्वाश्रयणेन क्वचित्पठितगणत्वेन च परिगणनभावाभावयोर्भाष्यकारादिभिर्व्याख्यानात् । एकयोगपरित्यागेन भिन्नयोगकरणं तु न साधकम् । ........ इत्यादावनेकत्र तथात्वेऽपि एकार्थविषयत्वस्यैव सत्त्वात् । यत्तु काशिकोदाहरणं तदपि व्यर्थमेव । तावतापि हि भाष्योक्तरीत्या कृञ्क्विदेश्चोपसङ्ख्यानमात्रस्यैव प्राप्तेः स्पष्टमुपसङ्ख्यानानुक्तावपि तन्निर्णायकस्य भाष्यस्यैव सत्त्वात् । उक्तवार्तिकमनूद्य तद्व्याख्यानरूपमहाभाष्यवाक्यमपि उक्तरीत्या व्याख्यातवार्तिकसमानमिति न तस्य वार्तिकापेक्षया स्पष्टं स्थास्नादेरुदाहरणत्वमात्रमित्येतदर्थसमर्पकत्वम् । अन्यथा दाश्वानित्येतत्सूत्रीयद्विर्वचनप्रकरणे कृञादीनामित्येतदुदाहृतभाष्यवाक्यविरोधप्रसङ्गात् । किञ्चोदाहरणमात्रत्वेऽपि नानुपपत्तिः । वार्तिककृता उदाहरणत्वेनोपात्तेषु स्थास्नादिषु विशेषोक्त्या न तावतामेव ग्रहणम् अपि तु घञर्थे कविधानस्याभियुक्तप्रयोगसंरक्षणार्थत्वेन यत्र तथाप्रयोगस्तत्समर्थनार्थत्वादन्येषामपि । तथा च प्रकृतस्यापि अभियुक्तप्रयोगत्वेन युक्तोऽत्र कप्रत्यय इति वार्तिकार्थनिष्कर्षप्रतिपादकोत्तरवाक्यानुसारेण तन्निष्कर्षं स्पष्टयितुं विशेष्योक्तिमात्रेण नियमशङ्काया उपपत्तेः ।





अत एवाभियुक्तेत्यादि समाधानमुक्तं **कथमस्मादिति** । अत्रास्मादित्ययमिदंशब्दो बुद्धिः प्रकृते वर्तते । ततश्च धातुद्वयादिति मूलानुसारि कथं धातुद्वयादिति वक्ष्यमाणधातुद्वयमत्रेदंशब्देन परामृश्यते । तेन न आभ्यां क इत्युक्तिप्रसङ्ग इति दोषावकाशः ।

**अस्यापीति** । अत्रापि धातुद्वयमस्येत्यनेन परामृश्यते । **तत्रोपसङ्ख्येयत्वादिति** । उक्तरीत्या कृञादीनामिव स्थाप्युपसङ्ख्येयत्वादिति भावः । **परश्चेतीति** । धातोर्वा प्रतिपदिकाद्वा यः प्रत्ययसंज्ञकः स परश्च भवतीति सूत्रार्थः । कृतपञ्चम्याऽव्यवहितपरत्वस्य लाभ इत्यतस्तल्लाभप्रकारं दर्शयति **तस्मादित्युत्तरस्येत्यत्रेति** । **नैरन्तर्येणेति** । निर्दिष्टग्रहणमानन्तर्यार्थमित्येतत्काशिकाव्याख्यावसरे दिशिरुच्चारणक्रियः निःशब्दो नैरन्तर्यो निरन्तरं दिष्टो निर्दिष्टः । एवमानन्तर्यमर्थो भवति इति मञ्जर्यामुक्तेरिति भावः । **उत्तरमेव कार्यमिति** । यद्यपि तस्मादित्युत्तरस्येत्यत्रोत्तरस्य कार्यं भवतीति प्रतिपादितमिति न सर्वांशेऽस्य ज्ञापकत्वम् । तथापि अव्यवधानेन पूर्वापरीभावमात्रे साधकतयाऽस्योपन्यास इत्यवधेयम् । **एकवचनादपीति** । पूर्वं धातोरिति पञ्चमीबलेनाव्यवधानमानीतम् । अत्र पुनरेकवचनेनैकस्मादेव प्रत्यय इत्यर्थलाभे सति धातुद्वयस्थले धात्वन्तरव्यवहितपूर्वधातोरुत्तरः प्रत्ययो न सम्भवतीति अव्यवधानमानीतमिति विशेषः । अत्र यदुमर्जीकिन प्रलपितम् । परशब्दस्य परत्वमात्रार्थकत्वेऽप्यव्यवहितपरत्वार्थकत्वाभावादिति तदज्ञानमूलकमिति स्पष्टमेव । परश्चेतिसूत्रस्य परत्वमात्रप्रापकतयोदाहरणे सति विशिष्टप्रापकत्वेनोदाहरणमित्यस्य कल्पनामात्रत्वात् । अव्यवहितपरत्वस्य विशिष्टस्य प्रापकतयोदाहृतपरश्चेत्यादि साधकद्वयमध्ये परश्चेत्यनेन प्रत्ययमात्रस्य परत्वविधायकेन परत्वमात्रं प्राप्यते । पञ्चम्या च तस्मादित्युत्तरस्येत्याद्युत्तरवाक्यानुसारेणाव्यवहितपरत्वं प्राप्यत इत्यभिप्रायेणोभयोपादानमिति ज्ञातुं शक्यत्वात् । एतेन पञ्चमीत्ववाचकत्वस्यैव भावेनेत्यादि दूषणमपि वक्ष्यमाणोपपादनापेक्षमेतत्पञ्चम्या अव्यवहितपरत्वालाभवर्णनमित्यस्य अज्ञानादेवेति स्पष्टम् । न च तस्मादित्युत्तरस्येत्याद्युक्तमप्यग्रे मया दूषयिष्यते अतस्तदवष्टम्भो न कार्य इति वाच्यम् । तथा सति परशब्दस्येत्युक्तदूषणस्य पञ्चम्या इत्युक्तदूषणस्य चासम्बद्धत्वमेव स्यात् । उत्तरवाक्यदूषणं त्वनुपदमेव निराकरिष्यते । मा त्वरिष्ठाः । वस्तुतस्तु परत्वविधायकेन परश्चेति सूत्रेण प्रकृतेरव्यवहितपरत्वमेव प्रत्ययस्योक्तमिति वक्तव्यम् । धातोर्वा प्रातिपदिकाद्वा यः प्रत्ययसंज्ञकः स परश्च भवतीत्युक्ते अव्यवहितपरस्यैवोत्सर्गतः प्राप्त्या धातुप्रातिपदिकादिभ्यः प्रत्ययस्य व्यवहितपरत्वमित्यस्य निर्मूलत्वेनाकल्पनीयत्वात् । रामादिप्रातिपदिकेभ्यो भ्वादिधातुभ्यश्च स्वादेर्लडादेश्चाव्यवहितपरत्वार्थं परिभाषाद्यन्तराद्याश्रयणापाताच्च । गुप्तिज्किद्भ्यः सन्नित्यादौ परश्चेति सूत्रोत्तरस्थले गुप्तिज्किद्भ्यः इति पञ्चमी हि दिग्योगनिमित्तकान्यारादितरर्ते दिक्शब्दांचूत्तरपदाजाहियुक्त इति सूत्रप्रापितेति वाच्यम् । आपादनत्वाद्यभावेनान्यसूत्रैस्तत्प्राप्त्ययोगात् । तथा च तत्र दिग्वाचकपूर्वपरशब्दयोरश्रवणेन तच्छब्देऽध्याहार्ये परशब्द एवाध्याहार्य इति नियमार्थं हि परश्चेति सूत्रं प्रवृत्तम् । स च परः प्रत्ययः प्रकृत्यव्यवहितपरतां हित्वा विना बाधकेन किमिति व्यवधानं प्राप्नुयात् । अत एवाव्यवहितपरत्वसाधिका तस्मादित्युत्तरस्येति परभाषा न च तस्मादित्युत्तरस्येत्यनया परिभाषया परत्वं भविष्यतीत्याद्याशङ्का-





समाधानादिवर्णनेन गुप्तिजित्यादिपरत्वमात्रविषयेऽप्यवतारिता मञ्जर्याम् । अन्यथा निर्दिष्टपदार्थाव्यवधानस्य तत्राभावे तया परिभाषया सनादीनां परत्वसिद्धिशङ्कानवकाशः स्यात् । कथञ्चित् शङ्कायां वा परिहारे अव्यवधानाभावो वाच्यः स्यात् । स तु नोच्यते किन्तूत्तरस्य कार्यं हि सिद्धे तस्मिन्वाच्यम् । न च सनादयः सिद्धा इत्यादिकमेव शङ्क्यते परिहरिष्यते च । तस्मात् परशब्देनाव्यवहितपरस्यैवोत्सर्गतः प्राप्तत्वेन तदभिप्रायेण परश्चेतिसूत्रादव्यवहितपरत्वं प्रत्ययस्य प्राप्तमिति प्रतिपादनं युक्तमेव । न हि तस्मादितीति परिभाषया विहित पराश्रितकार्यं यथा नियम्य तथा प्रातिपदिकादिप्रकृतिभ्यः प्रत्ययस्याव्यवहितपरत्वं नियामयदन्यदस्ति । एवं पञ्चम्या च व्यवहितपरत्वसिद्धिरित्यपि साध्वेव । दिग्योगलक्षणपञ्चम्याः परशब्दादियोगेनैव प्राप्त्या तया परत्वसिद्धेर्वक्तुं शक्यत्वात् । उक्तं च पादुकुघाञ्नुमित्येतत्सूत्रमञ्जर्याम् । रषाभ्यामिति पञ्चमीनिर्देशाद्व्यवधानेन प्राप्नोतीति इदं वचनमिति । तथैव तत्त्वबोधिन्यामपि । उदःस्थास्तम्भोरित्यादि सूत्रसम्बन्धिमञ्जर्यादावपि पञ्चम्या परत्वसिद्धिरित्यादिकमुक्तम् । तथाविधस्थले तस्मादित्युत्तरस्येति परिभाषाबलादव्यवहितपरत्वसिद्धावपि धातोरित्यादि स्थले तत्परिभाषाया न प्रवृत्तिरित्येतावदविशिष्टं त्वनुपदमेव निराकरिष्यते । गुप्तिजित्यादौ विहितसमासादीनां स्वादीनां च धातुप्रातिपदिकाव्यवहितत्वसाधकाभावेन तदसिद्ध्यापात इति तूक्तमेव । उक्तं च अष्टमप्रथमगतयद्वृत्तान्नित्यमिति सूत्रीयकाशिकायां 'यस्मै करोति यो भुङ्क्ते यद्यद्वायुर्वाति । यत्कामास्ते जुहूमः' इत्युदाहरणमभिधाय पञ्चमीनिर्देशोऽप्यत्र व्यवहिते कार्यमिष्यत इति । तथापूजनात् पूजितमनुदात्तं काष्ठादिभ्य इति तदुत्तरसूत्रीयकाशिकायाम् । यजनादित्येव पूजितपरिग्रहे सिद्धे पूजितपरिग्रहणमनन्तरं पूजितप्रतिपत्त्यर्थम् । एतदेव ज्ञापकम् । इह प्रकारेण पञ्चमीनिर्देशोऽपि नानन्तर्यमाश्रीयते इत्यादि । मञ्जर्यां तु यद्वृत्तशब्दोक्तयच्छब्दात्परं तिङन्तं नानुदात्तं भवतीति सूत्रार्थे कथं पुनः पञ्चमीनिर्देशे सति यत्कामास्ते यद्यद्वायुरित्यादौ व्यवधाने भवत्या आहेति पञ्चमीनिर्देशोऽपीति वाक्यमवतार्य एतच्चोत्तरसूत्रे ज्ञापयिष्यत इत्युक्तम् । तेन पञ्चम्या अव्यवहितपरत्वं लब्धम् । परं त्वत्र प्रकरण एव तन्नाश्रीयत इति प्राप्तेः । अत एव स्वरमञ्जर्यां यद्वृत्तात्परं व्यवहितमव्यवहितं च तिङन्तं नानुवृत्तमिति व्याख्यातम् । काशीस्थस्वरमञ्जरीस्थ पञ्चमीतिवाक्यस्य ननु यद्वृत्तादिति पञ्चमीनिर्देशा-दव्यवहितानन्तर्यं गम्यते तस्मादित्युत्तरस्येत्यत्र निर्दिष्टग्रहणानुवृत्तेः निर्दिष्टस्य नैरन्तर्योपदेशपरत्वादित्यत आहेत्यवतारस्तत्परिमले कृतश्च । भवतापि तस्मिन्निति निर्दिष्ट इति परिभाषया अव्यवहितपरत्वलाभादुपसर्ग-स्यायतावव्यवहितपरत्व इत्यर्थः प्राप्त इति वर्णनस्य रो ल इतीत्येतत्सुधावाक्यविचारे कृतत्वेन तदयोग-प्रसङ्गश्चेत्यलम् ।

एतेनैव पञ्चम्यैवाव्यवहितपरत्वलाभे तस्मादित्युत्तरस्येति परिभाषावैय्यर्थ्यमित्युक्तमपि निरस्तम् । धात्वादिप्रकृतिभ्यः प्रत्ययस्यावहितपरत्वसाधकस्यान्यस्याभावेन व्यवहितपरत्वमुत्सर्गतो दिग्योगलक्षणपञ्चम्यैव सिद्धमित्यकामेनापि स्वीकार्यम् । अन्यथा तन्न सिद्ध्येदिति साम्यात् । यदपि पञ्चमीनिर्दिष्टादव्यवहितोत्तरमेव कार्यं भवतीत्येतदयुक्तम् । पञ्चमीनिर्देशेन विधीयमानं कार्यं पञ्चमीनिर्दिष्टाद्वर्णान्तरेणाव्यवहितस्य परस्य भवतीत्यर्थस्यैव प्राप्तेरित्युक्तम् । तदपि न । न ह्यत्राव्यवहितोत्तरमेव कार्यं भवतीत्ययमर्थः । पदार्थतया प्राप्त





इत्यप्युक्तं येनापदार्थत्ववचनसङ्गतिः । अपि तु यदा अव्यवहितस्योत्तरस्य कार्यं भवतीति प्रतिपादितम् । तदा स प्रत्ययोऽप्यव्यवधानेनोत्तरो भवति तस्य च कार्यं विधीयमानं भवति इत्येवं विधानद्वयमभिप्रेतमिति सूचयति । कथमन्यथा प्रत्ययस्याव्यवहितोत्तरत्वप्रापकपरिभाषान्तराभावे सत्यव्यवहितोत्तरत्वेनानूद्य तस्य कार्यविधानं युक्तं स्यात् । एवं चोक्तोभयविधानमभिप्रेत्याव्यवहितोत्तरमेव कार्यं भवतीत्युक्ते सति अपदार्थत्ववचनायोगः । **अत एवेति** । विज्ञानादित्युक्तम् । केचित्त्वव्यवहितमुत्तरं यस्येति बहुव्रीहिः । सम्बन्धश्चाश्रयत्वमिति परोक्तार्थ एवानेन प्रतिपादित इति नापदार्थत्वप्रसङ्ग इति वदन्ति । अन्ये तु उपायान्तरेण सिद्धं प्रत्ययस्याव्यवहितोत्तरत्वमनूद्य त एव न त्वत्रैव विधीयत इति न दोष इत्याहुः । परेणाप्युक्तव्याख्यानेऽपि प्रत्ययस्य धातोरव्यवहितपरत्वसिद्धेराशङ्कनाच्च । यदपि तथा शङ्कामुत्थाप्य तस्मादित्युत्तरस्येत्युक्तपरिभाषायां आदेशाख्यं कार्यं पञ्चमीनिर्दिष्टादव्यवहितस्यैव भवतीति स्थानिनियमार्थत्वेन वृत्त्यादावुक्तत्वेन प्रत्ययविषयत्वाभावात् । अन्यथोत्तरस्येति स्थानषष्ठीविरोधादिति प्रलपितम् । तत्पूर्वोक्ताभिप्रायानवबोधमूलकमिति स्पष्टमेव । तस्मादिति परिभाषासूत्रस्य धातोः प्रत्ययो यो विहितः सोऽव्यवहितपरो भवति । तस्य च विहितं कार्यं भवतीति विधानद्वयेऽभिप्रेते सति द्वितीयविधानाश्रयणेन प्रथमस्य दूषणायोगात् । न हि द्विर्नायोऽर्थः । परित्यक्तटीकायां येन तद्विरोधः स्यात् । व्याख्यातेऽपि धातोरव्यवहितपरत्वसिद्धिरिति भवतापि शङ्कोत्थाने कृतेऽर्थतस्तल्लाभस्वीकारसिद्धौ तद्दूषणाय यथाश्रुतार्थपुरस्कारायोगाच्च । आदेशाख्यमिति नियमवचनत्वज्ञानमूलं कार्यमिति सामान्यत एव तत्रोक्तेः । अत एव परश्चेति सूत्रमञ्जर्यां न च तस्मादित्युत्तरस्येत्यनया परिभाषया परत्वं भविष्यति । यत्र हि प्रागेव सतः कस्यचित्किञ्चित्कार्यं विधीयते । यथा पदात्परयोरपादादौ स्थितयोर्युष्मदस्मदोर्वा भावौ भवत इति तस्याविषयः । इह तु प्रागसन्त एव सनादयो विधीयन्ते नैतेषां सम्बन्धि किञ्चित् । प्रत्ययसंज्ञैव कार्यमिति चेत् । एवमपि प्रागुत्पत्तिरनिवारितैव स्यात् । तथा ह्यसतां सनादीनां संज्ञाविधिरनुपपन्न इत्येकेन वाक्येन सनादीनां विधिः । द्वितीयेन च तेषामेव संज्ञाविधिरित्यङ्गीकर्तव्यमित्याद्युक्त्वा स्यादेतदित्यादिग्रन्थे गुपादिभ्यः परः सन् प्रत्ययसंज्ञो भवतीति हि तस्य स्वरसतः प्राप्तोऽर्थः । स च पूर्ववाक्ये पूर्वशब्दाध्याहारे सति न स्यादतस्तत्परिहाराय परशब्द एवाध्याहरिष्यते । भवतु वोत्पत्तिनियतदेशाय पश्चात्तु सत एव परस्य पृथक्कृत्य प्रत्ययसंज्ञादिशास्त्रं कार्यं तद्देशान्यदेशं निवर्तयिष्यतीत्यादिकमुक्तम् । तेन चादेशातिरिक्तं कार्यान्तरं बह्वतिप्रतिपादनलाभेन कथमादेशाख्यमित्युक्तेरज्ञानमूलत्वाभावः । किञ्च तस्मादित्येतदिति परत्ववदनुकरणं किं न स्यात् । तत्र यद्यपि तस्मान्नुड्वल इत्यत्रत्यस्यानुकरणं न भवति । तथापि तस्माच्छसो नः पुंसीत्यस्य तस्मान्नुडचीत्यस्य वानुकरणं भविष्यतीत्यादिशङ्कावारकतया तस्मादिति पञ्चम्यर्थनिर्देश उत्तरस्य कार्यं भवतीति काशिकायाः मञ्जर्यामवतारस्तावदस्ति । तत्र तस्मान्नुड्वल इत्यत्र नुडागमरूपकार्यस्य सत्त्वात् तस्मान्नुडचीत्यत्र च नुडागमस्यैव कार्यं त्वस्य सिद्धत्वेनादेशनियमानुत्पत्तिः । आदेशरूपकार्यनियमे उक्तस्थलद्वये आदेशरूपकार्यप्रसक्त्यभावे तदनुकरणत्वस्य स्वत एव वारणसिद्ध्या पञ्चम्यर्थनिर्देशव्याख्यानायोगप्रसङ्गः । एतेनैव स्थानिनियमार्थत्वेनेत्यप्यपाकृतम् । कार्याश्रयत्वमात्रस्यैवोत्तरस्यैवेत्यनेनोक्तरीत्या नियमेनेत्यनेन आदेशस्थानिनियमार्थत्वायोगात् । तस्मादित्युत्तरस्येत्येतद्विषये गाङ्कुटादिभ्यो ञ्णिन् ङित् असंयोगाल्लिट् किटित्यादिस्थले





ङित्वक्तित्वादेरेव विधानाच्च । तथा कार्यशब्दस्य सामान्यपरत्वे प्रत्ययोऽपि स्वीकर्तुं शक्यः । वृत्त्यादाविति चासत् । वृत्तौ हि पञ्चम्यर्थे निर्देशे उत्तरस्यैव कार्यं भवति न पूर्वस्येत्येतावत एवोक्तेः । आदिपदं चात एव निरस्तम् । उत्तरस्यैवेति स्थानषष्ठीयुक्तमित्यपि न । भाष्ये निर्देशविरोधापादनं चायुक्तम् । उत्तरस्य स्थान इति व्याख्यानस्याभावात् भाष्योक्तषष्ठीप्रक्लृप्तिपक्षः तु परेण न ज्ञातः । अतः तदनुसारेण स्थानषष्ठीत्युक्तमित्यपि न । भाष्ये हि षष्ठीस्थाने योगेति पूर्वसूत्रान्मण्डूकप्लुत्या षष्ठीति वर्तते । तथा च यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य कार्यत्वप्रतिपादनयोग्या षष्ठी कर्तव्या यत्र परस्य तत्र परस्य षष्ठीकर्तव्या इत्येवंरूपः षष्ठीप्रक्लृप्तिपक्षो विहितः । तेनाने मुक् इति सूत्रेऽतोयेय इति सूत्रादत इति अनुवर्तते । तस्य च पञ्चम्यन्तस्य तत्सूत्रे सावकाशत्वादान इति सूत्रे तस्मिन्निति सप्तम्यर्थनिर्देशे पूर्वस्य षष्ठी कल्पनीयेति तस्मिन्निति निर्दिष्ट इति परिभाषया प्राप्नोतीति आने परतो तोङ्गस्य मुगित्यर्थः सम्पद्यते । एवं आमि सर्वनाम्नः सुडित्यत्रादित्यनुवृत्तेः सर्वनाम्न इत्यस्य पञ्चमीत्वसिद्ध्या सा पञ्चमी तस्मादित्युत्तरस्येति परिभाषया आमीति सप्तम्याः षष्ठी प्रकल्पयति । अवर्णान्तात्सर्वनाम्नः परस्याम इत्यर्थप्राप्तेः । एवमीदास इत्यादौ सूत्रे । इकोयणचीति षष्ठ्याः पूर्वमेव सत्त्वस्थले तु पूर्वस्य कार्यमित्येव परिभाषया लभ्यम् । स्थाने षष्ठी चैषा अनियतयोगत्वात् । यस्य च स्थाने षष्ठी तस्यैव कार्यमित्यादेर्भाष्यमञ्जर्युक्तरीत्या प्रतिपन्नत्वे सति यस्य स्थाने आदेशः तस्य स्थानिन षष्ठीति कल्पनाया निर्मूलत्वादित्यलम् ।

एवं धातुद्वयादेकप्रत्ययस्योपपत्तिविरोधमभिधाय यदि कुत्रचिद्धातुद्वयादेकप्रत्ययविधायकं किञ्चित् दृष्टं स्यात् यदि वा तत्रोदाहरणं किञ्चित् दृष्टं स्यात् तदा प्रतीमो यदुपपत्तिविरुद्धोऽपि धातुद्वयादेकः प्रत्ययोऽङ्गीकारार्ह इति । न चैतदुभयं दृश्यते इत्याह **विधायकेति** । अदर्शनादिति पाठः । पाणिनीयादिग्रन्थेषु कस्माच्चिद्धातुद्वयात् कस्यचिदेकप्रत्ययस्य विधायकतया सम्प्रतिपन्नसूत्रस्य तदुदाहरणस्य चादर्शनादित्यर्थः । अभावादिति पाठेऽप्यभावपदमदर्शनार्थकम् । एतेन स्थास्नेति वार्तिकस्यैव विधायकतया तदभावाभिधानायोगः । कथञ्चिच्छङ्कायामपि प्रकृतधातुद्वये प्रत्ययविधायकत्वस्यानुपन्यासेन परिहारायोगश्चेति परास्तम् । स्थास्नेति वार्तिकरूपविधायकमङ्गीकृत्यापि धातुद्वयादपि प्रत्यय इत्यर्थस्य वार्तिके अप्रतीतेस्तत्कल्पनायाश्च अन्यत्र धातुद्वयादेकप्रत्ययदर्शनमूलकतया अन्यत्र च धातुद्वयादेकप्रत्ययविधायकाभावेन तत्कल्पनाया अप्ययोग इत्येव स्थलान्तरीयविधायकाभावादेरेव आशङ्कनमिति पूर्वोत्तरपरामर्शे सति स्पष्टप्रतीत्योक्तदोषानवकाशात् । एतेनैतदपि परास्तम् । परिहारवाक्ये विधायकानभिधानेन विधायकाभावादिति निवर्त्याशङ्काप्रदर्शनायोग इति । अदिभूभ्यां डुतजित्यस्यैव धातुद्वयादेकप्रत्ययविधायकतया तदभावाभिधानायोगात् । प्रकृतधातुद्वयविधायकाभाव इत्युच्यत इति चेन्न । धातुद्वयमुद्दिश्य कप्रत्ययस्य प्रत्येकं विधानाभावेऽपि उक्तवार्तिकादेव सिद्धिरित्युक्तत्वेन पुनस्तच्छङ्काया एवायोगात् । कप्रत्ययमङ्गीकृत्य धातुद्वयात् स कथमित्येव शङ्कायाः प्रकृते प्रकृत्या प्रकृतस्थलीयविधायकग्रहणेनाशङ्काया असङ्गतत्वाच्च । एवं च धातुद्वयात् कप्रत्यये परश्चेत्यादिसूत्रविरोधादिकमुपपाद्य यदि क्वचिद्धातुद्वयादेकप्रत्ययविधायकं तदुदाहरणं वा शास्त्रे दृष्टं स्यात् तदा अङ्गीकुर्मः । अत्रापि





उक्तसूत्रादिविरुद्धोऽपि कप्रत्यय इति । न च तथास्तीत्येवंविधायकोदाहरणयोरित्येतद्वाक्यार्थस्य स्पष्टं प्रतीतेः न कश्चिद्दोषः ।

ननु तथापि धातुद्वयादित्येतद्वाक्याशयावर्णनं दोषः । न चाद्भुतमित्यादौ यथा धातुद्वयादेको डुतच्प्रत्ययस्तथा प्रकृतेऽपीति तदाशयस्य स्पष्टत्वान्न तत् वर्णनमिति वाच्यम् । तत्र विधायकसद्भावेन धातुभ्यां डुतच्प्रत्ययसम्भवेऽपि प्रकृते तदभावेन वैषम्यात् । अन्यथा बहुच्प्रत्ययः पुरस्तात् दृष्ट इति स्वादिप्रत्ययोऽपि तथा स्यादिति चेन्न । अत्र हि धातुद्वयादेकस्मिन्प्रत्ययेऽभिहिते उक्तरीत्या स्थाम्नेति वार्तिकस्य तद्विधायकत्वकल्पनामूलभूतो धातुद्वयादेकः प्रत्ययः केन विहितः क्व च दृष्ट इति शङ्कापरिहाराय तदुभयं प्रदर्श्यते । एवं शङ्कित्रैव विधायकभावाभावादिवैषम्यस्याङ्गीकारात् तच्छङ्कनायोगः भ्वादिधातुसमुदायात् असुनं व्युत्पाद्य अदिभूभ्यामिति यथेति ऋग्भाष्यव्याख्यानग्रन्थेऽपि विधायकबलेन द्वाभ्यां प्रत्ययस्याश्रयितुं शक्यत्वेऽपि त्रिभ्यस्तदनुपपत्तिरिति वैषम्यस्य वक्तुं शक्यत्वाच्च । दृष्टान्तमात्रे कथञ्चिद्वैषम्यस्योपपादयितुं शक्यतया तन्मात्रोच्छेदापत्तेश्च ।

अपि च यद्यत्रोदाहरणमात्रं साधकतया विवक्षितं स्यात् तदा वैषम्यशङ्काऽवकाशं प्राप्नुयात् । न चैवं धातुद्वयादेककप्रत्ययस्य वार्तिकरूपविधायकलब्धत्वाङ्गीकारपूर्वकमुदाहरणाभावमात्रशङ्कायां तत्परिहारायोदाहरणप्रतिपादनात् । अङ्गीकृत्य चैतत् । धातुद्वयात्मककप्रत्ययविधित्वकल्पनमेतदुक्तम् । वस्तुतस्तु वार्तिकस्याभियुक्तप्रयोगसंरक्षणार्थतया प्रवृत्तेर्यत्र धातुद्वयार्थप्रतिपत्त्यर्थं धातुद्वयादेकप्रत्ययस्वीकारेण प्रयोगस्तत्राप्यनेन तद्विधानेन तद्विधानसिद्ध्या वैषम्यशङ्काया अयोग एव । अत एव मायामात्रं त्वित्येतत्सूत्रीयमायामात्रपदव्याख्यानावसरे यद्यप्येकस्मादेव धातोस्त्रप्रत्यय इत्याद्याशङ्कचैवमेव टीकाकृता समाधास्यते । अन्यथा बहुच्प्रत्यय इत्यतिप्रसङ्गाभिधानं त्वतिप्रसङ्गाभिधानमात्रम् । तत्र विभाषासुपो बहुच् पुरस्तात् परश्चेत्याभ्यां सूत्राभ्यामेव बहुच्प्रत्ययस्वादिप्रत्यययोर्नियमितत्वेनैकत्रविद्यमानप्रकारस्य प्रत्ययान्तरे विरोधेनाङ्गीकर्तुमयोगात् । तथा च बहुच्प्रत्यये बहुयदुः बहुमृदुरित्यादौ पुरस्त्वं दृष्टमिति स्वादिप्रत्यये तन्नाङ्गीकर्तुं युक्तं परश्चेत्युक्तपरत्वविरोधात् । स्वादिप्रत्यये दृष्टं परत्वं वा न बहुच्प्रत्ययेऽङ्गीकर्तुमुचितं पुरस्तादित्युक्तविरोधात् । अत एव अकच्प्रत्ययोऽव्ययसर्वनाम्नामकच् प्राक् टेरित्यनेन मध्य एव भवति । उच्चकैः नीचकैः युष्माकाभिरित्यादौ । न चैवं डुतच्प्रत्ययवन्माङ्माने त्रैङ्पालन इत्याभ्यामेकः कप्रत्यय इत्यङ्गीकारे केनचिद्विरोधोऽस्ति । तस्मान्नातिप्रसङ्गः । न च तथापि धातुभ्यां डुतच्प्रत्ययदर्शनस्य स्थाम्नादिभ्यः प्रत्येकं कप्रत्ययदर्शनापेक्षया बहिरङ्गत्वादन्तरङ्गं प्रत्येकप्रत्ययदर्शनमेवानुसरणीयमिति वाच्यम् । अत्र हि स्थाम्नादिभ्यः प्रत्येकं कप्रत्ययदर्शनमङ्गीकृत्य अभियुक्तप्रयोगसंरक्षणाय धातुद्वयादप्येकं प्रत्ययं व्युत्पाद्य तत्र दृष्टान्ताभावशङ्कायां दृष्टान्तं प्रदर्श्यते न चात्र अन्तरङ्गबहिरङ्गत्वचिन्तावसरोऽस्ति । प्रत्येकदर्शनसमकक्ष्यतया अस्यानुपन्यासाच्च । प्रत्येकाङ्गीकारे मात्रमित्यापत्तेश्च । धातुद्वयादित्युत्तरवाक्यस्यानपेक्षत्वापाताच्च । पूर्वपदस्य छान्दसदीर्घश्रयणेन





वोत्तरपदस्याङ्पूर्वकत्वाश्रयणेन वा मात्रमिति रूपसिद्धिरिति चिरन्तनटीकोक्तं तु कल्पनामात्रम् । धातुद्वयादेकप्रत्ययाप्रतीतिविरुद्धं च । अन्ततो धातुद्वयादित्युत्तरवाक्यार्थतया धातुद्वयादेकप्रत्ययस्याङ्गीकारेणैवोत्तरवाक्यवैय्यर्थ्यस्य परिहरणीयतया आयासमात्रं च । तथा हि धातुद्वयादेकः प्रत्ययः तावन्मूलकृत्सम्मत एव, गर्भशब्दव्याख्यावसरे ऋग्भाष्यटीकायां भ्वादिधातुभ्यः एकमेवासुनं प्रतिपाद्य अदिभूभ्यामिति यथेति प्रतिपादनात् । तृतीयाध्याये धातुसमुदायादित्येव मूले वक्ष्यमाणत्वाच्च । समुदायग्रहणे च द्वितीयधातूत्तरत्वमेव प्रत्ययस्याङ्गीकृतं भवति । तत्त्वनिर्णयटीकादौ प्रत्येकप्रत्ययकार्यमात्राभिप्रायस्थले आङ्पूर्वकात् तनोतेर्माङ्मान इत्यतश्च डन्प्रत्यय इत्याद्युक्तावपि प्रत्ययस्य द्वितीयधातूत्तरतामात्रस्यैव वाच्यत्वाच्च । अन्यथा तनोतेष्टिलोपानन्तरमपि तनित्येव निष्पत्त्या आतन्मनिति प्रातिपदिकपर्यवसानापत्तिः ।

एवं समुदायात् प्रत्ययविधानस्थले मात्रशब्दनिर्वचनावसरे इत्याभ्यामित्येवोक्तिश्च । मित्वा त्रातीति मित्रोऽयमित्येतत् ऋग्भाष्यव्याख्यावसरे तु प्रत्येकं धातोः प्रत्ययाश्रयणेनैव रूपसिद्धेः तदङ्गीकारे बाधकाभावात् समुदायादियुक्तिविरोधाभावाच्च प्रत्येकं प्रत्ययाश्रयणाङ्गीकारोऽपि न दोषः । 'गमेश्छदेश्च डप्रत्यय' इति । ज्योतिरधिकरणमूलेऽपि प्रत्ययसन्नियोगकार्यस्य प्रत्येकं सत्त्वाद्बाधकाभावाच्च प्रत्येकं प्रत्ययस्वीकारो युक्तः । प्रत्ययसन्नियोगेनेति ऋग्भाष्यटीकाव्याख्यानस्थलीयटीकापि प्रत्ययसन्नियोगकार्यस्य पूर्वधातुगत्वस्थलमात्राभिप्राया । न तु तत्सन्नियोगेन सर्वत्र कार्यमस्तीत्यभिप्रायेति न दोषः । अत्र च धातुद्वयात् प्रत्ययाङ्गीकारेऽपि द्वितीयधातोरेवाकारलोप इति स्पष्टमेव । गर्भशब्दव्युत्पादनाय धातुसमुदायादसुन्नित्युक्तस्थलेऽपि प्रत्येकमसुन आश्रयणाभावस्य सर्वसम्मतत्वाच्च । अशक्र उत नः शकदित्येतत्कर्मनिर्णयटीकायां शक्लृशक्तौ रमु क्रीडायामित्याभ्यां ड इति शक्रशब्दव्युत्पादनदर्शनाच्च वजगतौ रमुक्रीडायामित्याभ्यां भावे डप्रत्ययस्तद्वान् वज्रीति इन्द्रो वज्रीत्येतत् ऋग्भाष्यटीकायामुक्तेश्च । प्रयोगसाधुत्वकल्पकस्य समानत्वेन धातुसमुदायादौणादिकप्रत्ययस्येव कप्रत्ययस्याप्यङ्गीकारोपपत्तेश्च । तस्मात्स्थास्नादिभ्यः पर्यायेण प्रयुज्यमानेभ्यः एकप्रत्ययदर्शनेऽपि मित्वा त्रातीति ऋग्भाष्यव्युत्पादितमित्रेति प्रयोगे ज्योतिरधिकरणीयगच्छेति प्रयोगे च धातुद्वये प्रत्येकमपि क,डप्रत्ययाङ्गीकारेऽपि च प्रकृते धातुद्वयादेकप्रत्ययाङ्गीकारेण धातुद्वयादित्युत्तरवाक्यप्रवृत्तिरुपपन्ना । अत एव कृदरादयश्चेति पञ्चपादीयोणादिसूत्रीयोदाहरणे धातुद्वयादेव प्रत्ययमङ्गीकृत्योदाहृतः । कृदरः कुसूलम् । मृदरं विलसत् । सृदरः सर्प इत्यवधेयम् । **टिलोपे चेति** । डित्वविधिसामर्थ्यादभस्यापि टेर्लोप इत्यर्थः । धातुद्वयादित्येतन्मूले भट्टोजिनोक्तं दूषणमुद्धर्तुमाशङ्कते **न चादिभुव इति** । विधायकांशेऽनुपपत्तिमभिधाय उदाहरणांशेऽप्यनुपपत्तिं प्रतिपादयति **कथं चेति** । **दृष्टान्तीकरणमिति** । अन्यथा कर्मण्यण् ब्रह्मभ्रूणावृत्रेषु क्विषित्यादौ विहिताणादेरपि कुम्भकारब्रह्मेत्याद्युदाहरणे कृञादिभ्य इव कुम्भादिभ्योऽपि प्रत्ययत्वं व्यवह्रीयेतेति भावः । **मूलकोशेष्विति** । प्रसिद्धोणादिवृत्तिमूलकोशेष्वित्यर्थः । **वृत्त्यन्तर इति** । प्रसिद्धातिरिक्तदशपादीवृत्तौ पादव्यवस्थाशून्योणादिवृत्तौ चेत्यर्थः । **धातुव्यतिरिक्तस्येति** । तान्ताकस्मिकार्थकात् इत्येतच्छब्दस्यादित्यनेन ग्रहणमित्यङ्गीकारेऽतीत्येवापत्त्या अदीति दकारायोगप्रसङ्ग इति भावः । उपलक्षणं चेदं पूर्वोदाहृतकृदरादि-





शब्देषूपपदत्वकल्पकाभावेन धातुद्वयादेवप्रत्ययस्य परेणाप्यङ्गीकार्यत्वाच्चेत्यपि ज्ञेयम् । **निघण्टुभाष्य इति** । उपलक्षणं चेदम् । अत्रापि किञ्चिदधिकं भक्तिपादीयमायामात्रमित्येतद्व्युत्पादनटीकाद्युक्तं ज्ञेयमिति सर्वमवदातम् । **विष्णोः प्रज्ञप्तिरेवैकाशब्दैरेवाभिधीयत** इति मूलम् । शब्दैरेतैरुदीर्यत इति पाठान्तरमप्यस्ति । टीकाकृता तत्पाठपुरस्कारेणोत्तरत्र तथैव वाक्यस्योदाहरिष्यमाणत्वात् ।

**स०व्र०— घञर्थे कविधानमिति** । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमिति वार्तिकादिति भावः । न च स्थास्नादिष्वभावात् कथं कप्रत्यय इति वाच्यम् । अभियुक्तप्रयोगानुसारेण अस्यापि तत्रोपसङ्ग्राह्यत्वात् । अन्यथा स्थास्नादीनामपि तत्राग्रहणप्रसङ्गादिति भावः । कप्रत्यय इत्यनन्तरं 'आदेच उपदेशे शिती'त्यात्वे 'आतो लोप इटि चे'त्याकारलोपे चेति शेषः । **अदिभूभ्यामिति** । अनेनोणादिसूत्रेण डुतच्प्रत्यये विहिते अद्भुतमित्यादिरूपनिष्पत्तिर्दृष्टेत्यर्थः । अदिभूभ्यामित्येव मूलकोशे वृत्त्यन्तरे च पाठदर्शनात् अदिभुवो डुतजिति पाठः कल्पित एव । अत एव निघण्टुभाष्ये धातुसमुदायादेकः प्रत्ययो बहुषु स्थलेषु व्याख्यात इति भावः ।

**स०ना०— इति श्रुतेर्मितं त्रातं मायाख्यहरिविद्ययेति** मूलसुधायां **घञर्थे कविधानमिति** । उभयत्रापि कप्रत्यये आकारलोपे पूर्वपदस्य छांदसदीर्घेण वा उत्तरधातोराङ्पूर्वकत्वेन मात्रमिति सिद्धमिति भावः । **धातुद्वयादपीति** । केनचित् वृत्तिकारेण अदिभूभ्यां धातुभ्यां अद्भुतमित्यत्र अदि भुवो डुतच् इति सूत्रेण डुतच् दृष्टो व्याख्यातः । अतः धातुद्वयादपि माङ् माने त्रैङ् पालने इत्येतस्मादेककप्रत्ययो वास्त्वित्यर्थः । एतेन अद्भुतमित्यत्र विधायकसद्भावात् धातुद्वयादेकक्प्रत्ययोत्पत्तावपि नेह स भवति घञर्थेकविधानप्रकरणे धातोरित्यनुपपत्त्या एकस्मादेव भाव्यत्वात् इति परास्तम् । अत्राप्यौणादिकस्यैव प्रत्ययस्य विवक्षितत्वात् । तस्य च उणादयो बहुलमिति वचनात् धातुद्वयादपि सम्भवात् इति ।

**विट्ठल०— परोक्तेति** । प्रपञ्चशब्दादिवाच्यत्वे उत्पत्तिर्विनाशयोः प्रमाणदृष्टत्वेन तस्मान्नोत्पद्यत इति विपर्ययपर्यवसानायोग इति परोक्तानुपपत्तेरेवेत्यर्थः । जीवेश्वरभिदा चेत्यत्र जीवशब्दः परतन्त्रचेतनपरः तेन रमासा....स्तं न च वाच्यं परमेश्वर्या रमाया ईश्वरपदेन ग्रहणं किं न स्यादिति । तथा सति भेदषट्कतापत्तेः । अत्र यच्छब्दश्रवणादाकाङ्क्षां पूरयन् योजयति **एष भेदपञ्चक इति** । **अत्रापीति** । उदाहृतप्रमाणादिश्लोकेऽप्युक्तविधप्रपञ्चोऽनादिर्भवितुमर्हतीति प्रतिज्ञाद्वयं बहिरेव द्रष्टव्यमित्यर्थः । **स्वयमूहनीयमिति** । प्रपञ्चो सत्यश्चेद्बाध्येतेत्यूहनीयमित्यर्थः । **व्याख्यातत्वादिति** । पूर्वार्धश्लोकस्येति शेषः । व्या........त्र स्वयमिति शेषः । कर्मणिकप्रत्ययस्य सूत्रे अविहितत्वात् कथं कर्मणि कप्रत्यय इत्यत आह **घञर्थ इति** । तथा च घञर्थे कविधानमिति वार्तिका इति भावः । तथा च कप्रत्यये लशक्तद्धित इति कारव्यञ्जनस्यापगमे 'आदे च उपदेशेऽशितीत्यैकारस्यात्वे आतो लोप इटि चेति आकारलोपे मात्रमिति भवतीति भावः । ननु धातो-





रित्यधिकारसूत्रे धातोरिति निर्देशात् कथं तस्यानादिधातुद्वयादेकः ........त आह **धातुद्वयेति** । अद भक्षणे भू सत्तायामिति धातुद्वयात् डुतच्प्रत्यये अद्भुतमिति रूपं दृष्टमित्यर्थः ।

**चषकः— घञर्थ इति** । तादृग्वार्तिकानुशिष्टकर्मसाधनकप्रत्ययस्य कित्वादादेच उपदेशेऽशितीत्यात्वे 'आतो लोप इटि च' इत्याकारलोपे सति मात्रमिति निष्पद्यत इति भावः । धातुद्वयप्रकृतिकतामेकप्रत्ययस्यानुरूपनिदर्शनप्रदर्शनेनैव सङ्घटयति **अदिभूभ्यामिति** । अदिभवत्युभयप्रकृतिके डुतचि डित्वाट्टिलोपेऽद्भुतमित्यौणादिकसूत्रनिष्पन्नं दृष्टमित्यर्थः । अथादिभुवो डुतजित्येवौणादिसूत्रपाठः तस्य चाद्युपपदे भुवो डुतजित्यर्थापनान्नेदं निदर्शनं सङ्गच्छते । धातोरिति पञ्चमीनिर्दिष्टादव्यवहितोत्तरमेव कार्यं भवतीति 'प्रत्ययः', 'परश्च' इत्यतो विज्ञानान्मध्यधातुनाऽव्यवहित्या कथं धातुद्वयप्रकृतिकप्रत्ययोपगम इति चेन्मैवम् । मूलकोशेषु तादृशपाठस्यैवादर्शनात् तथैव वृत्त्यन्तरेषु व्याख्यातत्वात् धातुव्यतिरिक्ततादृशोपपदराहित्यात् पाठान्तरस्य कल्पितत्वान्निघण्टुभाष्ये धातुसमुदायप्रकृतिकप्रत्ययोपगतेश्च सामञ्जस्यमिति स्थितम् ।

**॥ इति अर्थविशेषे कारणद्वयम् ॥**
**॥ इति 'प्रपञ्च'शब्दार्थविशेषकथनम् ॥**

* * *

**॥ तत्र 'अद्वैतं परमार्थतः' इत्येतद्व्याख्यानम् ॥**

१८७ **मु०— अद्वैतं परमार्थत इत्येतद्व्याख्याति उत्तमोऽर्थ इति ।**

## अनु०— उत्तमोऽर्थो हरिस्त्वेकस्तदन्यन्मध्यमाधमम् ॥

**तस्योपपादनम् तदन्यदिति । यतस्तस्माद्धरेः अन्यत् किञ्चित् मध्यमं किञ्चित् अधमं तस्मादुत्तमोऽर्थो हरिरेवैक इति । 'विकल्पो विनिवर्तेते'त्येतत् प्रपञ्चसत्यतायां स्फुटमिति न व्याकृतम् ।**

**परि०— इत्येतदिति** । द्वितीयमन्त्रस्य पूर्वार्धमित्यर्थः ।

**गु०दी०— तस्माद्धरेरन्यत्किञ्चिन्मध्यमम्** इत्यत्र मध्यमाधमजीवयोः सङ्ग्रहे ब्रह्माद्युत्तमजीवानामसङ्ग्रहप्रसङ्गान्नासावर्थः । किन्तु ब्रह्मादिजीवानां हरेश्च मध्ये विद्यमानं लक्ष्मीतत्त्वं मध्यमम् । ततोऽप्यर्वाचीनं ब्रह्मादिजगत् अधममित्यर्थः । **उत्तमोऽर्थो हरिरेवैक** इति वदता भाष्यकारेण परमार्थतः परमार्थमुत्तमार्थं परंब्रह्मेति यावत् । अद्वैतं द्वितीयसर्वोत्तमवस्तुरहितमित्यप्यर्थस्सूचितः ।





**वं०प०**— **किञ्चित्** = श्रीतत्त्वम् । **किञ्चित्** = ब्रह्मादि ।

**आनन्दः**— ननूत्तमोऽर्थ इत्येतदनुव्याख्यानश्रुत्यर्थकथनतदुपपादनरूपत्वाभावादयुक्तमित्यत्राह **अद्वैतमिति** ।

**शे०वा०**— तदन्यन्मध्यमाधममिति तदन्यस्य सर्वस्य मध्यमत्वमधमत्वं चोच्यत इत्यन्यथाप्रतीतिनिरासायाह **किञ्चिदिति** ।

**वा०र०**— **उत्तमोऽर्थ इतीति** मूलम् । अनेन परमश्चासावर्थश्च परमार्थः । उत्तमोऽर्थ इति यावदिति व्याख्यानं लब्धमिति भावः । **अधमत्वं चोच्यत इति** । मध्यमत्वाधमत्वे एकाधिकरणनिष्ठतयोच्येते इत्यन्यथेत्यर्थः । **आह** तदुभयं व्यवस्थया व्याचष्ट इत्यर्थः ।

**॥ इति 'अद्वैतं परमार्थतः' इत्येतद्व्याख्यानम् ॥**
**॥ इति उक्तार्थस्पष्टीकरणपूर्वकं एतद्वाक्यद्वयोक्तशब्दार्थकथनम् ॥**

* * *

**॥ अथ 'प्रपञ्चो यदि विद्येत' इत्यादिवाक्योक्तशब्दयोजना ॥**

१८८ **सु०— इयमत्र योजना । 'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा' इति पूर्वश्लोकेऽनादिमायया परमेश्वरप्रज्ञया तदिच्छया वा जीवजातस्य प्रकृत्यादिजडावृतज्ञानत्वलक्षणं सुप्तत्वं, तयैव परमेश्वरादितत्त्वविषयपरोक्षज्ञानलक्षणं प्रबोधमभिधाय अपरोक्षज्ञानमप्युक्तम् । तेन जीवेश्वरयोर्जडेश्वरयोर्जीवजडयोश्च भेदाः प्रतिपादिताः । प्रभोरिच्छया निगडादिना पुरुषे बद्धे मुक्ते वा भेद(त्रय)दर्शनात् ।**

**प्राक् 'प्रभवस्सर्वभावानामि'ति भावशब्दोक्तानां जीवानां मिथो भेदोऽप्युक्तः । तत एवावरणानां जडानामपि मिथो भेदोऽर्थाल्लभ्यते । तेषां च पञ्चानामपि भेदानाम् । 'अनादिमायया', 'अजमनिद्रम्' इत्यादिविशेषणसामर्थ्यादिनाऽनादित्वमपि लब्धम् । तदेतत् पञ्चभेदस्य सत्यत्वमनादित्वं चोपपादयितुमिदं श्लोकद्वयम् ।**

**तत्र तावदनादित्वं विपक्षे बाधकप्रदर्शनेनोपपादयति प्रपञ्च इति । यदि च जडजीवभेदो निवर्तेत तदा जीवानां जडत्वापत्त्या मोक्षशास्त्रवैयर्थ्यमित्यादिरूपेण निवर्तेतेत्यस्यानिष्टत्वं द्रष्टव्यम् । न संशय इति व्याप्तेर्निश्चयमाह ।**





एवं भेदपञ्चकस्यानादितामुपपाद्य सत्यतायां प्रमाणमाह **मायामात्रमिति** । यस्मात् इदं प्रपञ्चशब्दोक्तं **द्वैतम्** उक्तरीत्या **मायामात्रं** तस्मात् सत्यम् । न ह्यविद्यमान-मीश्वरप्रज्ञाविषयो भवति, भ्रान्तित्वप्रसङ्गात्; नाप्यविद्यमानं केनापि रक्ष्यते । अत्र द्वयोर्भावो द्विता, तदीयो वर्गो द्वैतम्, सामान्ये नपुंसकम् । प्रपञ्चसम्बन्धस्तु प्रकरणाल्लभ्यत इति ज्ञातव्यम् ।

तर्ह्यद्वैतस्सर्वभावानामित्यादि कथमुक्तमित्यत आह **अद्वैतमिति ।** यदिदं परमेश्वर-स्याद्वैतत्वं (च) विशेषणमुक्तं, न तत् द्वितीयवस्तुराहित्याभिप्रायेण, किन्तु **परमार्थतः** । ल्यब्लोपनिमित्ता पञ्चमी, उत्तममर्थमभिप्रेत्येति; सप्तम्यर्थे वा तसिः, उत्तमार्थविषय इति ।

भेदसत्यताऽनङ्गीकारे बाधकं चाह **विकल्प इति । विकल्पः** प्रकृतो भेदः, **यदि केनचित्** अज्ञानादिना **कल्पितः** स्यात् तर्हि, चन्द्रभेदवत् **निवर्तेत** बाध्येत; न च बाध्यते, तस्मान्न कल्पितः, किन्तु सत्य एवेति ।

उपसंहरति **उपदेशादिति ।** तदेवम् **उपदेशात्** श्रुत्याद्यनुसारित्वात् **अयम्** एव सतां **वादः** यो भेदसत्यत्वादिविषयः । **द्वैतं न विद्यत** इति तु तत्त्वे **अज्ञाते** सति भवति । अतो दुर्वाद इति ।

**परि०**— अप्रकृतोपपादनपरत्वं मन्त्रयोर्निरस्यन् मन्त्रद्वयार्थं व्यनक्ति **इयमत्र योजना** इत्यादिना **दुर्वाद** इत्यन्तेन । मायाशब्दो जडप्रकृत्यादिसूक्ष्मतत्त्वपरोऽप्यत्रेति भावेनोक्तम् । **प्रकृत्यादिजडेति** । अनादिमाययेत्येतत् प्रबुध्यत इत्यत्राप्यन्वेतीति भावेनाह **तयैवेति** । परमेश्वरेच्छयैवेत्यर्थः । 'अद्वैतं बुध्यते तदा' इत्यत्रत्यबोधशब्दार्थोऽपरोक्षज्ञानमिति । **लब्धमिति** । अजमितीश्वरस्य, अनादीत्युक्त्या जडप्रकृत्यादेः, तदावृतत्वोक्त्या जीवानां चानादित्वोक्त्या अर्थात् तद्भेदानामपि लब्धमित्यर्थः । **उक्तरीत्येति** । 'मितं त्रातं मायाख्यहरिविद्ययेत्युक्तरीत्येत्यर्थः । ततश्च किमित्याकाङ्क्षायामध्याहारेण पूरयति **तत्सत्यमिति** । तत्तस्माद्भगवता मितत्वात् त्रातत्वाच्चेत्यर्थः । अत एव प्राक् यस्मादित्युक्तम् । क्रमेण हेतुद्वयस्याप्रयोजकत्वं निराह **न हीति** । द्वैतपदेन पूर्वार्धोक्तभेदपञ्चकलाभप्रकारं दर्शयति **अत्र द्वयोरिति** । **द्वितेति** । भेद इत्यर्थः । **सामान्येति** ।





नपुंसकं पुल्लिङ्गस्त्रीलिङ्गयोरनुगतं सामान्यमेव न तु लिङ्गान्तरमिति शाब्दिकमर्यादया सामान्ये विवक्षिते पुल्लिङ्गेऽपि वर्गेऽर्थे नपुंसकं युक्तमित्यर्थः । नन्वेतावता पदार्थद्वयसम्बन्धिभेदवर्ग एव लभ्यते पञ्चवर्गः कथं लभ्यत इत्यत आह **पञ्चसम्बन्ध इति** । **बाधकं चेति** । न केवलं मायामात्रमित्यनेनोक्तं प्रमाणमात्रमिति चशब्दार्थः । तत्त्वे ज्ञात इत्यत्र अज्ञात इति विभागः । प्रपञ्चो यदीति श्रुत्यर्थः ।

**गु०दी०**— दिश्यते आदिश्यते अनेनार्थ इति देशः, श्रुत्यादिः उपपन्नः देशो यस्य भावप्रधानश्च निर्देश इत्यभिप्रेत्योक्तं **उपदेशात् श्रुत्याद्यनुसारित्वात्** इति ।

**यादु०**— ननु पूर्वं भेदपञ्चकस्याप्रकृतत्वात् कथं तस्यानादिनित्यत्वं सत्यत्वं च क्रमेणोपपादयितुमिदं श्लोकद्वयमिति व्याख्यानमित्याशङ्कां परिहरन् श्लोकद्वययोजनां सम्यग्दर्शयति **इयमत्रेत्यादिना** । **इत्यादि-विशेषणसामर्थ्यादिनेति** । अत्र प्रथमादिपदेनानादिमाययावृतज्ञानत्वलक्षणं सुप्तत्वलक्षणं सुप्तविशेषणं ग्राह्यम् । तेनानाद्यावरणावृतत्वमाव्रियमाणानादित्वं विना न सम्भवतीति सुप्तपदेनावृततयोक्तानां जीवानामप्यनादिता-सिद्धिः । एवं च धर्मिणामनादित्वोक्त्या भेदपञ्चकेऽप्यनादित्वं लब्धमित्यर्थः । अत्रानादित्वमावरणभूतजड-प्रकृतीनामीश्वरस्य चानाद्यजडपदाभ्यां साक्षादेवोक्तम् । न तथा सुप्तपदोदितजीवानां किन्तु तत्रानाद्यावरणा-वृतत्वरूपसुप्तत्वाक्षिप्तमेवेत्याशयेन सामर्थ्यादिनेत्युक्तम् । एवं च क्वचिच्छ्रुतेनैव धर्म्यनादित्वेन भेदानादित्व-लाभः । क्वचिच्चाक्षिप्तेन धर्म्यनादित्वेनेत्युक्तं भवति । **द्वयोर्भावो द्वितेति** । भेद इत्यर्थः ।

**वं०प०**— **तयैवेति** । इच्छयैवेत्यर्थः । अनेन माययेत्यस्य प्रबुध्यत इत्यत्राप्यन्वयः सूचितः । **मिथो भेद इति** । भावानामिति बहुवचनेनेत्यर्थः । **तत एवेति** । जीवानां भेदेऽप्यावरणस्याभेदे एकस्य तत्त्व-ज्ञानादावरणनिवृत्तौ सर्वेषां मुक्तिः स्यादिति भावः । **अनिष्टत्वमिति** । यदि जडेश्वरभेदो नश्येत् तदेश्वरस्य जडत्वापत्त्या 'सत्यं ज्ञानमि'त्यादिशास्त्रस्य विरुद्धार्थतापत्तिः । यदि जडानां परस्परभेदो नश्येत् तदा विद्याया अप्यविद्यात्वापत्त्या 'तमेवं विद्वानि'त्यादिशास्त्रस्य विरुद्धार्थतापत्तिः । यदि जीवानां परस्परभेदो नश्येत् तदा परस्परमैक्यापत्त्या परस्परगतसुखाद्यनुसन्धानापत्तिः । यदि च जीवेश्वरयोर्भेदो नश्येत् तदेश्वरस्य दुःखानुभवो जीवस्य वा सार्वज्ञ्याद्यनुभवः स्यात् । न च अत्र इष्टापत्तिरिति वाच्यम् । प्रमाणाभावात् । यथायथं श्रुत्यनुभवरूपप्रमाणविरोधाच्च अप्रामाणिकप्रमाणविरुद्धार्थस्वीकारापत्तिः इत्यादिरूपेण अनिष्टत्वमित्यर्थः । **द्विता** = भेद इत्यर्थः । **तदीयः** = भेदसम्बन्धी । तर्हि वर्गार्थकद्वैतशब्दस्य पुल्लिङ्गता स्यादित्यत आह **सामान्य इति** । भेदसामान्यं = सामान्याकारेण भेदः । ननु भेदसमुदायस्य पञ्चत्वं कथं लभ्यत इत्यत आह **पञ्चेति** । 'प्रपञ्चो यदी'ति प्रकरणादित्यर्थः ।





**आनन्दः**— नन्वेवमपि विशिष्टवाक्यार्थः प्रतीयते । कथं च प्रपञ्चशब्देन भेदपञ्चकं व्याख्यातम् । तस्य प्रागप्रकृतत्वादित्यत आह **इयमत्रेति** । **तत एवेति** । आव्रियमाणजीवभेदादेवेत्यर्थः । **विशेषण-सामर्थ्यादिनेति** । अनादीति विशेषणम् । अजमिति च विशेषणं तत्सामर्थ्यं तु इत्थं जडेश्वरयोरनादित्वोक्तौ तयोरन्योन्यं स्वरूपभेदस्य अनादित्वं लब्धम् । एवं जीवानामपि ईशात् भेदस्यानादित्वं लब्धमिति । **भ्रान्ति-त्वेति** । ईश्वरप्रज्ञाया इति शेषः । ननु द्वैतशब्देनोक्तभेदपञ्चकस्य कथं लाभ इत्यत्राह **अत्र द्वयोरिति** । तर्हि नपुंसकनिर्देशोऽनुपपन्न इत्याशङ्क्य भेदसामान्यविवक्षया नपुंसकनिर्देशो युज्यत इत्यभिप्रेत्याह **सामान्य इति** । ननूपसंहारज्ञापकाभावादुपसंहारो न युज्यत इत्यतोऽध्याहृत्य योजयति । **तदेवमिति** ।

**श्रीनिधि०**— **मिथो भेदोऽर्थाल्लभ्यत इति** । नन्वाव्रियमाणानां अनेकत्वेऽपि आवरणस्यैकत्वं किन्न स्यादिति चेन्न । तथात्वे एकविधकार्यकारित्वमावरणस्य स्यान्नैतदस्तीति भावः । **तदीयो वर्गो द्वैत इति** । तस्येदमित्यण्प्रत्यय इति भावः ।

**शे०वा०**— ननु भवेदेवं पञ्चविधभेदस्यानादित्वसत्यत्वोपपादकतया श्लोकद्वयव्याख्यानम् । यदि प्रपञ्चो यदीत्यतः पूर्वत्र श्रुतौ भेदपञ्चकं तदनादित्वादिकं वा प्रसक्तं स्यात् । न चैतदस्ति । तत्कथं तत्समर्थनपरतया व्याख्यानम् । अस्तु वा कथञ्चित्प्रसक्तिव्युत्पादनेन श्लोकद्वयस्य तत्समर्थनपरत्वम् । तथाऽपि प्रथमश्लोके मायामात्रमित्यादेरानर्थक्यमेव । तद्वचनस्य प्रकृतोपयोगाप्रतिभासादित्यत आह **इयमत्रेति** । 'विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते' इति प्रमाणं मनसि निधायाह **परमेश्वरप्रज्ञयेति** । 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' इति प्रमाणं मनसि निधायाह **तदिच्छया वेति** । जीव इत्येकवचनं 'यदा नीतिपरो राजे'त्यादिवत् 'स्वर्गकामो यजेते'त्यादिवच्च जात्यभिप्रायं न तु जीवैक्याभिप्रायम् । तथा सति 'इति सृष्टौ विनिश्चिता' इति पूर्वेण 'स पूज्यः सर्वभावानामि'त्युत्तरेण च, जीवभेदवाक्येन विरोधप्रसङ्गादिति भावेनोक्तं **जीवजातस्येति** । न केवलं श्रुतौ 'अनादिमायया सुप्तः' इति यथास्थित एव सम्बन्धः किन्तु 'अतः प्रबोधोऽस्मादि'त्युक्तरीत्या 'अनादिमाया प्रबुद्ध्यते' इत्यपीति भावेनोक्तम् **तयैवेति** । प्रबुद्ध्यत इति परोक्षज्ञानस्यैवोक्तत्वात् 'अद्वैतं बुध्यते' इति न परोक्षज्ञानाभिधायकं पौनरुक्त्य-प्रसङ्गादिति भावेनोक्तम् **अपरोक्षज्ञानमप्युक्तमिति** । अत्रापि तयैवेत्यनुवर्तते । ईश्वरादितत्त्वविषयक-मपरोक्षज्ञानमित्यर्थः । **भेदाः प्रतिपादिता इति** । सन्तीति लब्धमित्यर्थः । अत एवाह **प्रभोरित्यादि** ।

**मिथो भेद इति** । भावानामिति बहुवचनेन भावशब्दोक्तजीवानां बहुत्वोक्तेर्बहुत्वस्य च बाधकाभावे भेदसामानाधिकरण्यनियमादिति भावः । **तत एवेति** । आव्रियमाणजीवभेदादेवेत्यर्थः । जीवानां भेदे-ऽप्यावरणैक्ये एकस्य तत्त्वज्ञानेनावरणानिवृत्तौ अनिर्मोक्षप्रसक्तेः तन्निवृत्तौ च सर्वेषां मुक्तिप्रसक्तेः तदावरण-भेदसिद्धिरिति भावः । एवं पञ्चविधभेदप्रसक्तिं तत्सत्यत्वप्रसक्तिं चोक्त्वा तदनादित्वप्रसक्तिमपि दर्शयति **तेषां चेति** । **इत्यादिविशेषणसामर्थ्यादिति** । अत्रादिपदेनोक्तरूपसुप्तत्वविशेषणपरिग्रहः । तेनानाद्यावरणावृतत्व-





माव्रियमाणानादित्वं विना न सम्भवतीति मायागतानादित्वविशेषणसामर्थ्यात्सुप्तपदेनैवावृततयोक्तानां जीवानामप्यनादित्वसिद्धिः । एवं च धर्मिणामनादित्वोक्त्या आक्षेपाद्वा सिद्ध्या तद्भेदपञ्चकस्याप्यनादित्वं लब्धमित्यर्थः । निवर्तेतेत्यस्येष्टापादनत्वं परिहरति **यदि चेति** । **इत्यादिरूपेणेति** । यदि जडेश्वरयोर्भेदो नश्येत् तदा ईश्वरस्य जडत्वप्रसक्त्या सत्यं ज्ञानमित्यादिशास्त्रस्य विरुद्धार्थत्वप्रसङ्गः । यदि जडानां परस्परं भेदो नश्येत् तदा विद्याया अप्यविद्यात्वापत्त्या तमेवं विद्वानित्यादिशास्त्रस्य विरुद्धार्थत्वापत्तिः । यदि जीवानां परस्परं भेदो नश्येत् तदा परस्परमैक्यापत्त्या परस्परगतसुखदुःखाद्यनुसन्धानापत्तिः । यदि च जीवेश्वरभेदो नश्येत् तदा ऐक्यप्राप्त्या ईश्वरस्य जीवस्येव सुखदुःखाद्यनुभवस्य, जीवस्यापीश्वरस्येव सार्वज्ञ्याद्यनुभवस्य च प्रसक्त्या यथायथं श्रुत्यनुभवरूपप्रमाणविरोधाद्यापत्तिरित्येवंरूपेणेत्यर्थः । **उक्तरीत्येति** । मितं त्रातं चेत्याद्युक्तरीत्येत्यर्थः । ईश्वरेण ज्ञातत्वात् रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितमिति भावः । परमेश्वरेण ज्ञातत्वेऽपि कुतो न भ्रान्तिकल्पितत्वमित्यतो 'न हीश्वरस्य भ्रान्तिरि[illegible]ि तत्त्वनिर्णयं मनसि निधायाह **न हीति** । **भ्रान्तित्वप्रसङ्गादिति** । न च तद्युक्तं निरवद्यत्वश्रुतिविरोधादिति भावः । द्वितीयहेतोरप्यप्रयोजकत्वं परिहरति **नापीति** । **द्वयोर्भावो द्वितेति** । भेद इत्यर्थः । ननु तदीयो वर्गो द्वैतश्चेत् कथं द्वैतमिति नपुंसकमित्यत आह **सामान्य इति** । **पञ्चसम्बन्धस्त्विति** । भेदवर्गस्य पञ्चवर्गात्मकत्वं प्रकरणलभ्यमित्यर्थः । निवर्त्यशङ्काप्रदर्शनपूर्वकं चतुर्थं पादमवतारयति **तर्हीति** । यदि पञ्चविधो भेदः सत्यः स्यादित्यर्थः । **कथं** न कथञ्चिदुपपद्यते अतः अयुक्तमिति । अथवा कथं व्याख्येय इत्यर्थः । **आह** विरोधित्वेन शङ्कितस्य श्रुत्यन्तरस्यार्थान्तरमिति शेषः । **अद्वैतत्वमिति** । अनेनाद्वैतमिति भावप्रधानो निर्देश इत्युक्तं भवति । **उक्तमिति** । अद्वैतः सर्वभावानामित्यादाविति शेषः । **ल्यब्लोप इति** । कृतव्याख्यानमेतत् । **सप्तम्यर्थ इति** । आद्यादिभ्य उपसङ्ख्यानादिति भावः । सप्तम्यर्थमेव दर्शयति **उत्तमेति** । **बाधकं चेति** । चशब्दो मायामात्रमित्युक्ततत्सत्यत्वसाधकसमुच्चयार्थः । श्रुत्याद्यनुसारादित्यादिपदेन अन्यथा यद्यादिशब्दवैयर्थ्यमित्युक्तयुक्तिपरिग्रहः ।

**वा०र०— पूर्वत्र श्रुताविति** । पूर्वत्रेत्येव पूर्णे श्रुताविति स्वरूपकथनम् । भेदपञ्चकतदनादित्वादिकं वचनवृत्त्या न प्रतिपादितमित्याशयेन अत एव कथञ्चित्प्रसक्तीति वक्ष्यतीति ज्ञेयम् । **इत्यत आहेति** । इत्यतः प्रपञ्च इत्येतच्छ्लोकद्वयात् पूर्वं भेदपञ्चकादिकस्य प्रसक्तिमुपपादयन्नेव प्रपञ्चानादित्वसत्यत्वोपपादकतया प्रमाणान्तरग्रन्थान्तरानुसारेण सम्पूर्णश्लोकद्वययोजनामाहेत्यर्थः । एकजीवाज्ञानकल्पितत्वभङ्गीयश्रुतावेकवचनं त्वित्यादिन्यायामृतानुसारेणाह **जीव इत्येकेति** । **जात्यभिप्रायम्** । व्रीहिः सम्पन्न इत्यादिवज्जातिविवक्षायां जातेरेकत्वादेकवचनमित्यर्थः । **इत्युक्तरीत्येति** । इत्यत्र वक्ष्यमाणरीत्येत्यर्थः । **अत्रापि तथैवेतीति** । उक्तं च ज्ञानी प्रियतम इति भाष्यमूले । न चाव्यक्तस्वभावो भगवान् सहस्रेणापि प्रयत्नानां शक्यः साक्षात्कर्तुं विना तदनुग्रहात् । प्रसन्नस्त्वनन्ताचिन्त्यशक्तियोगादात्मानं दर्शयतीति युज्यत इतीति भावः । यमेवैष इत्यादि प्रमाणं च ज्ञेयम् । तेनेति वाक्यस्थलब्धार्थप्रदर्शनपरत्वात् प्रतिपादिता इत्येतदनुगुणं योजयति **सन्तीति लब्धमित्यर्थ इति** ।





भगवद्व्यावृत्त्यमर्थमाह **बाधकाभाव इति** । भगवति चैकमेवेत्यादि श्रुत्यादिकं बाधकमिति भावः । अतोऽनन्तेन तथाहि लिङ्गमित्येतद्भाष्यादावुक्तमचिन्त्येशशक्त्यैव नित्यव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः तत इत्यादिकं ज्ञेयम् । **तदनादित्वेति** । पञ्चविधभेदानादित्वेत्यर्थः । मुखतो भेदधर्मिणामनादित्वपरस्याप्यनादीत्यादि वाक्यादेरर्थतो भेदानादित्वपरत्वान्नासङ्गतिः शङ्क्येति भावः । यथा चैतत्तथा टीकाकृदेवैवं चेत्यादि नावक्ष्यतीति ज्ञेयम् । नन्वित्यादीत्यादि प्रमाणद्वयेन मायापदार्थत्वेनोक्तभगवत्प्रज्ञातदिच्छयोर्भगवतश्चानादित्वस्य यथाक्रमं सिद्धावपि कथं जीवानां तदावरकत्वेनोक्तजडप्रकृत्यादीनां चानादित्वप्राप्तिरित्यतो भेदधर्मित्वेन विवक्षितानां मध्ये ईशस्याजमिति विशेषणेनानादित्वसिद्धिः । इत्यादीत्यादिपदोक्त सुप्त इति विशेषणेन च वक्ष्यमाणरीत्या जीवजडयोरपि तत्सिद्धिरित्येवात्र मूलेऽभिप्रेतमिति न दोष इत्याशयेनादिपदार्थमाह **अत्रादिपदेनेति** । प्रकृत्यादि-जडप्रसक्त्यर्थमुक्तम् **उक्तरूपेति** । प्रकृत्यादिजडवृत्तज्ञानत्वलक्षणेत्यर्थः । नन्वनादिमायया तन्निमित्तेन सुप्तः प्रकृत्यादि जडबद्धो जीव इत्युक्ते मायागतानादित्वसामर्थ्याल्लब्धत्वेनाङ्गीकार्यमनादित्वं जड एव पर्यवसन्न-मभवत् । तथा च कथं जीवेऽपि तल्लाभ इत्यत आह **तेनेति** । उक्तरूपसुप्तविशेषणपरिग्रहेणेत्यर्थः । सुप्तपदेन वृत्ततयोक्तानां जीवानामप्युक्तरूपसुप्तत्वसमर्पकेण सुप्तपदेनैव अनादित्वसिद्धिरिति योज्यम् । न केवलमावरक-जडप्रकृत्यादेरिति शङ्कित्रभिप्रेतजडसङ्ग्रहायापिपदम् । तत्र हेतुर्मायागतानादित्वसामर्थ्यादिति । तत्सामर्थ्यस्य जडमात्रे पर्यवसानशङ्कानिरासायोक्तम् **अनाद्यावरणेत्यादि** । **अनेनादीत्यादि** मूले इत्यादिविशेषणं च तत्सामर्थ्यं चेति विग्रहः । द्वन्द्वैकवद्भावाश्रयणात् सामर्थ्यादित्येकवचनं युक्तम् । तदन्तर्गतमायानादित्वविशेषणस्य सामर्थ्यं चात्र विवक्षितम् । मायाया भेदे धर्मित्वेनाप्रस्तुतत्वेऽपि तदनादित्वस्य सुप्तपदेन जडजीवयोरनादित्वसमर्पणे बीजत्वात् तदनादित्वप्रमाणोदाहरणं च मूले सङ्गतमिति सूचितं भवति । नन्वेतावता भेदधर्मिणामीश-जीवप्रकृत्यादिजडरूपाणामनादित्वप्राप्तावपि तद्भेदानां तदप्राप्तेः कथं तेषामनादित्वमपि लब्धमिति मूलघटनेत्यतो न मूले साक्षाद्विशेषणसामर्थ्यस्य भेदानादित्वसाधकतयोपन्यासोऽभिप्रेतः येनासङ्गतिशङ्का स्यादपि तर्हि परम्पर-यैवेत्यभिप्रेत्य विशेषणतत्सामर्थ्याभ्यां लाभेऽवान्तरविशेषं दर्शयन्नेवानादीत्यादि प्रमाणलब्धधर्म्यनादित्वस्य मूलोक्तभेदानादित्वसाधकतां तदभिप्रेतां दर्शयति **एवं चेति** । अत्र धर्मिणामनादित्वस्येति पाठः । तथा च धर्मिणामनादित्वस्य क्वचिदुक्त्या क्वचिदाक्षेपाद्वा सिद्धेति योज्यम् । अनादित्वोक्त्येति पाठेऽपि धर्माणां मध्ये क्वचिदनादित्वोक्त्या क्वचिदाक्षेपाद्वा सिद्धेति योजनायामाक्षेपादेरित्यत्रानादित्वस्येति बुद्ध्या विविच्य सम्बन्धा-श्रयणान्न दोषः । ततश्चायमत्र सङ्ग्रहः । **तेषां च पञ्चानामिति** मूले ह्येवं चेत्युत्तरटीकानुसाराद्भेदानामनादित्वं तद्धर्म्यनादित्वेन एवमित्याशयेन धर्मिणामेवानादित्वे प्रमाणोपन्यास इति सिद्धमेव । धर्मिभूतानां चेशजीव-तदावरकजडप्रकृत्यादीनामनादिमायया अजमनिद्रमित्यादि विशेषणसामर्थ्यात् ।

अयमर्थः । अजमिति विशेषणेनेशस्यानादिता प्राप्ता । अनादिमायया तां निमित्तीकृत्य सुप्तः प्रकृत्यादि जडावृतज्ञानो जीव इत्युक्ते जीवस्य प्रकृत्यादेश्चानादिताप्राप्तिः कथम् । मायया सुप्त इत्येवानुक्त्वा अनादीति यन्मायाविशेषणमुक्तम्, तत्सामर्थ्यात् ज्ञानावरकाणां जडानामाव्रीयमाणजीवानां चानादित्वमिति । न च माया-





गतानादित्ववचनसामर्थ्यादावरणजडमात्रे अनादित्वमस्तु किं जीवानादित्वेऽपि तत्सामर्थ्यपर्यवसानकल्पनयेति वाच्यम् । प्रकृत्याद्यनाद्यावरणावृतत्वस्याद्रीयमाणजीवानादित्वं विना सम्भवेन तदुभयत्रापि विशेषणसामर्थ्य-पर्यवसानस्य आवश्यकत्वात् । तथा च त्रयाणामपि धर्मिणामनादित्वसिद्ध्या तदन्यथानुपपत्त्यैव तद्धर्मिक-भेदानामप्यनादित्वं लब्धं भवतीति ।

यत्त्वन्यथाख्यातौ प्रथमादिपदेनेति प्रथमपदं प्रयुक्तं, तदसत् । सामर्थ्यादिनेति पाठस्य क्वाचित्कत्वेन तदादरणायोगात् । अत एव तत्त्वनिर्णयटीकायां सामर्थ्यादित्येवोक्तम् । तादृशपाठमङ्गीकृत्य व्याख्याने-ऽप्युत्तरादिपदस्यापि व्याख्येयतया तदभावायोगाच्च । न चात्रानादित्वमावरणेनेत्यादिनोत्तरत्र विवेकानादित्व-प्राप्त्युपायद्वयं तेनैव द्वितीयादिशब्दार्थः कथितप्राय इति वाच्यम् । तत्र हि साक्षादित्याद्य उपायः । आक्षेपश्च द्वितीय उपाय उक्तः । तथात्वे च सामर्थ्यादिनेत्यस्य मूलस्य सामर्थ्याक्षेपाभ्यामिति व्याख्यानलाभ इति प्राप्तम् । तदनुसारेणात्र सामर्थ्यशब्दस्य साक्षादित्यर्थमङ्गीकृत्य प्रथमादिपदार्थत्वेनाक्षेप उच्यत इति चाङ्गीकृत्य अनाद्यजविशेषणसामर्थ्याज्जडप्रकृतीश्वरयोरनादित्वलाभः । प्रथमादिपदोक्तसुप्तत्वविशेषणेनाक्षेपाच्च सुप्तपदोक्तजीवानां तल्लाभ इति प्रमेयमङ्गीकार्यम् । न च तद्युक्तम् । सामर्थ्यस्यैवाक्षेपत्वेन तयोः पृथगुक्ते-र्विषयभेदस्य चायोगात् घटपदं घटं सामर्थ्येन बोधयतीत्यप्रयोगेन सामर्थ्यपदवैय्यर्थ्यं च । अथोक्तदोषादेव सामर्थ्यपदस्याक्षेपपरतां स्वीकृत्य तदुत्तरादिपदेन साक्षादित्यर्थः प्रतिपाद्यत इति । ममाभिप्रेतमिति प्रकारः कल्पनीयः । न चायमपि सम्भवति । अनाद्यजपदयोः साक्षादनादित्वप्रतिपादकतया तदनुसारेण साक्षात्त्वस्य प्रथमं वक्तव्यत्वात् आक्षेपस्य सुप्तपदानुगुण्याय चरमवक्तव्यत्वाच्च । अत्रानादित्वमित्युत्तरग्रन्थे साक्षात्त्वस्यैव सामर्थ्यपदार्थत्वेनोक्त्या तत्परित्यागेन वैपरीत्याश्रयणे ग्रन्थस्य स्फुटमस्वारस्यं चेत्यलम् । यच्च अनादि-मायावृतज्ञानत्वलक्षणमित्युक्तम्, तदसत्, प्रकृत्यादि जडावृतज्ञानत्वलक्षणमिति मूलानुसारेण तथैव वक्तव्यतया अनादिमायेत्युक्तेरयोगात् । माया हि भगवत्प्रज्ञारूपा वा तदिच्छारूपा वा व्याख्याता । न च तस्या आवरकत्वं प्रभोरिच्छास्थानत्वेनोक्तायास्तस्या निगडस्थानीयजडप्रकृत्यादितो भिन्नरूपत्वस्य सिद्धेः । एतेनैव जडप्रकृतीना-मीश्वरस्य चानाद्यजत्वमापाद्यमिति जडाभिप्रायेणैवानाद्यावरणावृतत्वेति च वचनं निरस्तम् । मायापद-स्येशप्रज्ञादिपरत्वादित्यतस्तां तावदित्येतावान् ग्रन्थो दूषणग्रन्थेऽपि निवेश्यः । **ईश्वरस्य जडत्वेति** । एतेऽतिप्रसङ्गाः .........इत्यादि तत्तत्प्रसङ्गं तु अनुव्याख्यानमूलका ज्ञेयाः । मितं त्रातमित्याद्युक्तरीत्येति पाठः । **द्वैतश्चेदिति** । द्वैतपदार्थश्चेदित्यर्थः । वर्गस्य पुलिङ्गत्वेन द्वैत इति पुलिङ्गस्यैव वाच्यत्वादिति भावः ।

**सामान्य इतीति** । तच्चाविशेषमानेनेत्यत्रत्यसामान्ये नपुंसकमिति मूलवाक्यव्याख्यानावसरे टीकाकृदुक्तं यद्भिन्नलिङ्गतयोपस्थितानां साधारणाकारेण परामर्शविवक्षारूपं सामान्यं तदेवात्र न विवक्षितम् । तत्र साधकत्वं साधकतेति भिन्नलिङ्गयोपस्थित्यादेः सत्त्वात् । अत्र च तदभावात् । किन्तु वर्गगतपुल्लिङ्गमविवक्षित्वा वस्तुतत्वादिसाधारणाकारेण परामर्शे नपुंसकमित्यर्थो विवक्षितः । तथा च तदीयवर्गरूपं वस्तु इत्यादिरूपेण





वर्गाभिधानाङ्गीकारे द्वैतमिति नपुंसकोपपत्तिरिति मूलार्थः । अत एव दृढभक्तिरित्यत्र समासे भक्तिपदस्य प्रियादिषु पाठादभिप्रायादिपरत्वाभावेन स्त्रियाः पुंवदिति सूत्रेण पुंवद्भावाप्राप्तिरित्याशङ्कापरिहाराय दृढशब्दस्यादार्ढ्यनिवृत्तिपरत्वेन प्रयुक्तत्वाल्लिङ्गविशेषोपादानमनुपयोगान्न क्रियते । स्त्रीत्वविवक्षायां तु दृढा भक्तिरित्येव भवितव्यमिति शेष्यादौ निरूपितम् । अत्र सामान्ये नपुंसकमिति तु नवीनः । तत्तत्त्वबोधि-न्युक्तरीत्या लिङ्गविशेषविवक्षाभाव इत्यादिका । एवं शरदः कृतार्थतेत्यादौ सामान्ये नपुंसकमित्युक्तिः नवीनस्य । अधिकं ज्योतिरधिकरणे प्रागस्माभिर्निरूपितं ज्ञेयम् । **कृतव्याख्यानमेतदिति** । ल्यब्लोपे नाम ल्यबन्तस्य लोपः । लोपश्च तस्य गम्यमानत्वादप्रयोगः । तस्मिन्विवक्षिते कर्मण्यधिकरणे च पञ्चमी वाच्येत्यर्थकल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्येति वक्तव्येनात्रापि पञ्चमीति कृतव्याख्यानमित्यर्थः । उत्तरत्रापि व्याख्यास्यत इत्यप्युपलक्षणया ज्ञेयम् । भक्तिपादे ........अधिकरणेऽधिकं स्पष्टीकरिष्यते च । किमत्र ल्यबन्तमित्यतस्तद्दर्शयति **उत्तममर्थमभिप्रेत्येति** मूलम् । प्राक्परमार्थपदस्योत्तमार्थतया व्याख्यात-त्वाशयेनोत्तमत्वमित्यर्थानुवादः कृतः । **आद्यादिभ्य इति** । तस्यादित उदाहृतमर्धह्रस्वमित्येतत्सूत्रीयादावित्यादि स इति सप्तम्यर्थे तसिप्रयोगज्ञापनमूलकादिमध्यपृष्ठपार्श्वादिभ्य उपसङ्ख्यानमित्युपसङ्ख्यानादित्यर्थः । एतच्च बहुधा विवृतं प्राक्, विवरिष्यते च तत्रतत्रेति ज्ञेयम् । **दर्शयतीति** । विषयत्वस्य तदर्थत्वकथनादिति भावः । समुच्चयार्थश्चशब्द इति पाठः । **श्रुत्याद्यनुसारित्वादित्यादीति** । इत्यत्रादिपदेनेत्यर्थः । श्रुत्याद्यनुसारादिति क्वचिदनुवादः सोऽर्थानुवादः इति ज्ञेयम् । **द्वैतं न विद्यत इतीति** मूलम् । वाद इति वर्तते । इति वादस्त्विति योज्यम् । मूले **दुर्वाद इति** इत्यत्रत्येतिशब्दस्य इतीयं अत्र योजनेति पूर्वेण सम्बन्धः ।

**स०व्र०**— ननु पूर्वं भेदपञ्चकस्याप्रकृतत्वात् कथं तस्यानादिनित्यत्वं चोपपादयितुं श्लोकद्वयमिति व्याख्यानमित्याशङ्कां परिहरन् श्लोकद्वययोजनामाह **इयमत्र योजनेति** । **इत्यादिविशेषणसामर्थ्यादिनेति** । मायाशब्देनानन्तजीवावरकप्रकृतेरभिप्रेतत्वेन तत्समभिव्याहृततृतीयया च आवरणताऽभिधाने आवरकत्व-विशिष्टाया मायाया अनादित्वमित्युक्तं स्यात् । इदं चाव्रियमाणजीवानादित्वं विना न सम्भवतीति जीवानामप्यनादित्वं प्राप्तम् । अजमित्यनेन चेश्वरस्य अनादित्वम् । एवं च भेदपञ्चकेऽप्यनादित्वं प्राप्तमि-त्यूह्यम् । सामर्थ्यादिनेत्यत्रादिपदेन मायेश्वरयोरनाद्यजपदाभ्यां साक्षादप्यनादित्वमुच्यत इति सूचयति । क्वचिदित्यादि विशेषणसामर्थ्यादित्येव पाठः ।

**विट्ठल०**— माण्डूकैः पूर्वं भेदपञ्चकस्याप्रकृतत्वात् कथं तस्यानादित्वं सत्यत्वं चोपपादयितुं ......ति व्याख्यानमित्याशङ्कां परिहरन् श्लोकद्वययोजनामाह **इयमत्र योजनेति** । मायाशब्दो जडप्रकृतिभावरूपाज्ञानादि परीपी(?)त्यभिप्रेत्योक्तं **प्रकृत्यादिजडेति** । अनादिमाययेत्येतत्प्रतिबुध्यत इत्यत्राप्यन्वेति इत्याशयेनाह **तयैवेति** । परमेश्वरेच्छयैवेत्यर्थः । **विशेषणादिसामर्थ्यादिनेति** । अत्रादिपदेन जीवानामनादिमायया सुप्तत्व-सङ्ग्रहः । तेन चानाद्यावरणावृत्तत्वमाव्रियमाण...........नादित्वं लभ्यते । अजशब्देन चेश्वरस्यानादित्वं एवं





चानादीश्वरजीवा जडाश्रितानामपि भेदानामनादिता लभ्यत इति भावः । इत्यादिरूपेणेत्यादिपदेन जडानामपि जीवत्वापत्त्या भाग्याभाव...देन भेदपञ्चकलाभप्रकारं दर्शयति **अत्र द्वयोरिति** । **द्वितेति** । भेद इत्यर्थः । ननु भेदसम्बन्धिवर्गार्थकत्वे द्वैतशब्दस्य पुल्लिङ्गत्वेन भाव्यमित्यत आह **सामान्य इति** । नन्वेतावता पदार्थं लभ्यते पञ्चवर्गः कथं लभ्यत इत्यत आह **प्रपञ्चसम्बन्ध इति** । **बाधकं चेति** । मायामात्रमित्यनेनोक्तप्रमाण-समुच्चयार्थश्चशब्दः । **तत्त्वे ज्ञात** इत्यत्र अज्ञात इति पदच्छेदः । अधमे.......न्निहितग्रन्थेनेत्यर्थः ।

**चषकः**— प्राक्भेदपञ्चकस्य अप्रक्रान्ततया कथं तदनादित्वनित्यत्वसत्यत्वानि क्रमेण प्रतिपादयितुं श्लोकद्वयं प्रावर्तिष्ठित्याशङ्कामपाकुर्वन् श्लोकद्वययोजनां दर्शयति **इयमत्र योजनेति** । **इत्यादिविशेषसामर्थ्या-दिति** । धर्मिणामनादित्वोक्त्या भेदपञ्चकेऽप्यनादित्वं लब्धमित्यर्थः । **द्वयोर्भावो द्वितेति** । भेद इत्यर्थः । **ल्यब्लोपनिमित्तेति** । ल्यब्लोपे कर्मण्यधिकरणे चोपसङ्ख्यानमिति वार्तिकादिति भावः ।

**॥ इति 'प्रपञ्चो यदि विद्येत' इत्यादिवाक्योक्तशब्दयोजना ॥**

**॥ इति 'प्रपञ्चो यदि विद्येत' इत्यादि वाक्यद्वयस्य व्याख्यानम् ॥**

* * *

**॥ अथ प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतश्रुतीनां आन्तरानुपपत्तिप्रदर्शनपूर्वकाविरुद्धार्थकथने 'उत तमादेशमप्राक्षं' इति श्रुतिव्याख्यानम् ॥**

**॥ तत्रादौ स्वमतेन व्याख्यानम् ॥**

**॥ तत्राप्यादौ स्वमतव्याख्यानप्रारम्भस्थलान्वेषणार्थमादौ परिणामवादिनां विवर्तवादिनां च व्याख्यानम् ॥**

१८९ **सु०**— अधुना परिणामवादिना विवर्तवादिना च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रार्थतया गृहीताम् 'उत तमादेशमप्राक्ष' इत्यादिकां श्रुतिं व्याख्याति ।

तत्र परिणामवादिनो व्याख्यानम् 'उत तमादेशमप्राक्षः, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति जगतो ब्रह्मपरिणामतया ततोऽनन्यत्वाभिप्रायेण तद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तत्र सर्वस्य ब्रह्मोपादानतामजानता उपादानोपादेययोरपि भेदं मन्यमानेन श्वेतकेतुना अन्यज्ञाने सत्यन्यज्ञानस्य क्वाप्यदर्शनात्, 'कथं नु भगवः स आदेशो भवती'ति चोदिते जगतो ब्रह्मोपादानतया तदनन्यत्वमुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात् कार्यस्यानन्यत्वं, तज्ज्ञानेन तज्ज्ञानं च दर्शयति ''यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा





सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् । यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् । वाचाऽऽरम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम्" इति । यथैकमृत्पिण्डादि-परिणामानां घटादीनां तदनन्यया तज्ज्ञानेन ज्ञाततेति दृष्टान्तत्रयार्थः । अनन्यत्वे कथं कार्यत्वमित्याशङ्क्य व्यवहारार्थमित्याह **वाचाऽऽरम्भणमिति** ( छां. उ. ६-१) **। वाचेति** षष्ठ्यर्थे तृतीया । वाग्ग्रहणं समस्तेन्द्रियव्यवहारोपलक्षणम् । **विकारो**ऽभिधेयो घटादिः, **नामधेयं** तदभिधानम्, इति कुम्भादेर्वाच्यस्य तद्वाचकानां च स्वरूपकार्यव्यपदेशादिभेदात् परस्परं भेदो वास्तव इत्युक्तम् । एतैर्हेतुभिः परस्परं भेदश्चेत् कारणादपि तैरेव भेद इति पूर्वपक्षं निषेद्धुमाह **मृत्तिकेत्येव सत्यमिति । इति**शब्दः प्रकारवचनः । यत्प्रकारेण यत्सत्तया मृत्तिका सती तत्प्रकारेणैव मृण्मयं सत्यम्, नाश्वमहिषादिवन्नैरपेक्ष्येणेति ।

विवर्तवादी तु व्याचष्टे । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्ताकाङ्क्षायामुच्यते **यथा सोम्येति ।** एतदुक्तं भवति । **एकेन मृत्पिण्डेन** परमार्थतो मृदात्मना विज्ञातेन **सर्वं मृण्मयं** घटादिकं मृदात्मकत्वाविशेषात् **विज्ञातं भवेत्** । यतो **वाचारम्भणं विकारो नामधेयम्** । वाचा केवलमस्तीत्यारभ्यते । **विकारो** घटः शराव उदञ्चनं चेति, न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । **नामधेयमात्रं** ह्येतदनृतम् । **मृत्तिकेत्येव सत्यमिति** एष ब्रह्मणो दृष्टान्त आम्नात इति ।

**परि०**— परिणामिवादिकृतं व्याख्यानं श्रीभाष्याद्युक्तं श्रुतिवाक्योदाहरणपूर्वमनुवदति **उत तमित्यादिना विवर्तवादी**त्यतः प्राक्तनग्रन्थेन । **उपदेक्ष्यन्निति** । 'एवमेव खलु सोम्येमाः प्रजाः सन्मूलाः' इत्यादिना ब्रह्मानन्यत्वोपदेशं करिष्यन्नित्यर्थः । उदाहृतश्रुतिवाक्यार्थमाह **यथैक-मृत्पिण्डादीति** । मृत्पिण्डलोहमणिनखनिकृन्तनपरिणामानामित्यर्थः । घटादीनां घटलोहमयकार्ष्णा-यसानामित्यर्थः । दृष्टान्तस्य(?)गतवाक्यशेषत्रयमवतारयति **अनन्यत्व इति** । मृत्पिण्डादिभि-र्घटादीनामनन्यत्व इत्यर्थः । **व्यवहारार्थमिति** । अयं घटः घटेन जलमाहरेत्याद्यभिज्ञाभिलप-नादिव्यवहारसिद्ध्यर्थमित्यर्थः । **षष्ठ्यर्थ इति** । वाचः वाग्व्यवहारस्येत्यर्थे तृतीयेत्यर्थः । **समस्तेन्द्रिय(व्यापा)व्यवहारेति** । **अभिज्ञा** = प्रत्यभिज्ञा । हानोपादानादिरूपज्ञानेन्द्रियमात्र-जन्यव्यापारस्येत्युपलक्ष्यत इति भावः । सिद्ध्यर्थमिति शेषः । रलयोरभेदेन आरम्भणशब्दोऽत्र





कर्मणि ल्युडन्तः सन् स्पृश्यमानवाची । तथा च घटेनोदकमाहरेत्यादि व्यवहारार्थं घटादिविकारो घटादिनामधेयं वाचारम्भणमालभ्यमानं मृदादिद्रव्येण स्पृश्यत इत्यर्थः । व्यवहारसिद्ध्यर्थं मृदादि-कारणमेवावस्थान्तरनामान्तरभाग्भवतीति यावत् । अत्र सुधायां लेखकदोषात् किञ्चिद्वाक्यं पतितं न समग्रमित्याहुः । मृत्तिकेत्येव सत्यमिति योजयितुं पूर्वभागलब्धार्थमाह **इति कुम्भादेरित्या-दिना** । **स्वरूपेति** । पृथुबुध्नोदराद्याकारभेदजलाहरणादिकार्यभेदघटादिव्यपदेशाभिज्ञादिभेदादित्यर्थः । **परस्परमिति** । वाच्यानां घटपटादीनां घटपटादिशब्दरूपवाचकानां च परस्परं भेद इत्यर्थः । **पूर्वपक्षमिति** । अनन्यत्वे कथं कार्यत्वमिति शङ्कितपक्षं निषेद्धुं प्रत्यभिज्ञाप्रमाणं श्रुतिशेषो ब्रूत इत्यर्थः । **प्रतिज्ञायेति** । 'येनाश्रुतं श्रुतमिति' वाक्येनेति भावः । **यथा सोम्येतीति** । प्रागुक्त-वाक्यत्रयमित्यर्थः । पूर्वोक्तोपपादकतया वाक्यशेषार्थमाह **यत इति** । नामधेयमात्रं ह्येतदित्यस्य फलितार्थमाह **अनृतमिति** ।

**गु०दी०**— वाचारम्भणवाक्यस्य पृथक् दृष्टान्तत्वस्फोरणाय पूर्ववाक्याद्यथेति पदस्य 'विज्ञातं स्यादि'ति पदस्य 'एकेन मृत्पिण्डेने'ति वाक्यादर्थानुसारेण तेनेतिपदस्य चोत्तरवाक्येऽप्यनुवृत्तिरिति भावेनाह **यथा तेनेति** ।

**यादु०**— **अनन्यत्वे कथं कार्यत्वमिति** । घटादीनामिति वर्तते । एवं च घटादीनां मृदनन्यत्वे मृत्कार्यत्वं कथमङ्गीकर्तुं शक्यम् । कणादादिरीत्या कार्यस्य कारणात् द्रव्यान्तरत्वादित्याशङ्कार्थः । तत्तदि-न्द्रियसाध्योदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृदादिद्रव्यमेव संस्थानान्तरनामधेयान्तरभाग्भवति । न तु घटादिकं मृदादितो द्रव्यान्तरम् । यथैक एव देवदत्तोऽवस्थाभेदैर्बालो युवा स्थविर इति शब्दान्तरभाक् कार्यान्तरभाग्भवति तथा इत्याशयेन परिहरतीत्याह **व्यवहारार्थमित्याहेति** । **षष्ठ्यर्थ इति** । षष्ठ्यर्थश्च तादर्थ्यमत्र विवक्षितम् । तथा च विकारो घटादिर्नामधेयं वाचा तत्तदिन्द्रियसाध्यजलाहरणादिव्यवहारार्थं मृदादिद्रव्येणारम्भणं रलयो-रभेदेनालम्भनम् । कर्मणि ल्युट् । स्पृश्यत इत्यर्थः । मृद्द्रव्यमेव व्यवहाराय विकारादिभाग्भवतीति श्रुत्यर्थ उक्तो भवतीति ज्ञातव्यम् । उत्तरवाक्यमुत्थापयितुम् एतद्वाक्यलब्धमर्थं तावद्दर्शयति **इति कुम्भादेरिति** । **स्वरूपेति** । अत्र स्वरूपशब्देन, स्वस्य रूपमिति व्युत्पत्त्या असाधारणधर्मो विवक्षितः । अन्यथा साध्याविशेषप्रसङ्गादिति ध्येयम् । एवं च विकारत्वनामधेयत्वरूपासाधारणधर्मभेदात् जलाहरणादिरूपकार्य-भेदात् विकार इति नामधेयमिति शब्दभेदात्, आदिपदेन गृहीताद्बुद्धिभेदाच्च परस्परं भेद इत्यर्थः । **यत्प्रकारेणेत्यादि** । तथा च तत्सत्तानिरपेक्षसत्ताकत्वोपाधिग्रस्तान्यनुमानानि न स्वार्थसाधकानीति भावः ।

**वं०प०**— **ब्रह्मोपादानतया** = ब्रह्मोपादानकतया । **कथमिति** । कार्यकारणभावस्य भेदव्याप्तत्वात् घटादीनां मृदनन्यत्वे मृत्कार्यत्वं न सम्भवति । कार्यत्वं तु प्रामाणिकम् । तथा च तस्यानन्यत्वमेव कथमिति





शङ्काभिप्रायः । न तु कार्यत्वमेव कथमित्यभिप्रायः । कार्यत्वोपपादकोत्तराभावात् । प्रत्युत कार्यत्वमङ्गीकृत्य अनन्यत्वस्योपपादनादिति ध्येयम् । **व्यवहारार्थमिति** । यथा वह्निरवश्यमङ्गीकार्यः । कुतः । **धूमार्थं** धूमरूपकार्यार्थम् । अन्यथा तन्न सिद्ध्येत् । तेन वह्निरनुमीयत इति यावत् । तद्वत्प्रकृतेऽपि घटादीनां मृत्कार्यत्वेऽपि मृदनन्यत्वमङ्गीकार्यम् । कुतः । **व्यवहारार्थम्** अभेदव्यवहाररूपकार्यसिद्ध्यर्थम् । अभेद-व्यवहारकार्येण अनन्यत्वमङ्गीकार्यमिति ज्ञायत इत्यर्थः । **वाचेतीत्यादि** । तथा च घटादिर्विकारः घट इत्यादि नामधेयं चेति द्वयमित्यध्याहार्यम् । अत एव सिद्धान्ते पदान्तराध्याहारस्येष्टत्वादिति वक्ष्यति । **वाचारम्भणं** = वाचा वागिन्द्रियस्य वागिन्द्रियजन्यव्यवहारस्य आरम्भणमुत्पादनम् । कर्मणि ल्युट् । वागिन्द्रियजन्याभेद-व्यवहारविषयो यतोऽतो मृत्कार्यत्वेऽपि मृदनन्यत्वमवश्यमङ्गीकार्यमिति पदान्तरमध्याहार्यम् । अन्यथा 'विकारो नामधेयं वाचारम्भणमि'त्युक्तौ अनन्वयः । ततः किमित्याकाङ्क्षायां तन्निवर्तकपदाभावादिति ज्ञेयम् । तथा च, विकारो नामधेयं चेति द्वयं, मृदनन्यत् वाचा मृद्घट इत्यभेदेन व्यवह्रियमाणत्वात्, अभेदेन चक्षुषा ज्ञायमानत्वात्; यद्यदभेदेन व्यवह्रियते ज्ञायते तत्तदभिन्नं यथा घटो घटेन इत्यनुमानं ध्येयम् । एतन्मते नामात्मकप्रपञ्चस्यापि मृत्कार्यत्वेन मृदनन्यत्वमेवेति न दोष इति ध्येयम् । अत्र विकारो नामधेयं चेति द्वयं, यतो वाचारम्भणम् अतः कारणेन अन्यदित्यङ्गीकार्यमिति प्रधानप्रमेयम् । एतदनुषङ्गसिद्धं प्रमेयान्तरमाह उपोद्घातसङ्गत्या **इतीत्यादिना** । इति विकारो नामधेयमिति शब्दद्वयोक्त्येत्यर्थः । **तद्वाचकानां** = कुम्भादि-वाचकानां नामधेयानाम् । **परस्परं** = विकाररूपवाच्यनामधेयरूपवाचकस्वरूपयोरित्यर्थः । विकारनामधेय-स्वरूपयोर्भेदः स्वीकार्यः । स्वरूपभेदादित्युक्तौ साध्याविशेषप्रसङ्गात् स्वरूपशब्देन स्वस्य रूपोऽसाधारणधर्मो विकारित्वनामधेयत्वरूपो विवक्षितः । जलाहरणादिरूपकार्यभेदः । विकारनामधेयरूपव्यपदेशभेदः शब्दभेदः । तथा च यदि तयोः परस्परं भेदो यथार्थो न स्यात् तर्हि धर्मभेदो न स्यात् । कार्यभेदश्च न स्यात् । असङ्कीर्णशब्दद्वयेन व्यवहारोऽपि न स्यादिति विकारनामधेयरूपवाच्यवाचकयोः परस्परं भेदो वास्तव इति लब्धमित्यर्थः । **परस्परं** = विकारनामधेयस्वरूपयोः । **तेनैव** = स्वरूपकार्यव्यपदेशादिहेतुभिः । **भेद इति** । कुम्भादेस्तद्वाचकानां चेति वर्तते । तथा च कार्यं घटादिविकारतन्नामधेयरूपम्, मृदादिकारणाद्भिन्नं, मृत् घट इत्यादिभिन्नव्यपदेशविषयत्वात् । यद्भिन्नव्यपदेशविषयः तद्भिन्नं यथा नामधेयविकारौ परस्परमित्यनुमानं बोध्यम् । यत्प्रकारेणेत्यादिना अस्मिन्ननुमाने तत्सत्तानिरपेक्षसत्ताकत्वमुपाधिरित्युक्तं भवति । **आरभ्यते** = व्यवह्रियते । **ब्रह्मण इति** । सत्यत्वे तदितरस्य मिथ्यात्वे चेति शेषः ।

**आनन्दः**— ननु परोदाहृतप्रतिज्ञावाक्यस्य दृष्टान्तवाक्यस्य च व्याख्यानमकृत्वा वाचारम्भणमित्यस्य व्याख्यानान्तरारम्भो न युक्त इत्यतस्तत्र सङ्गतिं दर्शयितुमाह **तत्रेति** । **वाचेति** । कथं कार्यत्वमित्याशङ्केति । कथं कार्यत्वमिति कोऽर्थः । कार्यत्वोक्तेः किं प्रयोजनमिति वा । कार्यकारणभावस्य भेदव्याप्तत्वादभेदे कार्यत्वं न कथमपि न सम्भवतीति वा । आद्यस्योत्तरमाह **व्यवहारार्थमित्यादिना** । इत्युक्तमित्यन्तेन वा ग्रहणमिति । तथा च वाचः समस्तेन्द्रियव्यवहारस्येत्यर्थः । आरभ्यत इत्यारम्भणं कर्मणि ल्युट् । तथा चारम्भणं व्यवहार्य-





मित्यर्थः । विषय इति यावत् । विकारनामधेयशब्दयोः क्रमेणार्थमाह **विकार इति** । ननु नामधेयस्य विकाराभिन्नत्वात् पृथगभिधानमनर्थकमित्यत आह **इति कुम्भादेरिति** । इतिशब्दः प्रकारे । उत्तरत्र पूर्वस्य सम्बन्धः । **स्वरूपेति** । घटादिस्वरूपं पृथुबुध्नोदराकारादिरूपं नैवं नामधेयस्येति स्वरूपभेदः । घटादिकार्यं जलाहरणादिशब्दस्य त्वभिलपनादि इति कार्यभेदः । अभिधेयस्य तु घटादिरिति । अभिधानस्य तु नामधेयं शब्द इति व्यपदेशः । आदिपदेनाश्रयभेदपरिग्रहः । घटाद्याश्रयो भूतलादिः शब्दाश्रय आकाश इत्येवंप्रकारेण भेदाद्वाच्यवाचकानां परस्परं वास्तवभेद एवावश्यक इति उक्तं भवतीत्यर्थः । न चैवमेषां पदानां विकारपदस्य नामधेयपदेनान्वयाभावाद्वाचारम्भणमित्यस्य विकारपदेनान्वयेऽपि अन्येनान्वितस्यान्येनान्वयायोगेन नामधेय-पदेनान्वयाभावाद्वाचारम्भणमित्यस्य विकारपदेनान्वयेऽपि अन्येनान्वितस्यान्येनान्वयमित्येतदनन्वितं स्यात् । तेनास्यान्वये विकारपदमनन्वितं स्यादिति अन्वयाभाव इति वाच्यविकारोऽभिधेयो घटादिवाचारम्भणं समस्तेन्द्रियव्यवहार्यं समस्तेन्द्रियव्यवहारविषय इत्यर्थः । नामधेयं च समस्तेन्द्रियव्यवहारविषयव्यवहारविषय इत्येवं चशब्दाध्याहारेणान्वयोपपत्तेः । अथवा वाचारम्भणमित्यस्यावृत्त्या पृथगन्वय एवं कर्तव्यः । विकारो-ऽभिधेयो घटादिर्वाचारम्भणं समस्तेन्द्रियव्यवहारविषयः । नामधेयं तदभिधानं वाचारम्भणं समस्तेन्द्रिय-व्यवहारविषय इत्येवं प्रकारद्वयेऽध्याहारेणान्वयसम्भवान्न कश्चिद्दोष इति भावः । नन्वभेदकार्यकारणभावा-नुपपत्त्या उक्तैः स्वरूपकार्यव्यपदेशादिभेदरूपहेतुभिः । कार्यकारणयोरपि भेद एवास्त्विति । द्वितीयमाशङ्कते **एतैर्हेतुभिरिति** । वाच्यानां वाचकानां चेति शेषः । **षष्ठ्यर्थ इति** । एवं च विकारो घटादिः । वाचामारम्भणं विषयः वाचश्च नामधेयं तदभिधानमिति वाक्यार्थः । एवं सति लब्धमर्थमाह **इति कुम्भादेरिति** । व्यपदेशा-दीत्यादिशब्देनाश्रयभेदपरिग्रहः । **कारणादपीति** । कार्यस्येति शेषः । **यत्प्रकारेणेति** । कार्यकारणयोः परस्परा-पेक्षया सत्यत्वान्न भेद इति भावः ।

**श्रीनिधि०— स आदेश इति** । उपदेश इत्यर्थः । **वाग्ग्रहणं समस्तेन्द्रियव्यवहारोपलक्षण-मिति** । तथा च कार्यं कारणमित्येतन्न वस्तुवृत्तभेदेन किन्नाम वाक्प्रभृतीन्द्रियव्यवहारविषयत्वमात्रेणेति भावः ।

**शे०वा०— अनन्यत्वे कथं कार्यत्वमित्याशङ्क्येति** । घटादीनां मृदादित इति शेषः । तथा च घटादीनां मृदाद्यनन्यत्वे न मृदादिकार्यत्वं भवेत् । काणादवादेन कारणात्कार्यस्य द्रव्यान्तरत्वस्यैव स्थितेरिति शङ्कार्थः । भवेदेवं यदि कारणात् कार्यस्य द्रव्यान्तरत्वं स्यात् । न चैतदस्ति । यथा ह्येकस्यैव देवदत्तस्यावस्थाभेदैर्बालो युवा स्थविर इति बुद्धिशब्दादयः कार्यविशेषाश्च दृश्यन्ते, तथा मृद्धिरण्यादेः द्रव्यस्य संस्थानान्तरभात्त्वमात्रेण बुद्धिशब्दान्तराद्युपपत्त्या घटादेर्मृदाद्यन्यत्वासाधकत्वादिति परिहारवाक्याभिप्रायं मनसि निधाय उक्तशङ्कापरिहारकत्वेन तद्योजयति **व्यवहार्यमित्याहेति** । वागादिपूर्वकतत्तदिन्द्रियसाध्यजलाहरणादि-व्यवहारार्थमित्यर्थः । अनेन श्रुतौ वाचारम्भणमित्यत्र वाचेति व्यस्तं पदमित्युक्तं भवति । कथं व्यवहारार्थ-त्वस्य श्रुतौ लाभ इत्यतो वाचेति पदादेवेत्यभिप्रेत्य तेन तल्लाभमुपपादयितुं तृतीयार्थं तावदाह **वाचेतीति** ।





**षष्ठ्यर्थ इति** । षष्ठ्यर्थश्चात्र तादर्थ्यमित्यवधेयम् । तथापि वागर्थत्वमात्रलाभेऽपि न वाग्व्यवहारार्थताया लाभः । लक्षणया कथञ्चित् वाग्व्यवहारार्थत्वलाभेऽपि न सकलेन्द्रियसाध्यव्यवहारार्थत्वस्य लाभ इत्यतोऽत्र वाक्पदेनेन्द्रियविशेषवाचिना तत्सामान्यं लक्षयित्वा लक्षितलक्षणया तत्तत्साध्यव्यवहारस्य लाभोपपत्तेर्नानुपपत्ति-रित्याशयेनाह **वाग्ग्रहणमिति** । संस्थानान्तरनामधेयान्तरसमर्पकपदाश्रवणात् कथं संस्थानान्तरादिभात्त्वमात्रेण बुद्धिशब्दान्तरादेरुपपत्तिवर्णनमित्यतो विकारनामधेयपदे तत्समर्पके इति भावेन तयोरर्थमाह **विकार इत्यादिना** । तथा चायं श्रुत्यर्थः । विकारो घटादिर्नामधेयं च वाचा वाक्पूर्वकजलाहरणादिव्यवहारार्थम् । आरम्भणमारभ्यत इत्यारम्भणमिति कर्मणि ल्युट् । आरभ्यते रलयोरभेदात् स्पृश्यते मृदादिद्रव्येणेति शेषः । मृद्धिरण्यादिद्रव्यमेव व्यवहारार्थं विकारादिभाग्भवतीति यावदिति । इदानीं 'मृत्तिकेत्येव सत्यमि'त्येतद्व्यावर्त्यशङ्काप्रदर्शनेन योजयितुं तदुपयोगितया 'वाचारम्भणं विकारो नामधेयमि'त्येतद्वाक्यसिद्धमर्थं तावदनुवदति **इति कुम्भादेरिति स्वरूपे-त्यादि** । विकारत्वनामधेयत्वरूपस्वरूपभेदात् जलाहरणादिरूपकार्यभेदात् विकारो नामधेयमिति शब्दभेदात् आदिपदगृहीताद्बुद्धिभेदाच्च विकारनामधेययोर्भेद इति सिद्धमित्यर्थः । इदानीमुत्तरवाक्यव्यावर्त्यशङ्कां दर्शयित्वा तत्परिहारत्वेन तत्पठति **एतैरिति** । स्वरूपभेदादिभिः कार्याणां परस्परं भेदश्चेत्कार्यत्वादिरूपैस्तैरेव हेतुभिः कारणादपि कार्यस्य स स्यादित्यर्थः । अन्यथा तत्रैव व्यभिचरितस्य तस्य विकारनामधेययोरपि तत्साधकत्वं न स्यादिति भावः । इतिशब्दस्य प्रकारार्थत्वे लब्धमर्थमाह **यत्प्रकारेणेति** । मृत्तिकाप्रकारेणेत्यर्थः । तस्यैव विशिष्य प्रदर्शनं **यत्सत्तयेति** । तथा च तत्सत्तानिरपेक्षसत्ताकत्वोपाधिग्रस्ततयोक्तहेतूनां न कार्यकारण-भेदसाधकत्वमिति भावः । उक्तव्याख्यानद्वयसङ्ग्रहार्थं विकारविवर्तेति द्वयं गृहीतम् ।

**वा०र०— श्रुतिं व्याख्यातीति** मूलम् । श्रुतिं व्याख्यास्यन् वाचारम्भणशब्दार्थमाहेत्युत्तरेण सम्बन्धः । **व्याख्यानमिति** मूलम् । अस्य नैरपेक्ष्येणेत्युत्तरेण सम्बन्धः । एवं व्याचष्ट इत्युत्तरत्राम्नात इती-त्युत्तरेण सम्बन्धः । **कणादवादेनेति** । वक्ष्यमाणबुद्धिशब्दादियुक्त्येति भावः । अत एव बुद्ध्यादेरन्यथोपपत्तिं वक्ष्यति **परिहारवाक्येति** । वाचारम्भणमिति परिहारवाक्येत्यर्थः । वागादितत्तदिन्द्रियेति वा वाक्पूर्वक-तत्तदिन्द्रियेति वा पाठः । वाक्पूर्वकेत्येतस्योपरि रेखां कृत्वा वागादीति लिखितमासीत् । लेखकेन तदुभयमपि लिखितमित्यदोषः । वाक्पूर्वकेति शाङ्करभाष्ये उक्तेः तदनुसारेणोत्तरत्र तथैव पाठोऽपि । वागादीत्यादि पाठद्वयेऽपि वागादीनि च तानि वाक्पूर्वकाणि च तानि तत्तदिन्द्रियाणीति क्रमेण विग्रहः । एवं श्रुत्यर्थ-कथनावसरेऽपि वाक्पूर्वकतत्तदिन्द्रियसाध्येति पाठः । **षष्ठ्यर्थश्चेति** । एकशतं षष्ठ्यर्था इति वचनादिति भावः । **समस्तेन्द्रियव्यवहारेति** मूले समस्तेन्द्रियाणां तत्तदिन्द्रियसाध्यव्यवहारस्य च साक्षादेव लक्षणेति प्रतीतिनिरासाय क्रामिकं लक्षणाद्वयमभिप्रेतमिति दर्शयति **अत्र वाक्पदेनेति** । विशेषेति सामान्यमिति च सामान्यविशेषभावरूपशक्यसम्बन्धकथनम् । **लक्षितेति** । इन्द्रियसामान्यस्य वाक्पदेन लक्षणया ग्रहणेऽपि व्यवहारार्थत्वलाभाभावस्तदवस्थ इत्यतः इन्द्रियसामान्यलक्षकेन वाक्पदेनैव लक्ष्यार्थस्याप्यनुपपत्तौ लक्ष्यार्थ-सम्बन्धि तत्तद्व्यवहारस्य लक्षणा क्रियत इति लक्षितलक्षणयेत्यर्थः । 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यत'





इत्यादौ समानकर्तृकत्वाभावेऽपि क्त्वाप्रत्ययदर्शनानुसारेण भिन्नकर्तृकत्वेऽपि क्त्वाप्रत्ययोपपत्तिरिति तत्र तत्र टीकाकृतोक्तत्वात् प्रकृतेऽपि लक्षयित्वा लाभोपपत्तेरिति वाक्पदलाभयोः कर्तृत्वेऽपि न क्षतिः । यद्वा लाभोपपत्तेरित्यत्र लाभ उपपाद्य इत्युपपत्तिं प्रति लाभस्य कर्मता । वाक्पदेनेत्यनुवृत्तस्य तु कर्तृतेति समानकर्तृकतेति ज्ञेयम् । भामत्याद्यनुसारेण संस्थानान्तरेत्यादि ग्रन्थः । पूर्वत्र संस्थानान्तरभाक्त्वमिति वाक्येऽपि संस्थानान्तरादीत्यर्थो ज्ञेयः । परस्परमित्यत्र शेषं पूरयन् योजयति **कार्याणां परस्परमिति** । तैरेवेत्येतद्विवरणपूर्वकमनूदितं **कार्यत्वादिरूपैस्तैरेवेति** । स्वरूपभेदादिभिरित्यर्थः । स इत्यस्य परस्परं भेद इत्यर्थः । अनेन मूले स्यादित्यध्याहारः कार्यः इति सूचितम् । विपक्षे बाधकमाह **अन्यथेति** । **तस्यैवेति** । कार्यकारणयोरेवेत्यर्थः । **तस्य** स्वरूपभेदादेः । **तत्साधकत्वं** परस्परभेदसाधकत्वम् । **तत्सत्तानिरपेक्षेति** । कार्यकारणयोः स्वरूपभेदादिना परस्परभेदसाधनं न सम्भवति । तत्सत्तानिरपेक्षसत्ताकत्वस्य परस्परभेद-प्रयोजकतया स्वरूपभेदादौ सत्यपि व्यापकस्योक्तप्रयोजकस्याभावेन व्याप्यस्य परस्परभेदस्यानापत्तेः । विकारानामधेययोस्तु परस्परसत्तानिरपेक्षसत्ताकत्वस्यापि सत्त्वात् तद्विशिष्टस्वरूपभेदादिना युक्तं परस्परभेद-साधनमिति भावः ।

**स०व्र०— अनन्यत्वे कथं कार्यत्वमित्याशङ्क्येति** । घटादिरूपकार्यस्य मृदादिकारणानन्यत्वे तस्यापि कारणत्वापत्त्या तद्विरुद्धकार्यत्वानुपपत्त्या न तस्य कारणाभेद इत्याशङ्क्य अभेदेऽपि वागादि-समस्तेन्द्रियव्यवहारनिष्पादकत्वेन व्यक्तेरेव कार्यत्वरूपत्वात् युक्तं कार्यत्वमिति भावः । **नामधेयं तदभि-धानमिति** । तथा च वाच्यवाचकात्मकसर्वं व्यक्त्या व्यवहारनिष्पादकत्वात् कार्यमिति, 'कथं कार्यत्वमि'ति-शङ्कानिरास इति ध्येयम् । वाचारम्भणं विकारो नामधेयमित्येतद्वाक्यार्थानुवादपूर्वकं अधिकं च शङ्कते इति **कुम्भादेरित्यादिना** । इतिशब्दस्य नैरर्थक्यं परिहरति **इतिशब्द इति** । फलितमाह **यत्प्रकारेणेति** । मृत्तिका-प्रकारेणैवेत्यर्थः । तस्यैव तात्पर्यमाह **यत्सत्तयेति** । इति यावदिति शेषः । तथा च सत्तारूपप्रकारेणेत्यर्थ इत्युक्तं भवति ।

नवीनास्तु "**अनन्यत्वे कथं कार्यत्वमिति** । घटादीनामिति वर्तते । एवं च घटादीनां मृदनन्यत्वे मृत्कार्यत्वं कथमङ्गीकार्यम् । एकस्यैव पौर्वापर्यायोगात् । तथा च कार्यकारणभावस्य भेदव्याप्तत्वादनन्यत्वं नोपपद्यत इति शङ्कार्थः । कार्यकारणभावेऽप्यनन्यत्वं व्यवहारादिप्रमाणादिसिद्धत्वादङ्गीकार्यम् । व्याप्तेरप्रयोजक-त्वात् । तन्मते कार्यस्य कारणानन्यत्वेऽपि कारणस्य कार्यानन्यत्वेन उक्तदोषाभावाच्चेति भावेन परिहरतीत्याह **व्यवहारार्थमित्याहेति** । **समस्तेन्द्रियव्यवहारेति** । घटादौ सम्भावितसमस्तेन्द्रियव्यवहारेत्यर्थः । एतन्मते मृदाद्युपादानं घटाद्यभिधेयात्मना तदभिधायकशब्दात्मना च परिणमत इत्यभिप्रेतम् । तन्नामरूपाभ्यां व्याक्रियतेत्यादिश्रुत्यर्थसाम्यात् । अतो मृद्विकारप्रसङ्गे नामधेयग्रहणमुपपन्नमिति ज्ञातव्यम् । अत एव सिद्धान्ते विकारग्रहणेनैव नामधेयस्यापि ग्रहणसम्भवादिति वक्ष्यति । ततश्चायं श्रुतिवाक्यार्थः । विकारो घटादि तदभिधानं चेति द्वयं मृत्कार्यं मृदभिन्नमङ्गीकार्यं कुतः । यतस्तद्वाचारम्भणं वाचा मृद्घट इति सामानाधिकरण्येन





व्यवह्रियते । चक्षुरादिना च तथा ज्ञायत इति उपोद्घातसङ्गत्या एतद्वाक्यलब्धमानुषङ्गिकप्रमेयं दर्शयन् उत्तरवाक्यमवतारयति **इति कुम्भादेरित्यादिना** । **स्वरूपेति** । अत्र स्वरूपशब्देन स्वस्य रूपं स्वरूपमिति व्युत्पत्त्या असाधारणधर्मो विवक्षितः । अन्यथा साध्यवैशिष्ट्यप्रसङ्गादित्यवधेयम् । विकारो नामधेयमित्युत्त्या विकारत्वनामधेयत्वरूपस्वरूपभेदः, विकारनामधेयशब्दात्मकव्यपदेशभेदः, जलाहरणादितदुचितार्थक्रियारूप-कार्यभेदश्च सूचित इति ज्ञातव्यम् । **इत्युक्तमिति** । इत्यपि लब्धमित्यर्थः । **पूर्वपक्षमिति** । पूर्वं अनन्यत्वे कथं कार्यत्वमित्याशङ्का तदवस्थेति भावः । **यत्प्रकारेणेत्यादि** । तथा च तत्सत्तानिरपेक्षसत्ताकत्वोपाधिग्रस्त-त्वादनुमानानां दुर्बलतयोक्तप्रमाणैः अनन्यतासिद्धिरप्रत्यूहैवेति भावः'' इति व्याचक्षते ।

**स०ना०— वाचारब्धं तु साङ्केत्यं नाम स्याद्विकृतं** बहु इति मूलसम्बन्धसुधायां **अनन्यत्वे कथं कार्यत्वमित्यादौ** कानिचिद्वाक्यानि पतितानीत्याहुः ॥

**विट्ठल०—** स्वव्याख्यां न परव्याख्याननिरासार्थत्वात्परव्याख्यानमनुवदितुमाह **तत्रेति** । **उपदेक्ष्य-न्निति** । एवमेव खलु सौम्येमाः सर्वाः प्रजाः इत्यादिनोपदेशं करिष्य(?)षु यथा सौम्येति दृष्टान्तवाक्य-त्रयार्थमभिधाय वाचारम्भणमिति वाक्यत्रयार्थं वक्तुमवतारयति **अनन्यत्व इति** । घटादीनां मृदनन्यत्वे कथं मृत्कार्यत्वं संस्थानभेदान्नामभेदाच्च भेदसौ..........रणत्वादेकस्यैव पौर्वापर्यायोगाच्चेति कंशा(?)ग्रन्थार्थः । अनन्यत्वेऽपि तत्तत्साध्योदकारणादिव्यवहारसिद्ध्यर्थं मृदादिकमेव संस्थानान्तरं नामान्तरं च प्राप्नोति । न तावता द्रव्या........बालो युवा स्थविर इति शब्दान्तरं कार्यान्तरं च प्राप्नोति । तथैवोपपत्तेः कार्यस्य कारणानन्यत्वेऽपि कारणस्य कार्यानन्यत्वेन पूर्वभावित्वसम्भवाच्चेत्याशयेन परिहरतीत्याह **समस्तेन्द्रिय-व्यवहारेति** । अभिज्ञानादिसम्भावितसमस्तेन्द्रियव्यवहारोपलक्षणमित्यर्थः । एतन्मते मृदाद्युपादानं घटाद्यभि-धेयात्मना तदभिधायकशब्दात्मना च परिणमत इत्य.......सङ्गे नामधेयग्रहणं युक्तमित्याशयेन नामधेय-पदमभिधानार्थतया व्याख्याति **नामधेयं तदभिधानमिति** । अत एव सिद्धान्ते विकारग्रहणेनैव नामधेयस्या.......... वक्ष्यति । तथा चायं श्रुत्यर्थः । विकारः घटादिः तन्नामधेयं द्वितीयं मृत्कार्यं वाचा वागिन्द्रियोपलक्षितसर्वेन्द्रियव्यवहारस्य सिद्ध्यर्थं मृदादिद्रव्येणारम्भणं आलम्बनं रलयोरभेदा........दि द्रव्यमेव व्यवहाराय घटादिविकारभाग्भवति । न तु घटादिकार्यं मृदाद्यतिरिक्तमिति उत्तरवाक्यमुत्थापयितुमुपोद्घात-सङ्गत्या एतद्वाक्यलब्धमर्थं तावद्दर्शयति...... (अत्र पत्रपातः) .......पूर्वकमध्यस्थं करोत्यर्थः ।

**चषकः—** **षष्ठ्यर्थे तृतीयेति** । तादर्थ्यं तृतीयार्थः, न तदिन्द्रियसाध्यजलाहरणादिव्यवहारार्थमिति भावः ।

**॥ इति स्वमतव्याख्यानप्रारम्भस्थलान्वेषणार्थमादौ परिणामवादिनां विवर्तवादिनां च व्याख्यानम् ॥**

* * *





॥ तत्र 'उत तमादेशमप्राक्ष्यं' इति श्रुतिव्याख्याने स्वमतेन व्याख्यानम् ॥
॥ तत्रादौ 'वाचारम्भण'शब्दार्थः ॥

१९० **सु०—** तत्रैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं मृत्पिण्डादिदृष्टान्ताश्च विकारविवर्ताभिप्राया इत्ये(वं)तत् न तावद्वाक्यात् प्रतीयते, किन्तु वाचारम्भणमित्युपपादकवाक्यबलादिति वक्तव्यम्; अतस्तदेव प्रथमं व्याकुर्वन् वाचारम्भणशब्दार्थमाह **वाचारब्धमिति ।**

**अनु०— वाचारब्धं तु साङ्केत्यं नाम स्यात्**

नन्वारम्भणशब्दो ल्युडन्तः । ल्युट् च भावे करणाधिकरणयोश्च विहितो न कर्मणि । न च 'कृत्यल्युटो बहुलमि'ति कर्मणि ल्युट्, प्रबलनियामकमन्तरेण बहुलग्रहणस्य कर्मणि व्याख्यातुमशक्यत्वात्, 'न चारभ्यस्यारम्भणमिति युज्यते शब्द' इति स्ववचनविरोधाच्च; तत्कथमारब्ध इति व्याख्यानमिति । मैवम् । भाव एवारम्भणशब्दस्याङ्गीकारात् । **वाचा** वागिन्द्रियेण **आरम्भणम्** उत्पादनं यस्येति तृतीयाया अलुक् । 'टापं चापि हलन्तानां यथा वाचा निशा दिशा' इति वचनात्, वाचयाऽऽरम्भणं यस्येति वा बहुव्रीहिरयम् । तस्यार्थकथनं **वाचारब्धमिति ।**

तुशब्दोऽवधारणार्थ उत्तरत्र सम्बध्यते ।

वाचारम्भणशब्दादेव विकारत्वलाभाद्विकार इति पुनरुक्तं स्यादतस्तात्पर्यमाह **साङ्केत्येति ।** वाचारम्भणशब्देन साङ्केतिकं नामैव वाच्यं स्यात् । अवयवार्थकथनं तु वैशद्यार्थमेव । यथा 'चष्टेऽनेनेति चक्षुरि'ति निर्वचनलभ्येऽपि दर्शनकरणत्वे चक्षुषा पश्यतीति नोक्तार्थता, तस्यां दशायामवयवार्थस्याविवक्षितत्वात्; तथा च वाचारम्भणशब्दोऽपि साङ्केतिकपर्याय इति ।

**परि०—** रामानुजभाष्याद्युक्तमाशङ्क्य निराह **न च कृत्यल्युट इति । स्ववचनेति ।** षष्ठे छान्दोग्यभाष्ये कर्मार्थकल्युडन्तत्वप्रत्याख्यानपरस्ववचनेन वाचाऽऽरब्धत्वमिति कर्मार्थकत्वोक्तेर्विरोधाच्चेत्यर्थः । **तृतीयाया अलुगिति** । छान्दसोऽलुगिति भावः । **टापं चेति** । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरि'ति पूर्वार्धगतेन वष्टीति क्रियापदेन भागुरिरिति कर्तृवाचकपदेन च टापं





चेति द्वितीयान्तस्यान्वयः । **इति वचनादिति** । शाब्दिकानां वचनादित्यर्थः । **उत्तरत्रेति** । नामैवेति सम्बध्यत इत्यर्थः । **अवयवार्थेति** । वाचेति शब्दारम्भणशब्दरूपावयवार्थकथनं त्वित्यर्थः । **वैशद्यार्थं** = शब्दार्थस्पष्टतार्थमित्यर्थः । **नोक्तार्थतेति** । चक्षुःप्रातिपदिकेन चक्षुषा पश्यतीति वाक्यस्य न गतार्थतेत्यर्थः ।

**यादु०**— छान्दोग्यभाष्यविरोधं चाह **न चारभ्यस्येति** । **भाव एवेति** । आरम्भ एवारम्भणमिति भाव एवेत्यर्थः । नन्वेवं 'सुपो धातुप्रातिपदिकयोरि'ति सुलोपे वागारम्भणमिति स्यादित्यत आह **तृतीयाया इति** । छान्दसत्वादिति भावः । **उत्तरत्रेति** । साङ्केत्यनामेत्यत्रेत्यर्थः । **साङ्केतिकपर्याय इति** । रूढतया विवक्षित इति भावः ।

**वं०प०**— **ल्युडन्त इति** । आङ्पूर्वकाद्धातूनामनेकार्थत्वात् रभिरारम्भण इत्यस्माद्धातोर्ल्युट्प्रत्यये लकारटकारयोर्लोपे 'युवोरनाकौ' इति युकारस्य अनादेशे धात्विकारलोपे 'इदितो नुम् धातोः' इति इदित्वान्नुमागमे रम्भ् अनेति स्थिते, नस्य णत्वे च आरम्भणमिति रूपम् । **न चेति** । आरम्भणमिति शब्द आरभ्यस्य वस्तुनो न युज्यते । आरब्धं वस्तु भावव्युत्पन्नारम्भणशब्दवाच्यं न भवति अन्यथा आरम्भण-शब्दवाच्यत्वे कर्मणि ल्युटः स्वीकारापत्तेरिति छान्दोग्यभाष्योक्तवाक्यस्य भावः । वाचारम्भणमित्येकमेव पदमङ्गीकृत्य, बहुव्रीहित्वं चाङ्गीकृत्य, वाचेत्येतत्प्रकारद्वयेन व्याख्याति **वाचेत्यादिना** । ननु वाचेति तृतीयलोपे वागारम्भणमिति स्यादित्यंत उक्तम् **तृतीयाया इति** । अलुक् = लोपाभावः । वाचेत्येतन्न तृतीयान्तं सत् आरम्भणपदेन समस्तमिति । किं तु आकारान्तं सदेवेत्याशयेनाह **टापं चेति** । **तस्यार्थकथनमिति** । ततश्च भावव्युत्पन्नस्य वाचारम्भणशब्दस्य बहुव्रीहितामङ्गीकृत्य व्याख्याने योऽर्थः सम्पन्नः तत्कथनमात्रमेव, न तु कर्मणि ल्युटमङ्गीकृत्य आरम्भणशब्दव्याख्यानपरमित्यर्थः । **वैशद्यार्थमिति** । सन्ति ह्यन्वर्था अपि संज्ञा इति भावः । **उक्तार्थतेति** । चक्षुषेति करणत्वार्थकतृतीयायाश्चक्षुःशब्देन गतार्थतेत्यर्थः । **तस्यां दशायां** चक्षुषा पश्यतीति प्रयोगवेलायां, चक्षुःशब्दावयवार्थस्येत्यर्थः । **पर्याय इति** । तथा च विकारशब्दसमभिव्याहारदशायां वाचारम्भणशब्दस्य यौगिकत्वं न विवक्षितमित्यर्थः । योगकथनं तु शब्दसाधुत्वाद्याख्यानाय वैशद्यार्थ-मित्युक्तमेवेति भावः ।

**आनन्दः**— आरब्धमित्यनेन आरम्भणशब्दः कर्मणि ल्युडन्तो निष्पन्न इत्यभिप्रेत्य शङ्कते **नन्विति** । ननु वाचारम्भणमित्यत्र समासान्तर्गततृतीयाया लुकि वागारम्भणमिति स्यादत्राह **तृतीयाया इति** । ननु साङ्केतिकं नाम स्यादिति मूलमनुपयुक्तं श्रुत्यर्थव्याख्यानरूपत्वाभावादित्यतस्तन्निवर्त्याशङ्कां दर्शयति **वाचारम्भणेति** । ननु सत्यपि अवयवव्युत्पत्तिलभ्येऽर्थे पदान्तरायोगे रूढार्थग्रहणमेवेत्येतत्क्वोपलब्धमित्यत आह **यथा चष्ट इति** । **तस्यां दशायामिति** । पदान्तरयोगदशायामित्यर्थः । **तथेति** । प्रकृतेऽपि विकारशब्द-





योगसत्त्वादिति भावः । ननु विकारशब्दस्य विकृतमिति व्याख्यानमयुक्तम् । भावे घञि विकारशब्दस्य निष्पन्नत्वात् विकृतमित्यस्य च कर्मणि क्तप्रत्यये निष्पन्नत्वात् तथा च विकृतिरिति व्याख्यातव्यमित्यत आह **अनेनेति** । तथा चाकर्तरि च कारके इत्यनेन कर्मण्यविद्य(?)ओज्ञापनादस्य च कर्मणि घञन्तत्वाद्युक्तमेतद्व्याख्यानमिति भावः ।

**श्रीनिधि०— वैशद्यार्थम्** । स्पष्टतार्थम् । **तथा वाचारम्भणशब्दोऽपीति** । अवयवार्थविवक्षयेति अर्थः । यदा वाचा यस्यारम्भणमिति यद्वाक्करणं तन्नामधेयं तत एव जनिमदित्यर्थः । अतो न पुनरुक्तिः । शिष्टमूह्यम् ।

**शे०वा०— उपपादकेति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायां मृत्पिण्डादिदृष्टान्तत्रयस्य चोपपादकेत्यर्थः । **स्ववचनविरोधाच्चेति** । छान्दोग्यभाष्यस्थैतद्वचनविरोधाच्चेत्यर्थः । **भाव एवेति** । आरम्भ आरम्भणमिति भाव एवेत्यर्थः । कथं तर्हि वाचाऽऽरब्धत्वलाभ इत्यतो नेमे व्यस्ते पदे किन्तु समस्तमेकं पदमिति युक्त एवोक्तार्थलाभ इति तदनुगुणं समासमेवाह **वाचेत्यादि** । नन्वारम्भणशब्दयोगे 'कर्तृकर्मणोः कृती'ति षष्ठ्या भाव्यमित्यतो वाक्शब्दार्थस्येन्द्रियस्य करणत्वेन कर्तृत्वकर्मत्वयोरभावान्न षष्ठीप्रसङ्ग इत्याशयेनाह **वागिन्द्रियेणेति** । ननु यदि समासः तदा 'सुपो धातुप्रातिपदिकयोरि'ति वाचेति तृतीयालोपे वागारम्भणमिति भवितव्यम् । वाचारम्भणमिति तृतीयाश्रवणमयुक्तमिति तत्राह **तृतीयाया इति** । यद्यपि 'ओजःसहोऽम्भस्तमसस्तृतीयायाः' इति ओजस् सहस् अम्भस् तमस् इति शब्देभ्य उत्तरस्यास्तृतीयाया अलुक् स्मृतः न तु वाक्शब्दात् परस्यास्तस्याः सः । तथाऽपि 'अञ्जसा कृतम्' इत्यभियुक्तप्रयोगसंरक्षणाय अञ्जसोऽप्यत्रोपसङ्ख्यानस्येव वाचोऽप्यत्रोपसङ्ख्यानस्य कर्तव्यत्वाभिप्रायेणैवमुक्तमित्यवधेयम् । तृतीयाया अलुग्व्याख्यानपक्षे उपसङ्ख्यानस्य कर्तव्यत्वपर्यन्तं धावनाश्रयणप्रसङ्गात् पक्षान्तरमाह **टापं चापीति** । **वचनादिति** । भागुरिवचनादित्यर्थः । कथं तर्हि वाचारब्धमिति विग्रहप्रदर्शनमित्यतो नेदं विग्रहप्रदर्शनं किन्तु तस्यार्थकथनमेवेत्याह **तस्येति** । **उत्तरत्रेति** । साङ्केत्यनाम स्यादित्युत्तरत्रेत्यर्थः । अत एव साङ्केतिकं नामैवेति वक्ष्यतीति ध्येयम् । **तात्पर्यमिति** । वाचारम्भणमित्यस्येति शेषः । **नोक्तार्थतेति** । चक्षुषेति तृतीयाया इति शेषः । **अविवक्षितत्वादिति** । तद्विवक्षायामनभिहितत्वाभावेन तदधिकारविहिततृतीयानुपपत्तिप्रसङ्गादिति भावः ।

**वा०र०— बहुलमितीति** मूलम् । इति सूत्रीयबहुलग्रहणादित्यर्थः । वाचारम्भणमित्युक्त इत्युत्तरभाष्यमूलटीकायां तथैवानुवादात् । **प्रबलनियामकमन्तरेणेति** मूलम् । उक्तभाष्ये यन्मूलटीकायामत्रत्यप्रबलनियामकमन्तरेणेत्यादिवाक्यस्य वाचारब्धमित्यर्थविशेषे प्रबलनियामकमन्तरेणेत्यादियोजनां सिद्धां कृत्वा तद्वाक्यबलादेवार्थान्तरलाभाभिप्रायेण वाचारम्भणशब्दस्य मिथ्यात्वपरत्वे नियामकस्य प्रमाणविशेषस्याभावेन बहुलग्रहणस्य कर्मणि व्याख्यातुमशक्यत्वादिति टीकायामेव पूर्वमुक्तत्वादित्यर्थानुवादस्य करिष्यमाणत्वात् ।





वाचारम्भणशब्दस्य वाचारब्धत्वपरत्वे प्रबलनियामकमन्तरेण वाचारम्भणशब्दगतल्युटः कर्मणि व्याख्यानेऽपि बहुलग्रहणस्य योजयितुमशक्यत्वादित्यर्थः । अन्यथा परमतेऽपि विचारलब्धत्वसिद्धिप्रसङ्गेनोत्तरमूले ल्युटः कर्मणि विधानाभावाच्चेत्युक्ताभिप्रायकाश्रुतकल्पनाभिधानायोगप्रसङ्ग इति भावः । अत एव भावे ल्युट्पक्षेऽपि कर्मणि ल्युटीवार्थसमत्वेऽपि तदङ्गीकारो युक्त इति ज्ञेयम् ।

बहुलग्रहणस्य कर्मणीत्युत्तरटीकावाक्येऽपि वाचारम्भणशब्दगतल्युटः कर्मणि व्याख्याने बीजतया योजयितुमशक्यत्वादित्येवार्थोऽभिमतः । एतेनेतिकरणः क्रियत इति न वेति विभाषेति सूत्रीयभाष्यप्रयोगमुपपादयता कैय्यटकृता क्रियत इति करणः बहुलग्रहणात् कर्मणि ल्युडिति प्रतिपादनादन्यत्रापि तत्तट्टीकाकारैस्तथा प्रतिपादनाच्च बहुलग्रहणस्य कर्मणि ल्युडित्यर्थकतया व्याख्याने तस्यैव ज्ञापकतया, ज्ञापकाभावोऽसिद्ध इति शङ्का परास्ता । सूत्रस्थबहुलग्रहणस्य कर्मणि ल्युट्साधकत्वे कैय्यटादि व्याख्यातभाष्यप्रयोगादेर्ज्ञापकत्वेऽपि तज्ज्ञापकबलेन तथाविधस्थल एव ल्युट्कर्मण्यपि व्याख्यातुं युक्तः । यत्र तच्छब्दस्य तदर्थकता प्रमाणविशेषसिद्धा स्यात् । तत्सिद्धो हि तदन्यथानुपपत्त्या तदुपपादकत्वेन बहुलग्रहणं तत्रापि प्रवर्तत एव । न च प्रकृते वाचारम्भणस्य तदारब्धत्वपरत्वे प्रमाणविशेषोऽस्ति । अतस्तदुपपत्तये कर्मणि ल्युटो व्याख्यानस्याकर्तव्यत्वात् । तद्व्याख्याने मूलतयोक्तभाष्यादिप्रयोगरूपज्ञापकाप्रवृत्तेरित्याशयस्य सूचितत्वादित्यवधेयम् । कृत्यल्युट इति सूत्रारम्भसामर्थ्यादिव कर्मणि ल्युडिति प्रकारो रमया रमणमित्यादिस्थलगत रमत इति रमण इत्यादिरूपेण कर्तरि ल्युटमुपपाद्य तट्टीकाकृतः सम्मतमेव परन्तु प्रदीपविवरणादिगतप्रकारानुसारि मूलमनुसृत्य टीकापि प्रवृत्तेति न दोषः ।

स्ववचनस्थलविशेषाप्रतीतेराह **छान्दोग्यभाष्यस्थेति** । एतद्वचनेत्यस्य न चारभ्यस्यारम्भणमिति युज्यते । **शब्द इति** । स्ववचनेत्येतावानर्थः । **भाव एवेति** । न चैतत्परपक्षेऽपि समानमिति वाच्यम् । अस्मिन्नपि पक्षे मिथ्यात्वस्यालाभादित्युत्तरमूलानुसारेण परेण तथाङ्गीकारस्य व्यर्थत्वात् । केवलपदप्रक्षेपेण योजनां कुर्वतां आरम्भणपदेन व्यवहारस्यैव स्वीकार्यत्वाच्चेत्यत्र तात्पर्यात् लाभ इति वाचा आरम्भ इत्येव प्राप्तेरित्याशयः । इमे वाचा आरम्भणमिति इमेत्यर्थः । उक्तार्थलाभ इतीत्यनन्तरं भावेनेति पाठः । तथापाठाभावस्थले शेषः पूरणीयः । **समासमेवेति** । बहुव्रीहिसमासार्थावबोधकवाक्यरूपविग्रहप्रदर्शनेन बहुव्रीहिसमासत्वं च सूचयतीत्यर्थः । इति वा बहुव्रीहिरित्युत्तरमूलानुसारेण साम्मुग्धेन समासमित्युक्तमिति ज्ञेयम् । **आरम्भणशब्दयोग इति** । ल्युटः कृत्प्रत्ययत्वादिति भावः । **करणत्वादिनेति** । उत्पादनं प्रतीति पूरणीयम् । तदा सुप इति समासे सति कृत्तद्धितसमासाश्चेत्यनेन प्रातिपदिकसंज्ञायां सुपो धात्विति सूत्रेण प्रातिपदिकावयवाच्चेति तृतीयाख्या सुपो लोपे सतीत्यर्थः । तृतीयाश्रयणं च युक्तमिति पाठः । **उपसङ्ख्यानस्येति** । वैय्याकरणैस्तदाश्रयणादिति भावः । इवेत्यनन्तरं वाचारम्भणमिति प्रयोगसंरक्षणायेति शेषः । **धावनेति** । सत्युपायान्तरे तत्पर्यन्तं धावनेन किं कृत्यमित्याशयः । **पक्षान्तरमिति** । वाचा





आरब्धत्वलाभानुगुणं उपसङ्ख्यानकल्पनाशून्यं बहुव्रीहिसमासरूपं पक्षान्तरमित्यर्थः । वष्टिभागुरि रल्लोपमिति पूर्वार्धोक्तिमभिप्रेत्याह **भागुरीति** । **इति वेति** मूलम् । इति वा विग्रहपूर्वको बहुव्रीहिरित्यर्थः । **कथं तर्हीति** । पूर्वोक्तिसमासद्वयपक्षेऽपीत्यर्थः । विग्रहेत्यनेनार्थकथनेनेति मूलव्यावर्त्यमुक्तम् । वाचारब्धमित्यस्य वाचारम्भण-शब्दे प्राप्तं यत्पूर्वोक्तं विग्रहद्वयं तदनुवादत्वादिति भावः । **अर्थकथनमिति** । बहुव्रीहिसमासलब्धार्थकथन-मित्यर्थः । पश्यतीतीत्यत्र इतीत्यस्य इत्यत्रेत्यर्थं सिद्धवत्कृत्य उक्तार्थता । चक्षुषेत्यत्रत्यचक्षुःशब्दस्येति प्रतीतिवारणायानुगुणं शेषं पूरयति **चाक्षुषेतीति** । **अनभिहितत्वेति** । चष्ट इत्येव तच्चक्षुरित्यानन्दमयाधि-करणीयभाष्यमूलोक्तप्रकारेण करणे ........प्रत्ययेनाभिहितत्वादिति भावः । **तदधिकारेति** । कर्तृकरणयो-स्तृतीयेत्यत्राप्यनभिहिते इत्येतत्सूत्रस्याधिकारादिति भावः ।

**स०व्र०— स्ववचनविरोधादिति** । छान्दोग्यभाष्यस्थवचनविरोधादित्यर्थः । नन्वेवं सुपो धातुप्राति-पदिकयोरिति सुपो लोपे वागालम्बनमिति स्यात् न तु वाचारम्भणमितीत्यत आह **तृतीयाया अलुक् इति** । 'ओजः सहोऽम्भस्तमसस्तृतीयाया' इत्यत्र वाक्शब्दस्याभावेऽपि बाहुलकादेव तृतीयायाः अलुक् इति भावः । **उत्तरत्र सम्बद्ध्यत इति** । साङ्केतिकं नामेत्युत्तरत्र सम्बद्ध्यत इत्यर्थः ।

**॥ इति 'वाचारम्भण'शब्दार्थः ॥**

* * *

**॥ तत्र 'विकार'शब्दार्थः ॥**

१९१ **सु०— विकारशब्दार्थमाह विकृतमिति ।**

**अनु०— विकृतं बहु ॥**

**अनेन विक्रियत इति विकार इति कर्मणि घञित्युक्तं भवति । विकृतत्वोपपादक-मर्थान्तरं चाह बह्विति । विविधः, कारः प्रकारो, विकारः । प्रकारप्रकारिणोरभेदाद्बह्वि-त्युक्तम् । बहुविधमित्यर्थः ।**

**नामधेयं मृत्तिकेत्येव सत्यमित्यस्यार्थमाह नित्यं त्विति ।**

**नित्यं तु नामधेयं यन्मृत्तिकेत्यादि वैदिकम् ॥**





सत्यशब्दार्थो **नित्यमिति । तुशब्दोऽवधारणे । आदिशब्देन लोहमण्यादेर्ग्रहणम् । यन्मृत्तिकेत्यादि संस्कृतं नामधेयम्, तदेव नित्यमिति सम्बन्धः । वैदिकमिति तदुपपादनम् ।**

**परि०— कर्मणि घञिति** । 'अकर्तरि च कारके संज्ञायामि'त्यनेनेति भावः । **अर्थान्तरं चेति** । विक्रियत इति कर्मणि घञन्तत्वेन प्राप्तार्थादर्थान्तरं चेत्यर्थः । नन्वेवं बहुत्वस्य प्रकारविशेषणत्वात् बहुप्रकारमिति वक्तव्ये विकृतं बह्विति कथं विकृतविशेषणत्वेनोक्तिरित्यत आह **प्रकारेति** ।

**वं०प०— कर्मणीति** । तथा च विपूर्वात् कृञ् करणेऽस्मात् घञ्प्रत्यये, ऋवर्णस्याकाररूपे गुणे कृते, तस्य च रपरत्वे, घकारञकारयोर्लोपे, अकारमात्रे उर्वरिते सति, ञित्वादादिवृद्धौ, प्रत्ययाकारे च मिलिते सति, विकारेति रूपम् । साङ्केत्यनामधेयस्य विविधप्रकारवत्त्वेन प्रकारत्वं कथमत आह **अभेदादिति** । तथा च यतो बहुविधमतो विकृतमिति बहुत्वं विकृतत्वोपपादकं ज्ञेयम् ।

**आनन्दः—** ननु विकारशब्दस्य व्याख्यातत्वाद्बह्वि इत्येतत्कस्य व्याख्यानमित्यत आह **विकृतत्वेति** । **विविध इति** । अनेन च करणं कार इति भावे घञन्तोऽयं कारशब्दः । वीत्युपसर्गेण च विविधः प्रकार उक्तः । एवं च विविध ...... ।

**शे०वा०— कर्मणीति** । 'अकर्तरि च कारके संज्ञायामि'ति तत्स्मरणादिति भावः । विकृतमित्यनेनैव विकारशब्दस्य व्याख्यानात् बह्वित्यनर्थकम् । न चेदं तस्यार्थान्तरकथनम् । तत्कथनस्य प्रकृतानुपयुक्तत्वादित्यत आह **विकृतत्वोपपादकमिति** । उपपादकत्वप्रकारश्चोत्तरत्र आकरे एव स्पष्टः । बह्वित्यस्य विकारशब्दार्थान्तराभिधायकत्वं दर्शयितुं विकारशब्दार्थमाह **विविध इति** । नन्वेवं साङ्केतिकनामगतप्रकाराणामनेकत्वस्य विकारशब्दार्थत्वप्राप्त्या भाष्येऽपि प्रकाराणामेव बहुत्वं वक्तव्यम् । तत्कथं बह्विति नाम्नो बहुत्वाभिधानमित्यत आह **प्रकारेति** । लोहमण्यादेरित्यादिपदेन नखनिकृन्तनग्रहणम् । तथाऽपि भाष्ये वैदिकत्वाभिधानमनर्थकम् । 'नित्यं तु नामधेयं यन्मृत्तिकेत्यादी'त्येतावतैव नामधेयं मृत्तिकेत्येव सत्यमित्यस्यार्थोक्तेरित्यतो नेदं तद्व्याख्यानम् अपि तु सत्यपदोक्तनित्यत्वोपपादकहेत्वभिधानमेवेत्याह **वैदिकमितीति** ।

**वा०र०— उत्तरत्रेति** । योजनाप्रदर्शनस्थलीय कुतः बहुविधत्वादित्यादिनेति शेषः । **कथं बह्वितीति** । विकृतं बह्विति सामानाधिकरण्येन नाम्नो बहुत्वप्राप्तेरिति भावः ।

**॥ इति 'विकार'शब्दार्थः ॥**





**॥ तत्र वाचारम्भण-विकार-शब्दार्थयोर्योजना ॥**

१९२ **सु०—** ततश्चैवं योजना । **वाचारम्भणं** साङ्केतिकं **नामधेयं विकार** उत्पत्तिमत् । तत एवानित्यम् । कुतः, बहुविधत्वात्, पुरुषेच्छानुसारेणानेक(विध)प्रकारत्वात् । मृत्तिकेत्यादि नामधेयं वैदिकत्वान्नित्यमनादि चेति । न च वाचारम्भणं विकार इति लिङ्गवैषम्यदोषः, नामधेयविकारशब्दयोर्नियतलिङ्गत्वात्, वाचारम्भणशब्दस्य च नामधेयविशेषणत्वात्, विशेषणानां च विशेष्यनिघ्नत्वात् । अत एव साङ्केत्यमित्येव वक्तव्ये साङ्केत्यनामेत्यवोचत् ।

यदा तु 'वाचा यस्यारम्भणं तन्नामधेयं विकारो जनिमदिति; वाचा नाम्नामारम्भणं विविधाकारः, आकाराकारिणोरभेदात्; विकारित्वादुत्पत्तिविनाशवदिति यावदिति वा ग्रन्थान्तरोक्ता योजना; तदा(तु) लिङ्गव्यत्यासशङ्कैव नास्तीति ।

**परि०—** निष्कृ(ष्य)ष्टश्रुत्यर्थमाह **ततश्चैवं योजनेति** । बहुव्रीहिभूतस्य वाचारम्भणशब्दस्य विकारविशेषणत्वं मत्वा नपुंसकत्वायोगं शङ्कते **न च वाचेति** । **निघ्नत्वादिति** । अधीनत्वादित्यर्थः । 'अधीनो निघ्न आयत' इत्युक्तेः । 'अतोऽन्यनामधेयं तु वाचारम्भणहेतुतः । साङ्केत्येन विकारः स्यात्' इति छान्दोग्यभाष्योक्तं प्रमाणं हृदि कृत्वाह **वाचा यस्येत्यादि** । तत्त्वनिर्णयछान्दोग्यभाष्यबृहदारण्यकभाष्येषूक्तमाह **वाचा नाम्नामित्यादि** । **लिङ्गव्यत्यासशङ्कैव नेति** । पक्षद्वयेऽप्यबहुव्रीहित्वेन भावार्थल्युडन्ततया नित्यनपुंसकत्वादिति भावः ।

**यादु०—** **लिङ्गवैषम्यदोष इति** । विशेष्यस्य विकारशब्दस्य पुलिङ्गत्वात् तद्विशेषणे बहुव्रीहिरूपे वाचारम्भणशब्देऽपि पुलिङ्गतैव युक्तेति भावः । ननु वाचारम्भणशब्दस्य नामधेयविशेषणत्वेन लिङ्गवैषम्यदोषाभावेऽपि नामधेयं विकार इति योजनायां तद्दोषतादवस्थ्यमित्यत उक्तम् **नामधेयविकारशब्दयोरिति** । तथा च उद्देश्यलिङ्गत्वं विधेयस्य अनियतलिङ्गविषयमिति भावः । **वाचा यस्येति** । यद्यपि वाचा नाम्नामिति वक्ष्यमाणयोजनैव तत्त्वनिर्णये, छान्दोग्यभाष्ये, बृहद्भाष्ये च दृश्यते न त्वियम् । तथापि 'अतोऽन्यनामधेयं तु वाचारम्भणहेतुतः । साङ्केत्येन विकारः स्यादि'ति छान्दोग्यभाष्योदाहृतप्रमाणसूचितेयं योजनेति द्रष्टव्यम् । **तदा तु लिङ्गव्यत्यासेति** । आद्ययोजनायामारम्भणशब्दस्य विकाराविशेषणत्वात् । द्वितीययोजनायां 'वेदाः प्रमाणमि'तिवदुद्देश्यविधेयभावस्य विवक्षितत्वात् । उभयत्रापि बहुव्रीहित्वाभावेन आरम्भणशब्दस्य भावे ल्युडन्तस्य नियतलिङ्गत्वाच्च न लिङ्गव्यत्यासशङ्काऽवकाश इत्यर्थः ।





**वं०प०— लिङ्गेति** । वाचारम्भणशब्दस्य बहुव्रीहित्वाद्बहुव्रीह्यन्तस्य विशेष्यनिघ्नत्वात् विशेष्यभूतविकारशब्दस्य पुल्लिङ्गत्वात् तद्विशेषणीभूते वाचारम्भणशब्दे पुल्लिङ्गतैव स्यादिति भावः । **विशेष्यनिघ्नत्वादिति** । निघ्नः = अधीनः । 'अधीनो निघ्न आयत्तः' इत्यमरः । तथा च वाचारम्भणशब्दस्य नामधेयविशेषणत्वेन विकारविशेषणत्वाभावात् तस्य च नपुंसकलिङ्गत्वात् तदनुसारेण वाचारम्भणशब्दे नपुंसकता युक्तेति ध्येयम् । **अत एवेति** । साङ्केत्यापरपर्यायवाचारम्भणशब्दस्य नामधेयविशेषणत्वप्रदर्शनार्थमेवेत्यर्थः । **यदा त्विति** । पक्षद्वयेऽपि वाचारम्भणमिति भिन्नमेव पदं, न नामधेयविशेषणम् । तर्हि वाचा वागिन्द्रियेण आरम्भणमुत्पादनं कस्येति शङ्का स्यात् तदर्थं यस्य नाम्न इत्यध्याहृतम् । ननु वाचारम्भणं यस्य तन्नामधेयमित्युक्त्या जनिमत्त्वस्य प्राप्तत्वात् विकारेण पौनरुक्त्यमिति शङ्का स्यादेव इति चेन्न । वाचा आरम्भणं यस्य तन्नामधेयमित्यस्य साङ्केतिकं नामेति पूर्ववदर्थकरणात् । पूर्वयोजनाया भेदस्तु भिन्नपदत्वमङ्गीकृत्यैवेति ध्येयम् । यद्वा विकारो जनिमत् । कुतः । यतो वागिन्द्रियेणोत्पद्यत इति सामान्यविशेषभावेनापौनरुक्त्यं ध्येयम् । **वाचा नाम्नामिति** । मृत्तिकेति नामधेयं सत्यमिति नामधेयपदस्योत्तरत्रैवान्वयः । अत्रापि भिन्नमेव पदम्, वाचा आरम्भणमुत्पादनं केषामिति शङ्कायां नाम्नामित्यध्याहृतम् । उत्पादनस्य विविधाकारवत्त्वेन विविधाकारत्वं कथमित्यतोऽभेदादित्युक्तम् । आकारेत्यारभ्य यावदित्यन्तं विक्रियमाण इति छान्दोग्यभाष्योक्तविवरणरूपम् । ततश्च वाचा वागिन्द्रियेण नाम्नामारम्भणमुत्पादनं विविधप्रकार इति योजना । **शङ्कैव नास्तीति** । पूर्वं वाचारम्भणशब्दस्य भावे ल्युडन्तत्वेऽपि समस्तपदत्वं बहुव्रीहित्वं चाङ्गीकृतमिति लिङ्गव्यत्यासशङ्काऽभूत् । ग्रन्थान्तरोक्तयोजनाद्वये तु वाचा आरम्भणमिति पदद्वयाङ्गीकारेण समासस्यैवाभावेन बहुव्रीहित्वस्यैवाभावाद्भावे ल्युडन्तस्य नियतनपुंसकत्वाच्च लिङ्गव्यत्यासशङ्कैव नास्तीति द्रष्टव्यम् ।

**आनन्दः—** ननु विकारशब्दस्य विशेष्यत्वाद्विशेषणस्य वाचारम्भणशब्दस्य पुल्लिङ्गत्वमेव स्यात् विशेषाणां च विशेष्यलिङ्गत्वस्य नियतत्वात् । तथा च नपुंसकमनुपपन्नमित्याशङ्क्याह **विशेष्यनिघ्नत्वादिति** । विशेष्याधीनत्वादित्यर्थः । **अत एवेति** । वाचारम्भणमित्यस्य नामधेयविशेषणत्वादेवेत्यर्थः । यदा त्वित्यादिपक्षद्वयेऽपि विशेषणविशेष्यभावाभावान्नेयं शङ्केति भावः । नन्वारम्भणशब्दोक्तोच्चारणस्य विविधाकारत्वं नोपपद्यते इत्यत आह **आकारेति** ।

**शे०वा०—** ननु विकारशब्दार्थभूतस्य बहुविधत्वस्य वैदिकनामसाधारणत्वात् कथं तदर्थभूतविकृतत्वोपपादकत्वं, कथं च वैदिकत्वस्य सत्यशब्दार्थभूतनित्यत्वोपपादकत्वमित्यतः तदुभयं प्रदर्शयन्नेव समग्रवाक्ययोजनां दर्शयति **ततश्चेति** । **तत एवेति** । उत्पत्तिमत्त्वादेवेत्यर्थः । उत्पत्तिमतो भावस्य विनाशित्वनियमादिति भावः । स्यादेवमुत्पत्तिमत्त्वेन विनाशित्वसिद्धिः यद्युत्पत्तिमत्त्वमेव सिद्धं स्यात् । न चैतदस्ति । साधकाभावादित्याक्षिपति **कृत इति** । तदुत्तरत्वेन विकारशब्दार्थान्तरं हेतुतया योजयति **बह्विति** । वैदिकनामसाधारणत्वान्न तस्य तत्साधकत्वमित्यतो नात्रानेकप्रकारत्वमात्रं तद्विवक्षितं येन





वैदिकनामसाधारण्यं स्यात् । किन्तु पुरुषेच्छानुसारेण अनेकप्रकारत्वमेव । **तच्च** न वैदिकनामसाधारणमिति नोक्तानुपपत्तिरित्याशयेनाह **पुरुषेच्छेति** । **अनादि चेति** । अत्रापि तत एवेति वर्तते । नित्यत्वादेव अनादित्वं वैदिकनाम्न इत्यर्थः । नित्यभावस्य अनादित्वनियमादिति भावः । भाष्ये **साङ्केत्यमित्येतावता** वाचारम्भण-शब्दतात्पर्यार्थनिरूपणात् नामग्रहणानर्थक्यमित्यतो लिङ्गवैषम्यदोषशङ्कानिरासार्थत्वान्नानर्थक्यमित्याशयेन नाम-ग्रहणव्यावर्त्यतया लिङ्गवैषम्यदोषशङ्कामुत्थापयति **न चेति** । **इतीति** । इति योजनायामित्यर्थः । वाचारम्भणमित्यस्य नपुंसकलिङ्गत्वात् विकार इत्यस्य च पुल्लिङ्गतया **भिन्न**लिङ्गत्वादिति भावः । स्यादेतदेवं यदि वाचारम्भणं विकार इति योजना अत्र विवक्षिता स्यात् । न चैवम् । **किं नाम** वाचारम्भणं नामधेयं विकार इत्येव । तथा च वाचारम्भणनामधेयशब्दयोः नपुंसकलिङ्गतया समानलिङ्गत्वा**न्न वैषम्यदोष** इत्याशयेन समाधत्ते **वाचारम्भणशब्दस्येति** । नन्वेवं वाचारम्भणशब्दस्य नामधेयविशेषणतया लिङ्गवैषम्यदोषाभावेऽपि, नामधेयं विकारः, इति योजनायां तद्दोषतादवस्थ्यमित्यत उक्तं **नामधेयविकारशब्दयोरिति** । तथा च उद्देश्यलिङ्गत्वं न विधेयस्य सार्वत्रिकं, किन्तु अनियतलिङ्गविषयकमेव । विकारशब्दस्य च नियतलिङ्गत्वात् न उद्देश्य-लिङ्गत्वमिति भावः । **वाचा यस्येति** । यद्यपि वाचा नाम्नामिति **द्वितीययोजनैव** अन्यत्र दृश्यते न त्वियम्, तथापि 'अतोऽन्यन्नामधेयं तु वाचारम्भणहेतुतः । साङ्केत्येन विकारः **स्यात्**' इति छान्दोग्यभाष्योदाहृत-प्रमाणानुसारेण इयमपि योजना तत्राभिप्रेतेति युक्तमस्याः समाश्रयणेन **लिङ्गवैषम्यदोष**परिहरणमिति ध्येयम् । **तदा लिङ्गव्यत्यासशङ्कैवेति** । आद्ययोजनायामारम्भणशब्दस्य नामधेयविशेषणतया विकारविशेषणत्वाभावात् द्वितीययोजनायां वेदाः प्रमाणमितिवदुद्देश्यविधेयभावस्य विवक्षितत्वात् पक्षद्वयेऽपि बहुव्रीहित्वाभावेनारम्भण-शब्दस्य भावे ल्युडन्तस्य नियतलिङ्गत्वेन विशेष्यलिङ्गतानियमाभावाच्च न लिङ्गव्यत्यासदोषावकाश इति भावः ।

**वा०र०— अर्थान्तरमिति** । बह्वित्यनेनोक्तमर्थान्तरमित्यर्थः । न तस्येत्यत्र तस्येत्यस्य बहुविध-स्येत्यर्थः । नित्यभावस्येत्यत्र ध्वंसव्यावृत्त्यर्थं भावपदम् । नामधेयेति वाक्यानन्तरं वाचारम्भणेति वाक्यस्य सत्त्वेऽपि पूर्ववाक्यार्थस्याकाङ्क्षानुसारेण पश्चादेव वक्तव्यत्वमित्याशयेनोत्तरवाक्यमेव प्रथमतो लिङ्गवैषम्यदोष-शङ्कानिरासकतया अवतारयति **स्यादेतदेवमिति** । न चोक्तयोजनायामपि लिङ्गवैषम्यदोषावकाशोऽस्ति । स हि वाचारम्भणं नामधेयमित्येतदंशे वा नामधेयं विकार इत्यंशे वेति विकल्पमभिप्रेत्याद्ये तावत् स दोषो नायातीत्येतदर्थकतया वाचारम्भणशब्दस्य चेति वाक्यं योजयति । **तथा च वाचारम्भणेति** । नामधेयं विकार इत्येतदंशे लिङ्गवैषम्यदोष इति द्वयमुत्थाप्य तत्रापि स दोषो नास्तीत्यर्थकतया नामधेयेत्याद्यवाक्यं योजयति **नन्वेवमित्यादिना** । **तद्दोषेति** । नामधेयशब्दस्य नपुंसकलिङ्गत्वाद्विकारशब्दस्य पुल्लिङ्गत्वाद्विधेयस्य चोद्देश्यलिङ्गत्वनियमाल्लिङ्गवैषम्यरूपदोषतादवस्थ्यमित्यर्थः । वेदाः प्रमाणमितिवदुद्देश्यविधेयभावव्यत्यासपक्षस्तु उत्तरत्र समाधानतया वक्ष्यत इत्यदोषः । यद्वाचारम्भणं स विकार इति योजनायामपि उद्दिश्यमानं प्रति





निर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि क्रमेण तल्लिङ्गभाञ्जि भवन्तीत्यादेर्जिज्ञासाधिकरणीयब्रह्मशब्दार्थः स एवैतन्मूलटीकायामुक्तत्वात् तदनुसारेणात्र समाधानयोजना कार्यास्ति ।

उभयोर्नियतलिङ्गत्वकथनस्य प्रकृते उपयोगाभावमन्वानः विकारशब्दांशे तदुपयोगाभिप्रायं दर्शयन्नियतलिङ्गत्वसाध्यं प्रमेयं च दर्शयति **तथा चेति** । **नियतलिङ्गत्वादिति** । तथा च तच्छब्दस्य पुल्लिङ्गत्वेऽपि नानुपपत्तिरिति हृदयम् । **न त्वियमिति** । वाचा यस्येत्यादिका जनिमदितीत्यन्ता प्रथमयोजनेत्यर्थः । छान्दोग्येत्यनेन मूलस्थग्रन्थान्तरपदं व्याख्यातं भवति **प्रमाणेति** । तथा चाद्या प्रमाणसूचिता । द्वितीया स्वमुखोक्ता । भाष्येऽपि प्रमाणोदाहरणं योजनान्तरसूचनायैवेति न दोष इत्युक्तं भवति । **दोषपरिहरणमिति** । दोषस्यानवकाशेन परिहरणमित्यर्थः । विकारपदस्य प्रकृतबहुविधत्वार्थत्वं सिद्धं कृत्वा विकार इत्येवोक्तं मूले **आकाराकारिणोरिति** । द्वितीययोजनास्थमुपपादनमत्रापि योज्यम् । पूर्वयोजनायां यस्येत्यध्याहृत्य नामधेयविशेषणताश्रयणेनैतत्सामानाधिकरण्यमुपपाद्यं विकारपदेन नामधेयपदस्य सामानाधिकरण्यं तु विधिप्रकारवत्वार्थकत्वेन युक्तम् । द्वितीययोजनां तु वाचेति भिन्नपदमङ्गीकृत्य नामधेयपदमहिम्ना नाम्नामिति पदलाभमङ्गीकृत्यारम्भणपदेन क्रियैव गृहीताविकारपदस्य च पूर्वोक्त एवार्थ इति भेदो ज्ञेयः । **पक्षद्वयेऽपीति** । यस्येत्यध्याहारे वा नाम्नामारम्भणमिति योजनायां वेत्यर्थः । बहुव्रीहेर्विशेष्यलिङ्गत्वनियमेऽपीति शेषः ।

**स०व्र०— लिङ्गवैषम्यदोष इति** । विशेष्यविकारशब्दस्य पुंलिङ्गत्वात् तद्विशेषणबहुव्रीहिभूतवाचारम्भणशब्देऽपि पुल्लिङ्गतैव स्यादिति भावः । **तदा लिङ्गव्यत्यासशङ्कैव नेति** । आद्ययोजनायां आरम्भणशब्दस्य भावे ल्युट्त्वेन नियतलिङ्गत्वान्न लिङ्गव्यत्यासशङ्कावकाश इति भावः ।

**चषकः— लिङ्गवैषम्यमिति** । विशेष्यवाचकस्य विकारशब्दस्य पुल्लिङ्गत्वात् विशेषणे कृतबहुव्रीहिंवाचारम्भणशब्देऽपि पुल्लिङ्गतैवेति भावः । **नामधेयविकारशब्दयोरिति** । तथा च उद्देश्यवाचकसमानलिङ्गवचनकत्वं विधेयवाचकस्य अनियतलिङ्गविषयमिति भावः ।

**१९३ सु०— ननु च साङ्केतिकनाम्नामुत्पत्तिविनाशवत्त्वं संस्कृतनाम्नामनादिनित्यत्वं किमर्थमत्रोच्यते; परमप्रकृते ब्रह्मविज्ञानेन सर्वविज्ञानेऽवान्तरप्रकृतेऽस्माकमिव दृष्टान्ते (वो)चोपयोगाभावात् । अतोऽसङ्गतत्वान्नायं श्रुत्यर्थ इति । मैवम् । यद्यपि परस्यैव नेदं दृष्टान्तोपपादकम्, तथाऽपि ब्रह्मज्ञानेन सर्वविज्ञाने दृष्टान्तान्तरतयोपयोक्ष्यते; यथा तेन तद्विज्ञातं स्यादिति, प्रकृतानुवृत्तेरित्याशयवानाह प्राधान्यादिति ।**

**अनु०— प्राधान्यात्तत्परिज्ञानात्प्राकृताज्ञोऽपि पूरुषः ॥**
**विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ।**





इदमुक्तं भवति । कृतकत्वादनित्यत्वाच्च परापेक्षत्वेन साङ्केतिकं नामाप्रधानम्, अनादिनित्यत्वात्परानपेक्षत्वेन संस्कृतं प्रधानम् । तत्र यथा **प्राधान्यात्** संस्कृतज्ञानमात्रेण साङ्केतिकं ज्ञातं भवति, तज्ज्ञानेन यत्फलं विद्वद्व्यवहारगोचरत्वादिकं तद्भवतीति यावत्; एवमनित्यत्वादिनाऽप्रधानस्य देवताकर्मादिमिश्रस्य सकलस्यापि जगतो ज्ञानेन यत्फलं तत्समस्तमपि नित्यत्वादिना प्रधानस्य परमात्मनो ज्ञानाल्लभ्यते, तत्फलेऽन्तर्भवतीति । अत्र **प्राकृताज्ञोऽपि** इत्यनेन फलापेक्षयेदमिति सूचितं (भवति) ।

एवं तर्ह्येकविज्ञानेन सर्वविज्ञानममुख्यं स्यादिति चेत् । सत्यम् । न हि परेणापि तन्मुख्यं व्याख्यातुं शक्यम्, तथा सति दृष्टमृदः पुरुषस्य घटशरावादिसंस्थानविशेषादि-जिज्ञासाऽभावप्रसङ्गात् ।

पामरा न हि विद्वानिति वदन्ति, अतः **सद्भिः** इत्युक्तम् ।

एवं **नित्यपरात्मवित्** इति वाक्यस्योक्तानुसारेण शेषो ज्ञातव्यः ।

**परि०— अस्माकमिवेति** । अद्वैतवादिनामिवेत्यर्थः । व्यक्तमेतत् यतो वाचारम्भण-मित्यादिपूर्वग्रन्थे । ननु, यथा सोम्य संस्कृतेन विज्ञातेन सर्वं साङ्केतिकं विज्ञातं स्यादिति दृष्टान्तत्वद्योतकपदानामभावात् कथं दृष्टान्तान्तरतयोपयुज्यत इत्यत आह **यथेति** । **प्रकृतेति** । प्रकरणप्राप्तेत्यर्थः । **फलापेक्षयेदमितीति** । संस्कृतज्ञानेन साङ्केतिकं ज्ञातं भवतीत्येतदित्यर्थः । यद्वा प्रधानज्ञानादप्रधानं ज्ञातं भवतीत्येतदित्यर्थः । **उक्तानुसारेण शेषो ज्ञातव्य इति** । अप्रधान-देवताकर्माद्यज्ञोऽपि तत्तज्ज्ञानफलं समस्तं लभत इति शेषो ध्येय इत्यर्थः ।

**गु०दी०— विद्वद्व्यवहारगोचरत्वादिकम्** इत्यत्र विद्वानिति व्यवहारगोचरत्वमित्यर्थः । 'सर्वस्य सोऽन्यतरस्यां दी'ति सूत्रस्यायमर्थः । दि दकारे परतः सर्वस्य सर्वपदस्य अन्यतरस्यां सकारः स्यात् । तथा च कदाचित्सर्वदेति प्रयोगो भवति । कदाचित् तस्मिन्नेवार्थे सदेत्यपि प्रयोगो भवतीति । अस्य च सत्यपदनिर्वचने नोपयोगः । अतस्सोऽन्यतरस्यामित्यस्मात्सूत्राद्योगविभागं कृत्वा सदाशब्दस्य सकारस्या-दित्यर्थकथने सत्यमिति शब्दनिष्पत्तिर्भवतीति भावः ।

**यादु०— फलापेक्षयेति** । अन्यथा साङ्केतिकं ज्ञातं भवतीति वचनापर्यवसानादिति भावः । **सूचितमिति** । उपपादितमित्यर्थः । **उक्तानुसारेणेति** । 'एवं नित्यपरात्मविदि'त्यनन्तरमप्रधानदेवताकर्मा-द्यज्ञोऽपि स्वर्गादिफलभागित्युच्यते सद्भिरिति शेषो ज्ञातव्य इत्यर्थः ।





**वं०प०**— ननु दृष्टान्तान्तरज्ञापकं नास्तीति चेत् तत्राह **यथा तेनेति** । **परेति** । कारणेत्यर्थः । **तज्ज्ञानेन** साङ्केतिकज्ञानेन । ननु साङ्केतिकं ज्ञातफलकं भवतीति फलपर्यन्तं कस्माद्व्याख्यायते । मूले ज्ञापकाभावादित्यत आह **अत्रेति** । तथा च संस्कृतनामपरिज्ञानमात्रेण अयं विद्वानित्युच्यत इत्युक्तौ कथं विद्वान् भविष्यति प्राकृतभाषाऽपरिज्ञानादित्यतः प्राकृताज्ञोऽपीत्युक्तम् । तथापि कथम् । **विद्वानित्युच्यते** । प्राकृतभाषाज्ञानाभावेऽपि अयं विद्वानित्युच्यत एव । प्राकृतभाषापरिज्ञानेन यत्फलं विद्वद्व्यवहारगोचरत्वादिकं तस्य अनेनैव लाभादिति सूचितमिति भावः । अमुख्यं फलापेक्षया व्याख्यानादिति भावः ।

**आनन्दः**— **अस्माकमिवेति** । दृष्टान्तोपपादकत्वेन मन्मते उपयो(?) नैवं भवन्मते इति भावः । ननु यथेत्यादि दृष्टान्तस्य ज्ञापकाभावान्न तत्त्वमित्यत आह **यथेति** । नन्वस्मिन्वाक्ये संस्कृतनाम्नामनादि-नित्यत्वं प्राकृतनाम्नां सादिविनाशित्वं चोक्तम् । ननु प्राधान्यमिति कथं ब्रह्मविज्ञानेन सर्वविज्ञानेऽयं दृष्टान्त इत्यत आह **इदमुक्तं भवतीति** । मुख्यार्थासम्भवादाह **तज्ज्ञानेनेति** । ननु विज्ञानं भवतीत्यस्य विज्ञातफलं भवतीति व्याख्यानमयुक्तम् । मूलकारीयज्ञापकाभावेन निर्मूलत्वादित्यत आह **अत्रेति** । कुतो नेत्यत आह **तथा सतीति** । **एवं नित्येति** । नित्यपरात्मवित् प्राकृताज्ञापि सद्भिर्विद्वानित्युच्यते । तथा चाकार्य-मेकतादिज्ञानेन यत्फलं तद्वान् भवतीत्येवं ज्ञातव्य इत्यर्थः ।

**श्रीनिधि०**— **शेषो ज्ञातव्य इति** । अनित्यत्वादिना अप्रधानस्य देवताकर्मादिमिश्रस्य जगतो ज्ञानेन यत्फलं तल्लभत इति शेष इत्यर्थः ।

**शे०वा०**— ननु प्राधान्यादित्युत्तरभाष्यमनर्थकमित्यतः स्वाभिहितस्य वाचारम्भणश्रुत्यर्थस्य प्रकृत-सङ्गतिप्रदर्शनेन श्रुत्यर्थसमर्थनार्थत्वान्नानर्थक्यमित्याशयेन स्वाभिहिते श्रुत्यर्थेऽसङ्गतिशङ्कामुत्थापयति **नन्विति** । साङ्केतिकनामादेरुत्पत्त्यादिप्रतिपादनस्योपयोगो भवन् किं परमप्रकृते वाऽवान्तरप्रकृते वेति विकल्पं मनसि निधाय पक्षद्वयं प्रत्याह **परमप्रकृत इति** । अवान्तरप्रकृते दृष्टान्तेऽस्माकं तदुपपादकतया यथाऽस्त्युपयोगो न तथा भवन्मत इति योजना । परमप्रकृते ब्रह्मविज्ञानेन सर्वविज्ञान एव दृष्टान्ततयोपयोगान्नासङ्गतिः । एतावान्परं विशेषः । परमतेऽवान्तरप्रकृते दृष्टान्ते उपयोगोऽस्माकं तु परमप्रकृत एवेति नानुपपत्तिरित्याशयेनाह **मैव-मिति** । ननु 'यथा सोम्यैकेन मृत्पिण्डेने'त्यादिनैव अन्यज्ञानेनान्यज्ञानं भवतीत्यर्थाभिधायिना ब्रह्मज्ञानेन सर्वज्ञानासम्भवशङ्कायाः परिहारान्न दृष्टान्ततया तत्रास्योपयोग इत्यतो दृष्टान्तान्तरतयेत्युक्तम् । ननु यथेत्यादि-दृष्टान्तत्वगमकपदसन्दर्भबलात् पूर्वस्य दृष्टान्ततया रमप्रकृते ब्रह्मज्ञानेन सर्वविज्ञाने उपयोगसम्भवेऽपि वाचा-रम्भणवाक्यस्य दृष्टान्तावगमकपदसन्दर्भबलहीनस्य न तत्र दृष्टान्ततयोपयोगो युक्त इत्यतस्तनूर्वर्षिष्ठेत्यादिवत् प्रकृतस्य यथा सोम्येत्यादेरनुषङ्गाद्युक्तमस्यापि दृष्टान्तगमकत्वमित्याशयेनाह **यथेत्यादि** । ननु संस्कृतज्ञानेन साङ्केतिकज्ञानस्य मुख्यस्यैव व्याख्यातुं शक्यत्वात् तज्ज्ञानेन यत्फलं तत्संस्कृतज्ञानेन भवतीत्युपचरिततया तद्व्याख्याने न किमपि निमित्तमित्यतः प्राकृताज्ञ इत्यनेन साङ्केतिकाज्ञस्य स्पष्टमभिहितत्वेन मुख्यस्य





तज्ज्ञानस्यानुपपत्तेः तथा व्याख्यानमावश्यकमेवेत्याह **अत्रेति** । नन्वेकविज्ञानेन सर्वविज्ञाने मुख्ये सम्भवति अमुख्यतदाश्रयणं दोष इत्याशङ्कते **एवमिति** । मुख्यत्वे बाधकसद्भावाद्युक्तं तदाश्रयणमित्याशयेन न च मृन्मात्रविज्ञानात् घटशरावादिसंस्थाविशेषा विज्ञाता भवन्ति मुख्यतः, तथा सति दृष्टमृदः पुरुषस्य घटशरावादिजिज्ञासा न स्यादिति बृहद्भाष्यं मनसि निधायाह **न हीति** । **जिज्ञासाऽभावप्रसङ्गादिति** । ज्ञाते जिज्ञासाविरहादिति भावः । **उक्तानुसारेणेति** । एवं नित्यपरात्मविदित्यनन्तरं देवताकर्मादिसकलजगदज्ञोऽपि स्वर्गादिफलभागित्युच्यते सद्भिरिति शेषो ज्ञातव्य इत्यर्थः ।

**वा०र०— साङ्केतिकनामादे**ः इति आदिपदेन संस्कृतनामपरिग्रहः । उत्पत्त्यादीत्यादिपदेन विनाऽस्यैव संस्कृतनामगतोऽनादिनित्यत्वपरिग्रहः । **पक्षद्वयमिति** । पक्षद्वयमपीत्यर्थः । परमप्रकृते ब्रह्मविज्ञानेन सर्वविज्ञाने उपयोगाभावादिति योजनायाः स्पष्टत्वात्तामनुपदृश्यावान्तरप्रकृते दृष्टान्ते अस्माकमिवेति सम्बन्धं दर्शयन् व्यतिरेकदृष्टान्तोऽयमित्याह **अवान्तरेति** । **परमेति** । अनेन तथापीत्यनन्तरं शङ्कानुसारेणानुवादत्वं घटितं भवति । अस्माकमिवेत्युक्तमप्रयोजकतया **दर्शितमेतावानित्यादिना** । **इत्यादिनैवेति** । इत्यादि दृष्टान्तत्रय-प्रतिपादकवाक्यजातेनेत्यर्थः । मृत्पिण्डादिज्ञानेन मृन्मयादिज्ञानस्य सङ्ग्रहायान्येति सामान्येनोक्तम् । अन्य-ज्ञानेनान्यज्ञाने दृष्टान्तप्रतिपादनमुखेति यावत् । असम्भवेनेत्यनेन दृष्टान्तकथनमसम्भवशङ्कावारणायेति ध्वनितं भवति । एकविज्ञानेन सर्वविज्ञानमिति न्यायामृतानुसारेणोक्तम् । **तनूर्वर्षिष्ठेत्यादिवदिति** । यथा हि 'यातेऽग्नेऽयाशया तनूर्वर्षिष्ठा गव्हरेष्ठोग्रं वाचो अपावधीꣳस्वाहा याते अग्ने हराशया यातेऽग्निरजाशयेति वाक्ये याते अग्नेऽयाशयेत्यस्य तनूर्वर्षिष्ठेत्यादि शेषयुक्तस्य सम्पूर्णत्वेऽपि यातेऽग्ने हराशयेत्यादिद्वयस्य शेषाभावेन अपूर्णत्वमित्याशङ्कायां प्रथमवाक्यशेषभूतस्यैव तनूर्वर्षिष्ठेत्यादेर्यातेऽग्ने हरेत्याद्युत्तरवाक्यद्वयशेषताया अभ्युप-गमान्नापूर्णत्वं यथा चेत्तथा ............धिकरणे निरूपितम् । तथा हि । न्यायामृतटीकानुसारेण लेख्यमस्ति । तथा च तदधिकरणोक्तप्रकारेण प्रकृतस्य तनूर्वर्षिष्ठेत्यादेरुत्तरवाक्येऽनुषङ्गो यथा तथेत्यर्थः । **प्रकृतस्येति** । यथा सोम्यैकेन मृत्पिण्डेनेत्येतच्छेषभूत यथा सोम्य तेन तद्विज्ञातं स्यादित्यंशस्य वाचारम्भणं विकारो नामधेयमित्येतच्छेषत्वस्याप्यभ्युपगमात् यथा सोम्य वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं तेन तद्विज्ञातं स्यादिति वाक्यपरिनिष्पत्तेः युक्तम् एतद्वाक्यस्यापि ब्रह्मविज्ञानेन सर्वविज्ञाने दृष्टान्तगमकत्वमित्यर्थः । अत्र कश्चन विशेषस्तत्त्वोद्योतटीकाव्याख्यानप्रपञ्चेऽस्माभिर्निरूपितानुसारेण ज्ञेयः ।

अनुषङ्गादित्यनेन अनुवृत्तिर्मूलोक्ता व्याख्याता । निमित्तमित्यत इत्यस्य मुख्यस्य तज्ज्ञानस्यानुप-पत्तेरित्युत्तरेण सम्बन्धः । **अनुपपत्ते**ः इत्यस्य च अनुपपत्तिरूपनिमित्तादित्यर्थः । उक्तनिमित्तस्य भाष्यकृता-नभिधानमिति न मन्तव्यमित्याशयेनोक्तं **प्राकृताज्ञ इत्यनेनेत्यादि** । अनेनैव प्राकृताज्ञ इति भाष्ये अस्पष्ट-मभिधानेन सूचितान्मुख्यस्य तज्ज्ञानस्यानुपपत्तिरूपनिमित्तादित्युक्तं भवति । एतेन भाष्यकारीयमभिधानं न साक्षान्निमित्तमित्यपि परास्तम् । तदभिधानोक्तेर्निमित्ततयानुशङ्कानिवारणार्थं भाष्यकृता निमित्ततया सूचन-मस्तीत्यर्थकत्वेन निमित्तोक्तौ तात्पर्याभावादिति ज्ञेयम् । **बृहद्भाष्यमिति** । तृतीयाध्यायगतमिति शेषः ।





प्राकृतनामप्रतियोगिसंस्कृतनामस्थाने नित्यपरात्मनो गृहीतत्वेऽपि प्राकृतनामादिस्थानीयस्यानुक्तिरेवेत्यतो मूले एवं नित्येति वाक्यं प्रवृत्तम् । तत्रोक्तानुसारेणेति पदसूचितशेषविशेषलाभं दर्शयति **एवं नित्येति** । एवं च प्राकृतस्थाने देवताकर्मादिविद्वत्पदस्थाने स्वर्गादिफलभागितीत्युक्तं भवति ।

**स०व्र०— उक्तानुसारेण शेषो ज्ञातव्य इति** । 'एवं नित्यपरात्मविदि'त्यनन्तरं अप्रधानदेवता-कर्माद्यज्ञोऽपि तज्ज्ञानसाध्यफलवान् भवतीति वाक्यशेषो ज्ञातव्य इत्यर्थः ।

**विट्ठल०—** एष चेति सम्बन्धे चशब्दोऽनुक्तसमुच्चयार्थ इति भावेनाह **तेनेति** । अग्न्यादिदेवानां मुख्यतोऽग्नित्वाभावकथनमित्यर्थः ।

**॥ इति वाचारम्भण-विकार-शब्दार्थयोर्योजना ॥**

* * *

**॥ तत्र 'सत्य'शब्दस्य 'नित्य'-अर्थत्वोपपादनम् ॥**
**॥ तत्रादौ योगदर्शनम् ॥**

१९४ **सु०—** ननु सत्यशब्दः कथं नित्यार्थः, रूढेर्योगस्य चाभावादित्यतो योगं तावत् दर्शयति **सदातनमिति ।**

## अनु०— सदातनं सत्यमिति नित्यमेवोच्यते बुधैः ॥

**सत्यमिति** इत्यावर्तनीयम् । सदातनं सत्यमिति निर्वचनेन सत्यमिति पदेन नित्य-मुच्यत एव, न तूपचर्यत इति । **बुधैः** वैयाकरणैरिति निर्वचनमूलं सूचयति ।

सदाशब्दात्तत्र भव इत्यर्थे 'अव्ययात्त्यप्' इति त्यप्प्रत्यये कृते 'सर्वस्य सोऽन्य-तरस्यां दि' इत्यत्र योगविभागात्सदाशब्दस्य सोऽन्यतरस्यां भवति । सदाशब्दाद्भवार्थे तद्धिता इति ड्यप्रत्ययो वोत्पाद्यः । दकारस्य च तकारः ।

**परि०—** ननु सर्वशब्दस्य दकारादौ प्रत्यये परतः सादेशो विकल्पेन विहितः सदा सर्वदेति रूपसिद्ध्यर्थम् । तत्कथमिहास्य सदाशब्दस्य विकल्पेन सादेशो भवति । स्थाननिमित्तयोरभावा-दित्यत आह **योगविभागादिति** । सोऽन्यतरस्यामित्येको योगः । सादेशो विकल्पेन भवतीष्टविषय





इति तदर्थो ध्येय इति भावः । अव्ययात्त्यबिति चतुर्थाध्यायद्वितीयपादीयसूत्रे 'अमेहक्कतसित्रेभ्यः' इति त्यपो वार्तिककारादिभिर्नियमितत्वात् योगविभागस्य क्लिष्टत्वाच्च पक्षान्तरमाह **सदाशब्दादिति । तद्धिता इतीति** । यद्यपि चतुर्थाद्यपादे तद्धिता इति सूत्रं तत् आपञ्चमाध्यायपरिसमाप्ति अधिकारार्थम् । तथापि 'प्रत्ययः, परश्च' इत्यादाविव तद्धित इत्येव वक्तव्ये बहुवचनमनुक्ततद्धितपरिग्रहार्थमिति वृत्त्यादावुक्तत्वात् ड्यप्रत्यय इत्युक्तम् । डित्वाट्टिलोप इति भावः ।

**यादु०**— अमेहक्कतसित्रेभ्य एवेत्यपो नियमितत्वात् योगविभागस्य च अगतिकागतित्वात् प्रकारान्तरमाह **सदाशब्दादिति** । **तद्धिता इति** । बहुवचनस्यानुक्तप्रत्ययसङ्ग्राहकत्वादिति भावः । नन्वेवं टिलोपे सद्यमिति रूपं स्यादित्यत आह **दकारस्य चेति** । निर्वचनत्वादिति भावः ।

**वं०प०**— **सदाशब्दादित्यादि** । तथा च सदाशब्दात् त्यप्प्रत्यये, सदाशब्दस्य सकारादेशे यकारलोपे सत्यमिति रूपम् । **तत्र** = सर्वकाले । **भवः** = स्थितः । ननु 'सर्वस्य सोऽन्यतरस्यामि'ति सर्वशब्दस्यैव सकारादेशविधानात् कथमनेन सदाशब्दस्य सादेश इत्यतो योगेत्युक्तम् । तथा च सर्वस्य सो भवतीत्येकं वाक्यम् अन्यस्यापि शब्दस्य सोऽन्यतरस्यां विकल्पेन भवतीत्यपरं वाक्यं कार्यमित्यर्थः । **ड्येति** । तथा च सदाऽस्मात् ड्यप्रत्यये टिभूतस्य दकारस्थाकारलोपे निर्वचनत्वात् दकारस्य तकारे सत् य सत्येति रूपम् ।

**श्रीनिधि०**— **दकारस्य तकाररूप इति** । यस्येति चेत्याकारलोप इति भावः ।

**शे०वा०**— **तावदिति** । प्रयोगश्चोत्तरत्रास्तीत्यादिना रूढेरपि दर्शयिष्यमाणत्वात् तावदित्युक्तम् । सत्यपदेन नित्यमुच्यत इत्यर्थस्य यथास्थितभाष्यादलाभात् तल्लाभायाह **सत्यमितीत्यावर्तनीयमिति** । यथास्थितस्यैवशब्दस्य व्यर्थत्वात् विरुद्धार्थत्वाच्च अपेक्षितसम्बन्धं तत्फलं च दर्शयन्नेवापेक्षिताध्याहारेण वाक्यं योजयति **सदातनमिति** । ननु सर्वस्य स इत्यादेशो भवत्यन्यतरस्यां दकारादौ प्रत्ययो परे इति ह्यस्य सूत्रस्यार्थः । तथा च सर्वशब्दस्य स इत्यादेशविधायकत्वात् अस्य कथं सदाशब्दस्य स इत्यादेशसिद्धिः । दकारादौ प्रत्यये परत एव तद्विधायकस्य कथमत्र तदभावेऽपि स इत्यादेशविधायकत्वमित्यत उक्तम् **अत्र योगविभागादिति** । 'अमेहक्कतसित्रेभ्यस्त्यप् विधिर्योऽव्ययात्स्मृत' इति वृत्तिकृताऽव्ययात् त्यपो नियमितत्वान्न सदाशब्दाद्भावार्थेऽनेन त्यप्विधानमाश्रयितुं युक्तम् । 'सर्वस्य सोऽन्यतरस्यां दि' इत्यत्र सदाशब्दस्य सोऽन्यतरस्यामिति योगविभागश्च न परेषां सम्मतो नापि तत्कल्पकं किञ्चित् वक्ष्यमाणरीत्या प्रयोगस्यान्यथोपपत्तेरित्यरुचिं मनसि निधाय पक्षान्तरमाह **सदाशब्दादिति** । तद्धिता इति बहुवचनस्यानुक्तप्रत्ययसङ्ग्राहकत्वाभिप्रायेणेदमुक्तमिति ध्येयम् । नन्वेवं टिलोपे सद्यमिति स्यात् सत्यमिति तु कथमित्यत आह **दकारस्य चेति** । निरुक्तत्वादिति भावः ।





**वा०र०—** **रूढेति** मूलम् । सत्यशब्दस्यानृतप्रतियोगिन्यबाध्यार्थ एव रूढत्वादिति भावः । **योगस्येति** । सदिति प्राणस्तीत्यन्नं यमित्यासावादित्य इत्यैतरेये त्रीण्यक्षराणि सन्ति यमिति तत्र यत्सदमृतं यत् ति तन्मर्त्यं तेनोभे यच्छतीति । केचन योगस्य कथनेऽपि सदातने तदभावादिति मूलार्थः । **अलाभादिति** सत्यपदेनेत्यस्याश्रवणादिति भावः । **आवर्तनीयमिति** मूलम् । आवृतस्य सत्यमितीत्यस्य सत्यमित्यनेनेत्यर्थ इति भावः । **व्यर्थत्वादिति** । नित्यमुच्यत इत्येतावतैव पूर्णत्वादित्याशयः । **विरुद्धत्वाच्चेति** । सत्य-शब्दस्योक्तरीत्या अर्थान्तरे रूढियोगयोः सत्त्वेन नित्यमेवेत्यवधारणस्य तद्विरुद्धत्वाच्चेत्यर्थः । विरुद्धत्वाच्चेत्यतःपरं यथास्थितसम्बन्धं परित्यज्येति शेषः । **अध्याहारेणेति** । निर्वचनेनेत्यध्याहारेणेदमुक्तम् । **अस्य सूत्रस्येति** । सर्वस्य स इत्युदाहृतसूत्रस्येत्यर्थः । अस्य विधायकत्वादिति पूर्वेणान्वयः । निमित्तान्तरेणापि तदादेशाभाव-मुपपादयति **दकारादाविति** । विधायकत्वं चेति पाठः स्वरसः । चशब्दाभावेऽपि वा तदर्थान्तर्भाविनैवार्थो ज्ञेयः । **अमेहेति** । योऽव्ययादभिहितः सोऽमादिभ्य एव स्मृत इत्यर्थः । अमाशब्दः समीपवाची स्वरादिः । समीपे भव अमात्य इति मञ्जर्याद्युक्तरीत्या श्लोकवार्तिकार्थः । इहत्य क्वत्यः ततत्यः तत्रत्य इत्युदाहरणानि च ज्ञेयानि । परेषां वैय्याकरणानाम् । ननु व्याकरणस्याभियुक्तप्रयोगसंरक्षणाय प्रवृत्तत्वात् सत्यमित्यस्य नित्यार्थे प्रयोगान्यथानुपपत्तिरेव योगविभागविकल्पिकेत्यत आह **वक्ष्यमाणेति** । ड्यत्प्रत्ययाश्रयणेन साधुत्वव्युत्पा-दनरीत्यर्थः । **अनुक्तेति** । प्रत्ययः परश्चेत्यादिवत्तद्धित इत्येके वचने प्रयोक्तव्ये यत्तद्धितेति बहुवचनं प्रयुक्तम् । तेन सूत्रकृतानुक्तानामपि प्रत्ययानां सङ्ग्रहोऽङ्गीकृतः । अत एवैतन्मूलक विचित्रा हि तद्धितगतिरिति ग्रन्थकाराणां वचनं चास्ति । तद्वचनाद्भावार्थे ड्यत्प्रत्ययो भवतीत्यभिप्रायेणेदमुक्तमित्यर्थः । **निरुक्तत्वादिति** । पृषोदरादीनि यथोपदिष्टमिति सूत्रीयवर्णागमे वर्णविपर्ययश्चेति पञ्चविधनिरुक्तप्रतिपादकश्लोकवार्तिकवाक्ये वर्णविकारप्रति-पादनादिति भावः ।

**स०व्र०—** अमेहक्वतसित्रेभ्य एवेति त्यपो नियमितत्वात् योगविभागस्य च अगतिकागतित्वात् प्रकारान्तरमाह **सदाशब्दाद्भवार्थ इति** । **तद्धिता इति** । बहुवचनस्यानुक्तप्रत्ययसङ्ग्राहकत्वादिति भावः । **दकारस्य च तकार इति** । निर्वचनत्वादिति भावः ।

**॥ इति योगदर्शनम् ॥**

* * *

**॥ ततो रूढिदर्शनम् ॥**

१९५ **सु०— इदानीं रूढिमपि दर्शयति प्रयोगश्चेति ।**

**अनु०— प्रयोगश्चोत्तरत्रास्ति**





**उत्तरत्र** अष्टमे प्रपाठ(घट्ट)के सत्यशब्दस्य नित्यत्व एव **प्रयोगश्च अस्ति** इति सम्बन्धः । तमेव प्रयोगं दर्शयितुं 'यदैनं जराऽवाप्नोति प्रध्वंसते वा किं ततोऽ(स्याति)वशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमि'ति वाक्यमर्थतः पठति **जरेति** ।

'जरा यद्येनमाप्नुयात् ।
देहः प्रध्वंसते चायं किं ततोऽस्याति(वि)शिष्यते ॥

हन्यते न वधेनायं जरया च न जीर्यते ।
एतत्सत्यं ब्रह्मपुरमि'ति नित्यत्व एव हि ॥

यदा **एनं** देहं **जरा** अवाप्नोति प्रध्वंसते **वाऽयं** देहः, (तदा) **ततः** तत् **अस्य** देहस्य अन्तर्गतः परमात्मा दह्यमानगेहान्तर्गतगगनवत् **किमतिशिष्यते** किंवा पटादिवन्नश्यतीति पृष्टे; **नास्य** देहस्य **जरयाऽयं** परमात्मा **जीर्यते**, **अस्य वधेन न हन्यते**, किन्तु **एतद्ब्रह्म** पूर्णत्वात् **पुरं सत्यं** नित्यमिति परिहारोऽभिधीयते । **इति**शब्दस्य पूर्वेणान्वयः ।

अत्रापि सत्यशब्दः कुतो नित्यार्थ इत्यत आह **नित्यत्व एव हीति** । अत्र सत्यशब्दो नित्यार्थश्चेत्सङ्गच्छते, विनाशस्य प्रकृतत्वात् । तथ्यार्थतायामसङ्गतिः, अनृतताया अप्रस्तुतत्वादिति **हि**शब्दार्थः । एतदेव स्पष्टीकर्तुम् 'एतत्सत्यं ब्रह्मपुरमि'-त्येतावति पठितव्ये पूर्ववाक्यमपि पठितम् । पूर्वेणैव सम्बन्धः ।

**परि०**— वाचारम्भणवाक्यस्य षष्ठप्रपाठकगतत्वात् तदुत्तरत्रेत्यस्य अत्रैवोपरीतिभ्रम-निरासाय अष्टमप्रपाठक इति व्याख्या कृता । **पूर्वेणान्वय इति** । प्रयोगश्च उत्तरत्रास्तीति पूर्वेणान्वय इत्यर्थः ।

**वं०प०**— **पूर्वेणेति** । इति प्रयोगोऽस्तीत्यन्वय इत्यर्थः । सत्यशब्दः तथ्यार्थकः किं न स्यादित्यत आह **तथ्येति** । तामेवोपपादयति **अनृताया इति** । **एतदेव** = अप्रस्तुतत्वमेव । **पूर्वेणैवेति** । नित्यत्व एव प्रयोगोऽस्तीत्येवमन्वय इत्यर्थः ।





**आनन्दः— इतिशब्दस्येति** । इत्युत्तरत्र प्रयोगोऽस्तीति सम्बन्ध इत्यर्थः । **एतदेवेति** । सत्यशब्दनित्यार्थत्वं स्पष्टीकर्तुमेवेत्यर्थः । **पूर्वेणैवेति** । नित्यत्व एव हि उत्तरत्र प्रयोगोऽस्तीति पूर्वेणेत्यर्थः । वाचारम्भणशब्दस्य रूढार्थत्वं विस्मृत्य यौगिकार्थभ्रमेण शङ्कते **न चेति** । शङ्कैव नास्तीति वाचारम्भणशब्दस्य विशेषणत्वेन तल्लिङ्गतापत्तिशङ्क्यैव नास्ति प्रथमपक्षे नामधेयविशेषणत्वस्य स्पष्टत्वात् द्वितीये च वाचारम्भण-शब्दस्यावशिष्टत्वाद्विकारशब्दस्य विशेषणत्वादित्यर्थः । नामधेयविकारशब्दयोरेव लिङ्गत्वं तु नियतलिङ्गत्वेन समाधेयं हि उत्तरत्र प्रयोगोऽस्तीति पूर्वेणेत्यर्थः । अत्र हि ब्रह्म जरावयवशून्यं सत्यत्वादित्यनुमानमभिप्रेतम् ।

**शे०वा०— इदानीमिति** । यद्यपि रूढियोगयो रूढेर्बलीयस्त्वात् सैवादौ दर्शनीया तथाप्यर्थ-विशेषप्रतिपत्तौ अन्तरङ्गत्वेन योगप्राबल्यमाश्रित्य स एवादौ दर्शित इत्यवधेयम् । **प्रपाठकः** अध्यायः । **इतिशब्दस्य पूर्वेणान्वय इति** । इति प्रयोगश्चोत्तरत्रास्तीति पूर्वेणान्वय इत्यर्थः । **पूर्वेणैव सम्बन्ध इति** । प्रयोगश्चोत्तरत्र अस्तीति पूर्वेणैव सम्बन्ध इत्यर्थः ।

**वा०र०— योगरूढयोरिति** । तयोर्मध्य इत्यर्थः । **अर्थविशेषेति** । नित्यरूपार्थेत्यर्थः । **अन्तरङ्ग-त्वेनेति** । प्रयोगस्योपपादनसापेक्षस्यैव नित्यार्थगमकत्ववद्योगस्य तत्सापेक्षस्य तद्गमकत्वाभावादिति भावः ।

**स०व्र०— उत्तरत्रेति** । वाचारम्भणवाक्यादुत्तरत्रेत्यर्थः ।

**॥ इति रूढिदर्शनम् ॥**

* * *

**॥ अथ तस्य उपपादनम् ॥**

**१९६ मु०— ब्रह्मणो जरावधयोरभावे सत्यत्वं हेतुत्वेनोच्यत इति चेत्, न, त्वया ब्रह्मव्यतिरिक्त(स्य)सत्यस्यानभ्युपग(मे)तत्वेनान्वयाभावात्, जराद्युपेतानां देहानामसत्यत्व-स्यासिद्धेः, असत्यानां च शुक्तिरजतादीनां जराद्यभावेन व्यतिरेकस्याप्यभावात् ।**

**ननु तथाऽपि वाचारम्भणवाक्यं त्रिवारं कस्मात्पठ्यते । शब्दान्तरं दृष्टान्तीकर्तुमिति ब्रूमः । तर्हि षडेते दृष्टान्ताः स्युः । एवमेवैतत् ।**

**तथा सति संस्कृतशब्ददृष्टान्तत्रयमेकत्रैव वक्तव्यम् । मैवम्, तत्तदभिधेयप्रसङ्गा-यत्तस्य तदभिधानस्य तदैव वक्तव्यत्वात् ।**





**तथाऽपि प्रतिशब्दं दृष्टान्तीकरणेऽपर्यवसानप्रसक्तेरुपलक्षणत्वे चैकेनापि कृतत्वाच्छब्दत्रयोपादानमनुपपन्नमिति चेन्न, मृत्पिण्डादिदृष्टान्तत्रयोपादानेऽप्यस्य समानत्वात् । गहने प्रमेये त्रयोपादानं न दोषाय, किन्तु बुद्धिवैशद्यहेतुतया गुणायैवेति चेत्; समं प्रकृतेऽपीति ।**

**परि०**— शङ्कते **ब्रह्मण इति** । हेतुत्वे हि यत्सत्यं तज्जरादिहीनमित्यन्वयव्याप्त्या वा यज्जरादिमन्न तत्सत्यमिति व्यतिरेकव्याप्त्या वा भाव्यम् । न तद् द्वयमपीति क्रमेण निराह **त्वयेत्यादिना** ।

**यादु०**— व्यतिरेकस्याप्यभावं दर्शयति **जराद्युपेतानामित्यादिना** ।

**वं०प०**— ननु सत्यशब्दस्तथ्यार्थक एव सङ्गतः स्यादिति चेन्नेत्याह **ब्रह्मण इति** । **त्वयेति** । ब्रह्म जरामरणशून्यं सत्यत्वादित्यनुमानेऽन्वयव्याप्तिर्नास्तीत्यर्थः । कुतो नेत्यतो दृष्टान्ताभावादिति ज्ञेयम् । तदुपपादकं **ब्रह्मेति** । यत्र जरामरणाद्युपेतत्वं तत्र सत्यत्वाभाव इति व्यतिरेकव्याप्तिरपि नास्ति । अस्मद्रीत्या देहादौ व्यभिचारात् । जरामरणाभावरूपसाध्योपेतेऽपि शुक्तिरजतादौ सत्यत्वहेतोरभावेन असाधारण्यं चेत्याह **जरादीति** । असिद्धव्यतिरेकस्याभावादित्यन्वयः । असत्यानां चेत्यत्र चशब्दोऽसाधारण्यस्य समुच्चायकः । तदुपपादकम् **असत्यानां चेति** । **शब्दान्तरं** = मृत्तिकालोहमणिकार्ष्णायसरूपविलक्षणशब्दमित्यर्थः ।

**आनन्दः**— दृष्टान्ताभावेन अन्वयव्यतिरेकाभ्यां व्याप्तेरसम्भवान्नानुमानावतारो युक्त इत्याह **त्वयेति** । **तत्तदभिधेयेति** । अत्र तत्तदभिधानस्य मृत्तिकेति लोहमणिरिति कार्ष्णायसमिति यत्तदभिधानं तस्य तत्तदभिधेयम् । मृत्पिण्डादि तत्प्रसङ्गाय तस्य मृत्पिण्डाद्यभिधानस्य मृत्तिकेत्यादेस्तदैव तदभिधेयप्रसङ्ग एव वक्तव्यत्वादित्यन्वयः । एवं च मृत्पिण्डादीनां पूर्वप्रसक्तत्वात् तदनुरोधेन तदभिधानोपेतं दृष्टान्तवाक्यं तत्तदनन्तरमेवास्तीति भावः ।

**श्रीनिधि०**— **अन्वयाभावात्** अन्वयव्याप्त्यभावात् । साध्याभाववति हेत्वभावो नास्ति । हेत्वाभाववति साध्याभावो नास्ति । अतो न व्यतिरेकग्रहः शङ्क्य इत्याह **जराद्युपेतानामिति** ।

**शे०वा०**— सत्यशब्दस्य तथ्यार्थतायामपि सङ्गतिसम्भवान्न तन्नित्यत्वार्थकत्वमिति शङ्कते **ब्रह्मण इति** । किमत्र यत्सत्यं न तज्जरादिमदित्यन्वयव्याप्तिरभिमता किंवा यज्जरादिमन्न तत्सत्यमिति व्यतिरेकव्याप्तिरिति विकल्पं मनसि निधाय दृष्टान्ताभावेनाद्यं दूषयति **त्वयेति** । द्वितीये जरादिमत्त्वेन निश्चितं देहादिकं वा दृष्टान्तः किंवा असत्यत्वेन निश्चितं शुक्तिरजतादिकमिति विकल्पं मनसि निधाय पक्षद्वयं दूषयति





**जराद्युपेतानामिति** । व्याप्यवत्तया निश्चिते व्यापकनिश्चयाभावाद्व्यापकवत्तया निश्चिते च व्याप्यनिश्चयाभावेन व्याप्यव्यापकोभयनिश्चयायत्तो व्यतिरेकव्याप्तिग्रहो न कुत्रापि सम्भवतीत्यर्थः ।

**वा०र०— व्याप्यवत्तयेत्यादि** । व्यतिरेकव्याप्तौ साध्याभावस्य व्याप्यत्वेन साधनाभावस्य च व्यापकत्वेन जरादिमत्वाभावस्य साध्यतया तदभावरूपजरादिमत्वस्य व्याप्यत्वमित्यादिर्भावः । **कुत्रापीति** । देहादौ वा शुक्तिरजतादौ वेत्यर्थः । **त्रिवारमिति** मूलम् । मृत्पिण्डादिदृष्टान्तवाक्यत्रयेऽपीत्यर्थः । **एवमेतदिति** । षडेते दृष्टान्ता इत्येतदेवं भवेदेवेत्यर्थः । **संस्कृतशब्देति** । मृत्तिकालोहमणिकार्ष्णायसशब्दरूपदृष्टान्तत्रयमित्यर्थः । **तत्तदभिधेयेति** । मृत्पिण्डादिरूपमृत्तिकादिशब्दाभिधेयेत्यर्थः । अभिधानं मृत्तिकादिशब्दः । षडेते दृष्टान्ताः स्युरिति शङ्किता हि मृत्पिण्डादिदृष्टान्तत्रयमङ्गीकृत्य मृत्तिकादिसंस्कृतशब्ददृष्टान्तत्रय एवानुपपत्तिरभिप्रेतेति तदङ्गीकृतदृष्टान्तत्रयप्रतिबन्धासंस्कृतशब्दत्रयदृष्टान्तत्वमुपपादयितुं तदङ्गीकृतेऽपि वैयर्थ्यं समानमित्याह **मृत्पिण्डादीति** मूलम् ।

**॥ इति तस्य उपपादनम् ॥**
**॥ इति 'सत्य'शब्दस्य 'नित्य'-अर्थत्वोपपादनम् ॥**
**॥ इति 'उत तमादेशमप्राक्ष्यं' इति श्रुतिव्याख्याने स्वमतेन व्याख्यानम् ॥**

* * *

**॥ अथ 'उत तमादेशमप्राक्ष्म्' इति श्रुतेः विवर्तवादिव्याख्याने दोषाणि ॥**
**॥ तत्रादौ वाचारम्भणशब्दस्य मिथ्यार्थकत्वेऽश्रुतकल्पनम् ॥**

१९७ **सु०—** एवं स्वमतेन वाचारम्भणमित्यादिवाक्यं व्याख्याय विवर्तवाद(दि)-व्याख्याने दोषमाह **वाचारम्भणमिति ।**

## अनु०— वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।

उक्तम् = उक्तिः, शब्द इति यावत् । वाचारम्भणमिति शब्दे मिथ्येतिव्याख्यायमाने सतीति शेषः । तथा हि । किं रूढिमाश्रित्य वाचारम्भणमित्यस्य मिथ्येति व्याख्यानं क्रियते, किं वा योगम् । आद्ये रूढिज्ञापकप्रमाणाभावादश्रुतकल्पनम् । अथारभ्यत इत्यारम्भणमिति द्वितीयः, तथाऽपि कृद्योगे षष्ठ्यां प्राप्तायां तृतीयाङ्गीकारेऽश्रुतकल्पनम्, ल्युटः कर्मणि विधानाभावाच्चाश्रुतकल्पनमेव । अस्मिन्नपि पक्षे मिथ्यात्वस्यालाभादश्रुतकल्पनम्, वाचारभ्यत्वमात्रेण तथात्वे ब्रह्मणोऽपि तत्प्रसङ्गात् । वाचा केवलमारभ्यते





**विकारो न तु वस्तुवृत्तेन अस्तीति व्याख्याने मिथ्यात्वं लभ्यत इति चेन्न, यतः श्रुत्या वाचारम्भणमित्येवोक्ते केवलशब्दप्रक्षेपेण मिथ्येति व्याख्यानेऽश्रुतकल्पनमेवेति ।**

**परि०**— उक्तमिति भावे निष्ठाप्रत्यय इति भावेनाह **उक्तमुक्तिः शब्द इति यावदिति । इति द्वितीय इति ।** योगमाश्रित्येति पक्ष इत्यर्थः । किमयं भावे ल्युडन्तः ? अथ कर्मणि । आद्ये आह **कृद्योग इति ।** आरम्भणशब्दस्य ल्युडन्तत्वात् ल्युटश्च कृदतिङिति सूत्रेण कृत्संज्ञत्वेन तद्योगे 'कर्तृकर्मणोः कृती'ति सूत्रेण षष्ठ्यां प्राप्तायामित्यर्थः । अस्माकं तु साङ्केतिकनाम्न एव तद्योगेन 'वाचेत्यस्ये'ति नायं दोष इति भावः । अन्त्य आह ल्युटः **कर्मणि विधानाभावाच्चेति ।** न च कृत्यल्युटो बहुलमिति बहुलग्रहणात् कर्मण्यपि ल्युड् भवतीति शक्यम् । अस्य पक्षस्य वाचारब्धं त्वित्येतद्व्याख्यावसरे प्रागेव निरस्तत्वात् । एतच्चोपलक्षणम् । वाचारभ्यस्यारम्भणमिति युज्यते शब्द इति प्रागुदाहृतछान्दोग्यभाष्योक्तनपुंसकानुपपत्तिदोषश्च ध्येयः । **ब्रह्मणोऽपीति ।** त्वत्पक्षे वाचेत्यस्य शब्दपरत्वात् शब्देनारभ्यते व्यवह्रियत इत्यस्य ब्रह्मण्यपि भावात् । वागिन्द्रियपरत्वे वाचा वागिन्द्रियेण व्यवह्रियमाणत्वरूपारम्भणस्य ब्रह्मणोऽपि सत्त्वादिति भावः । उक्त इत्येतत्कर्मणि निष्ठान्तमुपेत्याधुनार्थमाह **श्रुत्या वाचारम्भणमित्येवोक्त इति ।**

**गु०दी०— तथाऽपि कृद्योगे षष्ठ्यां प्राप्तायाम्** इत्यस्य 'अस्येयं भार्या', 'अस्येदं कार्यं', 'अस्येदं भोज्यमि'त्यादि प्रयोगदर्शनादिति भावः ।

**यादु०— तथाऽपि कृद्योग इति ।** कर्तृकर्मणोः कृतीत्यनेनेत्यर्थः । ननु वाचेति तृतीया करणे भविष्यतीति नाद्यो दोषः । न द्वितीयः । 'कृत्यल्युटो बहुलमि'त्युक्तत्वेन कर्मण्यपि ल्युड्विधानसम्भवादित्यस्वरसादाह **अस्मिन्नपीति ।**

**वं०प०— उक्तिरिति ।** तथा च भावे क्तप्रत्यय इति भावः । **तथाऽपीति ।** कृदतिङ् तिङ्वर्जप्रत्ययः कृत्संज्ञः स्यादित्युक्तत्वेन ल्युटोऽपि तिप् तस् इत्यादेः यथा तिङ्त्वं तथा तिङ्पेतत्वाभावेन कृत्त्वात् तदन्तारम्भणशब्दस्य कृदन्तत्वात् तदन्तशब्दयोगे कर्तृकर्मणोः कृतीति सूत्रेण षष्ठी प्राप्ता । तथा च वाच आरम्भणमिति स्यान्न तु वाचेति तृतीयेत्यर्थः । नन्वस्माभिरपि कृद्योगे वाचेति तृतीयाऽङ्गीकारादश्रुतकल्पनेति चेन्न । कृद्योगे तृतीयामङ्गीकृत्य एतच्छ्रुतेः छान्दोग्यभाष्योदाहृतप्रमाणे तथा व्याख्यातत्वेन श्रुतत्वान्नाश्रुतकल्पनेति ज्ञेयम् । **तथात्वे** = मिथ्यात्वे ।

**आनन्दः**— वाचारम्भणमित्येतदनुव्याख्यानं परिणामवादनिरासतया प्रतीयते । अत आह **एवमिति ।** वाचारम्भणमित्युक्त इत्युक्तेऽर्थे श्रुतकल्पनमुच्यत इति प्रतीयते तच्चायुक्तमिति प्रतीयत इत्यत आह





**उक्तमुक्तिरिति** । **तृतीयाङ्गीकारे** वाचेति तृतीयाङ्गीकारे । **ल्युट इति** । **न च** बहुलग्रहणात्कर्मणि ल्युडिति वाच्यम् । वाचारम्भणशब्दस्य मिथ्यात्वपरत्वे नियामकप्रमाणाभावे **बहुलग्रहणस्य** तदर्थान्तरकल्पकाभावादिति भावः । **वाचेति** । वाक्प्रतिपाद्यत्वेन मिथ्यात्वे ब्रह्मणोऽपि वाक्प्रतिपाद्यत्वेन मिथ्यात्वं स्यादित्यर्थः ।

**शे०वा०— उक्तमुक्तिरिति** । भावे क्तो न कर्मणीति भावः । **ज्ञापकप्रमाणाभावादिति** । अभिधानाद्यभावादित्यर्थः । **कृद्योगे षष्ठ्यां प्राप्तायामिति** । कर्तृकर्मणोः कृतीत्यनेनेति शेषः । कर्तृकर्मणोः कृतीति षष्ठ्या बाधितत्वात् तृतीया नोपपद्यत इत्यर्थः । न चायं दोषः **स्वमतेऽपि समः** । वाचा वागिन्द्रियेणेति स्वकीयव्याख्यानानुसारेण वाक्शब्दस्य स्वमते इन्द्रियपरत्वेन वाक्शब्दार्थस्येन्द्रियस्य च करणत्वेन कर्तृत्वकर्मत्वयोरभावात् करणे च कृद्योगस्य षष्ठ्यनभिधायकत्वेन तृतीयोपपत्तेः । वागिति समस्तेन्द्रियव्यवहारोपलक्षणमिति परव्याख्यानानुसारेण परमते वाक्शब्दस्य व्यवहारपरत्वात् व्यवहारस्य चेन्द्रियस्येव करणत्वासम्भवेन करणे तृतीयाया अयोगात् । अत एव करणे तृतीया भविष्यतीति **पूर्वत्र अरुच्युद्भावनं** तरङ्गिणीकारीयमपास्तम् । **ल्युट इति** । आरम्भणशब्दस्य ल्युडन्तत्वात् ल्युटश्च **भावे करणे** अधिकरणे च विधानेऽपि कर्मण्यविधानादित्यर्थः । न च कृत्यल्युटो बहुलमिति बहुलग्रहणात् **कर्मण्यपि** ल्युडिति वाच्यम् । वाचारम्भणशब्दस्य मिथ्यात्वपरत्वे नियामकस्य प्रमाणविशेषस्याभावेन बहुलग्रहणस्य **कर्मणि** व्याख्यातुमशक्यत्वादिति टीकायामेव पूर्वमुक्तत्वादिति भावः । यद्वैतदस्वरसादेवाह **अस्मिन्नपि पक्ष इति** ।

**वा०र०—** अश्रुतकल्पनादेर्वचनदोषत्वादुक्तपदोक्तार्थदोषत्वाभिधानायोग इत्यतो मूले **उक्तमित्यस्योक्तिरिति** व्याख्यानं कृतम् । तत्र क्तप्रत्ययस्य कर्मणि विहितस्य साधुत्वं केन प्रकारेणोपपाद्यमिति न प्रतीयतेऽतस्तदभिप्रायमाह **भाव इति** । नपुंसके भावे क्त इति भावे क्तोऽत्र विवक्षितः । न तु अत्र विहितः कर्मणि क्त इत्यर्थः । **अयं दोष इति** । कृद्योगे षष्ठीप्राप्त्या तृतीयानुपपत्तिरित्ययमित्यर्थः । कृद्योगेऽस्येत्यत्रस्येत्यस्य कर्तृकर्मणोः इति सूत्रस्येत्यर्थः । परमते विकरणतृतीयास्त्वित्यतस्तदनुपपत्तिं दर्शयति **वागिति** । **समस्तेति** । इन्द्रियस्येवेति व्यतिरेके दृष्टान्तः । **यथेन्द्रियस्य** करणत्वमस्ति तथा करणत्वस्यासम्भवादिति करण इत्यतः पूर्वं परमत इति वर्तते । पूर्वत्रारुच्युद्भावनमित्यर्थः । कृद्योगे षष्ठ्यामिति पूर्वोक्तदूषणवाचा आरभ्यत इति वाचारम्भणमिति योगपक्षेऽपि करणे तृतीया भविष्यतीत्यरुच्युद्भावनमित्यर्थः । उक्तारुच्या ल्युटः कर्मणीत्यादि दूषणान्तरप्रवृत्तिवर्णनमिति यावत् । **अपास्तमिति** । उक्तरीत्या वाचेत्यस्य व्यवहारार्थतया व्यवहारस्य च कारणत्वाभावेन तदङ्गीकारेणारुच्युद्भावनानुपपत्तेः निरस्तमित्यर्थः । यद्यप्येतन्मूलव्याख्यानव्याजेनारुच्युद्भावनं तरङ्गिणीकारैः न कृतम् । तथाप्येतत्समानविषयन्यायामृतव्याख्यावसरे तदुद्भावनमस्तीति तदुक्तिः । अत एव तरङ्गिणीति प्रसिद्धपदोपादानमिति ज्ञेयम् । **टीकायामेव पूर्वमिति** । वाचारब्धं तु साङ्केत्येत्येतद्भाष्यटीकायामित्यर्थः । तत्र प्रबलनियामकमन्तरेण बहुलग्रहणस्य कर्मणि व्याख्यातुमशक्यत्वादित्युक्तेस्तद्वाक्यस्य च समानन्यायवाचारम्भणशब्दस्य मिथ्यात्वेत्याद्यर्थसूचकत्वस्यापि





भावादित्याशयः । उपपादितं चैतत् प्राक् । **एतदस्वरसादेवेति** । बहुलग्रहणात् कर्मणि ल्युटः सम्भव इत्यस्वरसादेवेत्यर्थः । **वाचारभ्यत्वमात्रेणेति** मूलम् । वाग्जन्यव्यवहारमात्रेणेत्यर्थः । **वाचा केवलमिति** मूले केवलपदव्यावर्त्यमाह **न त्विति** । ब्रह्मणस्तु वस्तुतो विद्यमानत्वान्न केवलवाग्व्यवहारगोचरतेति न तस्य मिथ्यात्वप्रसङ्ग इति भावः । केवलपदप्रक्षेपपक्षदूषणपरत्वसिद्ध्यर्थमित्युक्ते इत्येतत्सावधारणतया योजयति **इत्येवोक्त इति** । **अत्रेति** । नामधेयमित्यनन्तरमिति शेषः ।

**स०व्र०— तथापि कृद्योगे षष्ठीति** । कर्तृकर्मणोः कृतीत्यनेनेत्यर्थः । ननु वाचेति तृतीया करणे भविष्यतीति नाद्यो दोषः, नापि द्वितीयः कृत्यल्युटो बहुलमिति कथितत्वेन कर्मण्यपि ल्युट्सम्भवादित्यत आह **अस्मिन्नपि पक्ष इति** । एवमपीत्यर्थः । **मिथ्यात्वस्यालाभादिति** । वाचारब्धकाव्यादेरिवेति भावः ।

**चषकः— विवर्तवादव्याख्याने** = भ्रमाधिष्ठानत्वव्याख्याने ।

**॥ इति वाचारम्भणशब्दस्य मिथ्यार्थकत्वेऽश्रुतकल्पनम् ॥**

* * *

**॥ तत्र नामधेयपदव्याख्यानदूषणम् ॥**

१९८ **सु०— दूषणान्तरमाह पुनरुक्तिरिति ।**

## अनु०— पुनरुक्तिर्नामधेयम्

**इतिशब्दोऽत्राध्याहार्यः, आगामिनो वा काकाक्षिन्यायेनोभयत्र सम्बन्धः । नामधेयम् इत्येतत् 'नामधेयमात्रं ह्येतदनृतमि'ति परेण व्याख्यातम्, तस्य वाचारम्भणमित्यनेनैव गतार्थत्वान्नामधेयमिति पुनरुक्तिः स्यात् ।**

**आनन्दः**— नामधेयशब्दस्य द्विरनुक्तत्वोक्तिर्मूलस्था न युक्तेत्यत आह **इतिशब्द इति** । नन्वेवमपि कथं पुनरुक्तिरित्यत आह **नामेति** ।

**शे०वा०**— अध्याहाराश्रयणेऽरुच्या पक्षान्तरमाह **आगामिनो वेति** । **पुनरुक्तिः स्यादिति** । व्याख्यानव्याख्येयभावश्चागतिका गतिरिति भावः ।





**वा०र०**— **अध्याहारेति** । तदाश्रयणरूपया अरुच्येत्यर्थः । **आगमिनो वेतीति** । इतिशब्दस्येति विभक्तिपरिणामेन वर्तते । **काकाक्षीति** मूलम् । एकस्यैव काकाक्ष्णो गोलकद्वयसम्बन्धवदितीत्येतदिति शब्दस्य नामधेयमितीति इति इत्यस्येति च सम्बन्ध इत्यर्थः । **अगतिकेति** । गत्यन्तरवर्जिता गमनिकेत्यर्थः ।

**॥ इति नामधेयपदव्याख्यानदूषणम् ॥**

* * *

**॥ तत्र वाचारम्भणशब्दस्य व्याख्यानान्तरे दूषणम् ॥**

**१९९ सु०— अथ विकारो नामधेयं च द्वयमपि वाचारम्भणमिति व्याख्यानम्; तथाऽपि विकारशब्देनैवाभिधेयाभिधानयोर्ग्रहणसम्भवान्नामधेयमिति पुनरुक्तिरेव, तन्नामरूपाभ्यां व्याक्रियत इत्यादिश्रुतेः ।**

**परि०**— ननु कथं विकारशब्देनैव शब्दार्थयोर्द्वयोरपि ग्रहणमित्यत आह **तन्नामरूपाभ्यामिति** । **तत्** = तेजोबन्नम् ।

**वं०प०**— ननु कथं विकारशब्देनाभिधानग्रहणमित्यत आह **तन्नामरूपाभ्यामिति** । तथा च नामधेयस्यापि विकारत्वेन विकारशब्देन युक्तं तद्ग्रहणमिति भावः ।

**शे०वा०**— **इति व्याख्यानमिति** । ततश्च न वाचारम्भणशब्देन नामधेयपदस्य गतार्थतेत्याशयः । एवं तर्हि माऽस्तु वाचारम्भणशब्देन नामधेयपदस्य गतार्थत्वम् । विकारपदेन तु तस्य गतार्थत्वमवर्जनीयमेवेत्याह **तथाऽपीति** । कुरुपाण्डवन्यायस्त्वगतिका गतिरिति भावः । ननु कथं विकारशब्देन नामधेयग्रहणमित्यत आह **तन्नामरूपाभ्यामिति** ।

**वा०र०**— **कुरुपाण्डवेति** । एतन्न्यायार्थस्तु कुरुपाण्डववत् तेषामुपपत्तेरिति स्वप्नाधिकरणीयानुव्याख्याव्याख्यानमूलटीकायां तद्व्याख्याने चास्मदीये द्रष्टव्यः । **नामधेयेति** । अभिधानरूपनामधेयेत्यर्थः ।

**॥ इति वाचारम्भणशब्दस्य व्याख्यानान्तरे दूषणम् ॥**

* * *





**॥ तत्र च 'इति'शब्दस्य निरर्थकता ॥**

२०० **सु०— दोषान्तरमाह इतीत्यस्येति ।**

**अनु०— इतीत्यस्य निरर्थता ॥**

**मृत्तिकायाः सत्यत्वं हि परस्य विवक्षितम् । तत्र मृत्तिकैव सत्येति वक्त(व्यम्)व्ये इतिशब्दस्तु निरर्थक एव । स हि क्वचित्पदार्थविपर्यासकृत्, क्वचिद्धेतौ, क्वाप्येवमित्यर्थे, कुत्रचिदादिशब्दार्थे, क्वचित्प्रकारार्थे, क्वचित्परिसमाप्तौ । न चात्रै(ते)वमादिष्वन्यतमेनार्थेन अर्थवान् ।**

**अस्माकं तु 'शब्दादर्थे सम्प्रत्यय' इति मृत्तिकाऽर्थे प्राप्ते तत्परिहारेण शब्दस्वरूप-ग्रहणार्थं तदुपपत्तिः ।**

**परि०— क्वचित्पदार्थविपर्यासकृदिति** । व्यक्तमेतज्जिज्ञासासूत्रे 'इतिशब्दोऽन्वये' इत्येतद्व्याख्यानसुधायाम् । **क्वचिद्धेताविति** । एतच्च ग्रन्थ एव तत्र तत्र व्यक्तम् । **एवमित्यर्थ इति** । 'विकारशब्दान्नेति चेदि'त्यादौ । **आदिशब्दार्थ इति** । 'य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते' इत्यादौ । **प्रकारार्थ इति** । आत्मेत्येवोपासीत । आत्मेति तूपगच्छन्तीत्यादौ ।

**गु०दी०— शब्दस्वरूपग्रहणार्थं तदुपपत्तिः** इत्यत्र 'नवेति विभाषे'ति सूत्रे इतिशब्दो वैपरीत्ये वर्तत इति शब्दशास्त्रे अर्थपरत्वस्य अर्थशास्त्रे शब्दपरत्वस्य व्युत्पादितत्वादित्यर्थः ।

**वं०प०— मृत्तिकाऽर्थे** = मृत्तिकाशब्दादिति शेषः ।

**वा०र०—** इतीति हेतुप्रकारप्रकर्षैवमर्थव्यवस्थास्वरूपविवक्षाया नियमसमाप्तिप्रकृतवक्ष्यमाणपरामर्श-मेतेषु इत्यादिरूपेण प्रसादकारादिभिरितीत्यव्ययस्य अर्थानां कथनात् तदनुसारेण प्रकृते तदर्थाननुवदति **स हि क्वचिदित्यादि** मूलम् । **पदार्थेति** । शब्दशास्त्रे शब्दस्यैव पदार्थतया प्राप्तौ तद्विपर्यासेनार्थपदार्थतया प्रापयति **यथा न वेति** । विभाषेत्यत्र न वा शब्दयोर्विभाषासंज्ञायां प्राप्तायामिति शब्दस्तावर्थपरौ व्यवस्थापयति । एतज्जिज्ञासाधिकरणीयमूल एवोक्तम् । तथार्थशास्त्रस्यैव पदार्थतया प्राप्तौ तद्विपर्यासेन शब्दं पदार्थतया स्थापयति यथा गौरित्ययमाहेत्यत्रेति ज्ञेयम् । उक्तं च काशिकादौ इतिकरणार्थनिर्देशार्थ इत्यादि । मिथ्यात्वमित्युभय-सम्प्रतिपन्नमित्येतद्व्याख्याने इतिशब्दो निर्देशार्थः । मिथ्यात्वाख्यमितीत्युक्तं तु निर्देशमात्रमर्थमवलम्ब्येति न दोषः । **हेताविति** । यथा हन्तीति यतो यत इत्यत्र । हन्ति यतोऽतो हेतोरित्यर्थात् । **एवमर्थ इति** ।





क्रमादमुं नारद इत्यबोधीत्यत्रेतिशब्दस्यैवमर्थत्वम् । **आदिशब्दार्थ इति** । यथा ज्वलिति कसन्तेभ्योऽण इति तृतीयस्य प्रथमे शमित्यष्टाभ्योऽधि नुण्णिति तस्य तृतीये च काशिकायां आद्यर्थे इतिशब्द इत्यादेरुक्तेः । दृष्टहानिरदृष्टस्येत्यदृश्यत्वाधिकरणभाष्यमूले जाग्रत्वमिति हि भ्रमः । धीर्भीरिति मन इत्येतद्व्याख्यानमूले आदिशब्दार्थत्वेनेतिशब्दव्याख्यानमस्ति तत्रत्या टीका तत्रैवोपपादिता । **प्रकारार्थ इति** । गौरश्वः पुरुषो हस्तीति जातिरित्यत्रेतिशब्दः प्रकारार्थः । **परिसमाप्ताविति** । पृथिव्यापस्तेजो वायुराकाशः कालो दिक् आत्मा मन इति द्रव्याणीत्यत्रेतिशब्दः समाप्त्यर्थ इति वदन्ति । तत्र तत्र शङ्कापरानुवाददूषणव्याख्यानपरिसमाप्त्यर्थतया मूलकारणैव व्याख्यातस्य तदर्थत्वं तत्र तत्र स्पष्टम् । उपलक्षणमेतत् । क्वचित्प्रकृतार्थे । इत्युक्तदोषेत्यादौ । क्वचिद्वक्ष्यमाणपरामर्शे इत्युक्तमेव दर्शयति .........तीति मूलकाराद्यवतारात् । तथाऽव्ययं विभक्तीति सूत्रीयशब्दप्रादुर्भाव इत्येतदुदाहरति **हरीति** । तत्र शब्दप्रादुर्भावरूपार्थे वर्तमानमितीत्यव्ययं हरिपदेन समस्तमिति प्रतिपादनादिति शब्दस्यार्थान्तरस्याप्राप्तेरित्याद्यपि ज्ञेयम् । अत्रैवमादिष्वित्यादिपदं मूले । प्राक् स्वपक्षेऽभिधास्यमानत्वेन पदार्थविपर्यासस्य प्रथममभिधानमिति तमर्थं स्वपक्षे प्रतिपादयति **अस्माकं त्विति** । **अर्थे सम्प्रत्यय इतीति** । गोरूपलक्ष्यतामित्यादौ लोके शब्दादर्थस्यैव सम्प्रत्ययात् । अर्थशास्त्रे तन्नियमाच्चेति भावः । **तदुपपत्तिरिति** मूलम् । इतिशब्दस्योपपत्तिः । इतिशब्दः सार्थक इति यावत् । परिणामवादिनापीत्यादि मूलतट्टीकेऽध्यायसमाप्तिपर्यन्तं तत्र तत्र व्याकर्तव्ये स्तः ।

**२०१ सु०— परिणामवादिनोऽपि कृद्योगे तृतीयाया अङ्गीकृतत्वात्, ल्युटः कर्मणि व्याख्यातत्वात्, वाचारम्भणं विकारो नामधेयमित्येतेषां पदानामन्वयाभावेन पदान्तराध्याहारस्येष्टत्वात्, अश्रुतकल्पनम्; नामधेयस्यापि विकारग्रहणेन ग्रहणसम्भवात् पुनरुक्तिः, इतिशब्दस्य निरर्थकता चेति स्फुटत्वान्नोक्तम् ।**

**ननु तेनेतिशब्दः प्रकारवचन इत्युक्तम्, तत्कथं निरर्थकता । उच्यते । कार्यकारणयोर्भेदाशङ्कानिरासार्थं हीदमुच्यते, तत्र यत्सत्तया मृत्तिका सती तयैव मृण्मयं सत्यमिति व्याचक्षाणेन वक्तव्यम्, केयं सत्ता विवक्षितेति । स्वरूपसत्ता चेत् साध्याविशिष्टता, यो हि कार्यकारणयोर्भेदं मन्यते, स कथं कारणस्वरूपेणैव कार्यं स्वरूपवदित्यङ्गीकुर्यात् । अथ सामान्यसत्ता; साऽनैकान्तिकी, न हि महिषसत्तया सन्नश्वो महिषान्न भिद्यते । अथ मृत्तिकासत्ताधीनसत्ताकं मृण्मयमिति विवक्षितमिति, तथाऽपि कुलालादिसत्ताधीनसत्ताकमपि भवतीत्यनैकान्त्यमेव । विरुद्धं च(चै)तत्, यद्यदधीनं तदेव तदिति । अतो विवक्षितसाधनानुपयोगित्वात् इतिशब्दस्य तन्मतेऽपि निरर्थकतैवेति ।**





**परि०— परिणामवादिनोऽपीति** । तदीयं व्याख्यानं प्राक् प्रदर्शितम् । इतिशब्द-सार्थक्यमाशङ्क्य निराह **ननु** इत्यादिना **निरर्थकतैवेति** इत्यन्तेन । **साध्याविशिष्टतैवेति** । उपादानोपादेयाभेदरूपसाध्याविशिष्टतेत्यर्थः ।

**यादु०— पदान्तराध्याहारस्येति** । विकारो नामधेयं चेति द्वयं वाचारम्भणं वागादीन्द्रियजन्य-व्यवहारार्थं मृदा स्पृश्यत इति व्याख्याने च आदिपदानां मृदेत्यस्य च अध्याहारस्येष्टत्वादित्यर्थः । **भेद-शङ्कानिरासार्थमिति** । कार्यकारणभेदसाधकानां स्वरूपभेदादीनां सत्प्रतिपक्षतया पक्षे उपाध्यभाव उच्यत इत्यर्थः । **केयं सत्तेत्यादि** । कार्यं कारणाद्भिन्नं न भवति तत्सत्तयैव सत्तावत्त्वात् इत्यनुमाने हेतुशरीरप्रविष्टा सत्ता केत्यर्थः । **साध्याविशिष्टतेति** । साध्यवद्धेतुरपि सन्दिग्ध इत्यर्थः । तदेव दर्शयति **यो हीति** ।

**वं०प०— परिणामवादिनोऽपि** इत्येतत्पूर्वोक्तरीत्या स्पष्टम् । **तेन** भास्करेण । **इदं** मृत्तिकेतीति वाक्यम् । **केयमिति** । कार्यं कारणेनाभिन्नं तत्सत्तया सत्तावत्त्वात् । यत् यत् सत्तया सत् तत् तत् अभिन्नमित्यनुमाने हेत्वन्तर्गता सत्ता कीदृशीत्यर्थः । **साध्याविशिष्टतेति** । साध्यं यथा सन्दिग्धम् एवमेव हेतुरपि सन्दिग्ध इत्यर्थः । एतदुपपादयति **यो हीति** । अनैकान्तिकत्वमुपपादयति **महिषसत्तयेति** । सत्ता-जातेरेकत्वादिति हृदयम् । मृन्मयमित्यनन्तरं मृदभिन्नमिति शेषः । तथा च मृन्मयं घटादिः मृदभिन्नं मृत्तिकासत्ताधीनसत्ताकत्वात् । यत् यत् सत्ताधीनसत्ताकं तत् तत् अभिन्नमिति सामान्यव्याप्तिमूलकमनुमानं विवक्षितम् । न चैवं सति अश्वमहिषादौ व्यभिचारोऽस्ति । सत्ताया ऐक्येन तत्सत्तया सत्तावानपि अश्वो न तत्सत्ताऽधीनसत्ताक इति भावः । **सत्ताकमपीति** । तथा च कुलालेनैक्याभावात् घटादावेव व्यभिचार इत्यर्थः । विरुद्धत्वमेवोपपादयति **यद्यदधीनमिति** । **विवक्षितेति** । कार्यस्य कारणानन्यत्वरूपविवक्षितेत्यर्थः ।

**आनन्दः— पदान्तराध्याहारस्येति** । चशब्दरूपपदान्तरस्य वाचारम्भणमित्येवंरूपस्य वा पदान्तरा-ध्याहारस्येत्यर्थः । परिणामवादनिरासपरत्वेनाप्येतदेव व्याकरोति **परिणामेति** । **इदमिति** । मृत्तिकेत्येव सत्य-मितीदमित्यर्थः । **व्याचक्षाणेन** । केयं सत्ता विवक्षितेति पृष्टे न वक्तव्यमित्यन्वयः । मृण्मयं मृत्तिकयाऽभिन्नं तत्सत्यत्वादित्युक्तानुमानुष्ठानेऽध्यासविशेषमाह **स्वरूपेति** ।

**श्रीनिधि०— साध्याविशिष्टतेति** । घटादिः न मृत्पिण्डादेर्भिद्यते तदभिन्नसत्ताकत्वादिति वक्तव्यम् । अयमेव चाभेदो नामेति साध्यविशेष इत्यर्थः । अन्यतरासिद्धश्च हेतुरित्याह **यो हि कार्यकारण-योरिति** । **यद्यदधीनमिति** । अधीनतया भेदनियतत्वादिति भावः ।

**शे०वा०— पदान्तराध्याहारस्येति** । विकारो घटादिर्नामधेयं च वाचा वाक्पूर्वकजलाहरणादि-व्यवहाराय आरभ्यते आलभ्यत इत्यारम्भणं मृद्द्रव्येण स्पृश्यत इति परव्याख्याने नामधेयमित्यत्र चशब्दा-ध्याहारस्य आरम्भणमित्यत्र मृद्द्रव्येणेत्यध्याहारस्य चेष्टत्वादित्यर्थः ।





**तेनेति** । परिणामवादिनेत्यर्थः । **भेदशङ्कानिरासार्थमिति** । कार्यकारणभेदसाधकानां स्वरूपभेदादीनां सत्प्रतिपक्षतया पक्षे उपाध्यभाव उच्यत इत्यर्थः । **केयं सत्तेत्यादि** । कार्यं कारणाद्भिन्नं न भवति तत्सत्तयेव सत्तावत्त्वादित्यनुमाने हेतुशरीरप्रविष्टा सत्ता केत्यर्थः । **साध्याविशिष्टतेति** । साध्यवद्धेतुरपि सन्दिग्ध इत्यर्थः । साध्यावैशिष्ट्यमेवोपपादयति **यो हीति** ।

**स०व्र०— पदान्तराध्याहारस्येष्टत्वादिति** । विकारः नामधेयमिति द्वयं वाचारम्भणमिति इति-शब्दस्याध्याहारस्येष्टत्वादित्यर्थः ।

**॥ इति 'इति'शब्दस्य निरर्थकता ॥**
**॥ इति 'उत तमादेशमप्राक्षम्' इति श्रुतेः विवर्तवादिव्याख्याने दोषाणि ॥**
**॥ इति प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतश्रुतीनां आन्तरानुपपत्तिप्रदर्शनपूर्वकाविरुद्धार्थकथने 'उत तमादेशमप्राक्षं' इति श्रुतिव्याख्यानम् ॥**

* * *

**॥ अथ प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतश्रुतीनां आन्तरानुपपत्तिप्रदर्शनपूर्वकाविरुद्धार्थकथने 'यथा सोम्य' इत्यादिदृष्टान्तवाक्यानां व्याख्यानम् ॥**

२०२ **मु०—** इदानीं यथा सोम्येत्यादीनि दृष्टान्तवाक्यानि स्वमतेन व्याकरिष्यन् परकीयव्याख्यायां तावद्दोषमाह **एक इति** ।

**अनु०— एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ।**
**विकारित्वविवक्षायां**

पदसमुच्चये प्रथमः चशब्दः । **इति**शब्दस्य प्रत्येकं सम्बन्धः । **वैयर्थ्यं** विगतार्थत्वं विरुद्धार्थत्वं च । **एव**शब्देन वैयर्थ्यस्यापरिहार्यतामाह । **च**शब्दस्य विवर्तविवक्षायां चेत्यर्थः ।

जगतो ब्रह्मविकारत्वेन तदारोपितत्वेन चैकविज्ञानेन सर्वविज्ञाने विवक्षिते मृदा विज्ञातया मृण्मयं विज्ञातं स्यात्, लोहेन विज्ञातेन लोहमयं विज्ञातं स्यात्, कृष्णायसा विज्ञातेन कार्ष्णायसं विज्ञातं स्यादित्येतावता पूर्णत्वात्त्रयाणामेकशब्दानां पिण्डमणि-





**नखनिकृन्तनशब्दानां सर्वशब्दानां च विगतार्थत्वं स्यात् । सर्वमृण्मयादीनामेकमृत्पिण्डादिविकारत्वाभावाद्विरुद्धार्थता च स्यात् ।**

**आरोपितत्वं त्वेकस्यापि मृण्मयस्यैकस्मिन्मृत्पिण्डे नास्ति, कुतः सर्वस्य । युक्त्या समर्थ्यत इति चेत्, तर्हि विवादपदत्वेन दृष्टान्तताऽनुपपत्तिः । 'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त' इति हि न्यायविदः । किन्तु घटादीनामबाधितप्रत्यक्षादिसिद्धत्वेन युक्तिरेवाभासभूतेति परमाणुपुञ्जवादनिरासे वक्ष्यते ।**

**आरोपितत्वेऽपि नैकस्मिन्सर्वमित्येकादिपदानां वैयर्थ्यमेव ।**

**नन्वेकेनेति परमकारणस्यैकत्वं, पिण्डेनेति कार्याभिमुख्यं, सर्वमिति कार्यनानात्वं विवक्षितम्; अतः कथं वैयर्थ्यमिति । मैवम् । दार्ष्टान्तिकवाक्ये तद्विवक्षायामत्र वैयर्थ्यापरिहारात् ।**

**परि०— पदसमुच्चय इति** । उक्तानुक्तपदानां समुच्चय इत्यर्थः । तद्व्यनक्ति **त्रयाणामित्यादिना** । विवर्तपक्षेऽयं दृष्टान्तोऽत्यन्तायुक्त इत्याह **आरोपितत्वं त्विति** । विवर्तवादी शङ्कते **युक्त्येति** । ननु युक्त्या साधिते सति लौकिकपरीक्षकाणां तत्र बुद्धिसाम्यं स्यात् । अन्यथा तत्साधकयुक्तेः का गतिः स्यादिति भावेन पृच्छति **किं त्विति** । उत्तरयति **घटादीनामिति** । **वक्ष्यते** समयपादे 'समुदाय उभयहेतुकेऽपी'ति नये । **नैकस्मिन्सर्वमितीति** । इतिशब्दो हेतौ । येनाश्रुतं श्रुतमित्यादिप्रतिज्ञावाक्ये अर्थविशेषविवक्षार्थमेकादिपदं सार्थकमित्याशङ्क्य तर्हि तत्रैव एकादिपदं प्रयोज्यम् । न तु दृष्टान्तेषु । तत्र तु प्रयोगो व्यर्थ एवेति निराह **नन्वेकेत्यादिना** ।

**गु०दी०— दार्ष्टान्तिकवाक्ये तद्विवक्षायाम्** इत्यत्र दार्ष्टान्तिकवाक्ये 'येनाविज्ञातं विज्ञातं भवती'ति वाक्ये मूलकारणस्य ब्रह्मण एकत्वात् तस्य च सृष्टिकाले सकलकार्याभिमुख्यस्य वक्तव्यत्वादेकस्यैव सकलकारणत्वसम्भवाच्च तत्रैकत्वादेः कथञ्चित्कथनोपपत्तावपि दृष्टान्तवाक्ये एकेन मृत्पिण्डेन सकलमृण्मयकार्याणामनुत्पत्तेर्वैयर्थ्यापरिहारादित्यर्थः । भित्तिमात्रोपयोगिनः पिण्डीकरणस्य कपालीकरणानन्तरभाविघटादावनुपयोगाच्च व्याप्तस्य ब्रह्मणः पिण्डीकरणायोगात्पिण्डशब्दस्य न कुत्राप्युपयोग इति द्रष्टव्यम् ।

**यादु०— युक्त्या समर्थ्यत इति** । ये हि दृष्टनष्टस्वरूपाः न ते वस्तुसन्तः; यथा मृगतृष्णिकोदकादयः । तथा चेदं सर्वं विकारजातं, तस्मादवस्तुसदिति युक्त्या समर्थ्यत इत्यर्थः । **विवादास्पदत्वेनेति** ।





परीक्षकाणां सत्यत्ववादिनाम् असम्मतेरिति भावः । **बुद्धिसाम्यमिति** । सम्प्रतिपत्तिरित्यर्थः । ननूक्तयुक्तेर्निरवकाशत्वेन सर्वेषां परीक्षकाणां तस्मिन्नर्थे सम्प्रतिपत्तिरेव युक्ता । लौकिकानां तदभावेऽपि न दोषः । अत्र वादिप्रतिवादिनोः प्रमाणसिद्धत्वमात्रे तात्पर्यमिति अक्षपादसूत्रव्याख्यातृभिरुक्तत्वात् अन्यथा लोकाप्रसिद्धपरमाण्वादेः शास्त्रे दृष्टान्ततयोपपादनमनुपपन्नं स्यादित्याशयेन शङ्कते **किन्त्विति** । उत्तरमाह **घटादीनामिति** । **वक्ष्यत इति** । 'दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुषु' इत्यादिनेति शेषः । दृष्टानां विकाराणां अवयवोपचयापचयाभ्यां नष्टस्वरूपत्वं त्वया हेतूकृतम् । तच्च क्षणिकत्वमिव स्थिरत्वसाधकाबाधितप्रत्यभिज्ञादिना वक्ष्यमाणेनावरुद्धमेवेति भावः । **दार्ष्टान्तिकवाक्य इति** । येनाश्रुतमित्यादिदार्ष्टान्तिकवाक्ये विद्यमानैकादिपदानां तद्विवक्षायामपि दृष्टान्ते श्रुतानां तेषां वैयर्थ्यमपरिहार्यमित्यर्थः । इदं च दार्ष्टान्तिकवाक्येऽप्येकादिपदाध्याहार आवश्यक इत्यभिप्रेत्य । अन्यथा 'एकविज्ञानेन सर्वविज्ञान'प्रतिज्ञाया अलाभात् । न च दार्ष्टान्तिकवाक्ये उक्तविवक्षाप्रयोजनकैकादिपदाध्याहारसूचनार्थमेवात्र एकादिपदोपादानमिति वाच्यम् । तत्रैव तदुपादानं विहायात्र तत्करणे बीजाभावादित्याशयात् । यद्वा अतद्विवक्षायामिति छेदः । तथा च दार्ष्टान्तिकवाक्ये अविवक्षितार्थस्य दृष्टान्तवाक्ये कथनमसङ्गतमिति भावः । अस्मन्मते तु एकादिपदानां प्रयोजनं छान्दोग्यभाष्यटीकायाम् अस्मद्गुरुचरणैः प्रदर्शितमनुसन्धेयम् ।

**वं०प०— पदसमुच्चय इति** । एकादिपदानां परस्परसमुच्चय इत्यर्थः । ननु नैकादिपदानां वैयर्थ्यम् । सर्वस्य मृन्मयस्यैकस्मिन्नारोपितत्वकथनार्थत्वादित्यत आह **आरोपितत्वं त्विति** । **सर्वस्येति** । सर्वस्य मृन्मयस्य एकस्मिन्मृत्पिण्डे आरोपः कुत इत्यर्थः । नन्वेकस्यापि मृन्मयस्यैकस्मिन्मृत्पिण्डे आरोपितत्वं नेत्ययुक्तम् । अयं घटः एतन्मृत्पिण्डनिष्ठात्यन्ताभावप्रतियोगी घटत्वात् घटान्तरवदित्यनुमानेन समर्थ्यत इत्याशङ्कते **युक्त्येति** । **दृष्टान्तत्वे इति** । जगतो ब्रह्मण्यारोपितत्वे इति शेषः । **किं त्विति** । दृष्टान्तत्वानुपपत्तिरित्येव न, किं त्वित्यर्थः । घटादीनामवयविनां प्रत्यक्षादिना सत्यतया सिद्धत्वेनेत्यर्थः । अभ्युपेत्याह **आरोपितत्वेऽपीति** । एकस्य मृन्मयस्यैकस्मिन्नारोपितत्वेऽपीत्यर्थः । **एकस्मिन्** = मृत्पिण्डे । **सर्वं** = मृन्मयमारोपितम् । **परमकारणस्य** = ब्रह्मणः । **कार्येति** । कार्याभिमुखायामेव मृदि पिण्डशब्दप्रयोगादिति ध्येयम् । **अत्र** = दृष्टान्तवाक्ये ।

**आनन्दः**— नन्वनेन जीवेनात्मनाऽनुप्रभूत इत्यत्रानेन जीवेनात्मनानुप्रविश्येति । प्रसाध्याङ्कदृष्टान्तवदत्रापि प्रसाध्याङ्को दृष्टान्तः किं न स्यादित्यत्राह **किन्त्विति** । एकादिपदवैयर्थ्यमाशङ्कते **नन्विति** । **दार्ष्टान्तिकेति** । दार्ष्टान्तिके तूक्तं विवक्षाकारणाभावात्तज्ज्ञापकपदाभावाच्च । तत्र विवक्षा न सम्भवति । तदभावे च दृष्टान्ते विवक्षाया अयुक्तत्वेन वैयर्थ्यं स्यादेवेति भावः । यद्वा दृष्टान्ते एकत्वाविवक्षा वर्तते न वा । नाद्य इत्याह **दार्ष्टान्तिकेति** । दार्ष्टान्तिके एकत्वादिविवक्षाया अस्य तत्र दृष्टान्तदार्ष्टान्तिकयोश्च साम्यात् दार्ष्टान्तिके एकत्वविवक्षयैव दृष्टान्ते एकत्वादिसम्भवेन दृष्टान्ते एकत्वादिपदवैय्यर्थ्यापत्तेः । न द्वितीयः । कार्ष्णायसान्तरमित्यत्रान्त.............. ॥ ***इति श्रीमन्न्यायसुधायां (उपलब्धा) आनन्दटिप्पणी ॥***





**श्रीनिधि०— मृत्पिण्डे नेति कार्याभिमुख्यमिति** । मृत्पिण्डस्य कार्योन्मुखत्वदर्शनदिति भावः । विशिनष्टीत्युक्तम् ।

**शे०वा०— पदसमुच्चय इति** । न केवलं यथा सोम्येत्यादेः परव्याख्यायामेकपदं व्यर्थं किन्तु मणिपदं चेत्येवमेकपदपिण्डपदमणिपदानां समुच्चय इत्यर्थः । **प्रत्येकमिति** । एक इति पिण्ड इति मणिरिति प्रत्येकमित्यर्थः । **वैयर्थ्यस्येति** । विगतार्थत्वविरुद्धार्थत्वरूपस्येत्यर्थः । **चशब्दस्येति** । पदवैयर्थ्यमेव चेत्येवशब्दात्परस्य चशब्दस्येत्यर्थः । अनेन द्वितीयश्चशब्दो भिन्नक्रमो विकारित्वविवंक्षायां चेति सम्बध्यत इत्युक्तं भवति । कथं वैयर्थ्यमित्यतो विगतार्थत्वं तावदुपपादयति **जगत इत्यादिना** । परिणामवादमाश्रित्याह **ब्रह्मविकारित्वेनेति** । विवर्तवादमाश्रित्याह **तदारोपितत्वेनेति** । **पूर्णत्वादिति** । विवक्षितार्थप्रतिपादनस्येति शेषः । येन विना विवक्षितवाक्यार्थप्रतिपत्तिर्भवति तद्धि अनाकाङ्क्षितत्वात् विगतप्रयोजनमिति प्रसिद्धमेवेति भावः । विरुद्धार्थत्वमप्युपपादयति **सर्वेति** । मृन्मयादीनामित्यादिपदेन **लोहमयादेः** सङ्ग्रहः । एकमृत्पिण्डादीत्यादिपदेन एकलोहमण्यादेः सङ्ग्रहः । **आरोपितत्वं त्विति** । मृत्तत्वज्ञानेऽपि घटाद्यनिवृत्तेः न तस्य तत्रारोपितत्वमिति भावः । **युक्त्येति** । ये हि दृष्टनष्टस्वरूपाः, न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः । तथा च सर्वं विकारजातम् । तस्मादवस्तुसदिति युक्त्या समर्थ्यत इत्यर्थः । **विवादपदत्वेनेति** । अविवादपदत्वे युक्त्या तत्समर्थनानर्थक्यमिति भावः । विवादपदत्वेऽपि कुतो न दृष्टान्तत्वमित्यतो दृष्टान्तलक्षणाभावादिति भावेन गौतमोक्तं लक्षणसूत्रमुदाहरति **लौकिकेति** । शास्त्रपरिशीलनजन्यबुद्ध्यतिशयशून्या लौकिकाः । प्रमाणतर्काभ्यामर्थं परीक्षमाणाः परीक्षकाः तेषामुभयेषामपि **यस्मिन्नर्थे** बुद्धिसाम्यं व्याप्यव्यापकवत्तया सम्प्रतिपत्तिः स दृष्टान्त इति सूत्रार्थः । अत्र वादिप्रतिवादिनोः **सम्प्रतिपत्तौ** तात्पर्यम्, न पुनर्लोकसिद्धत्वमप्यत्र विवक्षितम् । अन्यथा लोकप्रसिद्धपरमाण्वादेः **शास्त्रे** दृष्टान्ततयोपादानमनुपपन्नं स्यादित्यवधेयम् । तर्हि निरवकाशोक्तयुक्तेः का गतिरिति पृच्छति **किं त्विति** । परिहरति **घटादीनामिति** । **वक्ष्यत इति** । 'दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुषु' इत्यादिनेति शेषः । **दृष्टानां** विकारिणामवयवोपचयाभ्यां नष्टस्वरूपत्वं त्वया हेतूकृतम् । तच्च क्षणिकत्वमिव स्थिरत्वसाधकाबाधितप्रत्यभिज्ञादिना वक्ष्यमाणेन विरुद्धमिति भावः । दार्ष्टान्तिकवाक्ये एकत्वादिकं विवक्षितम् उत न इति विकल्पं मनसि निधायाद्यं दूषयति **दार्ष्टान्तिकवाक्य इति** । अत्र तद्विवक्षायामिति पदच्छेदः । दार्ष्टान्तिकवाक्ये एकत्वादिविवक्षायां तद्विवक्षयैव दृष्टान्तवाक्येऽप्येकत्वादिलाभसम्भवेन पृथगेकत्वादेरप्रतिपादनीयत्वात् तत्प्रतिपादकैकादिपदवैयर्थ्यमित्यर्थः । यद्वा दार्ष्टान्तिके एकत्वादिविवक्षायां दार्ष्टान्तिके एकादिपदवैयर्थ्यमेव दृष्टान्तवाक्यस्थैकादिपदैरेव दार्ष्टान्तिके परमकारणैकत्वादेर्लाभात् उभयत्र परमकारणस्यैकत्वादित्यर्थः । द्वितीयं दूषयति **दार्ष्टान्तिक इति** । अत्र अतद्विवक्षायामिति पदच्छेदः । दार्ष्टान्तिके विवक्षितस्यैवार्थस्य दृष्टान्ते वक्तव्यतया दार्ष्टान्तिकवाक्ये एकत्वाद्यविवक्षायां दृष्टान्ते तत्कथनस्यानपेक्षितत्वेन तत्प्रतिपादकैकादिपदानां **वैयर्थ्यमेवेति** भावः ।





**वा०र०—** किञ्चित्पूर्वप्रतौ वात्स्यायनभाष्याद्युक्तरीत्या सूत्रार्थमाह **शास्त्रपरिशीलनेति** । तत्सूत्रीयोक्तानुसारेणाह **अत्र वादीति** । **इति शेष इति** । क्षणिकत्ववादिनिरासकसमुदायेत्यधिकरण इति शेषः ।

**स०व्र०—** **दार्ष्टान्तिकवाक्ये तद्विवक्षायामिति** । एकादिपदानां दृष्टान्तवाक्ये परमकारणैकत्वादिति प्रतिपादकत्वाभावे दृष्टान्तवाक्यस्थैरेव एकादिपदैः दार्ष्टान्तिके तत्प्रतिपादनासम्भवात् सम्भवे वा दृष्टान्तवाक्ये तद्वैयर्थ्यापरिहारादित्यर्थः ।

२०३ **सु०—** "अपि चाद्ययोर्दृष्टान्तयोः कार्यकारणभावमात्रमस्ति, किन्त्वेकादिपदवैयर्थ्यमेव । इदं तु सर्वथा नोपपद्यते, 'यथा सोम्यैकेन नखनिकृन्तनेने'ति; नखनिकृन्तनस्य अन्त्यावयवित्वेन कार्ष्णायसान्तरं प्रति कारणत्वस्यैवासम्भवात्; किम्वेकस्य सर्वं प्रती"-त्याह **न चेति** ।

**अनु०—** न चैकनखकृन्तनम् ।
सर्वं कार्ष्णायसं च स्यात्

**सर्वं च** इति द्वितीयचशब्दसम्बन्धः ।

यद्यत्र दृष्टान्तत्रये न विकारविवर्तविवक्षा, किं तर्हि विवक्षितमित्यत आह **अत इति** ।

अतः सादृश्य एव च ।
विवक्षाऽत्र तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना ॥

अर्थान्तरस्य दूषितत्वादित्यर्थः । चशब्दावितरेतरसमुच्चये । तुशब्देन नित्यत्वं विशिनष्टि । नित्यत्वं प्राधान्योपपादकमेव, न तु स्वतन्त्रमेकविज्ञानेन सर्वविज्ञानस्येति । मृत्पिण्डादिदृष्टान्तत्रयं सादृश्यविषयम्, वाचारम्भणमित्यादि तु प्राधान्यविषयमिति विवेक्तव्यम् । वाचारम्भणदृष्टान्तस्य पूर्वमेव व्याख्यातत्वात् किं पुनर्वचनेनेति चेन्न, बुद्ध्यारोहार्थमुक्तस्याप्यनुक्तेन सहैकेन वाक्येनोक्तिसम्भवादित्याशयेनोक्तम् **उक्तेति** । सादृश्यादेकविज्ञानेन सर्वविज्ञानमाचार्येणान्यत्र व्युत्पादितमत्रानुसन्धेयम् । तथा मृत्पिण्डादिदृष्टान्तानामवान्तरभेदोऽपीति ।





**परि०— सर्वविज्ञानस्येति** । इतिशब्दस्येति विशिनष्टीति पूर्वेणान्वयः । **अन्यत्रेति** । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमि'ति तत्त्वनिर्णये व्युत्पादितमत्रानुसन्धेयमित्यर्थः । **अवान्तर-भेदोऽपीति** । 'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृण्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् । अनन्याधीनविज्ञानादन्याधीनं तथैव च । मृदयोलोहनाम्नां हि ज्ञानात् साङ्केतिकं यथा' इति छान्दोग्यभाष्योक्तोऽत्र अनुसन्धेय इत्यर्थः । बृहद्भाष्ये तु 'सादृश्य एव नखनिकृन्तनदृष्टान्तः । अभ्यासः तात्पर्यार्थ इत्युक्तम् ।

**गु०दी०— तथा मृत्पिण्डादिदृष्टान्तानामवान्तरभेदोऽपि** इत्यत्र लोहमयनखनिकृन्तनयोरेकत्वेन पौनरुक्त्यपरिहाराय तृतीयदृष्टान्ते लोहमणिर्लोहश्रेष्ठ इति व्युत्पत्त्या प्राधान्यस्यैव ग्रहणमवान्तरभेद इत्यर्थः । समवाय्यसमवायिनिमित्तभेदेन कारणत्रितयमिति न्यायविदः ।

**यादु०— इति** विशिनष्टीत्यन्वयः । **अन्यत्रेति** । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमि'त्यादिना तत्त्व-निर्णयादौ व्युत्पादितमित्यर्थः । **अवान्तरभेदोऽपीति** । 'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा । प्राधान्या-द्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशमि'त्यादिना छान्दोग्यभाष्ये व्युत्पादितोऽत्र अनुसन्धेय इत्यर्थः ।

**वं०प०— सर्वं चेति** । ततश्च नखनिकृन्तनं कार्ष्णायसान्तरं न स्यात् अन्त्यावयवित्वात् । एकं नखनिकृन्तनं सर्वं च कार्ष्णायसं न स्यादिति मूलयोजना द्रष्टव्या । तमेव विशेषं व्यनक्ति **नित्यत्वमिति** । **सर्वविज्ञानस्य** । उपपादकमिति वर्तते । पूर्वमेव 'प्राधान्यात् तत्परिज्ञानात्' इत्यादिनेत्यर्थः । **उक्तस्यापि** प्राधान्यस्य । **अनुक्तेन** सादृश्येन । बुध्यारोहार्थमुक्तिसम्भवादित्यन्वयः । **अवान्तरेति** । सदृशज्ञानात् सदृशज्ञानमित्यत्र आद्यो दृष्टान्तः, प्रधानसदृशज्ञानात् अप्रधानसदृशज्ञानमित्यत्र द्वितीयः, अल्पसदृशज्ञानात् बहुसदृशज्ञानमित्यत्र तृतीयः, इति दृष्टान्तत्रयेऽपि अन्यावान्तरभेदोऽप्यत्रोपपादितोऽनुसन्धेय इत्यर्थः ।

**श्रीनिधि०—** तद्विशेषणमाह **नित्यत्वं प्राध्यान्योपपादकमेवेति** ।

**शे०वा०— अन्त्यावयवित्वेनेति** । न च नखनिकृन्तनग्रहणम् अयःपिण्डोपलक्षणमिति वाच्यम् । अस्मद्रीत्या मुख्यार्थे सम्भवति लक्षणाया अयोगादित्यत्र तात्पर्यात् । तुशब्दोक्तं विशेषमेव व्यनक्ति





**नित्यत्वमिति** । अत्र अविशेषेण सादृश्यप्राधान्यविषयकत्वं षण्णामपि मृत्पिण्डादिदृष्टान्तानामिति भ्रमं परिहरति **मृत्पिण्डादीति** । **अन्यत्रेति** । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमि'त्यादिना तत्त्वनिर्णयादावित्यर्थः । **अवान्तरभेदोऽपीति** । मृत्पिण्डदृष्टान्ते सादृश्ये सति कार्यकारणभावः । लोहमणिदृष्टान्ते सादृश्ये सति प्राधान्याप्राधान्यभावः । **नखनिकृन्तनदृष्टान्ते** सादृश्ये सत्यपि बहुत्वाल्पत्वमित्यवान्तरभेदोऽपीत्यर्थः । अत्राप्यन्यत्रोपपादितोऽनुसन्धेय इति लिङ्गविपरिणामेन सम्बन्धनीयम् । अत्र च अन्यत्रेत्यस्य छान्दोग्यभाष्य इत्यर्थो द्रष्टव्यः । 'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानाद्विजातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृश्ये तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहुज्ञानादत्यल्पं जगदीदृशमि'त्यादिना छान्दोग्यभाष्ये अवान्तरभेदस्योक्तत्वादिति भावः ।

**स०व्र०**— तुशब्दोक्तं विशेषमेव व्यनक्ति **नित्यत्वमिति** । **अन्यत्राचार्येण व्युत्पादितमिति** । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमि'त्यादिना तत्त्वनिर्णयादौ व्युत्पादितमत्रानुसन्धेयमित्यर्थः । **तथा मृत्पिण्डादिदृष्टान्तानाम् अवान्तरभेदोऽपीति** । मृत्पिण्डदृष्टान्ते सादृश्ये सति कार्यकारणभावः । लोहमणिदृष्टान्ते सादृश्ये सति प्रधानाप्रधानभावः । नखनिकृन्तनदृष्टान्ते सादृश्ये सति बहुत्वाल्पत्वमित्येवंरूपो योऽवान्तरभेदः " 'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयः । विज्ञायते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात् सर्वलोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानात् विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् । अनन्याधीनविज्ञानादन्याधीनां तथैव च । मृदयोलोहनाम्नां च ज्ञानात् साङ्केतिकं यथा ।' इत्यादि सामसंहितायाम्" इत्यादिना छान्दोग्यभाष्यादौ व्युत्पादितोऽत्रानुसन्धेय इति भावः ।

**२०४ सु०— नन्वस्मिन्नपि पक्षे 'सदेव सोम्येदमग्र आसीत्' इत्यादेरुत्तरग्रन्थस्य सङ्गत्यभावो दोषः । अस्माकं तु कार्यकारणभावादिप्रपञ्चार्थत्वेन अस्त्युपयोग इत्यत आह प्राधान्येति ।**

## अनु०— प्राधान्यप्रतिपत्त्यर्थं सृष्ट्यादेश्चैव(ष) विस्तरः ।

**आदिपदेन प्रलयेऽवस्थानं, त्रिवृत्करणं, जीवरूपेण प्रवेशनमित्यादिकं गृह्यते । प्राधान्याद्ब्रह्मज्ञानेन सर्वज्ञानस्य फलं भवतीत्युक्ते, कुतस्तस्य प्राधान्यमित्याशङ्कायां, तत्प्रतिपत्त्यर्थं सृष्ट्यादेः प्रतिपादक एष ग्रन्थविस्तरः प्रवृत्तोऽतः कथमसङ्गतिरिति । चशब्दोऽवधारणे, न तूपादानत्वादिप्रतिपत्त्यर्थमिति । न ह्युपादानं प्रेक्षापूर्वं कार्यं करोति,**





**नाप्यधिष्ठानमध्यस्तम् । एष चेति वा सम्बन्धः । तेन 'अपागादग्नेरग्नित्वम्' इत्याद्यपि परस्य ब्रह्मणः प्राधान्यप्रतिपत्त्यर्थमेवेत्युक्तं भवति । तथा चोक्तं भाष्ये ।**

**परि०— जीवरूपेणेति** । 'अनेन जीवेनात्मनानुप्रविश्ये'तिवाक्योक्तजीवशब्दितानिरुद्धरूपेण प्रवेशनमित्यर्थः । **अधिष्ठानमध्यस्तमिति** । अधिष्ठानं कर्तृ अध्यस्तं कर्म प्रेक्षापूर्वं करोतीत्यनुषङ्गः । एष चेत्यन्वितश्चशब्दोऽनुक्तसमुच्चय इति भावेनाह **तेनेति** । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमि'त्याद्यग्न्यादित्यादेरग्न्यादित्वाद्यभावकथनमित्यर्थः । **तथा चोक्तं भाष्य इति** । 'अतो यल्लोहितं रूपं श्रियस्तद्रूपसम्भवमि'त्यादिना । 'एक एवाद्वितीयोऽसावतः सर्वोत्तमत्वतः' इत्यन्तेन षष्ठे छान्दोग्यभाष्ये उक्तमित्यर्थः ।

**यादु०— अधिष्ठानं** कर्तृ । **अध्यस्तं** करोतीति सम्बन्धः । **तथा चोक्तमिति** । 'तस्मादग्नेर्यदत्तृत्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तत्रैवाग्नेरग्निता ततः । मुख्यैवमाददानत्वमादित्यस्य तदुद्भवमि'त्यादिना छान्दोग्यभाष्ये उक्तमित्यर्थः ।

**वं०प०—** कार्यकारणभावादीत्यत्रादिपदेन अधिष्ठानाध्यस्तभावग्रहणम् । इत्यादिकमित्यन्तरं 'सदेव सोम्येदमग्र आसीत्, तासां त्रिवृतं त्रिवृतमेकैकामकरोत्, अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यादिवाक्यप्रतिपाद्यमिति शेषः । **चशब्द इति** । तथा च प्राधान्यप्रतिपत्त्यर्थमेवैष सृष्ट्यादेर्विस्तर इत्यर्थः । अवधारणव्यावृत्त्यर्थकथनम् **न त्विति** । अत एव 'प्राधान्यज्ञापनार्थमेव सृष्ट्यादिकथनमि'त्युक्तं तत्त्वोद्योत इति ध्येयम् । परिणामवादिमते विवर्तवादिमते चेदं विरुद्धमित्याह **न हीत्यादिना** । **एष चेति वेत्यादि** । तथा च सृष्ट्यादेर्विस्तरः प्राधान्यप्रतिपत्त्यर्थमेष यो बुद्धिस्थः अपागादित्यादिवाक्यविस्तरश्च प्राधान्यप्रतिपत्त्यर्थमेवेति योजना द्रष्टव्या ।

**श्रीनिधि०— न ह्युपादानमिति** । उपादानकर्तेनाप्यधिष्ठानमध्यस्तमिति । **अधिष्ठानं** कर्तृ । **अध्यस्तं** प्रेक्षापूर्वं न करोतीत्यर्थः ।

**शे०वा०—** 'सृष्ट्यादेश्चैष विस्तरः' इति मूलमसाधु । 'प्रथने वावशब्द' इति विपूर्वात् स्तृञो घञ्विधानेन घञि सति विस्तार इत्येव वक्तव्यत्वादित्यत आह **ग्रन्थविस्तर इति** । उपादानत्वादीत्यादिपदेन आरोपितत्वपरिग्रहः । तत्कथमित्यतः परिणामवादे तदयोगं दर्शयति **न हीति** । **उपादानं** कर्तृ । विवर्तवादेऽपि तदयोगं दर्शयति **नापीति** । **अधिष्ठानं** कर्तृ । **अध्यस्तं** करोतीति सम्बन्धः । प्रयोजनविशेषसिद्ध्यर्थं





चशब्दोऽवधारणार्थतया व्याख्यातः । अर्थविशेषलाभार्थमेव समुच्चयार्थतयाऽपि तं व्याचष्टे **एष चेति वेति** । सम्बन्धकथनप्रयोजनमाह **तेनेति** । कथमेतद् ब्रह्मणः प्राधान्यप्रतिपत्त्यर्थमित्यत आह **तथा चोक्तमिति** । 'तस्मादग्नेर्यदतृत्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः । मुख्यैवमाददानत्वमादित्यस्य तदुद्भवमि'त्यादिना छान्दोग्यभाष्य उक्तमित्यर्थः ।

**स०व्र०— नाप्यधिष्ठानमध्यस्तमिति** । प्रेक्षापूर्वं करोतीति पूर्ववाक्यादनुषङ्गोऽत्र द्रष्टव्यः । **तथा चोक्तं भाष्य इति** । 'अतो यल्लोहितं रूपं श्रियस्तद्रूपसम्भवम् । यच्छुक्लं वायुजं विद्यात् कृष्णं चैव शिवोद्भवम् । तस्मादग्नेर्यदग्नित्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः । मुख्यैवमाददानत्वमादित्यस्य तदुद्भवम्' इत्यादिना छान्दोग्यभाष्य उक्तमित्यर्थः ।

**विट्ठल०— भाष्य इति** । 'तस्मादग्नेर्यदग्नित्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः' इत्यादि छन्दोगभाष्ये केनापि मार्गेण विचारितमपि विवर्तमतमुपपन्नं न भवेदिति मूलार्थः ।

**चषकः— तथा चोक्तं भाष्य इति** । 'तस्मादग्नेर्यदतृत्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः । मुख्यैवमाददानत्वमादित्यस्य तदुद्भवमि'त्यादिछान्दोग्यभाष्ये उक्तमित्यर्थः ।

**॥ इति प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतश्रुतीनां आन्तरानुपपत्तिप्रदर्शनपूर्वकाविरुद्धार्थकथने 'यथा सोम्य' इत्यादिदृष्टान्तवाक्यानां व्याख्यानम् ॥**
**॥ इति 'नादेहयोगिनो दृष्टिः' इत्यनुव्याख्यानोक्तविषयस्योपपादने, प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां आन्तरानुपपत्तिप्रदर्शनपूर्वकं अविरुद्धार्थकथनम् (असाधारणानुपपत्त्युत्पादनम्) ॥**
**॥ इति 'नादेहयोगिनो दृष्टिः' इत्यनुव्याख्यानोक्तविषयस्योपपादनम् ॥**
**॥ इति षष्ठाधिकरणव्याख्यानिराकरणे, मायावाद्यैकदेशिनां विवर्तमतनिराकरणे विश्वस्य ब्रह्मविवर्तत्वनिरसने उक्तार्थस्योपपादनम् ॥**
**॥ इति तत्र विश्वस्य ब्रह्मविवर्तत्वनिरसनम् ॥**

* * *

**॥ अथ षष्ठाधिकरणनिरासे मायावाद्यैकदेशिनां विवर्तमतनिराकरणोपसंहारः ॥**
**॥ तत्रादौ तस्य असह्यातदोषवत्त्वाद्धेयत्वम् ॥**

२०५ **सु०—** विवर्तमतनिराकरणमुपसंहरति **तस्मादिति ।**

## अनु०— तस्मात्केनापि मार्गेण न विवर्तमतं भवेत् ॥





**केनापि मार्गेणेति ।** ब्रह्माविद्यापक्षेण वा, जीवाविद्यापक्षेण वा, एकजीवमतेन वा, अनेकजीवमतेन वा, स्वपक्षसाधनेन वा, परपक्षनिरासेन वा, युक्तिपर्यालोचनया वा, श्रुतिपर्यालोचनया वा, विचारितमिति शेषः । **न भवेत्** उपपन्नमित्यध्याहारः । ततः किमित्यत आह **तदिति ।**

**तदसङ्ख्यातदोषेतं हेयमेव शुभार्थिभिः ।**

तत् = विवर्तमतम्, तस्मादिति वा । तस्यैव विवरणं असङ्ख्यातदोषेतं यस्मादिति । **हेयमेव** तत्, न तु तदुक्तरीत्या सूत्रार्थो ग्राह्यः ।

**एतेन परमतनिराकरणस्यासङ्गतिरपि निरस्ता वेदितव्या ।**

**परि०— एतेनेति** । तदुक्तरीत्या सूत्रार्थस्याग्राह्यत्वफलकथनेनेत्यर्थः । अन्यथाऽत्रोक्तसूत्रार्थस्य निःशङ्कं परिग्रहानापत्तेरिति भावः ।

**वं०प०— विचारितमिति** । केनापि मार्गेण विवर्तवादिमतं विचारितमस्माभिः तदुपपन्नं न भवेदिति योजना । **एतेनेति** । परोक्तव्याख्याननिराकरणस्य स्वव्याख्यानदार्ढ्यार्थत्वेनेत्यर्थः । **असङ्गतिः** सूत्रव्याख्यानमुपक्रम्य अपव्याख्याननिराकरणमसङ्गतम् । न हि तन्निराकरणं कस्यचित्सूत्रस्यार्थ इत्यसङ्गतिरित्यर्थः ।

**विट्ठल०— एतेनेति** । परोक्तसूत्रार्थस्य हेयताकथनेनेत्यर्थः ।

**॥ इति तस्य असङ्ख्यातदोषवत्त्वाद्धेयत्वम् ॥**

* * *

**॥ तत्र उक्तातिरिक्तदोषाणामनुक्तौ कारणम् ॥**

२०६ **सु०—** यद्युक्तातिरिक्तदोषाः सन्ति, तर्हि दूषणाभिधानाय प्रवृत्तैर्वक्तव्याः, किमुपरमेण; इत्यत आह **असङ्ख्यत्वेनेति ।**

**अनु०— असङ्ख्यत्वेन दोषाणां ग्रन्थाधिक्यभयादपि ॥**

उपरम्यते

**दोषाणाम्** अतिबहुत्वेन कांश्चिदुक्त्वा केषाश्चिदुपलक्षणे(णत्वे) नैवोपरन्तव्यम् । उपलक्षणं चैतावताऽपि भवतीति **उपरम्यते** इति ।

सर्वेऽपि वक्तव्याः, किमुपलक्षणत्वेनेत्यत उक्तम् **ग्रन्थेति** । ग्रन्थाधिक्ये हि श्रोतॄणां प्रवृत्तिः न स्यात्, तथा च कृतमप्यकृतं स्यादिति भयादपीत्यर्थः ॥

**॥ इति उक्तातिरिक्तदोषाणामनुक्तौ कारणम् ॥**
**॥ इति षष्ठाधिकरणनिरासे मायावाद्यैकदेशिनां विवर्तमतनिराकरणोपसंहारः ॥**
**॥ इति षष्ठाधिकरणव्याख्यानिराकरणे मायावाद्यैकदेशिनां 'विवर्तमत'स्य निरासः ॥**
**॥ इति षष्ठाधिकरणव्याख्यानिराकरणम् ॥**
**॥ इति एतत्पादीयपरोक्तव्याख्याननिरासे विशेषतः पादार्थनिराकरणम् ॥**
**॥ इति एतत्पादीयं परोक्तव्याख्यानं तन्निरासश्च ॥**

* * *

**॥ अथ एतत्पादीयं परोक्तव्याख्यानात् स्वोक्तव्याख्यानस्य वैशिष्ट्यम् ॥**

२०७ **सु०—** यदि नोपादानतया विभ्रमाधिष्ठानतया वा, ब्रह्मणो जगत्कारणत्वं, कीदृशं तर्हि जन्मादिसूत्रेऽभिहितमित्यत आह **तत इति** ।

अनु०— ततो विष्णुरिच्छापूर्वकमश्रमः ।
करोति पितृवद्विश्वं

परिणामादिवादस्य निरस्तत्वादित्यर्थः । **पितृवदिच्छापूर्वकम्** इति कर्तृत्वेन निमित्तत्वमभिप्रैति । विचित्रानेककार्यकर्तृत्वे श्रमादिदोषाः प्रसज्यन्त इत्यत उक्तम् **अश्रम इति** । तदुक्तमन्तर्याम्यधिकरणे । यद्वाऽश्रम इत्यनेनेदमभिप्रैति, 'अधिकं तु भेदनिर्देशादि'-त्यादिना ब्रह्मणः श्रमादिर्निरसिष्यते, न चोपादानादेः श्रमादिप्रसक्तिरस्ति; अतोऽपि कर्तृत्वमेवाभिप्रेतं सूत्रकारस्येति ।





**परि०— अन्तर्याम्यधिकरण इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते' इत्यादिना 'कथमात्मप्रतीपकमि'त्यन्तेन श्रमाभाव इत्येतदुक्तमित्यर्थः । अश्रम इत्युक्तेरर्थवत्त्वाय हेतुगर्भ-विशेषणमुपेत्याह **यद्वेति** । **इत्यादिनेति** । इतरव्यपदेशादिति युक्तिपादीयाधिकरणगुणसूत्रादिने-त्यर्थः ।

**गु०दी०—** कर्ता कुत्रान्तर्भवतीत्यत उक्तम् **कर्तृत्वेन निमित्तत्वम्** इति । किञ्च निमित्तत्वे पञ्चमी-मात्रमुपपादितं स्यात् । 'स इदं सर्वमसृजते'ति श्रुतिस्थप्रथमाविभक्तेरप्युपपादनाय कर्तृत्वेन निमित्तत्व-मभिप्रैतीत्युक्तम् ।

**यादु०— तदुक्तमन्तर्याम्यधिकरण इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते । इति चेत् सर्वनियमो यस्य कस्मान्न शक्यते । स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत् । स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकमि'त्यादिना श्रमराहित्यमुपपादितमित्यर्थः ।

**वं०प०— प्रसक्तिरस्तीति** । तथा च तन्निराकरणम् 'अधिकं तु' इत्यादिना क्रियमाणमप्रसक्त-प्रतिषेधरूपं स्यादिति ध्येयम् ।

**श्रीनिधि०— तदुक्तमन्तर्याम्यधिकरण इति** । यस्मादित्यर्थः । तदुक्तमिति च पाठः ।

**शे०वा०— तदुक्तमन्तर्याम्यधिकरण इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते । इति चेत्सर्वनियमो यस्य कस्मान्न शक्यते । स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत् । स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकमि'त्यादिना श्रमादिराहित्यमुक्तमित्यर्थः ।

**स०व्र०— तदुक्तमन्तर्याम्यधिकरणे इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते । इति चेत् सर्वनियमो यस्य कस्मान्न शङ्क्यते । स्वात्मना नियतं वस्तु प्रतीपं ह्यात्मनो भवेत् । स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकमि'त्युक्तमित्यर्थः ।

**विट्ठल०— अन्तर्याम्यधिकरण इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते । इति चेत् सर्वनियमो यस्य कस्मान्न शक्यते । स्वात्मना नियतं वस्तु प्रतीपं ह्यात्मनो भवेत् । स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकमि'त्युक्तमित्यर्थः । निमित्तकारणत्वे हेतुसूचकत्वेनाप्युपयोग इति व्याचष्टे **यद्वेति** ।

**॥ इति एतत्पादीयं परोक्तव्याख्यानात् स्वोक्तव्याख्यानस्य वैशिष्ट्यम् ॥**

* * *





**॥ अथ एतदध्यायोक्तसमन्वयफलोपसंहारः ॥**

२०८ **सु०— एवमस्मिन्नध्याये परब्रह्मणि नारायणे प्रतिपादितस्य सकलश्रुतिसमन्वयस्य फलं जन्मादिसूत्रोदितलक्षणसिद्धिमुपसंहरति पूर्णेति ।**

**पूर्णाशेषगुणात्मकः ॥ ६ ॥**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्यायस्य चतुर्थपादः ॥ १-४ ॥

**पूर्णाः प्रत्येकं निरवधिकाः ।**

**परि०— जन्मादिसूत्रोदितेति** । एतच्चोपलक्षणम् । जिज्ञासासूत्रस्थब्रह्मपदोक्तप्रधान-लक्षणमित्यपि ध्येयम् । तेन सकलश्रुतिसमन्वयः फलमिति युक्तम् । यद्वा 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तमि'त्यानन्दमयनयानुव्याख्यानोक्त्या जन्मादिहेतुत्वलक्षण-सिद्ध्या प्रधानलक्षणं फलतः सिद्ध्यतीति भावेन जन्मादिसूत्रेत्येवोक्तम् । मूले गुणपदेन स्रष्टृत्वादीनां तदाक्षिप्तज्ञानानन्दादीनां अज्ञानदुःखद्वेषादिदोषाभावानां च ग्रहः । जन्मादीतिपदेन जन्मसूत्रमादिसूत्रं च ग्राह्यमित्येके । मूलेऽशेषगुणेति जन्मादिसूत्रोक्तगुणाष्टकस्यैव ग्रहः । अतो जन्मादिसूत्रेति युक्त-मित्यन्ये । अशेषपदेन अपौनरुक्त्यायाह **पूर्णाः प्रत्येकं निरवधिका इति** ।

इतिश्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रयतिकृते श्रीमन्न्यायसुधापरिमळे
प्रथमाध्यायस्य चतुर्थः पादः ॥

**गु०दी०— जन्मादिसूत्रोदितलक्षणसिद्धिम्** इत्यत्र जन्मादिसूत्रे तात्पर्यतयोदितगुणपूर्णत्वाख्य-लक्षणसिद्धिमित्यर्थः ।

इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥

**यादु०— प्रत्येकं निरवधिका इति** । अन्यथाऽशेषपदेन पौनरुक्त्यं स्यादिति भावः ।

आनन्दादिगुणोद्रिक्तमानन्दादिपदाभिधम् ।
आनन्दमुनिपं व्यासं स्वानन्दाय भजे मुहुः ॥ १ ॥



सुधायाः प्रथमाध्यायो यदुपत्याख्यसूरिणा ।
व्याख्यातः श्रीहरिप्रीत्यै वेदेशगुरुशिक्षया ॥ २ ॥

श्रीव्यासरामालवबोधपादसेवाप्तवेदेशगुरूपदिष्टः ।
अर्थो निबद्धोऽत्र विचार्य सद्भिरार्यैरुपेक्ष्यो न भवेदतोऽयम्॥ ३ ॥

इति श्रीवेदेशतीर्थपूज्यपादशिष्ययदुपतिविरचितायां श्रीमन्न्यायसुधाटिप्पण्यां
प्रथमाध्यायस्य चतुर्थः पादः ॥

**वं०प०**— पूर्णेत्यस्याशेषेत्यनेन पौनरुक्त्यपरिहारायाह **पूर्णा इति** । प्रत्येकमित्यस्यैकैकोऽपि गुणो निरवधिक इत्यर्थः । तथा च अपरिच्छिन्नानन्तगुणात्मक इति यावदिति ज्ञेयम् । यथोक्तम् 'प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते । तदानन्त्यं हि गुणतस्ते चानन्ता हि सङ्ख्यया' इत्यशेषमतिमङ्गलम् ।

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽधृतसुधावाक्यार्थविवरणे
प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥

**श्रीनिधि०— सकलश्रुतिसमन्वयस्येति** । ज्योतिरधिकरणसकलश्रुतिसमन्वयस्य प्रतिपादितत्वादिति भावः ।

**शे०वा०— लक्षणसिद्धिमिति** । जगज्जन्मादिकारणत्वरूपतत्सूत्रोदितलक्षणसिद्धम् अनन्तगुणपूर्णत्व-मित्यर्थः । अशेषपदेन पौनरुक्त्यपरिहारायाह **प्रत्येकं निरवधिका इति** ।

सर्वाभीष्टप्रदं रामं सर्वानिष्टनिवारकम् ।
जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ १ ॥

विद्वन्मत्तेभकुम्भाद्रिविपाटनविचक्षणः ।
विद्याधीशनृसिंहो मे गुरुर्नित्यं भवेन्मुदे ॥ २ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥ ३ ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशपूज्यपादानां
निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां
श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृत्तौ
शेषवाक्यार्थचन्द्रिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥





**वा०र०— तत्सूत्रोदितलक्षणेति** । जन्मादिसूत्रे हि प्रथमसूत्रस्थब्रह्मशब्दोक्तगुणपूर्णत्वं प्रधानलक्षणसम्भवकं जन्माधिकरणं चावान्तरलक्षणं प्रतिपादयिषितम् । तथा चैतत्तथा तत्सूत्रीयमूल एव स्पष्टम् । तथा च गुणपूर्णत्वसम्भावकतया जन्माधिकरणत्वस्य जन्मादिसूत्रे उक्तत्वात् तेन तत्सिद्धिरित्यशेषमतिमङ्गलम् ॥

एवंकृतप्रथमाध्यायव्याख्यानटीकाकृदन्तेऽपि मङ्गलमाचरति **सर्वाभीष्टेति** । सर्वाभीष्टं प्रददातीति सर्वाभीष्टप्रदः । साधुत्वं तु जन्मादिप्रदमिति प्रथमपद्यव्याख्यानावसरेऽस्मदुक्तमेव ज्ञेयम् । सर्वारिष्टनिवारकमित्येतत् तच्छक्तिप्रबोधक इति सर्वगतत्वाधिकरणीयप्रयोगसाधुत्ववत् द्रष्टव्यम् । **जानकीजानिमिति** । जानकी जाया यस्येति बहुव्रीहिः । **जायाया निङिति** । जायान्तबहुव्रीहेर्निङ् । अधिकमुत्तरपादादावुपपादयिष्यते । नृसिंहश्लेषोक्त्या स्वगुरुं प्रार्थयते **विद्वदिति** । व्याख्यास्यते चेदमुत्तरपादादौ । स्वकृतं व्याख्यानं गुरुसेवात्वेन गुरावर्पयति **यद्दियेति** । व्याख्यातं चैतत् प्राक् ।

श्रीमच्छ्रीगुरुराजीयशेषवाक्यार्थचन्द्रिका ।
व्याकृता प्रथमाध्याये तेन प्रीतोऽस्तु मे गुरुः ॥

आनन्दाब्धिप्रजातत्रिदशशतगुरुश्रीनिवासानुजश्री-
विद्याधीशार्यरत्नाद्भुतविदमृतगोः केशवाचार्यवर्यात् ।
श्रीरुग्मिण्याख्यस्य बाय्यस्य (?) विबुधनरसिंहस्य गुर्वीय सौध-
व्याख्यापाठादिशोधात्मकविवृतिकृतावन्तगोऽध्याय आद्यः ॥

इति श्रीमत्सकलविद्वद्वृन्दशिखामणिश्रीपाण्डुरङ्गकेशवाचार्यवर्यनामक श्रीगुरुराजवर्यविरचित
श्रीमन्न्यायसुधाविषमपदवाक्यव्याख्यानरूपशेषवाक्यार्थचन्द्रिकाया
व्याख्यापाठादिशोधात्मकत्वविवृतौ वाक्यार्थरत्नमालाभिधायां
गुरुराजपाण्डुरङ्गनरसिंहसूरिविरचितायां
प्रथमाध्यायस्य चतुर्थः पादः ॥

**स०व्र०—** अशेषपदपौनरुक्त्यं परिहरति **पूर्णाः प्रत्येकं निरवधिका इति** ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य जयतीर्थविरचितसुधायां
विद्याधीशतीर्थपूज्यपादशिष्यसत्यव्रततीर्थकृतायां टिप्पणिकायां
प्रथमाध्यायस्य चतुर्थः पादः ॥





**विठ्ठल०**— जन्मादिसूत्रे सकलजगज्जन्मादिकारणत्वमुखानन्तगुणगणबृंहितस्यैव लक्षणत्वेनाभिप्रेतत्वात् तद्भूतलक्षणसिद्ध्युपसंहारे जिज्ञासासूत्रसहितमध्यायार्थोऽपसंहृतिरपि भवतीति भावेनाभिहितं **जन्मादिसूत्रोदितेति** । अशेषपदेन पुनरुक्तिनिरासायाह **पूर्णाः प्रत्येकं निरवधिका इति** । ज्ञानानन्दादयोऽनन्तगुणा अपि प्रत्येकं अनन्तानन्तया परिपूर्णा इत्यर्थः । तदुक्तं नयचन्द्रिकायां प्रत्येकमपि पूर्णज्ञानानन्दादयोऽनन्तगुणा अस्य स भगवान् पूर्णाशेषगुणात्म इति ।

प्रीयतां श्रीमदानन्दतीर्थाचार्यगुरुर्हरिः ।
सज्ज्ञानानन्दशक्त्यादिपूर्णाशेषगुणात्मकः ॥

इति श्रीमन्न्यायसुधागूढवाक्यार्थविवृतौ
आनन्दतीर्थनाम्ना विठलाचार्यजन्मना कृतायां
यत्पदाम्भोजसेविना तदनुग्रहात् पर्याप्तः प्रथमेऽध्याये चतुर्थचरणः शुभः ॥

सुधाविठ्ठलभट्टीयप्रथमाध्यायस्य चतुर्थः पादः ॥

**चषकः— प्रत्येकं निरवधिका इति** । निरादय इत्यनुशासनादवध्यपादानकनिष्क्रान्तिविशेषिता इत्यर्थः । अन्यथा अशेषपदेन पौनरुक्त्यं स्यादिति भावः । इत्यशेषमतिमङ्गलम् ।

सौधाद्यलक्षणीयार्थ(म)प्रतिव्याकृत मन्दधीः ।
मनोहृत्य गुरुश्रीशप्रसत्या जडचेतसे ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः ।
सुनन्दतात् सेवया मे भक्त्याऽलङ्कृतयाऽनया ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीण-
श्रीसत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन
कृष्णशर्मणा रचितायां श्रीमन्न्यायसुधाचषकनाम्न्यां व्याख्यायां
प्रथमाध्यायस्य चतुर्थः पादः ॥

**॥ इति एतदध्यायोक्तसमन्वयफलोपसंहारः ॥**

* * *





**॥ अथ प्रथमाध्यायचरमचरणान्त्यमङ्गलाचरणम् ॥**

२०९ **सु०—**

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकुते-
रनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृता-
वयं पूर्वाध्याये चरमचरणः पर्यवसितः ॥

**॥ इति प्रथमाध्यायचरमचरणान्त्यमङ्गलाचरणम् ॥**

* * *

इति श्रीमन्न्यायसुधायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥

इति श्रीमन्न्यायसुधायां प्रथमाध्यायः ॥ १ ॥

* * *



# परिशिष्टानि


पुटसंख्या

१) श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्
**ब्रह्मसूत्रानुव्याख्यानम्** ४७९७-४८३६

२) श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य प्रप्रथमटीका
श्रीपद्मनाभतीर्थविरचिता
**सन्न्यायरत्नावली** ४८३७-४८४६

३) श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका
श्रीत्रिविक्रमपण्डिताचार्यविरचिता
**नयचन्द्रिका** ४८४७-४८५६

४) श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका
श्रीशङ्करपण्डिताचार्यविरचिता
**अनुव्याख्यानसम्बन्धदीपिका** ४८५७-४८६३



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ब्रह्मसूत्रानुव्याख्यानम्

## ॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

अन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयारम्भः

ॐ लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे ॥ २५७॥

चिन्त्यते

### ॥ सर्वगतत्वाधिकरणम् ॥

**ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ १-२-१ ॥**

**ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ १-२-२ ॥**

सत्तालिङ्गसमन्वयः

सर्वगत्वं तु प्रथमं प्रविचार्यते ।
तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ॥ २५८॥

दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः ।
इति ज्ञापयितुम्

**ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ १-२-३ ॥**





**ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ १-२-४ ॥**

**ॐ शब्दविशेषात् ॐ ॥ १-२-५ ॥**

**ॐ स्मृतेश्च ॐ ॥ १-२-६ ॥**

**ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ १-२-७ ॥**

**ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ १-२-८ ॥**

कर्तृकर्मभावस्य उत्सर्गतः भेदव्याप्तत्वम्

कर्मकर्त्रोरुत्सर्गतो भिदा ॥ २५९ ॥

अपवादे सति अभेदः, प्रकृते न अपवादः

अभेदोऽपि विशेषे स्याद्बली सोऽप्यनपोदितः ।

एतत्पादीयाधिकरणोपाधयः

एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् ॥ २६० ॥

अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यते ।
अदृश्यत्वाद्यभावाख्यं श्रुतिर्लिङ्गाधिका परा ॥ २६१ ॥

॥ इति सर्वगतत्वाधिकरणम् ॥ १ ॥

* * *

## ॥ अत्तृत्वाधिकरणम् ॥

**ॐ अत्ता चराचरग्रहणात् ॐ ॥ १-२-९ ॥**

**ॐ प्रकरणाच्च ॐ ॥ १-२-१० ॥**

क्रियालिङ्गसमन्वयः,
अदनादिक्रियायाः अनित्यत्वेन परमेश्वरस्वरूपत्वं कथमित्याक्षेपः

अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता ।

परमेश्वरक्रियायाः नित्यत्वसमर्थनेन परिहारः

इति चेत्स विशेषोऽपि क्रियाशक्त्यात्मना स्थिरः॥ २६२ ॥

शक्तिता व्यक्तिता चेति

विशेषस्य स्वनिर्वाहकत्वम्

विशेषोऽपि विशेषवान् ।

अभिन्नोऽपि

परमेश्वरक्रियाया नित्यत्वे पराऽस्य शक्तिरित्यादिश्रुतिः प्रमाणम्

क्रियादिश्च स्वभाव इति हि श्रुतिः॥ २६३ ॥

तत्रैव स्पष्टश्रुतिः

'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ।
नित्यानन्दोऽव्ययः पूर्णो भगवान्विष्णुरच्युतः'॥ २६४ ॥

इति पैङ्गिश्रुतिश्चाह

ईश्वरक्रियाया नित्यत्वं अन्यक्रियाया अनित्यत्वमित्यत्र प्रमाणम्

'शक्तिसद्भाव एव तु।
क्रियादिनित्यता ज्ञेया तदन्यत्र त्वनित्यता' ॥ २६५॥

इति सत्तत्त्ववचनम्

॥ इति अत्तृत्वाधिकरणम्॥ २॥

* * *

## ॥ गुहाधिकरणम् ॥

**ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ १-२-११ ॥**

फलभोगरूपक्रियालिङ्गसमन्वयः

द्वित्वं चैकस्य युज्यते।

**ॐ विशेषणाच्च ॐ ॥ १-२-१२ ॥**

'यः सेतुरि'ति चैकत्ववचनेन विशेषणात् ॥ २६६॥

॥ इति गुहाधिकरणम्॥ ३॥

* * *

## ॥ अन्तराधिकरणम् ॥

**ॐ अन्तर उपपत्तेः ॐ ॥ १-२-१३ ॥**

**ॐ स्थानादिव्यपदेशाच्च ॐ ॥ १-२-१४ ॥**





क्रियाभावरूपलिङ्गसमन्वयः

अन्तःस्थित्वा रमणकृदन्तरः स उदाहृतः।
रमणं चात्मशब्देनाऽऽदेयं मातीति चोच्यते ॥ २६७॥

**ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ १-२-१५ ॥**

**ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ १-२-१६ ॥**

पूर्णसुखाभिधानात् चक्षुरन्तस्थः विष्णुरेव

विशिष्टसुखवत्त्वाच्च ब्रह्मत्वं च विशिष्टता।

**ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ १-२-१७ ॥**

परमेश्वरप्रेरणयैव इतरेषां नियम्यनियामकभावः,
अन्यथा अनवस्थित्यसम्भवौ स्याताम्

अन्योन्यनियतिश्चेशानियमे नान्यथा भवेत् ॥ २६८॥

चेतनानां विशेषो यः स्वभावोऽपीश्वरार्पितः।
अन्योन्यनियमे तस्मादनवस्थित्यसम्भवौ ॥ २६९॥

अक्ष्यादित्यस्थः ईश्वर एव

ईश्वरश्चेन्नियन्ता स्यात्स एव प्रथमागतः।
किमित्यपोद्यते तस्माद् वृथाऽवस्थितिकल्पना ॥ २७०॥

दोषवत्येव तस्मात्सा नैव कार्या कथञ्चन।

॥ इति अन्तराधिकरणम् ॥ ४ ॥

* * *

## ॥ अन्तर्याम्यधिकरणम् ॥

**ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ १-२-१८ ॥**

**ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ १-२-१९ ॥**

**ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ १-२-२० ॥**

जगतः ईश्वराधीनसत्ताकत्वात् सर्वनियामकत्वेऽपि न रमणविरोधः

रमणं नातियत्नस्य विक्षेपादेव युज्यते ॥ २७१ ॥

इति चेत्सर्वनियमो यस्य कस्मान्न शक्यते।
स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत्॥ २७२ ॥

स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकम्।

॥ इति अन्तर्याम्यधिकरणम् ॥ ५ ॥

* * *

## ॥ अदृश्यत्वाधिकरणम् ॥

**ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ १-२-२१ ॥**

**ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥ १-२-२२ ॥**

**ॐ रूपोपन्यासाच्च ॐ ॥ १-२-२३ ॥**

अदृश्यत्वादीनामभावत्वात् ब्रह्मणाऽभेदो न युज्यत इत्याक्षेपः

गुणक्रियादयो भावा यदि वा स्युरभेदिनः ॥ २७३ ॥
अभेदोऽभावधर्माणां ब्रह्मणा युज्यते कथम्।





अदृश्यत्वादिशब्दैः दृश्याद्यन्योन्याभावाभिधानम्,
अन्योन्याभावस्य धर्मिस्वरूपत्वमिति परिहारः

नाभावो भाव इति च विशेषः प्रायशो भवेत् ॥ २७४ ॥

अतद्भावोऽन्यता चेति न विशेषोऽस्ति कश्चन ।
दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि ॥ २७५ ॥

अदृश्यत्वादयो गुणाः

अदृश्यत्वादिकांस्तस्माद्गुणानाह स्वयं प्रभुः ।

भावाभावयोरैक्ये तयोर्विरोधाभाव इति शङ्कायाः परिहारः

भावाभावविरोधोऽपि न तु सर्वत्र विद्यते ॥ २७६ ॥

तदभावो हि तद्भावविरोधी न ततोऽपरः ।

पृथक्त्वान्योन्याभावस्वरूपभेदानामैक्यम्

पृथक्त्वाभावतद्रूपान्भेदांस्त्रीन्कल्पयन्ति चेत् ॥ २७७ ॥

कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः ।
पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः ॥ २७८ ॥

व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः ।
दृष्टहानिरदृष्टस्य कल्पनेत्येव दूषणम् ॥ २७९ ॥

यदा तदधिको दोषो विद्यते को नु वादिनाम् ।
भावाभावस्वरूपास्तु विशेषा एव वस्तुनः ॥ २८०॥

अभिन्ना एव सङ्ग्राह्या व्यवहारप्रसिद्धये ।

गुणक्रियादीनां द्रव्यस्य च अत्यन्तभेदवादिभिः भेदाभेदवादिभिश्च विशेषोऽङ्गीकार्यः

यथैकः समवायोऽपि भेदाभेदौ च वस्तुनि ॥ २८१ ॥

अङ्गीकार्या विशेषेण स्थानेषु व्यवहर्तृभिः ।

अखण्डवादिनापि विशेषोऽङ्गीकार्यः

अखण्डवादिनोऽपि स्याद्विशेषोऽनिच्छतोऽप्यसौ ॥ २८२ ॥

व्यावृत्ते निर्विशेषे तु किं व्यावर्त्यबहुत्वतः ।

॥ इति अदृश्यत्वाधिकरणम् ॥ ६ ॥

* * *

## ॥ वैश्वानराधिकरणम् ॥

**ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ १-२-२४ ॥**

**ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ १-२-२५ ॥**

पादद्वयार्थोपसंहारः

बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः ॥ २८३ ॥
प्रसिद्धैरन्यगत्वेन वाच्यः साक्षाज्जनार्दनः ।

वैश्वानराधिकरणतात्पर्यम्

वैश्वानरादयः शब्दा अपि तद्वाचिनस्ततः ॥ २८४ ॥

**ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ॐ ॥ १-२-२६ ॥**





**ॐ अत एव न देवता भूतं च ॐ ॥ १-२-२७ ॥**

**ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ १-२-२८ ॥**

**ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ १-२-२९ ॥**

**ॐ अनुस्मृतेर्बादरिः ॐ ॥ १-२-३० ॥**

**ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ॥ १-२-३१ ॥**

**ॐ आमनन्ति चैनमस्मिन् ॐ ॥ १-२-३२ ॥**

'शब्दादिभ्यः' इति सूत्रतात्पर्यम्, अग्न्यादिश्रुतिहोमाधिकरणत्वादिलिङ्गानि विष्णुपराण्येव

तानि लिङ्गानि ते शब्दा अपि तद्वा हि सर्वशः ।
बहुलाऽप्यज्ञरूढिस्तत्प्राज्ञरूढिं न बाध्यते ॥ २८५ ॥

॥ इति वैश्वानराधिकरणम् ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य द्वितीयः पादः ॥

* * *





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## ॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

तत्र अन्यत्र च प्रसिद्धानां लिङ्गानां नाम्नां च समन्वयः

तत्रान्यत्रप्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः ।
विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यजः॥ २८६ ॥

## ॥ द्युभ्वाद्यधिकरणम् ॥

**ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ १-३-१ ॥**

**ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ १-३-२ ॥**

**ॐ नानुमानमतच्छब्दात् ॐ ॥ १-३-३ ॥**

**ॐ प्राणवच्च ॐ ॥ १-३-४ ॥**

**ॐ भेदव्यपदेशात् ॐ ॥ १-३-५ ॥**

**ॐ प्रकरणात् ॐ ॥ १-३-६ ॥**

**ॐ स्थित्यदनाभ्यां च ॐ ॥ १-३-७ ॥**

'यस्मिन् द्यौः' इत्यादिश्रुतौ आत्मशब्दः विष्णावेव प्रसिद्धः

विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् ।
श्रुतिर्वक्ति

॥ इति द्युभ्वाद्यधिकरणम् ॥ १ ॥





## ॥ भूमाधिकरणम् ॥

**ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ॥ १-३-८ ॥**

**ॐ धर्मोपपत्तेश्च ॐ ॥ १-३-९ ॥**

पूर्णसुखरूपत्वाभिधानात् भूमा विष्णुरेव

अखिलेशत्वाद्भूमा विष्णुः सुखाधिकः॥ २८७॥

॥ इति भूमाधिकरणम् ॥ २ ॥

* * *

## ॥ अक्षराधिकरणम् ॥

**ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ १-३-१० ॥**

**ॐ सा च प्रशासनात् ॐ ॥ १-३-११ ॥**

**ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १-३-१२ ॥**

'अस्थूलमनणु' इत्यादिविरुद्धधर्माणां
ब्रह्मणि अविरोधेनैव सहावस्थानम्

अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः।
योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥ २८८ ॥

ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि।
अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च ॥ २८९ ॥

ब्रह्मणः न निस्स्वभावत्वम्

अन्यवस्तुस्वभावानां स्थौल्यादीनामपाकृतिम्।
नारायणे श्रुतिर्वक्ति न तु तस्यास्वभावताम् ॥ २९०॥

सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः।
दोषाः श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र च ॥ २९१॥

॥ इति अक्षराधिकरणम् ॥

***

## ॥ सदधिकरणम् ॥

**ॐ ईक्षतिकर्मव्यपदेशात् सः ॐ ॥ १-३-१३ ॥**

॥ इति सदधिकरणम् ॥ ४ ॥

***

## ॥ दहराधिकरणम् ॥

**ॐ दहर उत्तरेभ्यः ॐ ॥ १-३-१४ ॥**

**ॐ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॐ ॥ १-३-१५ ॥**

**ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १-३-१६ ॥**

**ॐ प्रसिद्धेश्च ॐ ॥ १-३-१७ ॥**

**ॐ इतरपरामर्शात् स इति चेन्नासम्भवात् ॐ ॥ १-३-१८ ॥**

**ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ १-३-१९ ॥**

**ॐ अन्यार्थश्च परामर्शः ॐ ॥ १-३-२० ॥**

**ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ १-३-२१ ॥**

॥ इति दहराधिकरणम् ॥ ५॥

* * *

## ॥ अनुकृत्यधिकरणम् ॥

**ॐ अनुकृतेस्तस्य च ॐ ॥ १-३-२२ ॥**

**ॐ अपि स्मर्यते ॐ ॥ १-३-२३ ॥**

॥ इति अनुकृत्यधिकरणम् ॥ ६ ॥

* * *

## ॥ वामनाधिकरणम् ॥

**ॐ शब्दादेव प्रमितः ॐ ॥ १-३-२४ ॥**

**ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ॥ १-३-२५ ॥**

एतत्पादाधिकरणविषयपूर्वपक्षसिद्धान्तन्यायसङ्ग्रहः

लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ।
पुनः शब्दा लिङ्गशब्दौ विचार्या द्विस्थिता इह ॥ २९२ ॥





बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता।
अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥ २९३ ॥

लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा।
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ॥ २९४ ॥

समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः।
ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥ २९५ ॥

सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः।

सूत्रेषु साक्षादुक्ताः सिद्धान्तन्यायाः

मुक्तोपसृप्यता प्राणादाधिक्यं सर्वतस्तथा ॥ २९६ ॥

वैलक्षण्यं स्वभावस्य प्रेक्षापूर्वक्रिया तथा।
अरस्य ण्यस्य चेशत्वं सूर्याद्यनुकृतिस्तथा ॥ २९७ ॥

वामनाख्या सर्वकम्पस्तच्छब्दानन्यसिद्धता।
अनामरूपता भेदस्योपजीव्यप्रमाणता ॥ २९८ ॥

सर्वैश्वर्यादिकाद्यास्ता वेदेशेन प्रदर्शिताः।

देवताधिकरणापशूद्राधिकरणयोः समन्वयसमर्थनार्थत्वाभावेऽपि देवादीनामधिकारसमर्थनार्थत्वेन त्रैवर्णिकव्यतिरिक्तानां तदभावसमर्थनार्थत्वेन च प्रसङ्गादुपन्यासः

अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ ॥ २९९ ॥

॥ इति वामनाधिकरणम् ॥

* * *

## ॥ देवताधिकरणम् ॥

**ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ १-३-२६ ॥**

**ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ १-३-२७ ॥**

**ॐ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॐ ॥ १-३-२८ ॥**

**ॐ अत एव च नित्यत्वम् ॐ ॥ १-३-२९ ॥**

**ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॐ ॥ १-३-३० ॥**

**ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ॥ १-३-३१ ॥**

**ॐ ज्योतिषि भावाच्च ॐ ॥ १-३-३२ ॥**

**ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ १-३-३३ ॥**

देवानामधिकारविषये जैमिनिबादरायणमतयोर्भिन्नविषयत्वेनाविरोधः

तत्फलाय विधिः सिद्धे चोपासाया निराकृतः।
यतो जैमिनिनाऽन्यार्थमसिद्धेऽर्थे विधिस्तथा ॥ ३०० ॥

विद्याधिराजस्य मतमविरोधस्तयोस्ततः।

देवानामुपासनाविधानोपपत्तिः

मोक्षे फलविशेषोऽस्ति न च सर्वं प्रकाशते ॥ ३०१ ॥

सर्वदा तेन देवानामपि युक्ता ह्युपासना।





परमेश्वरव्यतिरिक्तानां न सर्वज्ञत्वम्

नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम् ॥ ३०२ ॥

स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम्।
अन्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा ॥ ३०३ ॥

भगवान् बादरायणः अशेषविशेषज्ञः, जैमिनिस्तु सामान्यवेदी

इत्यादयो विशेषास्तु सदा विद्यापतेर्हृदि।
जैमिन्याद्यास्तु सामान्यवेत्तृत्वात्तत्तथाऽवदन्॥ ३०४ ॥

विद्येशमतमेतस्मान्नैव सद्भिर्विरुद्ध्यते।

॥ इति देवताधिकरणम्॥ ८॥

* * *

## ॥ अपशूद्राधिकरणम् ॥

**ॐ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॐ ॥ १-३-३४ ॥**

**ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ १-३-३५ ॥**

**ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ १-३-३६ ॥**

**ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ १-३-३७ ॥**

**ॐ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॐ ॥ १-३-३८ ॥**

॥ इति अपशूद्राधिकरणम्॥

* * *





## ॥ कम्पनाधिकरणम् ॥

**ॐ कम्पनात् ॐ ॥ १-३-३९ ॥**

॥ इति कम्पनाधिकरणम् ॥ १० ॥

* * *

## ॥ ज्योतिरधिकरणम् ॥

**ॐ ज्योतिर्दर्शनात् ॐ ॥ १-३-४० ॥**

॥ इति ज्योतिरधिकरणम् ॥ ११ ॥

* * *

## ॥ आकाशाधिकरणम् ॥

**ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ १-३-४१ ॥**

॥ इति आकाशाधिकरणम् ॥ १२ ॥

* * *

## ॥ सुषुप्त्यधिकरणम् ॥

**ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ १-३-४२ ॥**

॥ इति सुषुप्त्यधिकरणम् ॥ १३ ॥

* * *





## ॥ ब्राह्मणाधिकरणम् ॥

**ॐ पत्यादिशब्देभ्यः ॐ ॥ १-३-४३ ॥**

॥ इति ब्राह्मणाधिकरणम् ॥ १४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ॥

* * *



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## ॥ अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## ॥ आनुमानिकाधिकरणम् ॥

**ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ १-४-१ ॥**

**ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ १-४-२ ॥**

**ॐ तदधीनत्वादर्थवत् ॐ ॥ १-४-३ ॥**

सर्वेश्वरत्वविरोधिदुःखिबद्धादिशब्दसमन्वयः

दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ॥ ३०५ ॥

शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः ।
स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ॥ ३०६ ॥

स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा ॥
न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ॥ ३०७ ॥

यावद्राज्ञ्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः ।
भृत्यबन्धादिकं राज्ञि राज्ञो बन्धादियोग्यतः ॥ ३०८ ॥

कारणं संशयस्य स्यादिति नैव प्रयुज्यते ॥
अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले ॥ ३०९ ॥

अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम्॥
गुणास्तु तादृशा यत्र प्रयुज्यन्तेऽखिला अपि ॥ ३१० ॥

पूज्येष्वेव विशेषेण स्वातन्त्र्यं मुख्यकारणम्।
अतो दोषातिदूरत्वात्संशयस्याप्यसम्भवात् ॥ ३११ ॥

दोषाणां विष्णुगत्वस्य प्राज्ञबुद्धिव्यपेक्षया।
स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दास्तु(श्च) विष्णवि॥ ३१२॥

वासुदेवश्रुतिश्चाह नैव विष्णावमङ्गलम्।
मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलं वदेत् ॥ ३१३ ॥

स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः।
बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित् ॥ ३१४ ॥

एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः।
नैव दोषा हरौ तद्वबुद्ध्योक्ता दोषकारिणः ॥ ३१५ ॥

तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचकाः॥

**ॐ ज्ञेयत्वावचनाच ॐ ॥ १-४-४ ॥**

**ॐ वदतीति चेन्न प्राज्ञो हि ॐ ॥ १-४-५ ॥**

**ॐ प्रकरणात् ॐ ॥ १-४-६ ॥**

**ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ १-४-७ ॥**

**ॐ महद्वच ॐ ॥ १-४-८ ॥**

**ॐ चमसवदविशेषात् ॐ ॥ १-४-९ ॥**

॥ इति आनुमानिकाधिकरणम्॥ १॥





## ॥ ज्योतिरुपक्रमाधिकरणम् ॥

**ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ**
**॥ १-४-१० ॥**

**ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ**
**॥ १-४-११ ॥**

कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिशब्दानां हरौ समन्वयः

जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः ॥ ३१६ ॥

आयजेतश्चायजेतः वसन्तिश्च वसंस्ततः।
विगतच्छादनत्वात्तु गच्छ भूतक्षयंकरः ॥ ३१७ ॥

भुंक्ष्वेत्युक्तो हरिः हुं च हुतमस्मिन् जगद्यतः।
स्फुटत्वात्फडिति प्रोक्तः, कव रक्षण इत्यतः ॥ ३१८ ॥

कवचं, वर्तते यस्मात् षड्गुणत्वेन सर्वदा।
वषट्, तद्वत्वतस्तेषां वौषट् इत्येव कथ्यते ॥ ३१९ ॥

स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दनः।
नमन्त्यस्मिन्गुणा यस्मान्नम इत्येव कथ्यते ॥ ३२० ॥

इत्यशेषक्रियानामशब्दैरेको जनार्दनः।
उच्यते मुख्यतो यस्मात्पदवर्णस्वरात्मभिः ॥ ३२१ ॥

हरेरनन्तगुणत्वसिद्धिः अशेषक्रियानामशब्दसमन्वयस्य प्रयोजनम्

तस्मादनन्तगुणता श्रुतितात्पर्यतोऽस्य हि।
विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् ॥ ३२२ ॥

कर्मणां ब्रह्मज्ञानार्थत्वेन वाक्यसमन्वयोऽपि सङ्गच्छते

अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये।
तदर्थत्वेन कर्मादेः सम्भवादल्पबुद्धये ॥ ३२३ ॥

चतुर्मुखब्रह्मा योगार्थं जानाति

'कश्छन्दसां योगमि'ति श्रुतेः योगार्थतत्त्ववित्।
ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थतः ॥ ३२४ ॥

तस्यापि पूर्वसिद्धस्य ज्ञानमेवेति निश्चयात्।
नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते ॥ ३२५ ॥

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥

* * *

## ॥ नसङ्ख्योपसङ्ग्रहाधिकरणम् ॥

**ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ**
**॥ १-४-१२ ॥**

**ॐ प्राणादयो वाक्यशेषात् ॐ**
**॥ १-४-१३ ॥**

**ॐ ज्योतिषैकेषामसत्यन्ने ॐ**
**॥ १-४-१४ ॥**

॥ इति नसङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

* * *

## ॥ आकाशाधिकरणम् ॥

**ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ॥ १-४-१५ ॥**

॥ इति आकाशाधिकरणम् ॥ ४ ॥

***

## ॥ समाकर्षाधिकरणम् ॥

**ॐ समाकर्षात् ॐ ॥ १-४-१६ ॥**

**ॐ जगद्वाचित्वात् ॐ ॥ १-४-१७ ॥**

**ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ ॥ १-४-१८ ॥**

**ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ १-४-१९ ॥**

**ॐ वाक्यान्वयात् ॐ ॥ १-४-२० ॥**

**ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ १-४-२१ ॥**

**ॐ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॐ ॥ १-४-२२ ॥**

**ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ १-४-२३ ॥**

॥ इति समाकर्षाधिकरणम् ॥ ५ ॥

***

## ॥ प्रकृत्यधिकरणम् ॥
## ॥ एतेनसर्वेव्याख्याताधिकरणञ्च ॥

**ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ**
**॥ १-४-२४ ॥**

**ॐ अभिध्योपदेशाच्च ॐ ॥ १-४-२५ ॥**

**ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ १-४-२६ ॥**

**ॐ आत्मकृतेः परिणामात् ॐ ॥ १-४-२७ ॥**

**ॐ योनिश्च हि गीयते ॐ ॥ १-४-२८ ॥**

**ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ १-४-२९ ॥**

प्रकृत्यधिकरणेन एतेनसर्वेव्याख्याताधिकरणेन च
प्रतिपाद्यानामर्थानां सङ्ग्रहः

स्त्रीशब्दाश्च निषेधार्थाः सर्वेऽपि ब्रह्मवाचकाः ।
विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् ॥ ३२६ ॥

पृथक्समन्वयार्थानि स्थानान्येतानि सर्वशः ।

एतत्पादीयसर्वाधिकरणपूर्वपक्षयुक्तिसङ्ग्रहः

सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता ॥ ३२७ ॥

परस्परविरोधश्च विरोधः कार्यतद्वतोः ।
स्त्रीलिङ्गत्वं निषेधश्च पूर्वपक्षेषु युक्तयः ॥ ३२८ ॥





सिद्धान्तयुक्तिसङ्ग्रहः

दोषात्यस्पृष्टिनियमः शब्दार्थाऽनेकता तथा।
बहुरूपत्वमीशस्य व्यक्त्यव्यक्तिविशेषिता ॥ ३२९ ॥

उत्पादनं स्वदेहाच्च दुर्जनाव्यक्तता तथा।
इत्यादियुक्तयः साक्षात्सिद्धान्तस्थापिका इह ॥ ३३० ॥

समाकर्षाधिकरणे वाक्यान्वयप्रतिपादनस्य
जैमिन्यादिमतानुवादस्य च प्रयोजनम्

अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा।
इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन् ॥ ३३१ ॥

विद्याधिनाथो भगवानपाचक्रे स्वयं प्रभुः।
स्वशिष्याणां प्रसिद्ध्यर्थं मतमात्मीयमंशतः ॥ ३३२ ॥

विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन्

'कल्पनोपदेशादि'ति सूत्रतात्पर्यम्

तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ॥ ३३३ ॥

प्रयोजनबहुत्वेन तस्य तस्याविरोधतः।
उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ॥ ३३४ ॥

परमेश्वरस्य सर्वोत्तमत्वादिविरोधे अन्यार्थपरित्यागः

तथाऽप्येतद्विरोधे तु तद्वाचित्वमपोद्यते।
अविरोधे तु बह्वर्था एतन्मूलतया मताः ॥ ३३५ ॥

पुरन्दरादिषु शब्दप्रवृत्तौ परमेश्वरस्यैव उपजीव्यत्वम्,
पुरन्दरादयो मुख्यार्थाः, परमेश्वरः परममुख्यार्थः

इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र हि।
तत्सिद्धिस्तदपेक्षा च साऽपेक्षा च हरीच्छया॥ ३३६॥

तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता।
उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः॥ ३३७॥

परममुख्यवृत्तिः—महायोगः

प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता।

परममुख्यवृत्तिः—महायोगरूढिः

तत्र प्रयोगबाहुल्यं यदि तत्परता किमु ॥ ३३८॥

उभयं दृश्यते विष्णौ शब्दानामपि सर्वशः।

रूढिस्वरूपम्

प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते ॥ ३३९॥

गौणीस्वरूपम्, लक्षणास्वरूपं च

प्रयोगयुक्तसादृश्यं सम्बन्धो वाऽप्यमुख्यतः।
वृत्तिहेतुरिति ज्ञेयः

न मुख्यार्थानुपपत्तिः किन्तु मुख्यार्थानुपपत्तिदर्शनं
अमुख्यार्थग्रहणे हेतुः

पूर्वायोगेऽपरग्रहः ॥ ३४०॥





'एतमेव सन्तमि'त्यादिश्रुतिः शतर्च्यादिसर्वशब्दानां भगवति विद्वद्रूढिं दर्शयति

एतमेव तथा सन्तं शतर्चीत्यादिका श्रुतिः (नामभिः)।
आचक्षत इति ह्यत्र सन्तमित्यवधारणात् ॥ ३४१ ॥

योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम्।
बहुशो दर्शयत्यग्रस्तात्पर्यात्सनिरुक्तिकम् ॥ ३४२ ॥

सर्वशब्दानां ब्रह्मवाचकस्य अकारस्य व्याख्यानरूपत्वात्
विष्णोः सर्वशब्दवाच्यत्वम्

अ इति ब्रह्म कथितं तद्व्याख्यानात्मता तथा।
शब्दानामपि सर्वेषां

नामविदः कृतकृत्यत्वोक्तिः विष्णोः सर्वशब्दवाच्यत्वज्ञापिका

नामवित्कृतकृत्यता ॥ ३४३ ॥

सकलवैदिकसंहितानां पूर्वोत्तरवर्णानां च विष्णुनामार्थरूपत्वात् विष्णोः सर्वशब्दवाच्यत्वम्

विष्णुनामार्थरूपत्वं संहितादेरथाब्रवीत्।
णकारं च षकारं च बलचेष्टात्मकं वदन् ॥ ३४४ ॥

तज्ज्ञानपूर्वकत्वेन संहिताध्ययनं तथा।
उपसर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा ॥ ३४५ ॥

णकारश्च षकारश्च नामरूपतया मतौ।
तस्मात्समन्वयो विष्णौ स्वरवर्णपदात्मनः ॥ ३४६ ॥

अपि वेदस्य किमुत वाक्यरूपेण सङ्गतिः।

विष्णोः सर्वशब्दवाच्यत्वे स्पष्टश्रुतिः

घोषाः सर्वेऽपि वेदाश्च सर्वे वेदाश्च यत्पदम् ॥ ३४७ ॥

इन्द्रं मित्रं यमिन्द्रं च प्रथमः सङ्कृतिस्तथा।
नामधाः सर्वदेवानामेक इत्यादिका श्रुतिः ॥ ३४८ ॥

**प्रमाणमुक्तविषये**

ज्योतिरुपक्रमाधिकरणे भगवतैव इदमुक्तम्

तदेवोक्तमुपक्रमात्।
इति स्वयं भगवता ब्रुवताऽशेषमन्वयम् ॥ ३४९ ॥

प्रधानस्य अशाब्दत्वप्रतिपादनार्थोऽयं पाद इति व्याख्यानं न युक्तं,
वेदादिषु प्रधानस्य प्रतिपादनात्

न शब्दवाच्यतैवात्र प्रधानस्य निषिद्ध्यते।
सर्ववेदेतिहासेषु पुराणेषु च सङ्ग्रहात् ॥ ३५० ॥

'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ३५१ ॥

इत्यादिवाक्यरूपेण यत्रार्थो नान्य इष्यते।
तेजोऽबन्नात्मकं वाऽपि यद्युपादानमिष्यते ॥ ३५२ ॥

अनाद्येवापराधः कः प्रधानमिति चोदिते।
'अजामेकामि'ति प्राह श्रुतिरेतां यदा तदा ॥ ३५३ ॥

को दोषः सर्वथैवास्ति परिणामि जडं यदि।

अजादिशब्दाः परममुख्यया वृत्त्या परब्रह्मपराः,
मुख्यमात्रतया प्रधानस्यापि प्रतिपादकाः

अस्माकं परमुख्यार्थो भगवानेक एव तु ॥ ३५४ ॥





मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते।
सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः ॥ ३५५ ॥

ग्रन्थान्तरे सूत्रकारेण ब्रह्मणोऽन्यस्य मुख्यार्थमात्रत्वमङ्गीकृतम्

अर्थद्वयमभिप्रेत्य प्रवृत्ते हरिरुक्तवान्।
'कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ ३५६ ॥

योगानां परमां सिद्धिं परमं ते पदं विदुः।'
इति

निरपवादप्रतीतिबलात् सर्वेषामपि शब्दानामुभयार्थत्वम्

बुद्धौ समारोहादुभयोर्योगरूढयोः ॥ ३५७ ॥

त्यागे च कारणाभावादुभयार्थत्वमिष्यते।
विपरीतप्रमाऽभावे पूर्वारोहस्तु कारणम् ॥ ३५८ ॥

सा भवेद्यत्र स व्यर्थः पूर्वारोहो भ्रमो यथा।

प्रधानस्य अशाब्दत्वनिरासोपसंहारः

अतो जगदुपादानं प्रधानं वक्ति सा श्रुतिः ॥ ३५९ ॥

'न सङ्ख्योपसङ्ग्रहादपी'ति सूत्रस्यापव्याख्याननिरासः
सूत्रकारेणैव भागवते पञ्चविंशतितत्त्वाङ्गीकारप्रदर्शनम्

यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ ३६० ॥

पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ३६१ ॥





इति भागवते प्राह विद्याधीशः स्वयं प्रभुः ॥ ३ ॥

प्रकृत्यधिकरणं ब्रह्मणो जगदुपादानताप्रतिपादनार्थमिति व्याख्याननिरासः

न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते ॥ ३६२ ॥

अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः ।
सदैकरूपविज्ञानबलआनन्दरूपकः ॥ ३६३ ॥

निर्विकारोऽक्षरः शुद्धो निरातङ्कोऽजरोऽमरः ।
अविश्वो विश्वकर्ताऽजो यः परः सोऽभिधीयते॥ ३६४ ॥

निर्विकारमनौपम्यं सदैकरसमक्षयम् ।
ब्रह्मेति परमात्मेति यं विदुर्वैदिका जनाः ॥ ३६५ ॥

इति श्रुतिपुराणोक्त्या न विकारी जनार्दनः ।

विकारप्रकाराः, ब्रह्मणः विकारित्वं युक्तिविरुद्धम्

पराधीनविशेषाप्तिरनिवर्त्योऽन्यथाभवः ॥ ३६६ ॥

क्षीरादिवद्विकारः स्यान्नैव स स्याद्धरेः क्वचित् ।

ब्रह्माधिष्ठितं प्रधानं जगदुपादानं, न तु ब्रह्मणः विश्वात्मना भवः

अपादानत्वमेवास्य यद्युपादानतेष्यते ॥ ३६७ ॥

अङ्गीकृतं तत्पितृवत् न तु विश्वात्मना भवः ।

चेतनस्य ऊर्णनाभ्यादेः न उपादानत्वम्, तदुपभुक्तान्नादेरेव उपादानत्वम्

न चोर्णनाभिजनितृमातृणां च विकारिता ॥ ३६८ ॥

चेतनत्वात्तदन्नं हि कार्यरूपतया भवेत् ॥





श्रुतिस्मृत्यादिषु ब्रह्मणः निमित्तत्वमेवोक्तम्

अपादानतया विश्वकर्तृत्वं बुद्धिपूर्वकम् ॥ ३६९ ॥

उक्तं भाल्लविशाखायां ब्रह्मतर्के च सादरम् ।
'इच्छामात्रात्प्रभोः सृष्टिरविकारस्य सर्वदा ॥ ३७० ॥

स्वभावोऽयमनन्तस्य रजो येनाभवज्जगत् ।'
'स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः ॥ ३७१ ॥

ससर्ज मातापितृवदूर्णनाभिवदेव वा ।
प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा ॥ ३७२ ॥

चेतनस्य अचेतनविकारत्वं अचेतनस्य चेतनविकारत्वं वा क्वापि न दृष्टम्

न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम् ।
नाचेतनविकारोऽपि चेतनः स्यात्कदाचन ॥ ३७३ ॥

जगतः ब्रह्मणोऽन्यत्वात् न ब्रह्मविकारत्वम्

न चान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते ।
न क्षीरादन्यता दध्नः केनचिद् दृश्यते क्वचित् ॥ ३७४ ॥

सर्वज्ञाद्ब्रह्मणोऽन्यत्वं जगतो ह्यनुभूयते ।
अभेदः सत्त्वमात्रेण स्यात्खर्वस्वर्णयोरपि ॥ ३७५ ॥

भागेन परिणामश्चेद्भागयोर्भेद एव हि ।
यो भागो न विकारी स्यात्स एवास्माकमीश्वरः॥ ३७६ ॥

सदनन्तानन्दचितां समुदायस्य ब्रह्मत्वमिति पक्षेऽपि
ब्रह्मोपादानता ब्रह्मनिमित्तकता च न युज्यते

भिन्नानां समुदायस्य नाम ब्रह्मेति त(चे)द्भवेत् ।
ब्रह्मोपादानता न स्यात्तदा विश्वस्य हि क्वचित्॥ ३७७ ॥





'शृङ्गात् शर' इत्यादिदृष्टान्तैः अवधित्वमेव प्रतीयते, न तु उपादानत्वम्

शृङ्गाच्छरोऽविलोमभ्यो दूर्वा गोमयतस्तथा।
वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमिष्यते ॥ ३७८ ॥

उपादानैकदेशत्वं यद्यप्यत्र प्रदृश्यते।
अप्यपादानतैवात्र दृष्टान्तो ब्रह्मणो भवेत् ॥ ३७९ ॥

न ह्युपादानतैवात्र बाह्यावयवगौरवात्।

अचेतनं गोमयमचेतनस्य वृश्चिकदेहस्यैव उपादानं, न तु वृश्चिकस्य

न चाचेतनतस्तत्र चेतनस्य समुद्भवः ॥ ३८० ॥

उपादानतया किं तर्ह्यपादानं ह्यचेतनम्।
कार्यदेहगतस्यास्य चेतनस्य प्रदृश्यते ॥ ३८१ ॥

'सच्च त्यच्चे'त्यादिश्रुतौ ब्रह्मणः विश्वभावः नोच्यते

सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते।
तत्सृष्ट्वेति गिरैवास्य पूर्वं विश्वस्य सिद्धितः ॥ ३८२ ॥

'सच्च त्यच्चे'त्यादिश्रुत्यर्थः

सत्त्वात्ततेर्वैदिकत्वात् सम्यग्वक्तुमशक्यतः।
आश्रयत्वात् स्वाश्रयत्वात् ज्ञानत्वाद् दुर्विदत्वतः ॥ ३८३ ॥

सत्ततेर्यातनाच्चैव ह्यप्राप्यत्वाच्च दुर्जनैः।
नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सदा ॥ ३८४ ॥

जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते।
व्यक्तिरुक्तगुणानां हि पुरुषापेक्षया नृणाम् ॥ ३८५ ॥

भवेदभवदि(त्याद्यः)त्यस्मात् प्रयोगश्चात्र युज्यते।





ब्रह्मपरिणामनिरासोपसंहारः

तस्मादशेषकर्तैको निर्विकारो रमापतिः ॥ ३८६ ॥

शब्दैः प्रकृतिरित्याद्यैः स्त्रीलिङ्गैरभिधीयते।

'बहु स्याम्' इतिश्रुतावपि ब्रह्मपरिणामः नोच्यते

बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते ॥ ३८७ ॥

तत्तद्गतेन रूपेण तदर्थं ह्यसृजज्जगत् ॥

ब्रह्मणः मिथ्याप्रपञ्चारोपाधिष्ठानत्वरूपमुपादानत्वमिति प्रतिपादयतो विवर्तवादस्य निरासः

यच्चाविकृतमेवैकं ब्रह्म विश्वात्मना मृषा ॥ ३८८ ॥

दृश्यते मन्ददृष्ट्यैव स सर्ग इति कथ्यते।

भ्रमस्य ब्रह्माश्रितत्वे सार्वज्ञभङ्गः, जीवाश्रितत्वे जीवब्रह्मभेदस्य वास्तवत्वम्

सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा ॥ ३८९ ॥

ब्रह्मणश्चेत्क्व सार्वज्ञम् अन्यगा चेत्स्वतोऽन्यता।

देहेन्द्रियाद्यनात्मप्रपञ्चमात्रस्य भ्रान्तिकल्पितत्वमित्यपि न युक्तम्

नादेहयोगिनो दृष्टिरिति तत्कारणं स्वतः ॥ ३९० ॥

देहिनः कारणयुता देहाश्च यदि न भ्रमात्।
किं भ्रान्तिकल्पितं तत्र

जीवब्रह्मणोर्भेदस्य भ्रान्तिकल्पितत्वेऽन्योन्याश्रयता

भेदोऽपि भ्रमजो यदि ॥ ३९१ ॥





भ्रान्तेरज्ञानमूलत्वात् तस्य भेदव्यपेक्षया।
नाज्ञानकल्पकं किञ्चिदन्योन्याश्रयता यतः ॥ ३९२ ॥

'नेह नाने'त्यादिश्रुतिः प्रपञ्चस्य भ्रान्तिकल्पितत्वे प्रमाणमिति न युक्तम्

भ्रमत्वे त्वियमुक्तिश्च तदन्तःपतनान्न हि।

प्रपञ्चस्य व्यावहारिकता न शक्याङ्गीकारा

व्यावहारिकता चास्य स्यादबाध्यत्व एव हि ॥ ३९३ ॥

बाध्यं नार्थक्रियाकारि

स्वप्नस्यापि वासनाजनितत्वेन सत्यत्वम्

न च स्वप्नोऽपि नो मृषा।
वासनाजनितत्वेन तस्याप्यङ्गीकृतत्वतः ॥ ३९४ ॥

स हि कर्तेति वाक्याच्च

स्वप्नमायासरूपेत्यादिश्रुतौ स्वप्ने जाग्रत्त्वादिप्रतिभासस्य भ्रमत्वमुक्तम्

जाग्रत्त्वमिति हि भ्रमः।

रज्जौ सर्पभ्रमे सत्यस्य सर्पज्ञानस्यैव भयकारणत्वं, न तु असत्यस्य सर्पस्य

सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् ॥ ३९५ ॥

तदेवार्थक्रियाकारि तत्सदेवार्थकारकम्।

सत्यस्य ब्रह्मणः अर्थक्रियाकारित्वं मायावादिना अङ्गीकृतम्

ब्रह्म त्वर्थक्रियाकारि परतः स्वत एव वा ॥ ३९६ ॥

अङ्गीकृतं हि तेनैव परतस्त्वे न च प्रमा।





अमुख्यसत्यस्य प्रमाणत्वं न उभयवादिसम्प्रतिपन्नम्

अमुख्यसत्यमानस्य साधकत्वे सदाऽऽवयोः ॥ ३९७ ॥

न हि सम्प्रतिपत्तिः स्यादतस्तिष्ठतु सा (ऽ)प्रमा ।
न हि विप्रतिपन्नेन शक्यं साधयितुं क्वचित् ॥ ३९८ ॥

सत्यस्य साक्षिणः प्रमाणत्वमुभयसम्प्रतिपन्नम्

साधकत्वं तु सत्यस्य साक्षिणो ह्यावयोर्द्वयोः ।
सम्यक्सम्प्रतिपन्नं तन्न विवर्तमतं भवेत् ॥ ३९९ ॥

प्रमाणप्रमेयव्यवस्थानङ्गीकारे विवादितैव न स्यात्

यदि नाङ्गीकृतं किञ्चिदनङ्गीकृतताऽपि हि ।
नाङ्गीकृतेति मूकः स्यादिति नास्मद्विवादिता ॥ ४०० ॥

विश्वसत्यत्वप्रतिपादकश्रुतयः

'विश्वं सत्यं' 'यच्चिकेत' 'प्र घा न्वस्य' 'यथार्थतः' ।
इत्यादिश्रुतयः सर्वा विश्वसत्यत्ववाचिकाः ॥ ४०१ ॥

विश्वसत्यत्वे प्रत्यक्षमपि प्रमाणम्, गगनादीनां साक्षिप्रत्यक्षत्वम्

सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् ।

साक्षिसिद्धस्य त्रैकालिकाबाध्यत्वम्

साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोषतः ॥ ४०२ ॥

सर्वकालेष्वबाध्यत्वं साक्षिणैव प्रतीयते ।





कालस्य साक्षिप्रत्यक्षत्वं, साक्षिसिद्धत्वम्

कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतितः ॥ ४०३ ॥

अतीतानागतौ कालावपि नासाक्षिगोचरौ।

कालसाधने अनुमानस्य नावसरः

पक्षीकर्तुमशक्यत्वान्नानुमा तत्र वर्तते ॥ ४०४ ॥

तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम्।
साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते ॥ ४०५ ॥

तस्मान्न तं विना किञ्चित्स्मर्तुं द्रष्टुमथापि वा।
शक्यं तन्नित्यसिद्धेर्हि नानुमावसरो भवेत् ॥ ४०६ ॥

साक्षिसिद्धस्य सत्यत्वोपसंहारः

अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम्।

साक्षी हि ज्ञानस्वरूपं प्रामाण्यं च स्वमहिम्नैव विषयीकरोति,
परीक्षया दोषशङ्कानिरासमात्रम्

परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेत् ॥ ४०७ ॥

साक्षिणः सर्वथा प्रामाण्याग्राहकत्वे ब्रह्मणोऽपि विनिवृत्तिः स्यात्

अन्यथा श्रुतियुक्त्यादिप्रमाणैश्च सहैव तु।
अकस्माद्विनिवृत्ति(श्च)स्तु किं विश्वस्य न शङ्क्यते ॥ ४०८ ॥

इतःपूर्वं तथाभावाद्यदि नो संसृतेर्गतिः।
वाक्यानुमादितश्चेत्स्यात्तत्प्रामाण्यं च साक्षितः ॥ ४०९ ॥





साक्षी ब्रह्मसत्यत्वप्रतिपादकवाक्यादेः प्रामाण्यं सर्वकालेषु आत्यन्तिकं गृह्णाति

तत्प्रामाण्यं यथा साक्षी स्थापयत्येवमेव हि।
सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य च ॥ ४१० ॥

अक्षजादिज्ञानस्य आत्यन्तिकं प्रामाण्यं गृह्णन् साक्षी विश्वसत्यतां स्थापयति

एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम्।
किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः ॥ ४११ ॥

विश्वस्य एकजीवाज्ञानकल्पितत्वनिरासः

एकाज्ञानकृतं विश्वमिति यच्चोच्यते मृषा।
बहुज्ञानकृतं विश्वमिति तस्योत्तरं भवेत् ॥ ४१२ ॥

परस्य सत्यतां जानन्नपि यः स्वात्मतस्करः।
परो नास्तीति वदति किमित्युन्मत्तवद्वदेत् ॥ ४१३ ॥

पराभावेऽपि वाग्व्यर्था यदि नैवोच्यते तदा।
कशावेत्रादिकं तस्य तस्करस्योत्तरं वदेत् ॥ ४१४ ॥

'प्रपञ्चो यदि विद्येते'त्यादिश्रुतिः न विश्वमिथ्यात्वसाधिका

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ ४१५ ॥

विकल्पो विनिवर्तेत कल्पितो यदि केनचित्।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ ४१६ ॥

इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयम्।
विश्वस्य सत्यतामाहुः

अस्याः श्रुतेः भेदपञ्चकप्रतिपादकत्वम्

विद्येतोत्पत्तिमेव च ॥ ४१७ ॥

विदोत्पत्ताविति ह्यस्माद्धातोः उत्पत्तिरेव हि।
निवृत्तिव्याप्तियुक् प्रायः प्रपञ्चो भेदपञ्चकः ॥ ४१८ ॥

"जीवेश्वरभिदा चैव जडेश्वरभिदा तथा।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥ ४१९ ॥

मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः।
सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात्॥ ४२० ॥

द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्।"

इति श्रुतेः

'मायामात्रमि'त्यस्य हरिविद्यया रचितमित्यर्थः

मितं त्रातं मायाख्यहरिविद्यया ॥ ४२१ ॥

'अद्वैतं परमार्थतः' इत्यस्य हरिरेकः सर्वोत्तम इत्यर्थः

उत्तमोऽर्थो हरिस्त्वेकस्तदन्यन्मध्यमाधमम्॥

'वाचारम्भणमि'त्यादिश्रुतेः साङ्केतिकं नाम विकृतं,
वैदिकं नाम नित्यमित्यर्थः

वाचारब्धं तु साङ्केत्यं नाम स्याद्विकृतं बहु ॥ ४२२ ॥

नित्यं तु नामधेयं यन्मृत्तिकेत्यादि वैदिकम्॥





एकविज्ञानेन सर्वविज्ञानश्रुत्यर्थः

प्राधान्यात्तत्परिज्ञानात् प्राकृताज्ञोऽपि पूरुषः ॥ ४२३ ॥

विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ।

सत्यशब्दस्य नित्यत्वार्थकत्वम्

सदातनं सत्यमिति नित्यमेवोच्यते बुधैः ॥ ४२४ ॥

प्रयोगश्चोत्तरत्रास्ति

'जरा यद्येनमाप्नुयात् ।
देहः प्रध्वंसते चायं किं ततोऽस्याति(वि)शिष्यते॥ ४२५ ॥

हन्यते न वधेनायं जरया च न जीर्यते ।
एतत्सत्यं ब्रह्मपुरमि'ति नित्यत्व एव हि ॥ ४२६ ॥

वाचारम्भणश्रुतेः मिथ्यात्वबोधकत्वेन व्याख्यानं न युक्तम्

वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।
पुनरुक्तिर्नामधेयम् इतीत्यस्य निरर्थता ॥ ४२७ ॥

एकेन मृत्पिण्डेनेत्यादिदृष्टान्तवाक्यानामपव्याख्याननिरासः

एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ।
विकारित्वविवक्षायां न चैकनखकृन्तनम् ॥ ४२८ ॥

सर्वं कार्ष्णायसं च स्यात् अतः सादृश्य एव च ।
विवक्षाऽत्र तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना ॥ ४२९ ॥

प्राधान्यप्रतिपत्त्यर्थं सृष्ट्यादेश्चैव(ष) विस्तरः ।

विवर्तवादनिरासोपसंहारः

तस्मात्केनापि मार्गेण न विवर्तमतं भवेत् ॥ ४३० ॥

तदसंख्यातदोषेतं हेयमेव शुभार्थिभिः ।
असङ्ख्यत्वेन दोषाणां ग्रन्थाधिक्यभयादपि ॥ ४३१ ॥

उपरम्यते ततो विष्णुरिच्छापूर्वकमश्रमः ।
करोति पितृवद्विश्वं पूर्णाशेषगुणात्मकः ॥ ४३२ ॥

॥ इति प्रकृत्यधिकरणम्, एतेनसर्वेव्याख्याताधिकरणञ्च ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्यायस्य चतुर्थपादः ॥

## ॥ प्रथमोऽध्यायः समाप्तः ॥

* * *



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

**श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य प्रप्रथमटीका**

## श्रीपद्मनाभतीर्थविरचिता

# सन्न्यायरत्नावली

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## अथ प्रथमाध्यायस्य चतुर्थपादे

## ॥ युक्त्यधिकरणम् ॥

३२६ इदानीं स्त्रीवाचिनामभाववाचिनां च शब्दानां त्वं पुमानित्यादौ श्रूयमाणानां पुरुषे भावरूपे घटमानानामपि प्रवृत्तिं दर्शयति **स्त्रीशब्दा इति** । सततरमणत्वात् देहादेव चतुर्मुखादिप्रसूतिकारणत्वात् निमित्तात् स्त्री । भावयितुमयोग्यत्वात् घटादिवद्व्यक्तत्वाभावाद्वा अभावो हरिरित्याद्यूहनीयम्।

३२६ आनुमानिकमप्येकेषामित्यारभ्य आपरिसामाप्तेष्वधिकरणेषु यथाक्रमेण विषयान् पूर्वपक्षेषु हेतून् सिद्धान्तहेतूंश्च सिंहावलोकनन्यायेन सङ्क्षिप्य दर्शयति **विरोधीत्यादिना**।

३३१ नन्वन्यत्रप्रसिद्धानां शब्दानां हरौ साक्षादेव समन्वयप्रतिपादयितुमारब्धोऽयं पादः । तत्किमर्थमत्र केषाञ्चिद्वाक्यानां कर्मप्रतिपादनद्वारा भगवति समन्वयोऽभ्यनुज्ञायते। **अन्यार्थं तु जैमिनिः** इत्यादिसूत्रसन्दर्भेणेत्यत आह **अन्वय इति**।

३३२ **स्वशिष्याणां** जैमिन्यादीनामिति शेषः।

'जातमोतं हरौ यस्माज्ज्योतिरि'त्यादिना योगवृत्त्या सर्वशब्दा हरौ वर्तन्त इत्युक्तं प्राक् । तन्न युज्यते । ज्योत्यादिशब्दानां ब्रह्मव्यतिरेकेण अर्थान्तरानभ्युपगमे ब्रह्मणि सर्वसमघटेनोदकमाहरेत्यादिव्यवहारसिद्ध्यर्थम्

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम्।





अर्थान्तरेष्वपि शब्दानां प्रवृत्तिरङ्गीकृता । अतस्तदनुसारेण तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्र इत्यादिषु नियुक्तिकोपदेशात् । कः प्राण्याद्यदेष आकाश आनन्दो न स्यादित्यादिलिङ्गात् । विश्वामित्राकाशादि-शब्दानां विष्णौ वाचकत्वशक्तिरेवावसीयते । यत्र शब्दस्यार्थान्तरपरत्वं विरुद्धं तत्र ब्रह्मपरत्वमेव । यत्र अविरुद्धं तत्र अर्थान्तराण्यप्यमुख्यतयोच्यन्ते । 'यः सर्वज्ञः सर्वविदि'त्यादौ सर्वशब्देन रूढमप्यन्यदुच्यते । ब्रह्म तु सर्व इति योगवृत्त्योच्यते । सरसीति (सीदतीति) सत्य इत्यादिनिरुक्त्या सत्य इत्यादिशब्दाभिधेयत्वं ब्रह्मणोऽव-गन्तव्यम् । अतः अर्थान्तरानुसारेण शब्दमात्रस्य ब्रह्मपरत्वाभिधानं तूक्तमेव । सकृदुच्चारितशब्दस्याप्यनेकार्थ-वाचित्वं दृष्टम् । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इत्यादौ ।

३३६ ननु ब्रह्मणस्तद्व्यतिरिक्तानां च शब्दाभिधेयत्वमेकप्रकारं किं न स्यात् । शकटादीनामिव वाहशब्दाभि-धेयत्वम् । अत आह **इतो हीति** । यथा अयो दहतीति अयसो दाहकत्वमग्निदाहकत्वमुपजीव्य प्रयुज्यते । एवं घटत्वादिकं भगवतो गुणमुपजीव्यैव कलशादयोऽपीशद्घटकत्वादिना घटादय इति रूढ्या जाताः । मुख्य-पूर्वकत्वात् उपचारस्य । न हि सिंहमजानतः तद्गुणयोगात् देवदत्ते सिंहशब्दव्यवहारो भवति । तथा पाद्मे । 'परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि । व्यवह्रियन्ते सततं लोकवेदानुसारत' इति । यद्यपि हरेरपि शब्दार्थत्वमन्यशब्दार्थत्वापेक्षम् । यथा सर्वं जानतीति सर्वज्ञ इत्यन्यशब्दार्थमपेक्ष्य सर्वज्ञत्वं भगवत उच्यते । तथाऽप्यन्यद्वस्तुशब्दवाच्यमपेक्ष्यैव स्वशब्दवाच्यत्वं व्यवाह्रियतामिति हरीच्छयैवैतदित्यदोषः । न हि वाचका-पेक्षया वाच्यमिति व्यवह्रियत इत्येतावता वाच्यममुख्यं भवति । तस्माद्विष्णौ परममुख्यवृत्तिरेव । शब्दस्य अर्थान्तरे तु मुख्यमात्रवृत्तिर्लक्षणावृत्तिर्गौणीवृत्तिरिति तिस्रो वृत्तयो भवन्ति । ननु परमेश्वरापेक्षया योऽर्थो मुख्यः तत्र शब्दानां व्युत्पत्तिः कथं युज्यते । न ह्यग्निशब्दस्य माणवके व्युत्पत्तिरिति चेत् । मैवम् । अग्निर्माणवक इति व्यवहारादज्ञाताग्निशब्दमुख्यार्थस्य माणवकेऽप्यग्निशब्दव्युत्पत्तिसम्भवात् । सर्षपतैलादावप्यमुख्यार्थतैलशब्दस्य वृत्तिसम्भवाच्च । एवमज्ञातेऽपि भगवति परममुख्यार्थे शब्दानां घटादिषु व्युत्पत्तिर्युज्यते ।

३३८ लोके परममुख्यवृत्तेर्लक्षणमाह **प्रवृत्तीति**।

स्तम्भकत्वघटकत्वादीनां वृत्तिहेतूनामाधिक्यं यत्र यस्मिन्नर्थे स्तम्भघटादिशब्दा मुख्या भवन्ति । तत्रैव तेषां प्रयोगाधिक्येऽतिशयेन परममुख्यता । सर्वस्तम्भकत्वसर्वघटकत्वादीनां वृत्तिहेतूनां हरावेव मुख्यत्वात् तस्मिन्नेव वेदेतिहासपुराणादिषु प्रयुक्तत्वात् स्तम्भादिशब्दानां तैः परमयोगरूढ्या विष्णुरेवोच्यते । न च अवयववृत्त्यखण्डवृत्त्योरेकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धत्वात् योगरूढि नाम वृत्तिः नास्तीति वाच्यम् । तस्याः पङ्कजादिशब्देषु दृष्टत्वात् । न हि पङ्कजशब्दस्य योगमिति वाच्यम् । असत्यादिव्यावृत्तशब्देन वाच्यत्व-प्रसङ्गात् । लक्ष्यत्वविशेषेण निर्विशेषत्वभङ्गाच्च । असत्यपदव्यावृत्तस्यापि लक्ष्यकत्वे तेन किं लक्ष्यमित्युक्ते ब्रह्मेति वक्तव्यम् । ब्रह्मपदस्याप्यवाचकत्वे तेनापि किं लक्ष्यमित्युक्ते अन्यत्पदं वक्तव्यम् । तेनाप्येवमित्य-नवस्थाप्रसङ्गः ।





ननु यदापादितमसत्यं न भवतीति सत्यमित्युक्ते सत्यव्यावृत्तिवैशिष्ट्यमायातं ब्रह्मण इति तदिष्टमेव । अतद्व्यावृत्तिधर्मकत्वेन अङ्गीकारादित्याशङ्क्याह **यद्यभावेति** । अयमर्थः । सत्यादिपदवत्सर्वज्ञादिपदमपि ब्रह्मणि श्रूयत एव । अत्र असत्यं न भवतीति सत्यमिति असत्यव्यावृत्तिं वदताऽसर्वज्ञं न भवतीति सर्वज्ञमित्यसर्वज्ञताव्यावृत्तिरपि ब्रह्मण्यङ्गीकार्यैव । अविशेषात् । ततश्च सर्वज्ञत्वं तस्मिन् सिद्ध्येत् । नञ्द्वयोः भावार्थत्वात् । यदि असर्वज्ञत्वनिषेधेऽपि सर्वज्ञत्वसिद्ध्या ब्रह्मणो सर्वज्ञत्वं न व्यावर्त्यते तर्हि अनानन्दनिषेधेऽप्यानन्दो न व्यावर्त्येत । तथा असत्याज्ञानादिनिषेधेऽपि असत्याज्ञानत्वादिकं च न व्यावर्त्येत । अविशेषात् । तथा असत्यसुखत्व-असत्यत्व-अज्ञानादिकं ब्रह्मणि स्यात् । यदि सत्यादिपदैरसत्यादिविरोधित्वेनोक्तत्वात् न असत्यादिकं ब्रह्मणः तर्हि ईश्वरपदेनानीश्वरनिषेधत्वेनोक्तत्वात् न अनैश्वर्यं दुर्निवारमित्युक्तमेव । अत एव निर्विशेषत्वखण्डनेन गत्यन्तराभावादखण्डवादिना अनिच्छताऽपि ब्रह्मणि विशेषः स्वीकार्यः । तथा गुण-गुणिनोरभेदवादिना भेदाभेदवादिना च स बहुमानं स्वीकार्यः । तेन विनाऽनिर्वाहादित्याह **अखण्डेति** । अतो विशेषबलादेव गुणानां ब्रह्मणश्चात्यन्ताभेदेऽपि गुणगुणिभावम् । 'उभयव्यपदेशात्त्वहिकुण्डलवत्', 'प्रकाशाश्रयवत्वाद्वा तेजस्त्वात्, 'पूर्ववद्वे'ति सूत्रत्रयेण निदर्शनत्रयं प्रदर्श्य भगवान् सूत्रकारः प्रतिपादितवानित्याह **निदर्शनेनेति** । ननु ब्रह्मपदाभिहितस्य पदान्तरपर्यालोचनया गुणान्वयो भवेत् । नतु ब्रह्मपदेनैव गुणान्वितमभिधीयते । ब्रह्मपदाभिधेयज्ञानमेव मुक्तिसाधनमुक्तम् । **ब्रह्मविदाप्नोति परमिति** । न तु ब्रह्मगुणज्ञानं मुक्त्यनुपयोगित्वादेव ब्रह्मणो गुणत्वं श्रुतितात्पर्यतः सिद्ध्यतीत्याशङ्क्य प्रतिषेधति **तच्चेति** । सामान्यतः सर्वगुणानामपि ब्रह्मपदेनैवोक्तेः न तेन गुणानन्वितं ब्रह्मोच्यते । तथा हि । ब्रह्म किमित्याकाङ्क्षायां सत्यं ज्ञानमित्यादिविशेष उच्यते । तस्य च ब्रह्मपदेन सामान्यतोऽप्रतिपत्तौ किमित्याकाङ्क्षैव न स्यात् । धर्मिवाचकेन ब्रह्मपदेन सामान्यत उक्तानां सत्यज्ञानादिधर्माणां विशेषतोऽवगत्यर्थं हि सत्यज्ञानादिपदं प्रयुज्यते । धर्मिवाचकपदं धर्मानपि सामान्यतो विधातुं शक्नोत्येव । धर्म्यभिन्नत्वात् तेषाम् । अतः प्रथमोच्चारितपदं सामान्यतोऽर्थान्तरैरन्वितं स्वार्थमभिदधाति । प्रथमनिर्दिष्टानामर्थान्तराणां विशेषतो विधायकानि पदान्तराणीत्यन्विताभिधानमेव युक्तम् । यतः केनचिदर्थेनान्वित एव स्वार्थे शब्दोऽप्युत्पन्नः अतः तथाविधमेव प्रतिपादयति । अनेन एतदन्वितमिति पदान्तरवशात् ज्ञायते । अन्विताभिधानानभ्युपगमे दूषणमाह **यदीति** । अतः अन्विताभिधानसामर्थ्यादिव वेदैः आनन्दाद्यखिलगुणात्मक एव उत्तरेणान्वयः । विषण इति शब्देन आक्रियमाणं विष्णोः पूर्णबलं षशब्देनाक्रियमाणमुच्यमानं जगत्प्रणेतृत्वं देशतः कालतो गुणतश्चाततत्वम् । वाशब्दोक्तमृचां संहितामनु तदर्थत्वेन वेदमक्षरद्वयसंयोगरूपतया संहिततया एतदेव सर्वत्रोच्यते इति स सम्पूर्णबलं सर्वप्रणेतृत्वशक्त्यादियुक्तं च विष्णुं वेद । वीत्युपसर्गस्य विशेषकत्वेन इकारस्य च ताच्छील्यार्थस्य धर्मवाचित्वेनोपसर्जनत्वात् न पृथक् तयोर्व्याख्यानमत्र कृतम् । णशब्दस्यात्रोक्तात्मत्वेन विहित-त्वात् । उग्रं वच इति सर्ववाचमुपलक्षणम् । अतः सर्ववेदेतिहासादिगतवर्णमात्रवाच्यो विष्णुः ।

३४६ उक्तार्थमुपसंहरति **तस्मादिति** । किञ्च 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव । सर्वे वेदा यत्पदमामनन्ति । इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्, एकं सद्विप्रा बहुधा





वदन्त्यग्निं यमं मातरिश्वानमाहुः। यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः, यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वाः स प्रथमं सङ्कृतिर्विश्वकर्मा। स प्रथमो मित्रो वरुणोऽग्निः स प्रथमो बृहस्पतिश्चिकित्वान्। तस्मा इन्द्राय सुतमा जुहोमि । यो देवानां नामधा एक एव' इत्यादिश्रुतिः समुद्रमेघादिघोषा अपि भगवद्विषयाः किमु सकलवेदगतवाक्यपदाक्षराणीत्याह **घोषा इति**। एतदेवोक्तम् **ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एक इति**।

३४९ निःशेषवेदसमन्वयं ब्रुवता सूत्रकारेणेत्याह **तदेवेति**।

३५० एवं तावदव्यक्तात्पुरुषः पर इत्यादिवाक्यगतानामव्यक्तादिशब्दानां प्रधानादिष्वमुख्यवृत्तिमङ्गीकृत्यैव विष्णौ परममुख्यवृत्तिरभिहिता । अधुना **आनुमानिकमप्येकेषामि**त्यादिसूत्राणां परेण यदन्यथाव्याख्यानं कृतममुख्यतयाऽपि न प्रधानं श्रुत्यभिधेयमिति तद्दूषयति **न शब्देति** । 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः', 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवा' इत्यादिश्रुतिस्मृतिवाक्येषु श्रूयमाणत्वान्न प्रधानं श्रुत्याद्यसिद्धम् । यद्यत्र तेजोऽबन्नात्मकजगदुपादानं जडमनुमानादिसिद्धं भूतसूक्ष्मशब्दाभिधेयं वस्तूच्यत इत्युच्यते । तदस्तु तस्यैव प्रधानत्वात् । न हि नाम्नि विप्रतिपत्तिर्युक्ता।

३५४ ननु प्रधानस्यापि श्रुत्यर्थत्वे कथं सर्वश्रुत्यर्थो विष्णुरेवेति पक्ष इत्यत आह **अस्माकमिति** ।

३५६ सकृदुच्चारितशब्दस्य परममुख्यार्थपरत्वं प्रमाणेनोपपादयति **अर्थद्वयमिति**।

योगानां शब्दयोगवृत्तीनां परमां सिद्धिं परमेश्वरे हि शब्दयोगवृत्तयो मुख्यतः सिध्यति अत्रेति कारणं स्वीकारस्येति शेषः । अतः सर्वश्रुतीनां महायोगवृत्त्या विष्णवभिधायित्वे क्वचिद्रूढ्या प्रधानस्यापि प्रतीयमानत्वादजादिशब्दैर्बाधकप्रमाणाभावादजामेकामित्यादिका श्रुतिः प्रधानमपि प्रतिपादयतीति युक्तम्। न च वाच्यमेकस्मिन्नेव शब्देऽनेकार्थविधानं न युज्यते वाक्यभेदप्रसङ्गादिति। अप्राप्तत्वाद्गुणभूतप्रधानविशिष्टब्रह्म विधानं युक्तमेव। यथा यदाग्नेयोऽष्टाकपाल इत्यादिकर्मविधौ कर्मणो गुणानां कपालादीनां वा प्राप्तत्वेन सर्वगुणविशिष्टं कर्म विधीयते । अपि च यतः सूत्रकारेणैव प्रधानं सप्रपञ्चं प्रतिपादितं भागवते । अतस्तदभावप्रतिपादनं सूत्रार्थत्वेन व्यामोहमात्रविजृम्भितमित्याशयवानाह **यत्तदिति**॥ ३६०॥

३६२ सदसदात्मकस्थूलसूक्ष्मरूपमविशेषं स्वयमन्यस्य विकारो न भवतीति । पञ्चभिर्भूतैः पञ्चभिस्तन्मात्रैः चतुर्भिर्मनोबुध्यहङ्कारचित्तैः दशभिरिन्द्रियैर्विकारभूतैः ब्रह्म बृंहितमित्यर्थः । ननु ब्रह्मैव जगदुपादानम् । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रादित्यत आह **न चेति** । विकारित्वमेवोपादानत्वम् । न तु ब्रह्मणो निर्विकारत्वात् नापि तद्धर्मस्य शक्त्यादेः तस्यापि निर्विकारत्वश्रवणात् । 'सदैकरूपविज्ञानबल' इति विकारो द्विविधः । एकः पूर्वावस्थासङ्कोचेन अवस्थान्तरविशेषोऽन्याधीनः । यथा सुवर्णस्य कुण्डलाद्याकारः । परः अत्यन्ता-





पूर्वावस्थाप्रच्युत्यावस्थान्तरभावः । यथा क्षीरस्य दध्याकारः । अयं द्विविधोऽपि विकारो ब्रह्मणो न बोभवीति । अनन्याधीनत्वात् । अप्रच्युतसर्वज्ञाद्यवस्थात्वात् । तदेतदाह **पराधीनेति** ॥ ३६६ ॥

३७० अतः पुत्रोत्पत्तौ पितुरिव जगदुत्पत्तावपादानत्वमेव ब्रह्मणः । चेतनत्वात् । ऊर्णनाभेरपि यल्लालादिकं तदेवोर्णाकारेण परिणमते न तूर्णनाभिः । इदमेवोक्तम् । **इच्छामात्रादिति** । भाल्लवेयश्रुत्या स्वदेहादिति ब्रह्मतर्केण च यथा चेतनस्याचेतनस्याचेतनविकारत्वम् । अदृष्टत्वात् । किञ्च यदि जगद्ब्रह्मणो विकारः तर्हि नित्य-सर्वज्ञत्वादिलक्षणात्तस्माद्विलक्षणतया नोपलक्ष्येत । न हि विकृतदशायां क्षीरस्येदं क्षीरमिदं दधीति पृथगुपलम्भः । यदि जगद्ब्रह्मणोरस्तित्वादि साधर्म्येण विकारविकारिभावः स्याल्लोके खर्वस्वर्णयोरपि । अपि च जगदाकारेण परिणतस्य ब्रह्मणो जगन्नाशादिना नाशित्वाद्यापत्तेर्नित्यत्वादिश्रुतिव्याकोपः स्यात् । ननु न क्षीरवद्ब्रह्म साकल्येन परिणमते किन्तु भागेन । अतो नोक्तदोष इत्याशङ्क्याह **भागेनेति** ॥ ३७६ ॥

३७७ परिणम्यमानापरिणम्यमानयोर्भागयोरभेदस्य विरुद्धत्वाद्भेद एव युक्तः । तत्रापरिणामभाग एवेश्वरः परिणामिभागः प्रधानमिति न नो हानिः । ननु सर्वभागसमूहो ब्रह्म न त्वेको भाग इत्याशङ्क्य परिहरति **भिन्नानामिति** ।

३७८ वृक्षसमूहस्य वृक्षोपादानत्ववत् । भागसमूहत्वे ब्रह्मणो जगदुपादानत्वं न स्यात् । न हि सर्वपदार्थसमूहः पदार्थोपादानम् । ननु गोमयवृश्चिकादिवद्विकारिविकारभावेऽपि जगद्ब्रह्मणोर्वैलक्षण्यं युज्यतामित्यत आह **शृङ्गादिति** । यो गोमयभागे वृश्चिकरूपेण परिणतः तस्य न वृश्चिकाद्वैलक्षण्यं दृश्यते । वृश्चिकरूपेणापरिणत-गोमयभागस्य वृश्चिकं प्रत्यपादानत्वमेव युक्तम् । तस्मान्निर्गतत्वाद्वृश्चिकस्य । एवं विश्वोत्पत्तावप्युपादानत्वमेव ब्रह्मणो युक्तम् । ननु 'स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किञ्च तत्सृष्ट्वा तदेवानु-प्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवदि'त्यादिश्रुतौ सत्त्यदादिशब्दवाच्यपञ्चभूतादिवाक्येन विकारः प्रतीयत इत्याशङ्क्य परिहरति **सच्च त्यच्चेति** ॥ ३८२ ॥

३८३ न हि कुत्रचिदुपादानकारणं किञ्चित्कार्यं दृष्ट्वेदं सर्वमसृजत् यदिदं किञ्च तत्सृष्ट्वा तत्प्रविश्य पश्चात् स्वयं भवतीति युज्यते । अन्यस्यान्यत्वविरोधात् । स तपोऽतप्यतेत्याद्यालोचनपूर्वकस्रष्टृत्वश्रवणान्नोपादानत्वं ब्रह्मणः । न हि कुत्रचिदुपादानस्य बुद्धिपूर्वकर्तृत्वं दृश्यते । तर्हि 'सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं तत्सत्यमभवदि'ति एषां पदानां कोऽर्थ इत्यपेक्षित इत्याह **सत्वात्ततेरिति** ।

३८५ **पुरुषापेक्षया** उपदेष्ट्रपेक्षया ।

३८६ एवं सति प्रकृतिश्चेति सूत्रार्थः क इत्यपेक्षिते आह **तस्मादिति** ।





३८७ अत एव 'सोऽकामयत बहु स्यां प्रजायेये'ति सच्चेत्यादिवाक्योपक्रमे श्रूयमाणः परमात्मनो बहुभावोऽपि विकारित्वं विनैव घटत इत्याह **बहु स्यामिति** । अनेकप्रादुर्भावरूपैः तत्तत्पदार्थेषु प्रविश्य क्रीडितुं हि विष्णुर्जगत्सृष्टवानित्यर्थः । तस्माच्च जगदाकारेण हरिः परिणमत इति सिद्धम् ।

३८८ एवं तावद्ब्रह्मपरिणामवादं निराकृत्य अधुना ब्रह्मविवर्तवादमुपन्यस्य दूषयति **यच्चेत्यादिना** ।

३८९ भ्रान्त्या ब्रह्मणि जगदध्यासश्चेत् कस्येयं भ्रान्तिर्ब्रह्मणो वा तदन्यस्य वा । नाद्यः । सर्वज्ञत्वश्रुतिविरोधात् । न हि अज्ञाननिमित्ता भ्रान्तिः सर्वज्ञस्य सम्भवति । न द्वितीयः । अद्वैतभङ्गप्रसङ्गात् । अध्यासद्रष्टुरनध्यस्तत्वात् ।

३९० प्रतीतत्वात् प्रपञ्चवत् सोऽप्यध्यस्त इति चेत् । मैवम् । तत एव ब्रह्मणोऽप्यध्यस्तत्वापातात् । न हि सर्वथाऽप्रतीतस्याध्यासाधिष्ठानत्वं क्वचित् दृष्टम् ।

३९१ किञ्च न केवलमध्यासद्रष्टैवानध्यस्तः किन्तु तद्देहेन्द्रियादिकं सकारणमप्यनध्यस्तमेव स्यात् । तदभावे चाक्षुषादिभ्रमानुपपत्तेः ।

३९२ अपि चाज्ञानाधीनो हि सर्वभेदभ्रमः । अज्ञानमपि तन्मते परमार्थत्वात् भ्रमाधीनमित्यन्योन्याश्रयप्रसङ्गः स्यात् ।

३९३ किञ्च यदि सर्वमध्यस्तं तर्हि सर्वमध्यस्तमित्युक्तेरपि सर्वमध्यपतितत्वेनाध्यस्तत्वान्न स्वार्थबोधकत्वं युज्यते । ननु गगनकुसुमवदत्यन्तासत्वं न प्रपञ्चस्य । किन्तु बाध्यस्यापि व्यावहारिकसत्यत्वमस्त्येवातो बाध्यबाधकभावो युक्त इत्यत आह **व्यावहारिकतेति** ।

३९४ ज्ञानबाध्यत्वे प्रपञ्चस्यार्थक्रियाकारित्वं न स्यात् । तथाविधस्य मरीचिकाजलादेः पानादिसाधनत्वादर्शनात् । न च ज्ञानबाध्यस्याप्यर्थक्रियाकारित्वं स्वप्नसृष्टौ दृष्टमिति वक्तव्यम् । तस्याः पूर्वदृष्टवस्तुवासनात्मकतया सत्यत्वात् । सन्ध्यं तृतीयं स्वप्नस्थानमित्युपक्रम्य 'अथवा शान्ताः पुष्करिण्यः स्रवत्यः सृजते स हि कर्ते'त्यादिवचनेन ईश्वरकर्तृत्वश्रवणात् गगनादिवत्स्वप्नस्य सत्यत्वमवगम्यते । यत्तु तत्रासम्भावितं जाग्रत्त्वादिकं प्रतीयते तदेवास्तु शुक्तिरजतादिवत् भ्रान्तम् ।

३९५ ननु सर्पादावपि यद्भयकम्पादिकं जायते तत्कथम् । असत्यवस्तुतोऽर्थक्रियाकारित्वं नास्तीत्यत आह **सर्पेति** ।

३९६ रजतभ्रमस्यापि विषयतया न रजतं कारणं किन्तु सत्यरजतसादृश्ययुक्तशुक्तिरेव इन्द्रियसम्प्रयुक्ता यदिदं रजतमिति दृष्टं सा शुक्तिरेवेत्युत्तरकाले प्रतीतेः । ननु यथा असतोऽर्थक्रियाकारित्वं न दृष्टम् एवं सतोऽपि





न दृश्यते न च घटादौ **दृष्टमिति** वाच्यम् । तत्सत्यत्वस्य विवादाध्यस्तत्वादित्यत आह **ब्रह्मेति** । **परतः** उपाधितः । न प्रपञ्चमिथ्यात्वेऽनुमानादिकं साधनं प्रयोक्तुं शक्यं सर्वमिथ्यात्ववादिना । तस्य वाद्यसिद्धत्वेनासाधकत्वात् । अन्यतरासिद्धस्य साधकत्वे शब्दोऽनित्यः कृतकत्वादित्यादेरपि प्रयोगदर्शनात् । तदेतदाह **अमुख्येति** ॥ ३९७ ॥

३९९ उभयवादिसम्प्रतिपन्नं प्रमाणं स्वमतेऽस्तीत्याह **साधकत्वमिति** ।

४०० नन्वहं किमपि प्रमाणप्रमेयादिकं नाङ्गीकरोमि । तत्कथमुभयं सम्प्रतिपन्नप्रमाणशब्दवद्भिरुच्यत इत्याशङ्क्य परिहरति **यदीति** । यदि सर्वानङ्गीकारवादी सर्वानङ्गीकारमङ्गीकुर्यात् तर्हि सर्वानङ्गीकारं जह्यात् । सर्वानङ्गीकारस्यापि सर्वमध्यपतितत्वात् । अतः सर्वानङ्गीकारवादिनः सर्वानङ्गीकारान् मूकत्वापत्त्या प्रतिवादित्वाभावः स्यादित्यर्थः ।

४०१ एवं युक्त्या प्रपञ्चस्य मिथ्यात्ववादिनं परिभूय सत्त्यत्वमर्थक्रियाकारित्वं साधितं श्रुतिभिश्च साधयति **विश्वमिति** । 'विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम्', 'यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता', 'प्र घा न्वस्य महतो महानि सत्या सत्यस्य कारणानि वोचम्', 'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्य' इत्येतासां श्रुतीनामयमर्थः । हे मघवानौ इन्द्रबृहस्पती युवयोरेव यद्विश्वं सत्यमेव नानिर्वचनीयम् । वां युवयोर्यद्वृष्ट्यादिना विश्वपालनादिव्रतमापश्च देवताश्च न अपि प्रमिनन्ति जानन्ति तच्च सत्यम् । अनेनेन्द्रादिनामिनो विष्णोः सत्यभूतविश्वस्वामित्वमुक्तं भवति । स्पृहणीयस्य वसुनो द्रव्यस्य बल्यादिदैत्यस्थस्य जेता इन्द्रादिभ्यश्च दाता विष्णुः । यश्चैतद्विश्वं चिकेत चकार तत्सत्यमेव न मोघं न मिथ्या । वोऽस्य विष्णोर्महिनः सत्यस्य महान्ति सत्यानि पारमार्थिकानि सृष्ट्यादिकर्माणि प्रवोचं प्रब्रवीमि । स्वयम्भूः परमेश्वरः पदार्थान् याथातथ्यतः पारमार्थ्येन कदाचिदप्यनन्यथाभूतान् व्यदधादकरोदिति ।

४०२ किञ्च साक्ष्यनुभवविरुद्धं विश्वमिथ्यात्वमित्याह **सत्यत्वमिति** । इन्द्रियेष्विव कादाचित्कः काचादिदोषः साक्षिणि न सम्भवत्येव । अतः केवलसाक्षिवेद्यस्य मिथ्यात्वं न वक्तुं शक्यते । केवलसाक्षिवेद्यं हि सर्वस्य सार्वकालिकाबाध्यत्वम् । तथा हि कालस्तावत् केवलं साक्षिवेद्यः । सर्वेन्द्रियकृत्युपरमदशायां सुषुप्तावपि प्रतीयमानत्वान्नानुमेयत्वं तस्य । अन्यथैतावन्तं कालं सुखमहमस्वाप्समित्युत्तरकालीनस्मृतिः न स्यात् । न ह्यननुभूतं स्मर्यते । न चानुमानमेव मानं काले । लिङ्गाभावात् । न च यौगपद्यविरहिप्रत्ययो लिङ्गम् । तस्यैव कालविषयत्वात् । प्रत्यक्षविषयस्याप्रत्यक्षत्वे घटस्याप्यप्रत्यक्षत्वप्रसङ्गात् । एतदस्तीति प्रत्यक्षप्रतीतौ कालस्य सत्त्वविशेषणत्वेन प्रतीयमानत्वात् । अतीतानागतकालयोरप्रत्यक्षत्वे साध्यसाधनयोर्व्याप्तिग्रहणाभावेनानुमानोच्छेदप्रसङ्गः । यतो भूतभविष्यद्वर्तमानधूमानामग्न्यविनाभावं प्रत्यक्षेण निश्चितवतो हि धूमज्ञानादग्निज्ञानं जायते नान्यथा । अतो युक्तं भूतभविष्यद्वर्तमानकालेऽबाध्यत्वग्रहणं प्रत्यक्षेण प्रपञ्चस्य । न च वाच्यं रज्जुसर्पस्य





त्रैकालिकाबाध्यत्वं किमिति न गृह्यत इति । परीक्षया निर्दोषत्वेनावधृतप्रतीतिविषयस्यैव साक्षी त्रैकालिकाबाध्यत्वं निश्चिनोतीति नियमात् । परीक्षासम्यक्त्वं च परीक्षामन्तरेणैव साक्षी गृह्णाति । न चैवं सति वस्तुतत्वमपि परीक्षां विनैव गृह्णीयादिति वक्तुं शक्यते । न हि दीपेन करणेन विना दीपो ज्ञायते चेत् घटोऽपि तथैव ज्ञायतामिति वक्तुं शक्यते ।

४०८ त्रैकालिकाबाध्यत्वस्य विश्वधर्मस्य साक्षिनिश्चितत्वानभ्युपगमे बाधकमाह **अन्यथेति** । **अकस्मादिति** बाधकं विनेत्यर्थः । इतःपूर्वविश्वप्रवाहस्य अनिवृत्तत्वात् उत्तरकालेऽपि अनिवृत्तिरित्यङ्गीकारे अनादेः संसारस्य तत एव अनिवृत्तिः स्यात् । तरति शोकमात्मविदिति श्रुत्या संसारबन्धो निवर्तितुं योग्यः । बन्धत्वात् शृङ्खलाबन्धवदित्यनुमानाच्च संसारनिवृत्तिः सिद्ध्यति चेत् श्रुत्यानुमानप्रामाण्यं कुतः सिद्धम् । यदि प्रमाणान्तरसिद्धं तत्प्रामाण्यमपि प्रमाणान्तरादित्यनवस्था स्यात् । अतः स्वयम्प्रकाशात्साक्षित एवैतच्छ्रुत्यनुमानप्रामाण्यमङ्गीकर्तव्यम् । एवं सति प्रामाण्यं यथा साक्षी वर्तमानप्रकारेणैव स्थापितवान् अनन्यथाभूतत्वेन कालान्तरेष्वपि स्थापयति । एवमेवासौ प्रत्यक्षादिप्रमाणसिद्धविश्वसत्यत्वं कदाऽप्यनन्यथाभूतत्वेन स्थापयतीत्यङ्गीकारे को दोषः । प्रत्यक्षस्य वर्तमानग्राहित्वं तत्तेदन्ताविशिष्टवस्तुविषयप्रत्यभिज्ञायामतीतज्ञानस्य यथार्थत्वावेदकबाधकप्रत्यये च दृष्टम् ।

अतः प्रपञ्चत्रैकालिकाबाध्यत्वग्राहकेण साक्षिप्रत्यक्षेण विरोधात् भविष्यद्बाधकविषयमनुमानादिकमुदेतुमेव न शक्नोति । अपि च यदि साक्षी विश्वस्य सर्वकालीनमनन्यथाभावं न गृह्णाति तर्ह्यद्वैतविषयानुमानादिकं भविष्यत्काले प्रमाणं द्वैतविषयं वा न भविष्यतीत्यत्र किं प्रमाणमिति प्रश्नो दुष्परिहरः स्यात् । न च स्वप्रदृष्टप्रपञ्चवदेकजीवाज्ञानपरिकल्पितं विश्वमिति वक्तुं युक्तम् । बहुवर्धकिनिर्मितप्रासादादि-वदनेकमरीच्यादिभिः बुद्धिपूर्वं सृष्टमित्यपि वक्तुं शक्यत्वात् । ननु स्वप्रदृष्टानेकपुरुषवत् स्वव्यतिरिक्तपुरुषाणां स्वाज्ञानकल्पितत्वात् कथं तत्सृष्टं विश्वमिति चेत् । मैवम् । स्वयमेव पुरुषान्तराज्ञानकल्पितः किं न स्यादित्यपि वक्तुं शक्यत्वात् । स्वप्ने तु उत्थानानन्तरमन्येषामेवाभावात् स्वयमकल्पितमिति निश्चेतुं शक्यते । अत्र तु बहूनां परस्परं पश्यतां अयमस्य अज्ञानकल्पित इति एकाज्ञानकल्पितत्वं कथमपि निश्चयो न घटते । यथा ह्युत्थितस्य स्वप्नपुत्रोपदेष्टृत्वं न घटते । अतः स्वाज्ञानपरिकल्पितः पर इति वचनं स्वानुभववचनमेव ख्यापयति । अपि च यस्तु स्वव्यतिरिक्तं सर्वमज्ञानकल्पितमित्यभ्युपगच्छति तस्य परं प्रति सर्वमज्ञानकल्पितमिति प्रतिपादनं न युज्यते । यथा ह्युत्थितस्य स्वप्नपुत्रोपदेष्टृत्वं न घटते । यथा दिङ्मोहस्याप्तवाक्यादिनाऽवधृतप्राचीदित्त्वस्य प्रतीच्यां प्राचीदित्त्वान्वेषणं न युज्यते । अथ यद्यसौ स्वाज्ञानपरिकल्पितमिति प्रतिपादयन्नेव न मया प्रतिपादनं कृतमिति ब्रूयात् तर्हि तस्य कशादिना ताडनमेवोत्तरं भवेत् । हिरण्यादिकमपहृत्य न मयाऽपहृतमिति ब्रुवतश्चोरस्येव ।

४१२ तदेतदाह **एकेति** ।





४१३ अधुना प्रपञ्चस्य मिथ्यात्वपरत्वेनोद्भावितां श्रुतिमुदाहृत्य सत्यत्वपरतया व्याचष्टे **प्रपञ्चो यदीति** । प्रपञ्चो यदि विद्येतेति श्रुत्यर्थः । प्रपञ्चो यदि विद्येत उत्पद्येतेत्यर्थः । न तु विद्यमानो भवेदिति । तथा सति यद्विद्यते तन्निवर्तत इति व्याप्त्यभावान्निवर्तेतेति प्रसञ्जनमयुक्तं स्यात् । अतो विविधभेदात्मको विकल्पो यदि केनचित्कल्पितः स्यात् तर्हि निवर्तेत विनश्येत् । यन्मोक्षव्यतिरिक्तत्वे सत्युत्पद्यमानं वस्तु तद्विनाशीति व्याप्तेः । न च विनश्यति तस्मादनादिरेवायं प्रपञ्च इत्येतदर्थः सिद्धः । विपर्यये पर्यवसायित्वात् तर्कस्य ।

४१८ ननु घटादिरूपप्रपञ्चस्योत्पत्तिविनाशौ स्त एव । तत्कथमनादिनित्यत्वं तस्येत्यत आह **प्रपञ्चो भेदपञ्चक इति** ।

४१९ भेदपञ्चकस्य नित्यत्वे श्रुतिं दर्शयति **जीवेति** ।

४२१ विनाशिनोऽपि घटादेर्धर्मरूपो भेदः परावाद्यभ्युपगतघटत्वादिजातिवन्नित्योऽवगन्तव्यः । वस्त्वन्तरापत्त्यभावात् कालत्रयेऽपि । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इत्यस्यार्थमाह **द्वैतं न विद्यत इति तस्मादज्ञानिनां मतमिति** । मायामात्रमिदं द्वैतमद्वैतं परमार्थत इत्यस्यार्थमाह **मितं त्रातमित्यादि** ।

४२२ अधुना प्रपञ्चस्य ब्रह्ममिथ्यापरिणामरूपत्वे परोद्भावितां श्रुतिं ब्रह्मणो जगत्प्राधान्यादिपरतया व्याचष्टे **वाचारब्धमिति** ।

उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् । यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम् । एवं सोम्य आदेशो भवतीति छन्दोगश्रुतावादिशतीत्याज्ञापयतीति आदेशशब्दोक्तेन आदेष्ट्रा विष्णुना ज्ञातेन अन्यत्सर्वमज्ञातमपि विष्णुसदृशत्वेन विष्णवपेक्षयाऽल्पकालीनत्वेन विष्णुप्रधानत्वेन ज्ञातं भवतीत्यत्र यथा सोम्यैकेनेत्यादिदृष्टान्तचतुष्टयमभिधीयते । तथा हि । वाचा वागिन्द्रियेण मृदाद्यर्थेषु सङ्केतरूपेणारभ्यमाणं नामजातं विकारो विप्लुतं सत्यं नित्यं नामधेयं मृत्तिकेत्यादि संस्कृतमेव । सत्यशब्दस्य सदातनत्वयोगान्नित्ये प्रयोगः । उपरि दहरविद्यायामपि दृश्यते । ब्रह्मणि देहवधादिना हन्यमाने पदेन जरावाप्नोति प्रध्वंसते वा किं ततो विशिष्यत इति स ब्रूयात् नास्य जरयेतं जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपरमिति । एतदुक्तं भवति । यथा वेदादिषु प्रयुज्यमानत्वेन प्रधानभूतनित्यनामधेयानां परिज्ञानेन तत्तद्देशीयसाङ्केतिकनामजातमपरिज्ञातमपि परिज्ञातमेव व्यपदेष्टुं शक्यते । ग्रामप्रधानपुरुषज्ञानेन ग्रामः सर्वो ज्ञातो भवतीति व्यवहारदर्शनात् । तथा नित्यप्रधानभूतेश्वरपरिज्ञानादप्रधानं विश्वं ज्ञातं भवतीति युज्यते । न हि विष्णवपेक्षया अल्पकालीनं विष्णूपसर्जनं विश्वमिति ज्ञानं विष्णुः न तथा अन्यलोहमयं विज्ञातं भवति । एवं भगवतो ज्ञानात् सत्त्वादिसादृश्यात्





तत्प्रधानतया चान्यद्विश्वं ज्ञायते । भगवति तत्सदृशं तत्प्रधानकं विश्वमिति ज्ञातुं शक्यते । विष्णुप्रधानत्वेन विश्वस्य ज्ञानं हि फलवत् । स्वतन्त्रत्वज्ञानं तु मिथ्याज्ञानत्वेन रज्जुसर्पज्ञानवदनर्थकारणम् । एकविज्ञानेन सर्वविज्ञानं विकारविकारिभावेनोपपादयतीयं श्रुतिरित्यङ्गीकारे मृदादिलोहेन कृष्णायसेनेति वचनं स्यात् । एकपिण्डमणिनखनिकृन्तनशब्दानां वैयर्थ्यात् । न चोपादानस्य ज्ञानात् तद्विकारः सम्यक् ज्ञायते । तथा सति दृष्टमृदः पुंसो घटशरावादिजिज्ञासाभावप्रसङ्गात् । वाचारम्भणशब्देन विकारस्य मिथ्यात्वमुच्यत इत्यङ्गीकारे वाचारम्भणं विकारो मृत्तिकेत्येव सत्येति वचनं स्यात् । नामधेयेति शब्दादेर्वैयर्थ्यात् । वाचारम्भणशब्दस्य मिथ्यात्वे प्रसिद्ध्यभावान्न मिथ्यात्वमर्थः । एकविज्ञानेन सर्वविज्ञानं तस्मिन्पक्षे न युज्यते । ब्रह्मव्यतिरेकेण सर्वस्यैवाभावात् । न हि शुक्तिकाशकलं पश्यता तत्र रजतं ज्ञायत इति युज्यते । अतः सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् । तदैक्षतेत्यादिवाक्यशेषे बुद्धिपूर्वकत्वेन जगत्कर्तृत्वश्रवणाद्विष्णोर्निमित्तकारणत्वेनैव प्राधान्यात् तज्ज्ञानाद्विश्वं ज्ञातमिव भवतीति युक्तम् ।

४३० उक्तं ह्युपसंहरति **तस्मादिति** ।

अतो निखिलकल्याणगुणात्मके विष्णौ सकलवेदसमन्वय इति सिद्धम् ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचित श्रीमद्ब्रह्मसूत्रानुव्याख्यानटीकायां सन्न्यायरत्नावल्यां श्रीपद्मनाभतीर्थभट्टारकविरचितायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥*

*प्रथमाध्यायः समाप्तः ॥ १ ॥*

* * *

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

**श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका**

**श्रीत्रिविक्रमपण्डिताचार्यविरचिता**

# नयचन्द्रिका

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## अथ प्रथमाध्यायस्य चतुर्थपादे

## ॥ युक्त्यधिकरणम् ॥

अत्राधिकरणेषु विषयानाह । **आनुमानिकमप्येकेषामि**त्यधिकरणे प्रमाणविरोधिनां दुःखिबद्धावरादीनां शब्दानां समन्वय उच्यते । **ज्योतिरुपक्रमाच्चे**त्यत्र क्रियाकर्मकारकत्वादीनां शब्दानां **न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्चे**त्यत्र स्त्रीवाचिनां बाहुल्यानां बहुलार्थसम्बन्धिनां बहुसङ्ख्याविषयाणामित्यर्थः । **कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्ते**रित्यत्र अवान्तरकारणवाचिनां शब्दानां **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा**दित्यत्र स्त्रीवाचिनाम् । **एतेन सर्वे व्याख्याता व्याख्याता** इत्यत्र शून्यादिशब्दानां निषेधार्थानां स्थानान्यधिकरणानि ।

३२७ एतेष्वधिकरणेषु पूर्वपक्षसिद्धान्तयुक्तिं दर्शयति **सर्वमानैरिति** ।

३३१ सुप्तिङन्ताव्ययशब्दानां विरुद्धशब्दानां चेति समन्वयो ज्ञातुमशक्य इति यल्लोके वैमुख्यं तदपाचक्रे । **अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके** । **वाक्यान्वयात्** । **प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः** । **उत्क्रमिष्यत एवंभावादित्यौडुलोमिः** । **अवस्थितेरिति काशकृत्स्न** इति जैमिन्यादीनां मतम् ।

३३२ वाक्यसमन्वयप्रतिपादकं वचनं स्वमतं चेत् किमिति जैमिन्यादिमतमित्यवददित्यत आह **स्वशिष्या-णामिति** ॥ ५ ॥

---

* [illegible]





३३३ एवं सर्वशब्दसमन्वयपक्षे तत्तदर्थेषु शब्दवृत्तेरभावप्राप्तेर्व्यवहारादिप्रयोजनाभावः स्यात् । अतः सर्वशब्दसमन्वयस्यापि व्यवहारायत्तत्वेनैतदुपजीवकत्वेन निरवकाशत्वाद्भगवन्मताविरोधित्वाच्चायं वाक्यसमन्वय एव ग्राह्यो नापर इत्यत्राह **तेष्विति** ।

३३४ प्रयोजनबहुत्वेऽस्मदभिमतेषु रूढिरङ्गीकृतैव न तु निराकृता । तस्य तस्य प्रयोजनस्याविरोधतो विष्णौ शक्तिर्ग्राह्या । आचार्योपदेशश्रुतिलिङ्गादिसामर्थ्यात् ।

३३५ अर्चिष्मानर्चितः कुम्भ इत्यादाविव तयोर्व्युत्पत्त्यो-र्मिथो विरोधे सति का गतिरित्यत आह **तथाऽपीति** ।

३३६ कथमेतन्मूलत्वमित्यत आह **इत इति** । कुतो भगवतो निमित्तादन्येषामर्थानां वा शब्दरूढता । अतो लोकव्युत्पत्त्युपजीव्यत्वमत्रैव त्वनायत्तत्वान्नास्योपजीव्यत्वम् । ब्रह्मणि व्युत्पत्तेरप्यन्यव्यवहारायत्तत्वात् कथमस्या एवोपजीव्यत्वमित्यत आह **तत्सिद्धिरिति** । सा परापेक्षाऽपि हरीच्छयेति तदुपजीव्यत्वविरोधः । विष्णोरन्यत्र वृत्तेर्मुख्यतैव न परममुख्यत्वम् । मुख्योपलक्षणा गौणीति तिस्रः । तद्यथाऽयो दहतीत्यत्रायसो दाहकत्वमग्निदाहकत्वमुपजीव्य प्रयुज्यते । एवं तृणादिगतं स्तम्भत्वादिकं भगवतो गुणमुपजीव्य तृणादिषु स्तम्भादिशब्दाः प्रयुज्यन्ते । तस्मादत्र भगवद्गुणवाचित्वे ह्युपजीव्यत्वम् । यद्यपि **तत्तु समन्वयादि**त्यादिना सर्वशब्दानां ब्रह्मवाचकत्वसिद्धेरपि समन्वयादन्यशब्दव्यवहारापेक्षा स्यात् । तथाऽपि सा हरीच्छयेत्यदोष इत्याह **तत्सिद्धिरिति** । ब्रह्मवाचकत्वसिद्ध्यर्थं शब्दानामर्थान्तरप्रवृत्तावपि तेषु शब्देष्वर्थेषु च नियामकत्वेन स्थितस्य हरेरिच्छया तदपेक्षत्वान्न तद्वाचकत्वस्योपजीव्यत्वविरोध इत्याकूतम् ।

३३७ विरोधेऽन्यत्र मुख्यता आद्यास्तिस्रः शब्दवृत्तयः ।

३३८ शब्दप्रवृत्तीनां लक्षणमाह **प्रवृत्तीति** । प्रवृत्तिहेतोर्बाहुल्यमिन्द्रादिशब्दप्रवृत्तिहेतोरैश्वर्यादिगुणजातस्य सामस्त्यात्स्वातन्त्र्यं च । घटादिशब्दानां कुम्भादिषु प्रयोगमात्रबाहुल्याद्रूढिः । सा मुख्या प्रवृत्तिरित्युक्ता । सिंहपदप्रयुक्तस्य केसरिणः क्रौर्यादिसादृश्यात् सिंहो देवदत्त इत्यादिप्रवृत्तिर्गौणी । पुरुषाणां मञ्चादिप्रयोग उक्तसम्बन्धान्मञ्चाः क्रोशन्तीत्यादिरूपा लक्षणा । आसां वृत्तीनां मध्ये पूर्वस्थाः श्रुतिलिङ्गविरोधादयो न ।

३४० एवं परवृत्तेर्ग्रहणमित्याह **पूर्वेति** । विष्णौ मुख्यप्रयोगरूढप्रमाणभूतां श्रुतिमुपलक्षयति । 'तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन-स्तस्माच्छतर्चिन इत्याचक्षते । एतं सन्तं स इदं मध्यतो दधे य इदं किञ्च तस्मान्मध्यमास्तस्मान्मध्यमा' इत्याचक्षते । एतं सन्तमिति तथा सन्तं च शतर्च्यादिकं सन्तमित्यत्र श्रुतौ ह्येतमेव सन्तमित्येव शब्दोऽवधारणार्थम् ।





३४३ मधुच्छन्दादि ऋष्यादिषु शतर्च्यादिशब्दानां रूढेर्भगवति शतवर्षोऽप्यनादिगुणयोगस्य प्राबल्यं सनिरुक्तिकं दर्शयति । तत्रगां विद्वद्रूढिं चापेक्षत इति दर्शयति । पुनरपि वाक्यान्तरैर्विष्णोः सर्वशब्दवाच्यत्वं द्रढयति **अ इति ब्रह्मेति** । तत्रागतमहमिति श्रुतावकारेण ब्रह्म कथितम् । अकारो वै सर्वा वागिति सर्वेषां शब्दानामपि अकाराख्यानात्मकता च कथिता । एवमकारार्थब्रह्मविषयत्वं सर्वशब्दानामुक्तं स्यात् । यद्वा ओमिति यच्च नेति यच्चास्याः क्रूरं यदि चोल्बणिष्णु तद्वियूय कवयोऽन्वविन्दन् नामायत्ता ये ता समतृप्यन्त ऋतेऽधि इति नामवित्कृतकृत्यता च कथिता । यद्वाचो ओमिति विधिपदं यच्च निषेधपदं यच्चार्थक्रूरं यदेव च श्रवणोल्बणं तत्समस्तमपि भगवद्विषयतया विविच्य तत्तन्नामायत्तानि गुणजातान्यन्वविन्दन् । अधिश्रुते परिपक्वे समतृप्यन् कृतकृत्या अभवन्नित्यर्थः । तस्य वा एतस्य संहिता । षकारो वै बलं णकारः प्राण आत्मेत्यागमः संहिताशब्दवाच्यविष्णोर्नेत्याक्रियमाणं चेष्टकत्वमात्रमातत्वगुणं च वदन् । स यो ह तौ णकारषकारा-वनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदेति तद्वर्णज्ञानपूर्वकत्वेन संहिताध्ययनं च वदन्संहितापदादे-र्विष्णुनामार्थरूपत्वमब्रवीत् ।

३४५ कथं षकारणकारयोरेव विष्णुपरत्वमित्यत आह **उपसर्गत्वत इति** ।

३४७ उक्तार्थं पुनरपि प्रमाणान्तरैर्दृढयति **घोषा इति** । पदवर्णस्वरादिसमन्वये प्रमाणान्युपक्षिपति **घोषा इति** । 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् । सर्वे वेदा यत्पदमामनन्ति । इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः । यमिन्द्रामाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्त्वमोजास्तस्मै त्वा तेभ्यस्त्वा स प्रथमः । सङ्कृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणोऽग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि । यो देवानां नामधा एक एवे'ति । समुद्रं न सिन्धव उक्थशुष्मां उरुच्यवसङ्गिर आमनन्तीत्यादिशब्दा द्रष्टव्याः । **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** इति सूत्रे भगवता स्वयं तदेवोक्तम् ॥ २ ॥

एवं भगवति सर्वशब्दानां समन्वयमभिधाय **आनुमानिकमि**त्यादिसूत्राणां परोत्प्रेक्षितामन्यथायोजनां निरस्यति । नेत्यादिवाक्यरूपेण प्रमाणेन सङ्गहात् । यत्र वाक्ये प्रधानादन्योऽर्थो नेष्यते ।

३५३ नन्वजामेकामित्यादेस्तेजोऽबन्नात्मकं भूतसूक्ष्मं किञ्चिदुपादानमिष्यते न प्रधानमिष्यत इत्यत आह **अजेति** ।

३५४ अजामेकामिति श्रुतिरपि यद्येतामेव प्रकृतिमाह । तर्हि को दोषः । यदि सर्वथा तत्रोच्यमानं परिणामि जडमस्ति । शब्दमात्रविप्रतिपत्तेरकिञ्चित्करत्वात् । एवं चेद्युष्माकमपि भगवति समन्वयप्रतिज्ञाहानिरित्यत आह **अस्माकमिति** ।





३५६ सर्वेषामपि शब्दानां परममुख्यार्थो भगवानेव । सकृदुच्चरितशब्दानामप्यर्थद्वयं सम्प्रतिपादयति **अर्थद्वयमिति** ।

३५७ योगानां शब्दप्रवृत्तिहेतूनां गुणयोगानामसिद्धाश्रयमनुभवतोऽपि सिद्धोऽयमर्थ इत्याह **बुद्धाविति** ।

३५८ यथा पङ्कजशब्दस्य योगवृत्तिः शैवलादौ रूढिप्रवृत्तिः पद्म इत्युभयोरपि बुद्धौ समारोहः । उभयोरर्थयोर्युगपद्बुद्धिसमारोहस्य प्रायः प्रतिपादनं विनाऽनुपलम्भात् । पूर्वारोहेणैव व्यवहारनिर्वाहाच्च । किमित्युभयार्थकल्पनमित्यत आह **विपरीतेति** । कुम्भेनोदकमाहरेत्यादौ विपरीतप्रमाणाभावात् पूर्वारोहो व्यवहारकारणं स्यात् । नमोऽर्चिष्मानर्चितः कुम्भ इत्यत्र स व्यर्थः ।

३५९ **अत** इत्यादेरयमर्थः । अतः सर्वश्रुतीनां महायोगवृत्त्या विष्णवभिधायित्वेऽपि क्वचिद्रूढ्या प्रधानस्यापि प्रतीयमानत्वादजादिशब्दैर्बाधकप्रमाणाभावादजामेकामित्युक्ता श्रुतिः प्रधानं प्रतिपादयतीति युक्तम् ।

३६० सदसदात्मकं स्थूलसूक्ष्मरूपविशेषं स्वयमन्नस्य न विकारो भवति । पञ्चभिर्भूतैः पञ्चतन्मात्रैश्च चतुर्भिर्मनोबुद्ध्यहङ्कारचित्तैर्दशभिरिन्द्रियैर्विकारभूतैर्ब्रह्म बृंहितमिति सन्न्यायरत्नावल्यां स्वयं प्रभुः सूत्रकार एवानुवदति ॥ ३ ॥

३६२ ननु **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि**त्यत्र प्रकृतिशब्देन ब्रह्मोपादानत्वेनोच्यते । येनाश्रुतं श्रुतं भवतीति प्रतिज्ञाया यथा सोम्यैकेन मृत्पिण्डेनेत्यादिदृष्टान्तस्यानुकूल्यादित्यत आह **न चेति** ।

३६३ अविकारः सदा सृष्टिकालेऽपि सदात्मा स्वामी मुक्तानामपि सौम्य ।

३६५ औपम्यमुपमापदं तन्न भवतीत्यनौपम्यम् । एकरसं प्रधानरसम् ।

३६६ विकारभेदमाह **पराधीनेति** । विशेषाप्तिर्द्विविधा । तत्राद्या परिणाममन्तरेणैव विशेषप्राप्तिरूपा । यथा चेतनानां देहाभिमानादि । यथा हिरण्यादीनां कुण्डलादिभावः । अनिवृत्त्याऽन्यथाभावस्त्विति परिणामरूपभावविकारः । यथा क्षीरस्य दधिभावः । अनिवृत्त्याऽन्यथाभावस्य पराधीनविशेषावाप्तिरूपत्वे सत्यपि कुरुपाण्डवन्यायेन भेदोक्तिः सम्भवति ।

३६७ विष्णोर्जगज्जनकत्वात् कथं पितृवदुपादानत्वं निषिध्यत इत्याशङ्क्य तदपादानत्वमेवेत्यभिप्रायेणाह **अपादानत्वमिति** ।

३६८ तदेवोपपादयति **न चेति** । तदन्नं हि कार्यरूपतया भवेत् । तद्भुक्तान्नं हि कार्यरूपेण जायते । बुद्धिपूर्वकं विश्वकर्तृकत्वं नाम निमित्तकारणत्वम् । तदप्यपादानतया स्वदेहान्निर्यापणेन रजोगुणात्मकं कारणद्वारेण विलीनं भुक्तपूर्वं विश्वं स्वदेहात्परिणाम्य ससर्जेति ब्रह्मतर्कवाक्यार्थः ।





३७३ चेतनाचेतनयोरन्यत्वात्परस्परविकारत्वं न सम्भवतीत्यत आह **न चेतनेति** ।

३७४ कार्यस्य विकृतत्वात् कारणत्वात् अन्यत्वं दृश्यते । यथा क्षीराद्दध्नः । न हि क्षीरदध्नोरैक्यम् । माधुर्यादिवैलक्षण्यदर्शनादित्यत आह **न चेति** । विकारिक्षीराद्विकृतस्य दध्नस्तदतिरिक्तत्वं दृश्यते । यत्प्राक् क्षीरं तदेव पश्चाद्दधीत्यैक्योपलम्भात् ।

३७५ सर्वज्ञत्वान्यत्वाल्पज्ञत्वजडत्वादि । न हि सद्रूपब्रह्मकार्यस्य जगतः सद्गमनं सती पृथिवी सत्या आप इति सद्भावानुरक्तबुद्धिवेद्यत्वदर्शनात् कथमित्याशङ्कापरिहारायातिप्रसङ्गमाह **अभेद इति** ।

३७६ ननु क्षीरवद्ब्रह्म साकल्येन न परिणमते भागेनैवातो नोक्तदोष इत्यत आह **भागेनेति** । परिणाम्यमानापरिणाम्यमानभागयोर्भेद एव हि । अन्यथा साकल्येन परिणामप्रसङ्गात् । प्रधानमित्येवशब्दार्थः । भिन्नानां भागानां समुदायस्य ब्रह्मेत्युक्तिर्भवेच्चेत्तदा विश्वस्य ब्रह्मोपादानता न स्यात् । भिन्नानां समुदायस्य ब्रह्मेत्युक्तिर्भवेन्न त्वेकैकस्येति चेत्तदा विश्वस्य ब्रह्मोपादानता न स्यात् । एकैकभागस्य ब्रह्मतोक्तिमात्रस्याब्रह्मत्वात् ।

३७८ ननु ब्रह्म जगतोऽनन्यत्वेऽपि प्रकृतिविकारः सम्भवति । यथा शृङ्गान्तरं शरादेरित्यत आह **शृङ्गादिति** । एवमाद्येषु शृङ्गेषु कारणेषु शरादीनामपादानत्वमिष्यते न तूपादानत्वम् । अत्र शृङ्गादिषूपादानभूतमेकदेशमन्तरेण देशान्तरगतापादानता ब्रह्मणो जगदुपादानतायां दृष्टान्तो भवेत् तस्यैकदेशस्योपादानत्वं न ब्रह्माद्यनुगृहीतस्य प्रधानस्य जगदुपादानत्वे दृष्टान्तः स्यात् । अत्र शृङ्गैकदेशत्वेऽप्यपादानत्वमेव । न हि कुतः शृङ्गैकदेशोत्पत्तावयवादप्यवयविमृदाद्युपात्तबाह्यावयवानां गौरवादपादानत्वमेव ।

३८० शराद्यात्मकस्याचेतनस्याचेतनाच्छृङ्गैकदेशादपि तदुपादानतयोद्भवोऽस्तीत्याह **न चेति** ।

३८१ किं तर्हि तदचेतनं चेत्तदन्नोत्पत्तावनुग्राहकमिति चोद्याभिप्रायः । एवमुक्तभङ्ग्याऽनयोः प्रकृतिविकारभावो नास्तीति ।

३८२ ननु स तपोऽतप्यत । स तपस्तप्त्वा । इद९ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिश्रुतौ सत्यादिशब्दवाच्यं कार्यकारणभावेन ब्रह्मणो विश्वमुच्यत इत्यत आह **सच्चेति** ।

३८३ अस्य जीवस्य प्रवेशात्पूर्वमेव सिद्धितं सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवदिति श्रुतेर्गतिमाह **सत्त्वादिति** । सत्त्वान्निर्दोषत्वाद्वैदिकत्वात् स्वाश्रयत्वान्निलयनान्तररहितत्वेन नित्यत्वात् सत्यं सदातनमिति वक्ष्यति च । स्वगुणयव्याप्तियन्तृरूपतत्वश्च सत्यम् ।





३८५ एवं सति नित्यगुणे भगवति सच्च त्यच्चाभवदिति विश्वप्रवेशानन्तरं गुणवद्भावकथनं कथमित्यत आह **व्यक्तिरिति** । तदुपदेष्टृभिः श्रोतृबुद्ध्यपेक्षया व्यक्तिर्भिविद्धि ।

३८६ **तस्मात्** इत्यादेः अयमर्थः । अशेषकर्तृत्वात्प्रकृतिशब्दवाच्यो भगवानेव । प्रकर्षेण करोतीति प्रकृतिः । **इत्यादेरिति** । **प्रकृतिश्चेति** चशब्दार्थः । सोऽकामयत बहु स्यां प्रजायेयेत्युक्तो बहुभावस्तस्यैव युज्यते हि ।

३८८ **तदर्थं** बहुरूपग्रहणार्थम् । एवं परिणामवादं निरस्य विवर्तवादमपाकरोति **यच्चेति** । **मृषा** विषयाभावेन ।

३९१ न हि भ्रान्तिर्दृष्ट्या दृश्यत इति यत्स सर्गस्ततोऽन्यता स्वत एव भेदः प्राप्तः । अभेदयोगिनः क्वाप्येवंविधा दृष्टिरदृष्टा हि । तस्माद्देहकारणं कामादिकमपि स्वतोऽङ्गीकर्तव्यम् । न भ्रान्तिकल्पितमित्यायातम् ।

३९१ ननु स्वतोऽन्यता भ्रमादेवेत्यत आह **भेदोऽपीति** । तस्माज्ज्ञानस्य भ्रमजभेदापेक्षया भ्रमजभेदस्याज्ञानव्यपेक्षयाऽन्योन्याश्रयता । भ्रमजभेदासिद्धेर्नाज्ञानकल्पकं किञ्चित्स्यात् । भ्रमकल्पितत्वेन बाध्यत्वात् । अतः सर्वस्याभ्रमकल्पितत्वम् । तेनैव प्रतिज्ञातमित्यायातम् ।

३९३ नन्वस्य भ्रमकल्पितत्वेऽपि व्यवहारनिर्वाहकत्वान्न शुक्तिरजतवद्बाध्यत्वम् । सत्यताऽङ्गीकारादित्यत आह **व्यावहारिकेति** । अर्थक्रियादिव्यवहारनिर्वाहकं व्यावहारिकम् । न हि बाध्यं शुक्तिरजतादिकमर्थक्रियाकारि क्वापि दृष्टम् । अत्रेदमाकूतम् । विमतमबाध्यं व्यावहारिकत्वात् । यन्नैवं तन्नैवं यथा शुक्तिरजतमिति ।

३९४ अर्थक्रियाकारि स्वप्नादिकं बाध्यं दृष्टमित्यत आह **न चेति** । स्वप्नोऽपि नः पक्षे नैव मिथ्या । तस्मादबाध्यत्वात् तस्यार्थक्रियाकारित्वमिति विशेषः । सन्ध्यं तृतीयं स्वप्नस्थानमित्यारभ्य न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते । स हि कर्तेति श्रुतिवाक्यम् । अस्याः स्वप्नावस्थाया जाग्रदवस्थात्वमिति प्रतीतिर्हि भ्रमः ।

३९५ ननु प्रबोधानन्तरं नात्र वित्तकलत्रादिकमासीदिति बाधानुभवात्कथमब्रूमत्वमित्यत आह **जाग्रत्त्वमिति** । स्वप्नपदार्थानां जाग्रत्पदार्थत्वमस्तीति प्रतीतिर्हि भ्रमः । नेदं जागरितवित्तादिकं स्वाप्नमेवेति हि बाधश्च । रज्जुसर्पादिर्भयादिजनकत्वाच्च कथं नार्थक्रियाकारित्वमित्यत आह **सर्पेति** । **तादृशं** सर्पविषयम् ।

३९६ **तत्** तस्मात् । ननु सतोऽपि क्रियाकारित्वं न सम्प्रतिपन्नम् । घटादेः सत्यत्वस्यासम्प्रतिपन्नत्वादित्यत आह **ब्रह्मेति** । **परतः** उपाधितः ।





३९७ ब्रह्मसृष्ट्यादेरौपाधिकत्वादुपाध्यपगमान्न ब्रह्मणोऽर्थक्रियाकारित्वमित्यत आह **परतस्त्वेति** । अविकारस्य ब्रह्मणः सृष्ट्याद्यन्यथाऽनुपपत्तिस्तर्कः परतस्त्व एव प्रमाणमित्यत आह **अमुख्येति** ।

४०० ननु ब्रह्मणः सृष्ट्याद्यर्थक्रियासृज्यादिकं वा साक्षिणा सिद्धिर्वा किञ्चिदपि नाङ्गीकुर्मः । सर्वस्य अतात्त्विकत्वादित्यत आह **यदीति** ।

४०१ विश्वस्य तात्त्विकत्वे प्रमाणमाह । विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वाम् । हे इन्द्र ब्रह्मणस्पती युवो सृज्यमिदं विश्वं सत्यमेव । मघवाना कीर्तिमन्तौ आपश्च न वां प्रमिनन्ति । अब्देवता अपि युवयोः सत्यसृष्टिव्रतं जानन्ति । यच्चिकेत तत्सत्यमित्तन्न मोघं वसुस्पार्हमुत जेतो तदाता । सुपर्णो भवान् यच्चिकेत तत्सत्यमेव न मिथ्या । प्र घा न्वस्य महतो महानि सत्यासत्यस्य करणानि वोचम् । अस्य महतः सत्यस्य करणानि कर्माणि प्रब्रुयां ह्यतः । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः । **कविः** मानी । **मनीषी** ज्ञानी । स्वयम्भूरनादिकालमारभ्य पदार्थान्यथार्थत्वेन चकार । अथ हैनमाहुः **सत्यकर्मेति** । सत्यं ह्येवेदं विश्वमसौ सृजत इत्यादिकमादिशब्दार्थः ।

४०२ विश्वसत्यत्वं साक्षिणाऽपि सिद्ध्यतीत्याह **सत्यत्वमिति** । गगनादेः प्रदेशादेर्विश्वस्य प्रदेशस्वरूप-ग्रहणान्यथाऽनुपपत्त्या साक्षिस्वरूपं सिध्यतीत्यभिप्रायेण गगनपदमुपनिबबन्ध । गगनमप्यव्याकृताकाशः । आदिशब्दात्सुखदुःखादिकम् ।

४०३ प्रत्यक्षस्य वर्तमानमात्रग्राहित्वात्कथमबाध्यत्वं निश्चीयत इत्यत आह **सर्वेति** । जगत्सत्यत्वग्राहकस्य प्रत्यक्षादेः प्रामाण्यग्राहकेण साक्षिणैव जगतः सर्वकालेष्वबाध्यत्वं प्रतीयते । सुषुप्तौ सर्वेन्द्रियोपरमात् प्रत्यक्षादिप्रवृत्त्यभावे च कालस्य प्रतीतित इयन्तं कालं सुखमहमस्वाप्समिति परामर्शात् सुषुप्तौ कालानुभवोऽस्तीति गम्यते ।

४०४ ननु श्वश्वरिष्यामीत्युत्तरकालग्रहणवदेवायं परामर्शो नानुभूतविषयः किन्त्वनुमानरूपः । विमतः कालान्तरवान् कालत्वात् सम्प्रतिपन्नकालवदिति । अत्रोच्यते । **अतीतेति** । किमयं पक्षीक्रियमाणः कालः सामान्यरूप आहोस्विद्विशिष्टरूपः । सामान्यरूपश्चेत् पूर्वोत्तरकालयोरपि पक्षान्तरभूतत्वात् साध्यधर्मान्तर्भावात् तद्विशिष्टस्य धर्मिणो ब्रह्मण एव पक्षत्वात् पक्षीकर्तुमशक्यत्वात् । वर्तमानाख्यो विशिष्टरूपः कालः पक्षीक्रियत इति चेत् । वर्तमानशब्देन किं व्यवच्छेद्यम् । अतीतानागतकालाविति चेत् । तयोर्व्यवच्छेद्यत्वेनानुमितेः प्रागेव ज्ञातत्वात्पक्षीकर्तुमशक्यत्वम् । न च यौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययः कालानुमाने लिङ्गम् । अनुमेयस्यैव कालस्य तत्र विशेषतः प्रतीतेः साध्याभावात् पक्षीकर्तुमशक्यत्वम् ।





४०५ **तदिति** तत्कालविशिष्टत्वेन स्मृतिगोचरं किं तदिति भूतभविष्यत्कालविशिष्टत्वेन मानान्तरं दृश्यं वा। **एतदिति** वर्तमानकालविशिष्टत्वेन दृश्यम्।

४०६ **तं विना** साक्षिसिद्धकालं विना किञ्चित् भूतं भविष्यत् वर्तमानं वस्तु द्रष्टुं स्मर्तुं वा न शक्यम्। एवं साध्यसाधनयोर्भूतभविष्यद्वर्तमानाविनाभावश्च स्मर्तुं द्रष्टुं वा न शक्यते। एवं कालस्य अविनाभावग्रहणात् प्रागपि नित्यसिद्धेः न कालं विना अभावमूलाया अनुमाया अवसरो भवेत्। अत इत्यादेरयमर्थः। अतोऽनुमानावसराभावात् कालस्य साक्षिसिद्धत्वाद्गगनादेः कालखचितत्वेनैव दर्शनात् त्रिकालग्राहिणा साक्षिणैवादोषप्रमाणप्रतीतस्य गगनादेः शाश्वतिकबाधाभावलक्षणं सत्यत्वं मतम्। न तु सदोषप्रमाणप्रतीतस्य शुक्तिरजतादेः।

४०७ ननु रजतादेः सत्यत्वं प्रत्यक्षतो गृहीत्वाऽपि कुत्रचिदाकाङ्क्षायां निष्पादितपरीक्षयैव सत्यत्वं निश्चिनोति। अतः कथं साक्षिसिद्धं सत्यत्वमित्यत आह **परीक्षादेरिति**। निष्पादितानुमानादिकं परीक्षाप्रमाणम्। आदिशब्दादन्यप्रमाणानि। **सत्यत्वं** सत्यविषयत्वम्। अन्यथा परीक्षादिप्रमाणानां सत्यत्वमविषयत्वलक्षणं प्रमाणम्। प्रामाण्यं साक्षी न गृह्णातीत्यभ्युपगमेऽकस्माज्ज्ञानमन्तरेण विश्वस्यात्मादेरितःपूर्वं तथाभावात्। यद्युपरिनिवृत्तिर्न शङ्क्यते तर्हि संसृतेः सत्यत्वविषयत्वम्। अन्यथा परीक्षादिप्रमाणानां गतिरपि नो भविष्यति। ब्रह्मविदाप्नोति परमिति वाक्यम्। विमतं दुःखादिकं ज्ञाननिवर्त्यमज्ञानकार्यत्वात् रज्जुसर्पव्यसनवदित्यप्यनुमा। आदिशब्दान्महतां संसारबन्धो निवर्त्यो भवितुमर्हति बन्धत्वाच्छृङ्खलादिबन्धवदित्यनुमा। आदिशब्दाद्योगिप्रत्यक्षम्। तस्य वाक्यादेः प्रामाण्यं च साक्षिप्रमाणवदेवाङ्गीकर्तव्यम्।

४११ **एवमक्षजमानत्वसिद्धाम्** एवं साक्षिसिद्धेनाक्षजमानेन सिद्धाम्।

४१२ **मृषा** प्रमाणं विना। **बहुज्ञानकृतं** बहूनां ब्रह्मादीनां ज्ञानेन सृष्टम्।

४१३ **स्वात्मतस्करः** स्वानुभवापलापकः। परस्य सत्यतां जानन्नपि यो जनान्तरं स्वात्मानं च वञ्चयति। परस्य सत्यतामनुवदन्नपि स्वात्मानं चोरयति। स परो नास्तीति परसत्यतां नानुभवतीति चेत्। किमित्युन्मत्तवद्वदेत्। परस्य श्रोतुरभावादेव यदि नैवोच्यते यदि वागपि नैवोच्यत इति ब्रूयात्।

४१५ **प्रपञ्चो यदि विद्येत**। विकल्पो विनिवर्तेत। वाचारम्भणं विकार इति श्रुतिर्विश्वनिवृत्तत्वे प्रमाणमित्याशङ्क्य तावदनूद्य तस्यार्थमभिधत्ते।

४१७ **अत्र** इत्यादेः अयमर्थः। एतयोर्माण्डूकश्लोकयोरेते शब्दा उत्पत्तिपरिकल्पनेति प्रसङ्गमुखेन निषिध्य विश्वसत्यतामवगमयन्ति।





४१८ **निवृत्तिर्व्याप्तिः** विनाशिव्याप्तिः । प्रध्वंसाभावस्योत्पत्तिमतोऽपि विनाशाभावात् प्रायःशब्दः ।

४२१ जीवेश्वरश्रुत्यैतां व्याख्याति **मितं त्रातमित्यादिना** । स्ववाक्येन मायामात्रमित्यादि व्याख्याति ।

४२२ वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतिं विश्वमिथ्यात्वविषयत्वेनाशङ्क्यमानां व्याख्याति **वाचारब्धमित्यादिना** ।

आरम्भणमात्रमिति व्याख्याति विकारो **विकृतमिति** । विकृतं ब्रह्विति विशब्देन कृतत्वात् । अत एवास्थिरत्वादप्रधानमित्यर्थः । प्रधानं साङ्केतिकं वैदिकनाम्ना । उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं कथन्नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् । यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम् । एवं सोम्य स आदेशो भवतीति छन्दोगश्रुतिः । अत एकस्य ब्रह्मणो विज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्प्रतिपादनार्थं मृत्पिण्डादिदृष्टान्ता-नुदाहृत्य तत्कार्यस्य मिथ्यात्वमभिधाय कारणस्यैव सत्यत्वमाचष्ट इत्याशङ्कां परिहरति **वाचारब्धमिति** । आरम्भणमारब्धमिति व्याख्याति विकारो **विकृतमिति** ।

धर्मधर्म्यैक्यात् । विकृतं ब्रह्विति विविधत्वेन कृतत्वात् । अत एव अस्थिरत्वात् अप्रधानमित्यर्थः । प्राधान्यं साङ्केतिकात् ।

४२४ वैदिकनाम्नां सत्यशब्देन मिथ्यात्वं न व्यवच्छिद्यते किन्त्वनित्यमेवेत्याह **सदातनमिति** । सततं यातन्यं हि सत्यम् ।

४२५ उत्तरत्र दहरविद्यायां यदैवैनं जरावाप्नोति प्रध्वसन्ते वा **किं ततोऽस्यातिशिष्यत इति** ।

४२६ सब्रूयान्नास्य जरयैतज्जीर्यति । न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमित्युत्तरत्र दहरविद्यायां नित्य एव हि सत्यशब्दप्रयोगः ।

४२७ परयोजनायां दूषणमाह **वाचेति** । अत एवमुक्तवर्त्मना सादृश्य एव मृत्पिण्डादिदृष्टान्तानां विवक्षा । वाचारम्भणदृष्टान्तस्य तु नित्यत्वे प्राधान्ये च ।

४३० प्राधान्यमतस्तत्तेजोऽसृजतेत्युपक्रमादुपक्रमेऽपि प्राधान्यमेव हि प्रतिपादयिषितम् । तस्मादत्रापि तत्सम्भवतीत्यभिप्रायेणाह **प्राधान्येति** ।





४३२ पितृवदपादानत्वेन प्रकृतिभावेनापि भ्रमाधिष्ठानत्वेनोक्तसमन्वयसिद्धाः प्रत्येकमपि पूर्णज्ञानानन्दादयोऽनन्तगुणा एवात्माऽस्येति भगवान् पूर्णगुणाशेषगुणात्मकः ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां नयचन्द्रिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥*

*॥ प्रथमाध्यायः समाप्तः ॥ १ ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

* * *

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

**श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका**

## श्रीशङ्करपण्डिताचार्यविरचिता

# अनुव्याख्यानसम्बन्धदीपिका

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## अथ प्रथमाध्यायस्य चतुर्थपादे

## ॥ युक्त्यधिकरणम् ॥

३२६ प्रकृतिरित्यादिसूत्रव्याख्यानेन स्त्रीनिषेधवाचिशब्दानां समन्वयमाह **स्त्रीति** ।

३२६ सिंहावलोकनन्यायेनैतस्याभगवद्विषयपूर्वपक्षसिद्धान्तयुक्तीर्दर्शयति **विरोधीति** ।

३३१ प्रतिपदसमन्वयप्रसङ्गे जैमिनिमताननुसृत्य कर्मद्वारा भगवति समन्वयोऽन्यार्थमित्यादि सूत्रेषु किमित्यनुज्ञायत इत्यत आह **अन्वय इति** ।

३३२ जैमिन्यादिमतस्य स्वमतान्तर्भावोऽभिप्रेतस्तरमाज्जैमिन्यादिमग्रहणमिमर्थमित्यत आह **स्वशिष्याणामिति** ।

३३३ जातमोदमित्यादौ निखिलशब्दानां ब्रह्मणि योगवृत्तिरुक्ता । साक्षादादिशब्दानामर्थान्तरविषयत्व एव सम्भवतीति जातादिशब्दानादिशब्दानां कथं तत्र शक्तिरित्यत आह **तेषु तेष्विति** ।

३३५ अयं विश्वामित्रोऽयं वसिष्ठ इत्याद्युपदेशमात्रेण विश्वामित्रादिशब्दानां विष्णोः शक्तिः सुलभा । किं पुनः निर्वचने नानारीतिर्वक्तव्यम् । आकाश आनन्दो न स्यादित्यादौ लिङ्गाच्च शक्तिः लक्ष्या । अक्षरमित्याचक्षते

---

* [illegible]





एतमेव सन्तमित्यादिवचनस्य पुरुषं सर्वाणि नामानि अभिविशन्तीति श्रुत्यन्तरबलादेतमेव जातमित्याचक्षत एतमेवौतमित्याचक्षत इत्याद्यभिप्रायादसकृदुच्चारितजातादिपदानामपि विष्णौ शक्तिः गृहीत इत्यभिप्रायः लोकरुढेः विष्णौ शक्तिग्रहस्य कारणत्वेऽपि शब्दानां विष्णुवाचकत्वमेव सर्वत्र सर्वथा न त्याज्यम् । इत्थं वाचकत्वं तु विष्णुवाचकत्वविरोधे त्याज्यमेवेत्याह **तथेति** ।

३३६ विष्णुवाचकत्वस्य नियतत्वे हेतुमाह इत **इति** ।

३३६ अग्निदाहकत्वमुपजीव्य वर्तमानायोदाहकत्ववद्विष्णोः सर्वघटकत्वादिकमुपजीव्य कलशादौ पटत्वादिकं वर्तत इति । यावल्लोकरुढापेक्षया केन हेतुना विष्णौ शक्तिग्रहस्येत्यत आह **सेति** ।

३३७ अविरोधे तु बह्वर्था । एतन्मूलतयेत्युक्तमपि तारतम्यमवधारयति **तस्मादिति** ।

३३८ अथार्थानां लक्षणमाह **प्रवृत्तिरिति** ।

३४१ अत्र गौणार्थो लक्षणार्था । उत्तम इति सम्प्रदायः । उभयं **दृश्यते**र्विष्णावित्यभिप्रेतयोर्योगप्रयोगयोः बाहुल्यं प्रमाणतः स्पष्टयति **एतमिति** ।

३४३ सर्वशब्दानां ब्रह्मवाचकाकारव्याख्यानत्वात् विष्णुप्रतिपादकत्वमेवेत्याह **अ इतीति** ।

३४३ न मायत्तासममृप्यन्निति नामविदः कृतकृत्यतावचनाच्चाविशेषेण सर्वनामानि विष्णुं प्रतिपादयन्तीति दर्शयति **नामविदिति** ।

३४४ णकारषकारावनुसंहितमृचो वेदेति वचनस्य सर्वसहितोपलक्षणत्वाच्च सर्वशब्दार्थत्वं विष्णोरस्तीत्याह **न विष्णुरिति** ।

३४४ स णकारमेव ब्रूयात्स षकारमेव ब्रूयादिति णकारषकारध्यानपूर्वमध्ययनविधेश्चैवमित्याह **तज्ज्ञानेति** ।

३४५ विकारोकारयोरनुक्तिस्तु उपसर्जनत्वेन णकारषकारयोरेव नामत्वादित्यभिप्रैति **उपसर्गत्वत इति** ।

३४७ स एव सर्वशब्दपरममुख्यार्थ इत्यत्र स्पष्टप्रमाणमाह **घोषा इति** ।

३४९ ज्योतिरित्यादिसूत्रेणापि भगवता तदेवोक्तमित्याह **तदिति** ।

३५० केचिदनुमानिकमित्यादिसूत्रमन्यथा योजयन्ति । तन्निरासायाह **रेति** । कुत इत्यत आह **सर्वेति** ।





३५१ पुराणादौ कुत्र प्रधानस्य वाच्यत्वेन सङ्ग्रह इत्यत आह **सत्त्वमिति** ।

३५२ प्रतिपदसमन्वयमन्तरेण वाक्यान्वयकथने यत्र प्रधानेऽन्यद्वाच्यं नेष्यते तत्र प्रधानमुच्यत इत्यर्थः । तेजोबन्नात्मकोपादानमेव प्रकृतिरित्युच्यते । न प्रधानमित्यत आह **तेज इति** ।

३५३ तमेव प्रधानमित्युक्ते कोऽपराधः । तदतिरिक्तप्रधानानाङ्गीकारादित्यर्थः । अजामेकमिति श्रुतिरिति प्रधाननाम्नीं प्राकृतिं वक्तीत्युक्ते कोऽपि दोषो नेत्याह **अजामिति** ।

३५५ प्रधानस्यापि शब्दवाच्यत्वे विष्णुरेव सर्वशब्दार्थ इति कथं युक्तमित्यत आह **मुख्येति** ।

३५६ किमित्यर्थद्वयाङ्गीकार इत्यत आह **अर्थेति** ।

३५७ वचसां वाच्यमुत्तमम् इत्यत्र असकृदुच्चारितपदानामप्यर्थद्वयमस्तीत्यर्थः । इतोऽप्यर्थद्वयासिद्धिरित्याह **बुद्धाविति** ।

३५९ यदि बुद्धावारोहादर्थस्वीकारस्तर्हि स्थाणौ पुरुषत्वारोहे सति तदपि स्वीकर्तव्यमित्यत आह । इन्द्रो वृत्राणि जिघ्नत इत्यत आह । विपरीतप्रमाभावात्पूर्वारोहः कारणम् । पुरन्दरग्रहेव अमुख्यम् । य एतद्विदुरमृतास्तेभवन्तीत्यादौ तमेवं विद्वानिति विपरीतप्रमाणापूर्वारोहः प्रयोजको न भवति । प्रसिद्धवज्राङ्गीकृतौ अर्थद्वयाङ्गीकारे वाक्यभेद इति न मन्तव्यम् मुख्यार्थाङ्गत्वे मुख्यार्थोपपत्तेः । एकादशकपालः पुरोडाश इत्यादौ पुरोडशभूतैकादशकपालादिवचनवदित्यर्थः । विपरीतप्रमाणाभावादजामिति श्रुतिः प्रधानात्मकजडं वक्तीत्याह **अत इति** ।

३६० भवन्मतेऽपि प्रधानं वाच्यम् । तदेव प्रकृतिश्चेदित्यत्र मानमाह **यत्तदिति** ।

३६२ यत्प्रकृतिश्चेदित्यादिसूत्रमन्यथा योजयन्ति । तन्नुदति **नेति** ।

३६३ कुतः उपादानं न भवतीत्याशङ्कायामविकारित्वादिति हेतुमभिप्रेत्य तत्र मानमाह **अविकार इति** ।

३६६ सदैकरूपविज्ञान बल इति विकारवान् धर्मोऽप्यस्य नास्तीत्यर्थः । विकारलक्षणमाह **पराधीनेति** ।

३६७ हरेः विकारो नास्ति । यदि यथोर्णनाभिः सृजते इत्यादि श्रुत्युक्तदृष्टान्तेनाक्षरस्योपादानत्वं परेणेष्यते । तर्ह्यपि ऊर्णनाभादिवदुपादानत्वमेवाक्षरस्याङ्गीकृतम् । तन्न । जगद्भाव इत्याह **नैवेति** ।

३६८ ऊर्णनाभ्यादेर्विकाराभावादुपादानत्वमेवेत्याह **नेति** ।





३६९ तर्ह्यादिकं किमुपादानकमित्यत आह **तदन्नमिति** ।

३६९ विष्णोरुपादानत्वप्रमाणमाह **अपादानतयेति** ।

३७३ चेतनाचेतनयोर्मिथः प्रकृतिविकारभावो न दृष्ट इति द्योतयति **नेति** ।

३७४ ब्रह्मणोऽन्यत्वदर्शनाच्च जगतस्तद्विकारत्वं नास्तीत्याह **न चेति** ।

३७५ ब्रह्मणो वैलक्षण्यमसर्वज्ञत्वं जगतो दृश्यते चेत्याह **सर्वज्ञादिति** ।

३७५ ब्रह्मानन्यत्वं सदिति जगतो दृश्यते इत्यत आह **अभेद इति** ।

३७६ असर्वज्ञभागोऽपि ब्रह्मणोऽस्ति । तद्विकारो जगत् । अतो न सर्वज्ञत्वदर्शनादब्रह्मत्वं जगत इत्यत आह **भागेनेति** ।

३७७ सर्वकार्यादिभिन्नपदार्थसमुदायो ब्रह्मेति चेत् कस्यचिदपि कार्यस्य ब्रह्मणोपादानता न स्यात् । कार्योत्पत्तेः पूर्वं ब्रह्मत्वाभावादित्याह **भिन्नानामिति** ।

३७८ गोमयादेरुपादानात् वृश्चिकादिकस्य भेददर्शनादुपादानाद्ब्रह्मणो जगतोऽपि कार्यस्य भेददर्शनं युक्तमित्याशङ्क्य नुदति **शृङ्गादिति** ।

३७९ शृङ्गादिति शृङ्गादेरुपादानत्वानङ्गीकारे दृष्टिविरोध इत्यत आह **उपादानेति** ।

३८० शृङ्गादापादानता न सिद्धेति न मन्तव्यमित्याह **न हीति** ।

३८० यदि दार्वादिचेतनोत्पत्तौ शृङ्गाद्यचेतनस्य किञ्चिदुपादानत्वं स्वीकृतम् । तर्हि चेतनविकारोऽपि चेतनं स्यादित्युक्तिविरोध इत्यत आह **न चेति** ।

३८२ सच्च त्यच्चेति ब्रह्मणो जगदात्मकत्वमुच्यत इत्यत आह **सच्चेति** ।

३८३ अस्य विश्वत्वं नोच्यते चेत् किमुच्यत इत्यत आह **सत्त्वादित्यादि** ।

३८५ उपादेयरूपेण ब्रह्मोत्पत्त्यनङ्गीकारे कुतो मृद्घटोऽभवदितिवत् । सच्च त्यच्चाभवदिति प्रयोगः स्यादित्यत आह **व्यक्तिरिति** ।





३८६ विष्णोरविकारेण स्वातन्त्र्यात्प्रकृत्यादिशब्दवाच्यत्वं सूत्रार्थत्वेन निगमयति **तस्मादिति** ।

३८७ बहु स्यामित्युक्तमेकस्य बहुत्वमविकारेण । कथं युक्तमित्यत आह **बह्विति** ।

३८८ तदर्थं हि बहुरूपैः बहु प्रविश्य क्रीडितुं हीत्यर्थः । ब्रह्मविकारो जगदिति मतं निरस्तम् । अथ ब्रह्माध्यस्तं जगदिति मतं निरसितुमनुवदति **यदिति** ।

३९३ व्यावहारिकत्वाच्च जगद्भ्रान्तिकल्पितमित्याह **व्यावहारिकता चेति** ।

३९४ बाध्यापि स्वप्नार्थक्रियाकारी हीत्यत आह **न चेति** ।

३९५ न केवलमर्थक्रियाकारित्वात् स्वप्नस्य सत्त्वं किन्तु वाक्याच्चेत्याह **स हीति** ।

३९५ मिथ्याभूतरज्जुसर्पोऽर्थक्रियाकारी दृष्ट इत्यत आह **सर्पेति** ।

३९६ व्यावहारिकत्वहेतोः विपक्षवृत्तिं परिहृत्य अथासदर्थक्रियाकारि चेत् सदपि नेति साम्यापरिहारेण सपक्षवृत्तिं दर्शयति **ब्रह्मेति** ।

३९६ ब्रह्मभ्रान्तितो ह्यर्थक्रियाकारिभ्रान्तिकल्पितहेतुश्च भवन्मतेन साधक इत्यत आह **परतः स्वत इति** ।

३९७ प्रमाभावं स्पष्टयति **अमुख्येति** ।

३९८ मास्तु तर्हि सम्प्रतिपत्तिः किन्नश्छिन्नमित्यत आह **न हीति** ।

३९९ सिद्धान्ते सम्प्रतिपन्नं प्रमाणमस्तीत्याह **साधकत्वमिति** ।

४०० मायाप्रमाणादिकं किमियं नाङ्गीकृतमतः कथं प्रमाणं सम्प्रतिपन्नमित्यत आह **यदीति** ।

४०१ इति मिथ्यात्वं निरस्य जगतोऽर्थक्रियाकारित्वेन साधितसत्यत्वे श्रुतिं प्रमाणमाह **विश्वमिति** ।

४०२ साक्षिसिद्धत्वाच्च जगतः सत्यत्वस्य मिथ्यात्वमनुभवविरुद्धं चेत्याह **सत्यत्वमिति** ।

४०२ शुक्तिरजतप्रत्ययवत् साक्षिणोऽपि बाध्यविषयत्वं कुतो न स्यादित्यत आह **साक्षीति** ।

४०३ प्रपञ्चस्य कालान्तरेऽपि बाधो नास्तीत्यत्र तद्दोषत इति हेतुरुक्तः । अतः सर्वकालेष्वपि बाधो नास्तीति साक्षिप्रतीतिरप्यस्तीत्याह **सर्वेति** ।





४०३ कालस्य साक्षिसिद्धत्वप्रतिपादनमुखेन तदेव द्योतयति **काल इति** ।

४०४ साक्षिणो वर्तमानग्राहित्वान्नैष्यत्कालगताबाध्यत्वसिद्धिरित्यत आह **अतीतेति** ।

४०४ तावावनुमानगोचरादित्यत आह **पक्षीकर्तुमिति** ।

४०५ साधनस्य साध्येन त्रिकालमविनाभावग्राहित्वात् साक्षिणोऽतीतैष्यत्काल्योरसिद्धत्वमङ्गीकृत्य पक्षीकर्तु-मशाक्यमिति स्पष्टयति **तदेतदिति** ।

४०७ उपाधिदोषरहितं धूमाग्निसाहित्यं दृष्टम् । प्रत्यक्षद्वारेण साक्षी सार्वकालीनं गृह्णातीति यतः अतो निर्दोषप्रमाणगृहीतप्रपञ्चसत्यत्वं साक्षिणा सार्वकालीनबाधाभावोपेतं मतमित्याह **अत इति** ।

४०७ निक्षेपादिपरीक्षायां प्रत्यक्षपरीक्षाद्वारेण तन्निमित्तावगतवस्तुतत्वस्यानुमानद्वारेण साक्षी सर्वकालाबाध्यत्वं गृह्णाति । भ्रान्तिदृष्टरजतं तु केनापि प्रमाणेन न परीक्षितमिति तस्य सर्वकालाबाध्यत्वं न गृह्णाति । प्रपञ्चसत्यत्वं तु निष्ठा एव स्वतः परीक्षितम् । तत्ववत्परीक्षावदनन्तरेण परीक्षणीयेति न मन्तव्यम् । पटपदार्थवद्दीपस्यापि पदार्थान्तरेण दृश्यत्वप्रसङ्गादित्यभिप्रायेणापि जगद्बाध्यतेत्याह **परीक्षादेरिति** ।

४०८ बाध्यत्वाङ्गीकारोदितप्रसङ्गमाह **अन्यथेति** ।

४१२ अन्यथा श्रुतियुक्त्यादिप्रमाणैश्च सहैव तु । स्वप्नप्रपञ्चवदेकाज्ञानकल्पितं विश्वमिति चेत् बह्वर्थकं ज्ञान ................ नगापुरादिवन्मरीच्यादि बहुज्ञानकृतं विश्वमित्युत्तरमिति दर्शयति **एकेति** ।

४१३ स्वप्नपुरुषवत्पुरुषत्वेऽपि मिथ्या न भावामि यद्वद्द्वयमपि तथेति जानन्नस्य मिथ्यात्वं वदतीति स्वानु-भवतस्करत्वमस्येत्याह **परस्येति** ।

४१३ परसत्यत्वं न जानातीत्यत आह **परेति** ।

४१५ प्रपञ्चो यदीत्यादिवाक्यविरोधश्च तन्मतेऽस्तीत्याह **प्रपञ्च इति** ।

४१८ विचेतीति पदमथ सत्ताविषयं न भवतीत्यत्र हेतुमाह **उत्पत्तिरिति** ।

४१८ प्रपञ्चपदार्थमाह **प्रपञ्च इति** ।

४१९ तत्र श्रुतिमाह **जीवेति** ।





४२० अथ मायामात्रपदस्यार्थमाह **मितमिति** ।

४२२ घटादिभेद्यमित्यत्वेऽपि तद्भेदनित्यत्वं जातिमदनित्यत्वेऽपि पराभिमतगोत्वादिजातिवद्युक्तम् । जातिमद्भेदाज्ञानिति नित्यत्वं युक्तमिति चेद्भेदिविशेषात् भेदनित्यत्वं युक्तम् । भेदभेदिनोरभेदो दण्डदण्डिवन्न युक्त इति न मन्तव्यम् । स्वरूपस्वरूपिणोरिव तदुपपत्तेरिति प्रपञ्चनित्यत्ववाक्याभिप्रायः । वाचारम्भणश्रुतिरपि न जगन्मिथ्यात्वादिपरा किन्तु ब्रह्मप्राधान्यादिपरैवेत्याह **वाचारब्धमिति** ।

४२३ ब्रह्मव्यतिरिक्तस्य मिथ्यात्वाभावे कुत एकविज्ञानेन सर्वविज्ञानसम्भव इत्यत आह **प्राधान्यादिति** ।

४२४ तस्य नित्यमिति कथं युज्यत इत्यत आह **सदातनमिति** ।

४२५ उत्तरवाक्ये नित्यत्वाभिप्रायेण सत्यशब्दप्रयोगाच्चेत्याह **प्रयोग इति** ।

४२७ वाचारम्भणमित्यादौ तदभिमतार्थे दोषमाह **वाचेति** ।

४२८ ब्रह्मविकारित्वविवक्षायां दोषमाह **एक इति** ।

४२८ तदेव प्रतिपादयति **न चेति** ।

४३० उक्तार्थं निगमयति । अत्र सृष्टिकथनाच्च परमात्मप्राधान्यमेव न मिथ्यात्वमित्याह **प्राधान्येति** ।

४३० विपक्षायुक्तत्वं निगमयति **तस्मादिति** ।

४३१ न केवलमादरणीयं न भवतीदं मतं किन्तु नितरां निन्द्यं भवतीत्याह **तदिति** । अध्यायार्थं निगमयति **तदसङ्ख्यात इति** ।

४३१ अनुक्तानि च दूषणानि सन्ति च तत्पुनरपि वक्तव्यानीत्यत आह **असङ्ख्यत्वेनेति** ।

*॥ इति प्रथमाध्यायस्य चतुर्थपादः ॥*

*॥ प्रथमोऽध्यायः समाप्तः ॥*

* * *



इति

**श्रीमद्बादरायणविरचितानां** वेदार्थनिर्णायकानां श्रीमद्ब्रह्मसूत्राणां
**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य** द्वितीयव्याख्यानस्य **श्रीमदनुव्याख्यानस्य**
**श्रीजयतीर्थविरचितायां** विषमपदवाक्यार्थविवृतौ टीकायां **श्रीमन्न्यायसुधायां**
**परिमळाद्युपेतायां**

## प्रथमाध्यायः

संपूर्णः ॥

अनेन कर्मणा एतद्ग्रन्थप्रतिपाद्यः
समस्तगुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गतसीतापतिश्रीमन्मूलरामचन्द्रः
प्रीयताम् ।
प्रीतो भवतु ॥

**श्रीकृष्णार्पणमस्तु ॥**

**कायेन वाचा मनसेन्द्रियैर्वा**
**बुध्याऽत्मना वाऽनुसृतःस्वभावम् ।**
**करोमि यद्यत्सकलं परस्मै**
**नारायणायेति समर्पयामि ॥**

***

# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीथ

**श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥**

— श्रीवादिराजतीथ

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीथ

**सुधा वा पठनीया । वसुधा वा पालनीया ॥**

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीथ

Printed at : Sudha Mudrana, Bangalore.